गच्छाम्याम ॥ अभ्युपगमेऽपि । आम मैथिलि[1] ॥ * ॥ नाम इति प्राकाश्यसंभावनाक्रोधाङ्गीकारकुत्सनालीककथंचिद्विस्मयेषु ।[2] हिमालयो नाम नगाधिराजः ॥ कथं नाम समेष्यसि[3] ॥ स्मृतिः संभावनैव । स नामायं[4] बन्धुः ॥ ममापि नाम दशाननस्य परैः परिभवः ॥ एवमस्तु नाम ॥ को नामायं सवितुरुदयो यत्र न खे स्फुरन्ति[5] ॥ दृष्ट्वैव सा रोदिति नाम तन्वी[6] ॥ यदि क्षेपणमेवेष्टं क्षिप्यतिर्नाम[7] कोऽपरः ॥ अन्धो नाम पर्वतमारोहति[8] ॥ आमन्त्रणेऽपि ॥ * ॥ अन्यच्च । इति वर्जने । पतिताश्च बिभृयादन्यच्च मातुः ॥ * ॥ घ । इति हिंसाप्रातिलोम्यपादपूरणेषु । घ हिनस्ति मृगं व्याधः ॥ * ॥ अथ । इति मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु[9] । अथ परस्मैपदानि । स्नातोऽथ[10] भुङ्क्ते । अथ शब्दानुशासनम्[11] । अथ शक्तोऽसि[12] भोक्तुम् । अथातो धर्मं व्याख्यास्यामः[13] । अथ समासः । गौडो भवानथेति ब्रूमः[14] ॥ भीमोऽथार्जुनः । नित्यः शब्दोऽथानित्यः[15] ॥ * ॥ इदित्यनर्थकः । वक्ष्यन्तीवेदा गनीगन्ति[16] कर्णम् ॥ * ॥ विषु । इति सर्वतोभावे । विश्व-

---

१ मैथलि A.; D. om. from अभ्युप°

२ °विस्मयावधारणेषु C.F.; °संभावक्रोधा° A.; हिमालयो° Kum. S. 1, 1.

३ स्मरिष्यसि C. F.; सामृष्यसि D.; Kshîrasv. on A. K. iii. 4, 32, 13: प्राकाश्ये । हिमालयो° ॥ संभाव्ये । कथं नाम समेष्यसि ॥ क्रोधे । ममापि° ॥ etc.; Râyam. remarks: विस्मयस्मरणविकल्पेष्वपि दृश्यते ।

४ सेनासायं C.; त[व suppl.] ना° D.

५ यत्र नाम स्फुरंति D.; Kshîr. has कुत्सने । को नामायं सवितुरुदये ॥

६ दृष्टैव स ° नाम तन्वा C.; D. corr. दिष्ट्यैव सारोहति; (अलीके ।) दृष्टेऽधरे रो° Kshîr.

७ Thus A. C. D.; क्षिंपते नाम F.

८ अधो° A.; अन्त्से नाम° D.; (om. आमन्त्रणेऽपि); C. F. add अमृतं नाम यत्संतो मंत्रचिन्हे [मंत्रजिह्वेषु F.] जुह्वति ।; for B. cf. p. 15 note 15.

९ °समुच्चयपक्षान्तरेषु B. C. F.; °प्रश्नकार्त्स्याधिकारसमुच्चयेषु D.

१० तातो थ C.; तातायः B.

११ Beg. of Mbh.; अथ पचामि B.C.F.

१२ शक्तोषि A.

१३ B. C. F. om. this ex.; Kaṇâda S. 1, 1, 1; F. adds: अथ च्हतं ब्रूमः ।

१४ D. om. this example.

१५ नित्यशब्दो° A. B. C.; om. D.

१६ वक्ष्यन्तीदि वे° MSS.; Rgv. vi. 75, 3.

श्नतीति विश्वक् ॥*॥ चिदिति[1] साकल्याप्यर्थोपमानासंमतिषु[2]। आचार्यश्चिदिदं ब्रूयात्[3]॥ किंचित् प्रयच्छति। न किंचिद् ब्रवीति[4]॥ अग्निश्चिद्भायात्॥ कुल्माषांश्चिदाहरेति[3]॥*॥ सुकमित्यतिशये। सुकं शोभते[5]॥*॥ किमिति चेपप्रश्नेषदर्थातिशयेषु। किमयमपि ब्राह्मणः। किं गतोऽसि। न किमप्यस्यास्ति। किमप्येष प्रगल्भते॥*॥ स्विदिति प्रश्नवितर्कयोः। कः स्विदेकाकी चरति।[6] अधः स्विदासीद् उपरि स्विदासीत्॥*॥ अन्तरेण। इति मध्यविनार्थयोः। यथा।

मृणालसूत्रामलमन्तरेण
स्थितश्चलच्चामरयोर्द्वयं सः।
भेजेऽभितः पातुकसिद्धसिन्धोर्
अभूतपूर्वां रुचमम्बुराशेः[7]॥

चलच्चामरयोर्मध्य इत्यर्थः[8]॥ अन्तरे। इत्यप्यमरसिंहः। यथा। आवयोरन्तरे जाताः पर्वताः सरितो द्रुमाः[9]॥ अन्तरेण पुरुषकारं न किंचिल्लभ्यते॥ अन्तरेण मातापित्रोरित्यत्र तु प्रयोगे विनार्थेऽन्तरशब्दोऽनव्ययस्तेन द्वितीयात्ययः[10]॥*॥ एकपदे। इत्यकस्मादर्थे। अयमेकपदे तया वियोगः[11]॥*॥ अहह। इत्यद्भुतखेदयोः। अहह महतां निःसीमानश्चरित्रविभूतयः[12]। अहह कष्टमपण्डितता विधेः[12]॥ दीर्घान्तोऽपि। भिक्षित्वापि बुभुक्षिता यदहहा॥*॥ उञि-

---

१ चिदित्यस्य B. C.; चिदित्यसाक° D. F.

२ °नासंमतिपूजासु B. F.; °माना-सम्मृतिपूजासु C.; D. om. the next exam.

३ Yâska N. 1, 4.

४ A. om. न; न किंचिद्दिददाति B.

५ शुकमित्य° शुकं° A. D.

६ V.S. 23, 9; अधः° Rgv. x. 129, 5.

७ Śiśup. 3, 3

८ चलच्चामहर° D.; om. B. C.

९ Thus also Kshîr. on A. K. iii. 5, 10.

१० द्वितीयाभावः A.; D. om. from अन्तरेण माता°

११ Vikramorv. śl. 73.

१२ Bhartṛih. ii. 28; ii. 88.

ति[1] वितर्कसंबोधनपादपूरणेषु। क उ एति[2]। उ उत्तिष्ठ। तदाशुबद्ध चन्द्रमाः ॥ उ। इत्यव्यप्रतिरूपको[3]ऽप्यस्ति। अस्य त्वयं विशेषः। उञो वेति[4]। ऊँ इति[5] पक्षे भवति ॥ ८ ॥

सत् फट् क्विच्चिरराचाय[6] विभाषेति नचेत् पुनः[7]।
आः शप् समुपजोषं[8] खोरठावाडां[9] स्वरादयः ॥ ९ ॥

सदित्यादरे। सत्कृत्य। सत्कृतम् ॥ * ॥ फडिति विघ्नप्रतिहतोत्सारणे[10]। ऊं फट् प्रतिहतोऽसि ॥ * ॥ क्विदिति[11] भर्त्सनपादपूरणयोः। क्वित्[12] कितव कदर्योऽसि। क्वित् क्वैतदुपयुज्यते[13] ॥ * ॥ चिरराचाय। इति चिरस्यार्थे। चिरराचाय जनेन चिन्तितम् ॥ * ॥ विभाषा। इति विकल्पार्थे। विभाषाग्रेप्रथमपूर्वेषु[14] ॥ * ॥ इति। इति हेतुप्रकारप्रकर्षैवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्तिप्रकृतिवक्ष्यमाणपरामर्शमतेषु[15]। हन्तीति पलायते ॥ गौरश्वो हस्तीति जातिः ॥ इतिपाणिनि[16]। पाणिनिशब्दः प्रकर्षात् प्रसिद्ध इत्यर्थः ॥ क्रमादमुं नारद इत्यबोधि सः[17] ॥

---

१ उडिति A.
२ (?) पति A. B. D.; क उ इति F.
३ Thus A.; इत्युञ्प्रतिरूपको F.; इत्यरूपको B.; इत्यासूपको C.; इत्याप्रतिलपको D.
४ उं चोरा इति A.; ऊं वोञ् इति B.; ञंवोञ इति C.; ऊं वोभ इति D.; उञो व इति F.; cf. Pâṇ. i. 1, 17.
५ उं इति A.; ऊ इति D.; ऊमिति B. C.; om. F.; cf. Pâṇ. i. 1, 18.
६ क्वचिरराचाय F.
७ °वुतः C. F.; पुनः B. D.
८ आ शप्° B. C. F.; B. om. समुप; E. adds ढो.
९ खोरठावामः B. C.; खोसठावडामः F.
१० °प्रतिहतूत्सारणे A.; विघ्नप्रतिहंतूत्सरणे प्रतिहतोत्सारणे इत्यपि। F.
११ क्वदिति F.
१२ क्वत् F.
१३ क्वित् किं तदु° D.; क्वित्क तदु° B. C.; क्वात्क तदु° F.
१४ Pâṇ. iii. 4, 24.
१५ °प्रकर्षवचनैवमर्थ° F.; °परामर्शमानेषु B. C. F.
१६ पाणिनिः F.; corr. A. D.
१७ Śiśup. 1, 3.

ञ्वलिति कसन्तेभ्यो णः[१] ॥ वृद्धिरित्येवं या वृद्धिः । गुण इत्येवं यो गुण इति ॥ तदस्यास्त्यस्मिन्निति मतुप्[२] ॥ पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि[३] ॥ इत्युक्तवन्तं परिरभ्य दोर्भ्याम्[४] ॥ विनिश्चितार्थामिति वाचमाददे ॥ इत्यापिशलिः । प्रत्यक्षसंनिश्चवधारणपदार्थाविपर्यासादिष्वपि[५] द्रष्टव्यः ॥ * ॥ न चेदिति निषेधे । न चेत्कर्तव्यम् ॥ निषेधार्थे नो चेदित्यपि पठनीयम् ॥ * ॥ पुदिति[६] कुत्सायाम् । पुत्[६] कुत्सितं कसति गच्छति । पुत्कसः[६] ॥ कान्तमिति तु शाकटायनः ॥ * ॥ आः । इति कोपपीडयोः ।

विद्या मातरमाः प्रदर्श्य[७] नृपशून् भिक्षामहे निस्त्रपाः ॥ * ॥

शविति प्रग्रहे[८] । गां शप्करोति ॥ * ॥ समुपजोषमित्यानन्दे[९] । समुपजोषं वर्तते ॥ उपजोषमिति निर्वाणनारायणः[१०] ॥ * ॥ खोः कुत्सायाम्[११] । खोः कटं करोति ॥ * ॥ अठ । अव । अड । इत्येते भर्त्सने । अठ करोतीत्यादि[११] ॥ * ॥ आमिति प्रतिवचनावधारणयोः । आं किं मां ब्रवीषि । आं चिरस्य प्रतिबुद्धोऽस्मि ॥ * ॥ स्वरादिरिति संबोधनभर्त्सनानुकम्पापूरणप्रतिषेधेषु[१२] यथासंभवं भवति[१३] । अ अपेहि । आ

---

१ Pâṇ. iii. 1, 140.

२ Pâṇ. v. 2, 94.

३ Kaṇâda Sûtra, 1, 1, 5.

४ Kirât. 11, 80.

५ प्रत्यक्षासक्तिव्यवधारणपदार्थविपर्यासादि° D.

६ बुदिति° बुत्° बुत्कसः । चांडालः B. C. F.

७ [विद्या C.] मातरमा प्रदर्श्य C. F.

८ शपिति° A. B. C. F.; °प्रग्राहे D.

९ °इति सामन्दे D.

१० Thus A. B. C. F.; D. om. from उपजोष°

११ For the passage from खोः कुत्सायां B. C. F. read: खोस् अठ अवड् [खोस् अवाठ C.; खोस अठ अवड F.] इत्येते भर्त्सने । खोः कटं करोति । अठ [अव C.] करोतीत्यादि । to which F. adds अवड गच्छति ।

१२ °कंपापादपूरण° F.; °कंपापापूरण°A.; °कंपापूरप्रति° D.

१३ भवंति A.; यथासंभवंतीति D.

एवं नु मन्यसे[१]। इ इन्द्रं पश्य। ई ईदृशः संसारः। उ उत्तिष्ठ। ऊ ऊषरे बीजं वपसि[२]। ए इतो भव। ऐ वाचं देहि[३]। ओ आवय[४]॥ ऋ ॠ ऌ ॡ औ[५]। इत्येते मन्त्रस्तोभवचनाः॥ आदिग्रहणात् कुं खुं गुं घुमित्यादयोऽपि भवन्ति॥

अहम्। शुभम्। कृतम्। पर्याप्तम्। येन। तेन। चिरेण। अन्तरेण। ते। मे। चिराय। अह्नाय[६]। चिररात्राय। चिरात्। अकस्मात्। चिरस्य। अन्योन्यस्य। मम। एकपदे। अग्रे। प्रगे[७]। प्राह्णे। हेतौ। रात्रौ। वेलायाम्। मात्रायाम्। इत्येतेऽहंप्रभृतयो यथाक्रमं प्रथमादिसुब्विभक्त्यन्तप्रतिरूपकाश्छन्दोवशाद् यथायथं न्यस्ताः[८]॥ ९॥

उत्तरपूर्वान्यतरा अपरान्यौ[९] चेतराधरावुभयः।
एद्युस्येते[१०] ज्ञेया उभयद्युश्चापि विद्वद्भिः॥ १०॥

एद्युसन्ता एते चादयो भवन्ति। शेषं स्पष्टम्॥ १०॥

इत्थं तदानीं कथमः पुरस्तात्
सद्योऽधुनाद्येह परेद्यवि क्वाः।
पश्चादिदानीं परुतः परार्यै-
कध्यं सदा द्युः पुरस्तः[११] सदं च॥ ११॥

सद्य इति तत्क्षणे। असूत सद्यः कुसुमान्यशोकः[१२]॥ *॥ पश्चादिति

---

१ मन्यते A.; आ एवं मन्यसे। F.
२ वर्षति D.
३ ऐ पासं देहि A.; om. D.
४ औ ओ आवय F.
५ ए ऐ F.; ऌ पे ऊ (? औ) D.; ए उ (औ ?) C.
६ चिराह्नायं F.
७ Om. A.
८ न्यस्ताः F.
९ A. om. अपर.
१० एद्युस एते F.
११ परार्यैकधासदा° C.
१२ Kum. S. 3, 26.

प्रतीचीचरमयोः[1]। पश्चादस्ताद्रिः। पश्चाद्याति ॥*॥ द्युरिति वासरे ॥ तथा च[2] श्रीभोजः। द्युर्दिनमिति[3] ॥ यथा। द्युश्चन्द्रो द्योतते कथम् ॥ गगनेऽप्ययम्[4]। असान्तमिति वररुचिः। नपुंसकमित्यन्ये[5] ॥*॥ सदमिति सदा। इत्यस्यार्थे। यथा। भुजंगमस्येव मणिः सदंभाः। सततप्रभ इत्यर्थः ॥ शेषं स्पष्टम् ॥*॥ पुरस्तादित्युपलक्षणम्। सूत्रनिपातिता अधोऽधस्तादित्यादयो ज्ञेयाः[6] ॥ ११ ॥

सुच् कृत्वस् त्रा तस् त्र दा काम् र्हि र्धेधाः
स्तादाह्येनातसाच्चिडाः स्युर्धमुञ् थाः[7]।
शस् वत् तुम् णम् क्त्वादयश्च प्रसाक्षाद्-
आद्यूर्यादिश्चाव्ययीभावयुक्ताः[8] ॥ १२ ॥

तद्धितादिप्रत्ययाः[9] सुजादयस्त्रादिगणे भवन्ति ॥ सुच्। द्विः करोति। त्रिः पचति ॥*॥ कृत्वस्[10]। पञ्चकृत्वोऽधीते ॥*॥ त्रा। देवत्रा कृतम्। देवत्राकृत्य गतः ॥*॥ तस्। अतः। ततः। अन्ततः। कुतः। एते[11] पञ्चम्यर्थाः। पञ्चम्यर्थस्योपलक्षणम् ॥ अतः कारणोपदेशनिर्देशयोः[12]। अतो गुणात्सर्वजनः पूजयति। अतो गतः ॥ तत आदिकथान्तरप्रश्नानन्तर्येऽपि[13]। ततः प्रयातो भानुदत्तः। आदौ गत इत्यर्थः। ततः

---

१ प्रतिबिंबरयोः C.; D. corr. प्रतीचीपृष्ठयोः.

२ तथापि A

३ दुर्दिन° A.

४ °कथं गगने पि। D.

५ सांत इति वर° B. C.; असांत इति° इत्यन्यः F.; D. om. from असान्त°

६ Cf. Pâṇ. V. 3, 39–41, where पुरस्। अधस्। अवस्॥ पुरस्तात्। अधस्तात्। अवस्तात्। अवरस्तात्॥ are given.

७ °क्त्साच्चिडाः° B. C. F.; °साच्चिडाचधमुङ्थः A.; °च्चिडाचो धमुञ्थाः E. and D. a. m.

८ °चादावूर्याभावयुक्ताः। B.

९ अतद्धितादिप्रत्ययः D.

१० कृत्वसुच् C.

११ एते च B. C.

१२ वारणो° D.; कारणाप° C.

१३ °प्रश्नानंतर्येषु। B. C. F.

कथयति। ओदनं भुक्त्वा ततो मोदकान्भक्षयन्ति[1] ॥ अन्ततः शासनावयवे संभावनायां च ॥ किंचिदप्यधीष्व[2]। अन्ततः पूजां प्राप्स्यसि ॥ गुणवान्। अन्ततश्च मे दास्यसि ॥ कुतः प्रश्ननिह्नवयोः[3]। कुत आगच्छसि। कुतो मे हिरण्यम् ॥ अर्जुनतोऽभवन्देवाः[4] ॥ उरस्तः। उरसैकदिक्[5] ॥ * ॥ त्र। यत्र। तत्र ॥ * ॥ दा। सर्वदा ॥ * ॥ काम्। किंतराम् ॥ * ॥ र्हि। एतर्हि ॥ तर्हीति विशेषेऽपि। बलवानर्जुनः[6] कृष्णस्तर्हि बलवत्तरः॥ * ॥ धा। पञ्चधा ॥ * ॥ एधा[7]। द्वेधा ॥ * ॥ स्तात्। प्राग्ग्रामात्[8] ॥ * ॥ आहि। उत्तराहि ग्रामात् ॥ * ॥ एन[9]। पूर्वेण ग्रामम् ॥ * ॥ आत्। उत्तराद्ग्रामस्य ॥ * ॥ सात्[10]। भस्मसात् स्यात्। भस्मसात्कृत्य ॥ * ॥ च्वि। शुक्लीभवति ॥ * ॥ डा[11]। पटपटाकरोति ॥ * ॥ धमुञ्। द्वैधं[12] वर्तते ॥ * ॥ था। इत्याकारप्रश्लेषो द्रष्टव्यः ॥ था। यथा ॥ * ॥ आ। दक्षिणा ग्रामात् ॥ * ॥ शस्। अल्पशः। द्विशो देहि ॥ * ॥ वत्। राजवत्[13] ॥ * ॥ तुम्। कर्तुम् ॥ * ॥ णम्। भोजं भोजं व्रजति[14]। चूर्णपेषं पिनष्टि ॥ * ॥ क्त्वा। कृत्वा ॥ तदादेशोऽपि ल्यो[15] ग्राह्यः। प्रकृत्य ॥ आदिग्रहणात् केकेन्यतवैवेत्यादयो[16]ऽन्येऽपि द्रष्टव्याः ॥ * ॥ प्रसाचादादीति। आदिशब्दः प्रत्येकमभिसंबध्यते। तत्र प्रादिर्वक्ष्यमाणो

---

१ भक्षयति B. C.; भक्षयसि D.

२ अधीते C.

३ °निह्नयोः C.

४ अर्जनतो भवान्देवः। D.

५ Om. D.

६ तर्हीति पूर्ववत्। विशेषणे बल° D.

७ एकधा F., and corr. D.

८ प्राक् ग्रामस्य D.; F. adds पुरस्तात् before प्राग्; cf. Pâṇ. v. 3, 30.

९ एनप् C

१० क्सात् B. C. F.

११ डाच् A.; cf. Pâṇ. v. 4, 57.

१२ द्विधं D.

१३ C. adds पुत्रवत्; D. भानुवत्.

१४ C. D. om. one भोजं.

१५ यो A.; ल्यप् F.; om. B. C.

१६ केकेनत° A. B. C.; केकेनवैवेत्यादयो F.; कोकेतप्रवै° D.; cf. Pâṇ. iii. 4, 14.

विंशतिशब्दको[1] गणश्चादिसंज्ञो भवति । तत्रास्य प्रादिसंज्ञा धातुसंपृक्तस्यैव नान्यत्र । चादिसंज्ञा[2] तु सर्वत्र स्वरूपनिबन्धना स्यात्[3] । यथा । साधुर्देवदत्तो मातरं प्रति । मातरमभीत्यादावेवं प्रयुक्तिः । एष कर्मप्रवचनीय इति पाणिनीये प्रसिद्धः[4] ॥ प्राचार्यः । निष्कौशाम्बिरित्यादौ नामसमासे गतिसंज्ञः[5] । कुगतिप्रादय एव[6] पाणिनीयवचनात् ॥ * ॥ साचादादिरपि वक्ष्यमाणो गणः । तस्य केवलस्यापि चादित्वम् । करोति साचाच्चैत्र इत्येवं प्रयोगः ॥ * ॥ ऊर्यादिरपि तथा ॥ * ॥ अव्ययीभावस्य चादित्वे तस्य प्रयोजनम् । उपपयस्कारः[7] । उपकुम्भमन्यः । अभ्यग्निमन्य[8] इत्यादौ स्वादेशमुमागमप्रतिषेध[9] इति वामनः ॥ शाकटायनः[10] पुनराह । अव्ययीभावस्याव्ययत्वे स्वल्पमेवं प्रयोजनम् । दोषास्तु बहवः । तथा हि । उपकुम्भंमन्यम् । उपमणिकंमन्यमित्यत्र खित्यनद्विषतस्याजनव्ययस्येति[11] मुम्प्रतिषेधः[12] प्राप्नोति । यथा । दोषामन्यमहः । दिवामन्या रात्रिरिति । उपकुम्भीभूतमित्यत्र च्वौ चानव्ययस्येति । ईत्वप्रतिषेधस्य । यथा । दोषाभूतमहः । दिवाभूता रात्रिरिति ॥ उपाग्निकमित्यत्र कादिश्चाव्ययस्येति ॥ अक् च । यथा । उच्चकैः ॥ पाणिनिरपि स्वरादिगणात् पृथगव्ययीभावस्येत्यव्ययसंज्ञानिमित्तं सूत्रं[13] कुर्वन् लुग्विधिर्मुखस्वरोपचारनिषेधाविति त्रितयमेवाव्ययसंज्ञानिबन्धनं नान्यदिति प्रतिपादयति ॥ दुर्गस्तु ।

---

१ विंशतिगणो B.
२ प्रादिसंज्ञा तु संपृक्त° दादिसंज्ञा C.
३ निबंधनात्स्यात् C.
४ Pâṇ. i. 4, 83.
५ गतिसंज्ञाः D.; om. A.
६ गति° A.; इति for एव F.; Pâṇ. II. 2, 18.
७ उपपयःकारः B. C. F.
८ अत्यमिमन्य B. D.; om. F.
९ स्वादेशनुमागम° C.; स्वादेशमागम° A. B.; सादेशमुमा° F.
१० Om. A.
११ ? द्विषतो जनाव्य° D.; द्विषतस्यानव्य° A. B. C. F.; cf. Pâṇ. vi. 3, 67.
१२ मुम्प्र° C.; मुप्रति° B.
१३ Pâṇ. I. 1, 41.

अव्ययाच्चेति[1] लुकि सिद्धेऽन्यस्माल्लुगिति यद्वचनं[2] तज्ज्ञापयति। अव्ययीभावस्याव्ययत्वं नास्तीति ॥ १२ ॥

आस ब्रूहि नयाति पश्यत युतौ यात्यादहौ वर्तते
स्यादातङ्कनवर्ततेभवतयो मन्येऽस्तु नास्त्यसमयः।
आदङ्क्ष्यसि पूर्यते ऽस्ति भवतू शङ्के तथा विद्यते
पश्याहाविह कीर्तितौ मतिमता संख्ये[3] निपाताह्वये॥१३॥

तिङन्तप्रतिरूपका एते चादिसंज्ञा भवन्ति। निपाताव्ययसंज्ञास्तु[4] मतान्तरे ॥ आस। इति बभूवार्थे। लावण्य उत्पाद्य[5] इवास यत्नः ॥ वामनस्तु। अस[6] दीप्त्यादानयोश्चेत्यस्य साधयति ॥ वल्लभस्य तु तिङन्तप्रतिरूपको निपात इति न संमतम्। तादृशस्यैव तिङन्तस्याभावात् ॥ * ॥ ब्रूहि। इति प्रैषानुज्ञावसरेषु। ब्रूहि ब्राह्मणाः[7] ॥ * ॥ न याति। इति न शक्यत इत्यर्थे। इदं तु कर्तुं न याति ॥ * ॥ पश्यत। इति पूजाश्चर्ययोः। पश्यत माणवको भुङ्क्ते। पश्यत शिशुरपि विद्वान् ॥ * ॥ याति। इति शक्यत इत्यर्थे। इदमेव कर्तुं याति ॥ * ॥ आदह। इति हिंसोपक्रमकुत्सनेषु। आदहारीन् पुरंदर[8]। आदह भक्तस्य भोजनाय। कुर्वादह यदि करिष्यसि ॥ * ॥ वर्तते। इति सोल्लुण्ठनाङ्गसंवरणे[9]। वृद्धास्तेन विचारणीयचरितास्तिष्ठन्तु हुं[10] वर्तते ॥ * ॥ स्या-

---

१ अव्ययत्वेन A., Kâtantra II. 4, 3 and 4.

२ यदाह F.

३ संघे E.; संखे D.

४ निपाताव्ययशब्दास्तु A.

५ लावण्यमुत्पाद्य A.

६ आस D.; Vâm. 5, 2, 29.

७ ब्राह्मण F.; D. om. this example.

८ आदहारात्॰ C.; आदहारीत् पुरदरः F.

९ सोल्लुंठनाग॰ C.

१० विचारणाय च॰ C.; ॰चरितास्ति स्वं नु द्वं D.

दित्यनेकान्ते । स्याद्वादिनो[१] जैनाः । स्यान्न तत्स्यादपि स्यादिति[२] पक्षान्तरसंभावनादावपि ॥ * ॥ आतङ्क । इति कुत्साविनाशयोः । आतङ्कचोरं[३] दधिभवनाय ॥ प्रतिग्रहेऽपि शाकटायनः[४] ॥ * ॥ न वर्तते । इत्यमङ्गलप्रतिषेधे । समराभिमुखे पत्यावश्रुनिपातो[५] न वर्तते तस्याः ॥ * ॥ भवति । इति सत्तायाम् । भवति नाम तत्रभवान् वृषलं याजयिष्यति ॥ * ॥ मन्ये । इति वितर्के । मन्ये मार्तण्डगृह्याणि पद्मान्युद्धर्तुमुत्सुकः ॥ * ॥ अस्तु । इति निषेधासूयाङ्गीकारयोः । अस्तु साम्ना[६] ॥ असूयापूर्वेऽङ्गीकारे[७] । अस्तुंकारः । एवमस्तु को नाम दोषः ॥ * ॥ नास्ति । इति सत्तानिषेधे । नास्तिवादशूरो[८] नास्तिकः ॥ * ॥ अस्मि । इत्यस्मदर्थानुवादे । अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः[९] ॥ अहमित्यर्थेऽपि[१०] । उडुपेनास्मि सागरम् ॥ * ॥ आदङ्क । इत्यातङ्कवत् ॥ * ॥ एहि । इति प्रहासादौ[११] । एहि मन्ये रथेन यास्यसि । एहि न त्वया सह जल्पिष्यामि ॥ * ॥ असि । इति त्वमित्यर्थवाक्यालंकारयोः[१२] । वेत्यसि पार्थिव त्वमसि[१३] सत्यमन्यधाः ॥ भोजस्तु युष्मदर्थानुवादे । यदपूपुजस्त्वमसि पार्थ मुरद्विषमिति[१४] प्राह ॥ * ॥ पूर्यते । इति निषेधे । पूर्यते प्राणायामेन[१५] ॥ * ॥ अस्ति । इत्यस्त्यघनसत्तासु[१६] । आस्तेयं

---

१ स्याद्वादनो B.

२ ? स्यान्मतं स्यादपि स्यादिति । A.; स्यान्न तत्स्याद्तिपि स्यादिति C.; स्यान्नतां स्यान्नतां स्यादपि स्यादिति D.

३ आतककचार C.

४ शाकं । D.

५ °अश्रुपातो F.; °निपातौ C.

६ नाम्ना F.; नामा C.

७ A. adds च.

८ वादसूरो A. B. D.

९ Cf. Böhtl.-Roth, s.v. अभिनिवेश.

१० अहमित्याद्यपि F.; Ragh. 1, 2.

११ प्रसादौ E.

१२ अर्थवालालंका° A.; अर्थवाक्यलंकादयोः D.

१३ पार्थिवस्त्वमसि A.B.C.D.; Vâm. 5, 2, 82.

१४ Śiś. 15,14 त्वमिह पार्थ मुरजितं ed.

१५ प्रणामेन B. C. F. and orig. D.

१६ ?? इत्यसृग्वन° B.D.F.; °मृग्वन° C.; °सृज्धन° ? A.; °सस्तासु D. [*a*. अस्तिं = अस्ति (? based on wrong reading आस्तेयं for आस्त्येयं); *b*. घने in अस्तिमत].

चर्मभाजनम्[1]। अस्ति परलोके मतिरस्येत्यास्तिकः[2] ॥ * ॥ भवतु। इत्यस्तुवत् ॥ * ॥ शङ्के। इति वितर्के। शङ्के शशाङ्कोऽयम् ॥ * ॥ विद्यते। इति भवत्यर्थे ॥ * ॥ पश्य। इति पश्यतवत् ॥ * ॥ आह। इत्युवाचार्थे। अथाह वर्णी विदितो महेश्वरः[3] ॥

एते चोच्चावचेष्वर्थेषु निपतन्तीति निपाताः[4] । तत्र।

केऽप्येषां द्योतकाः केऽपि[5] वाचकाः केऽप्यनर्थकाः।
आगमा इव केऽपि स्युः संभूयार्थस्य साधकाः ॥

तत्र द्योतकास्त्ववाहाहैवादयः। वाचकाः शश्वत् कुवित्[6] प्राह्ले प्रग इत्यादयः। अनर्थकाः कमीमिदित्यादयः। संभूयार्थस्य साधका न ह वै[7] न खलु मास्मेत्यादयः ॥ १३ ॥

स्वः सायं समया दिवा पुनररं कामं प्रकामं बहिर्-
दोषा ह्यो निकषान्तरासनुतरो नक्तं नमो भूयसः।
अन्तः प्रातरसांप्रतं परमृते साक्षात् सनत् साचयः
सत्यं मङ्क्षु विहायसाशु सहसा प्रायः स्वयं संवतः ॥ १४ ॥

स्वरिति स्वर्गपरलोकयोः। स्वः सुखयति। एहि जाये स्वरारोहाव। स्वः संजानीते। स्वः स्पृहयति। स्वरागच्छति। छायेव या स्वर्जलधेर्जलेषु[8]। स्वर्वसतीति। स्वर्यातस्य ह्यपुत्रस्य ॥ आदित्यशर्मणोरित्येके ॥ * ॥ सायं दिनावसाने। सायं संयमिनस्तस्य महर्षेर्महिषीसखः[9] ॥ * ॥ समया। इति समीपमध्ययोः। त्वां समयास्ते। ग्रामं

---

१ F; धर्मभाजनं A.; चर्मभ्यजनं B.C.; चर्मवाजलमस्ति। D.
२ मतिस्यास्तिकः A. F.
३ Kum. S. 5, 65.
४ Yâska N. 1, 4; B. C. F. om. तत्र.
५ केचिद् B. C. F.
६ क्वचित् D.
७ सार्थकाः० A.; ०न हे वै D.
८ Sisup. 3, 35.
९ Raghuv. 1, 48.

समयास्ते । ग्राममध्य इत्यर्थः ॥ आदित्सापरोक्षयोरित्येके[१] ॥ * ॥ दिवा । इति दिनार्थे । दिवाकरः ॥ * ॥ पुनरिति भूयोऽर्थविशेषयोः[२] । पुनरुक्तं वचः । किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥ * ॥ अरमिति शैघ्र्ये । अरं पचति[३] ॥ * ॥ काममिति स्वाच्छन्द्येऽनिच्छाङ्गीकारे[४] च । कामं भुङ्क्ते । कामं क्षाम्यतु यः क्षमी ॥ * ॥ प्रकाममित्यतिशये । प्रकाममप्रीयत यज्वनां प्रियः[५] ॥ * ॥ बहिरित्यन्तःप्रत्यनीके । बहिर्विकारं प्रकृतेः पृथग्विदुः[६] ॥ * ॥ दोषा । इति रात्रौ । दोषामन्यमहः ॥ * ॥ ह्यः । इत्यतीतेऽह्नि । ह्यस्तनः ॥ * ॥ निकषा । इति समीपे । विलङ्घ्य लङ्कां निकषा हनिष्यति[७] ॥ * ॥ अन्तरा । इति मध्यविनार्थयोः । अन्तरा त्वां च मां च[८] कमण्डलुः । त्वामन्तरा तामरसायताक्षि ॥ * ॥ सनुतरित्यन्तर्धाने । सनुतश्चौरो गच्छति ॥ हिंसानुबन्धपूर्वाह्णेषु शाकटायनः ॥ * ॥ नक्तमिति रात्रौ । नक्तंचरः ॥ * ॥ नमः । इति पूजायाम् । नमोऽस्तु वर्धमानाय ॥ * ॥ भूयः । इति पुनरर्थे । भूयः पचति ॥ * ॥ अन्तरिति मध्ये । अन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ[९] ॥ * ॥ प्रातरिति प्रत्यूषे । प्रातरेव समुत्थाय ॥ श्वस्तनेऽपि ॥ * ॥ असांप्रतमित्यन्याय्ये । संप्रत्यसांप्रतं वक्तुमुक्ते मुसलपाणिना[१०] । विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्[११] ॥ युक्ते सांप्रतमित्यमरसिंहः[१२] ॥ * ॥ परमिति किलर्थे । गुणवानसि[१३] परमहंकारी ॥ * ॥ ऋते । इति वर्जने ।

---

१ आदित्यापरो° F.

२ °विशेषण्योः° D.; भूयोविशेषयोः B. C. F.

३ पतति F. and C.

४ °निस्थांगीकारे B.

५ Śiśup. 1, 17.

६ Śiśup. 1, 33.

७ Śiśup. 1, 68.

८ त्वां मां च F.

९ Megh. 3.

१० वक्तुमुक्तं° D.; वक्तुं युक्ते° C.; °मुशल° A. D.

११ Kum. S. 2, 55.

१२ D. F. om. from युक्ते iii. 5, 11.

१३ गुणावानपि A.

च्छते कृशानोर्न हि मन्त्रपूतम्[१] ॥ * ॥ साक्षादिति प्रत्यक्षतुल्ययोः। साक्षाद्दृष्टा साक्षी। इयं साक्षाल्लक्ष्मीः ॥ * ॥ सनदिति नित्ये। सनत्कुमारः ॥ मान्तं तु नुतिपरित्राणचिरंतनहिंसाकल्पननिर्भर्त्सनेषु[२] शाकटायनः ॥ * ॥ साचि। इति तिर्यगर्थे। साचि लोचनयुगं नमयन्ती[३] ॥ * ॥ सत्यमिति प्रश्नप्रतिषेधसत्येषु[४]। सत्यं करोषि ॥ ननु किमर्थमिदम्। सत्यम्[५] ॥ सत्यं हारि नितम्बिनीकुचयुगं सत्यं मनोज्ञाः श्रियः ॥ * ॥ मङ्क्षु। इति शैघ्र्ये। मङ्क्षूदपाति परितः पटलैरलीनाम्[६] ॥ * ॥ विहायसा। इति वियदर्थे। विहायसा रम्यतमं[७] विभाति ॥ * ॥ आशु। इति शैघ्र्ये। आश्वपेहि मम सीधुभाजनात्[८] ॥ * ॥ सहसा। इत्याकस्मिकाविमर्शयोः[९]। दिवः प्रसूतं[१०] सहसा पपात। सहसा विदधीत न क्रियामविवेकः परमापदां पदम्[११] ॥ * ॥ प्रायः। इति बाहुल्ये। प्रायः स इह नेष्यति[१२] ॥ * ॥ स्वयमित्यात्मनेत्यर्थे। स्वयं प्रदुग्धेऽस्य वसूनि मेदिनी ॥ चन्द्रस्त्वात्मानमित्यर्थे[१३] ॥ * ॥ संवदिति वर्षे। संवत्सरः। संवत्तृतीये ॥ १४ ॥

उच्चैर्नीचैरवश्यं सपदि बलवतः प्रादुराविः पुरस्तात्-
तूष्णीं जोषं निकामं युगपदनिशमः[१४] साम्यभीक्ष्णं सनोषाः।

१ Kum. S. I, 52.

२ ?मातन्तु तिनुपरि° A.; मांतमिति तु परि° D.; मांतं तु नतिपरि° F.; निर्भर्त्सनेष्विति A. D.; Prof. Aufrecht would refer these meanings to some other word.

३ Kirât. 9, 44.

४ प्रश्ननिषेध° F.

५ Om. D.

६ Śiśup. 5, 37.

७ रम्यतरं F.

८ शीधु° B. F.; साधु° C.

९ °आकस्मिकवि° C.

१० प्रभूतं C.

११ Kirât. 2, 30; Böhtl. Sp. 6970.

१२ सह नेष्यति A.

१३ F. adds ऽपि; D. om. from चन्द्र°.

१४ युगपदमनिशः C.

रोदस्योर्भूर्भुवस् कं झटिति पुरतसो ऽतीव सुष्ठु प्रसह्य-
द्राक् साग् मिथ्या वृथा शं कु मिथुनमृधको ऽद्धा ऽञ्जसा-
ऽवो मनाकः[1] ॥ १५ ॥

उच्चैः । नीचैरिति महदल्पयोः । उत्कृष्टनिकृष्टयोरिति शाकटा-यनः । किं पुनर्यस्तथोच्चैः[2] । नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्र-मेण[2] ॥ * ॥ अवश्यमिति निश्चये । अवश्यं यातारश्चिरतरमुषित्वापि विषयाः[3] ॥ * ॥ सपदि । इति वर्तमानतत्क्षणशीघ्रार्थेषु[4] । सपदि विपदो विदधे[?]मस्तनर्गलवृत्तयः[5] । सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या[6] । सपदि प्रदहत्युपेक्षितो ऽग्निः ॥ * ॥ बलवदित्यतिशये[7] । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः[8] ॥ * ॥ प्रादुरिति नामप्राकाश्ययोः[9] । विष्णोर्दश प्रादुर्भावाः । मत्स्यकूर्मादीनि दश नामानीत्यर्थः[10] ॥ प्रादुरासीत् ॥ * ॥ आविरिति प्राकाश्ये । आविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्[11] ॥ * ॥ पुरस्तादित्यग्रत इत्यर्थे । रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत् पुरस्तात्[12] ॥ * ॥ तूष्णीमिति मौने । राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः[13] ॥ * ॥ जोषमिति सुखमौनयोः । जोषमास्ते जितेन्द्रियः । जोषमास्स्व[14] ॥ ज्योषमिति[15] शाकटायनः ॥ * ॥ निकाममित्यतिशये । निकामं क्षामाङ्गी ॥ * ॥ युगपदित्येककालार्थे ।

---

१ मिथुनमृधकव्वा॰ F.

२ Megh. 17 and 106.

३ Bhartrih. 3, 13.

४ वर्तमानक्षण॰ F.; ॰शीघ्रार्थे A.; इति लक्षणाशीघ्रार्थयोः D.

५ ॰विस्रस्त [न supplied] र्गलवृत्तयः A.; D. om. this example.

६ Kum. S. 3, 76.

७ इति सुष्ठ्वर्थे C.

८ ॰श्यप्रत्ययचेतः A.; Sakunt. 2.

९ ॰प्रकाशयोः A. B.

१० मत्स्यकूर्मादीनीत्यर्थः C.

११ Megh. 22.

१२ Megh. 15.

१३ Aufr. Sārng. P. sub *Hanūmat*; Khandaprasasti (Pand. vi.) sl. 119.

१४ जोषमास्ते C.; जोषमास Kshir.

१५ स्वोषमिति A.; क्रोषमिति D.

तद्वल्गुना युगपदुन्मिषितेन तावत्[1]॥ क्रियासमभिहारेऽपि ॥ * ॥ अनिशमिति सातत्ये। यत्रानिशं[2] कीर्त्यते ॥ * ॥ सामि। इत्यर्धकुत्सयोः। सामिसंमीलिताक्षी[3]। सामिकृतमकृतं स्यात् ॥ * ॥ अभीक्ष्णमिति पौनःपुन्यसातत्ययोः। अभीक्ष्णमास्फालयतीव कुम्भम्[4]। अभीक्ष्णं वक्ति ॥ नित्यमिति। सदा सदिति। अजस्रं संततमिति[5] सातत्ये कश्चिदाह ॥ * ॥ सना। इति नित्ये। एष धर्मः सनातनः ॥[6] तान्तमपि ॥ * ॥ उषा। इति रात्रौ। उषातनो वायुः ॥ * ॥ रोदसी। इति द्यावापृथिव्यर्थे। द्यावापृथिव्यौ रोदस्यौ रोदसी रोदसीति च[7] ॥ * ॥ ओमिति ब्रह्मवाचि। ओमित्येकाक्षरं ब्रह्म ॥ * ॥ भूर्भुवः। इति पृथिव्यन्तरिक्षयोः। भूर्लोको भुवर्लोक ॥ भुवसश्च महाव्याहृतेरिरिति[8] रेफो भवति ॥ * ॥ कमिति वारिमूधसुखनिन्दाव्योमसु[9]। कंजं पद्मम्। कंजाः केशाः। कंयुः। कंदर्पः। कंगामिनः खगाः ॥ * ॥ झटिति। इति शैघ्र्ये। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः[10] ॥ झगितीत्यपि[11] केचित् ॥ तरसोदितासजलेष्विति[12] लक्ष्यात् तरसापि ॥ तूर्णं द्रुतं क्षिप्रं शीघ्रं लघ्विति क्रियाविशेषणम्[13] ॥ * ॥ पुरतः। इत्यग्रत इत्यर्थे। नीरसतरुरिह विलसति[14] पुरतः ॥ * ॥ अतीव। इत्यतिशये। अतीव शोभते ॥ * ॥ सुष्ठु। इति प्रशंसानिर्भरयोः। सुष्ठूक्तम्। सुष्ठु

---

१ Ragh. 5, 68.

२ यत्राऽनिशं F.

३ Kshir. adds अक्षी. He has both examples.

४ The MSS.; °तीभकुम्भं Kshir.

५ नित्यं नित्यदासदित्यजस्रं संततमिति B.; नित्यदासदित्यजस्रं° D.

६ Man. 4, 138; Böhtl. Sp. 6732; °सांतमपि A.; तातमपि C.

७ Cf. Hemach. Abhidh. 938.

८ Cf. Pâṇ. viii. 2, 71.

९ मुख for सुख B. D.; D. om. व्योम.

१० Ratnâv. p. 291, 6; Böhtl. Sp. 3026.

११ झगित्यपि F.

१२ °जलसेष्विति B.; °सोदितासजलसेष्विति C.; तरसेद्गता जलेष्विति° A.

१३ A. om. from तूर्णं. Probably a gloss from Kshîrasv. on A. K. iii. 5, 2.

१४ निवसति B. C.

विभाति ॥ * ॥ प्रसह्य । इति शीघ्रार्थे हठार्थे च । प्रसह्य सिंहः किल तां चकर्ष[1] । प्रसह्य वित्तानि हरन्ति चौराः ॥ * ॥ द्राक् । स्रागिति[2] शैघ्र्ये । द्राग्विद्रुतं कातरैः । स्राक्[3] सरन्त्यभिसारिकाः ॥ * ॥ मिथ्या । इत्यसत्ये[4] । मिथ्यावादिनि इति ॥ अनव्ययोऽपि । यथा । निर्मिथ्यः[5] ॥ * ॥ वृथा । इति विफलाविध्योः । प्रयुक्तमप्यस्त्रमितो वृथा स्यात्[6] । प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत्[7] ॥ * ॥ शमिति दुःखोपशमे । शंकरः । शंभुः[8] ॥ * ॥ कु । इति कुत्सेषदर्थयोः । शास्त्रं कापथघट्टनम्[9] । पयः पूर्वं सनिःश्वासं[10] कवोष्णमुपभुञ्जते ॥ पापार्थेऽपि ॥ * ॥ मिथुनमिति द्वौ द्वावित्यर्थे । मिथुनं रमन्ते[11] ॥ * ॥ ऋधगिति सत्ये । ऋधग्वदन्ति विद्वांसः ॥ वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये[12] ॥ * ॥ अद्धा । इति स्फुटार्थावधारणयोः ॥ आराधितोऽद्धा मनुरप्सरोभिः[13] ॥ सत्यतिशययोरित्येके[14] ॥ * ॥ अञ्जसा । इति तत्त्वशीघ्रार्थयोः[15] । तत्त्वञ्जसा मुनीश्वरः । सुतनु कथय कस्य व्यञ्जयन्त्यञ्जसैव[16] ॥ * ॥ अवः[17] । इति बहिरित्यर्थे । अवो[17] गच्छति ॥ * ॥ मनागिति स्तोके । यस्मिन्मनागपि नवाम्बुजपत्रगौरी[18] ॥ १५ ॥

---

१ Raghuv. 2, 27.

२ आगिति A. C. F.

३ आक् A. C. F.; आक् D.

४ D. F. add: मिथ्या पृथ्वीश्वर न कथयाम्येष विद्वेषिपेषं [°पेषः D.].

५ अन(य suppl.)योपि यथा । निर्मिथ्यः । A.; अनवायेऽपि । यथा निर्मिथ्या । B. C.; D. om. from अनव्ययो.

६ Raghuv. 2, 34.

७ Man. 8, 159.

८ शंयुः A.

९ शास्त्रे कापथघट्टने C.; शास्त्रकापथ° F.

१० पूर्वमनिः° B. D.; cf. Ragh. 1, 67.

११ रमते B. F.; न रमते C.

१२ वियोगसीमीप्य° D.

१३ Śiśup. 3, 42.

१४ ? मध्याऽतिशयोरपि F.; भव्यातिं° (orig. भव्यति°) C. D.

१५ तत्वदीर्घयोः C.

१६ व्यंजयत्यंजसैव B. F.; व्यंजसैव C. B. C. F. add स्त्रीलिङ्गो (त्रिलिङ्गो C.) ऽप्ययं यथा समञ्जसमिति ।

१७ अघ इति° अधो D.

१८ तवांबुज° B. C. F.; °गौरीं A.

मिथुर्मिथो विष्वगुपांशु ताजग्-
मनश्चनः[1] प्रेत्य मिथः शनैसः[2] ।
मुधाऽन्वगीषच्चिरमो मृषास्तं-
धिगानुषक्स्वस्ति पुरोऽस्म[3] इद्धाः ॥ १६ ॥

मिथुरिति द्वौ द्वावित्यर्थे[4] । मिथुर्मन्त्रयेते[5] ॥ उकारान्तमप्यनृतार्थे[6] केचित् ॥ * ॥ मिथो । इति रहःसहार्थयोः । मन्त्रयन्ते मिथो ॥ विरहान्योन्यार्थयोरपि[7] ॥ * ॥ विष्वगिति समन्ततोभावे । कथाचितौ विष्वगिवागजौ गजौ[8] ॥ * ॥ उपांशु । इत्यप्रकाशोच्चारणरहस्ययोः । जपतः सदा जपमुपांशु वदनमभितो विसारिभिः[9] । परिचेतुमुपांशु धारणां कुशपूतं प्रवयास्तु विष्टरम्[10] ॥ कथमुपांशुवचः । उपचाराद्भविष्यति[11] ॥ * ॥ ताजगिति[12] शैघ्र्ये । ताजग् जरामृत्युरुजा जयन्ति[13] ॥ * ॥ मनः । इति नियमे । मनो वर्तते[14] । नियमो[15] वर्तत इत्यर्थः ॥ * ॥ चनः । इत्यन्ननाम ।[16] चनो दधिष्व पचतोत सोमम् ॥ श्रद्धायामिति श्रीवसुक्तः[17] ॥ * ॥ प्रेत्य । इति भवान्तरे । अन्यो धनं

१ तोजग्मतश्चतः F.
२ शनैर्मुधाः । किमन्वगी° D.E.
३ स्त A.; स्र B.
४ °इति द्वावित्यर्थे C.
५ मंचयंते B. D.; मंचयते F.; मंचायते तु C.
६ °अवृतार्थे C.; अववतार्थे B.
७ विहीन्यो° C.
८ Kirât. 1, 36.
९ Kirât. 12, 8; D. has only उपांशु जपति ।
१० Raghuv. 8, 18.
११ उपांशुवधः A.; °उपांशुचवः° (!) D. F.; B. C. om. from कथमु°.
१२ तोजगिति F.
१३ ?ताजकुंजरा° A.; ताजगत्जरामृत्यु° B.; ताजकपचति । D.; तोजक् पचति । तोजक् मृत्यु° F.
१४ मत इति° मतो वर्त्तते F.
१५ Thus MSS.; D. orig. नियमे.
१६ चनस्कृत्यंननाम B.; वनस्कृत्ये । ननाम C.; चतस्तुत्यां । ननामचतो° F.; the example is Rgv. x. 116, 8.
१७ Thus A.; श्रीवयुक्तः B.; श्रावयुक्तः C.; D. F. om. from श्रद्धा°.

प्रेत्यगतस्य भुङ्क्ते ॥ अमुत्रशब्दस्याप्यत्र पाठो द्रष्टव्यः[१] ॥ * ॥ मिथः । इति रहोऽन्योन्यार्थयोः । तथापि वाचालतया युनक्ति मां मिथस्त्वदाभाषणलोलुपं मनः[२] ॥ * ॥ शनैरिति क्रियामान्द्ये । शनैः[३] शनैर्ददात्येष पादौ भूतानुकम्पया[४] ॥ * ॥ मुधा । इति निष्फले । प्रीतिकरण[५] इत्यन्ये । किं पौलोमि मुधा क्रुधा[६] मयि न तु स्वप्नेऽपि ते विप्रियम् ॥ * ॥ अन्वगित्यानुकूल्ये । अन्वग्ययौ मध्यमलोकपालः[७] ॥ * ॥ ईषदित्यल्पे । ईषत्पचति[८] ॥ अप्राप्ते च ॥ * ॥ चिरमिति कालविप्रकर्षे । किंचिन्नम्रमुखो प्रियेण हसता बाला चिरं चुम्बिता[९] ॥ * ॥ मृषा । इत्यसत्ये । मृषा वदति दुर्जनः[१०] ॥ वृषा प्रबलार्थे[११] इति केचित् ॥ * ॥ अस्तमिति शैलविशेषादर्शनयोः । अस्तं भास्वान्प्रयातः । द्युतिरस्तमिता रतिश्च्युता[१२] ॥ * ॥ धिगिति निन्दाभर्त्सनयोः । धिगिमां देहभृतामसारताम्[१३] । धिक्काकिकान् ॥ * ॥ आनुषगित्यानुपूर्व्ये[१४] । आनुषक् प्रविशतीह बन्धुता[१५] ॥ अनुमानेऽनुषगिति शाकटायनः ॥ आनुषदित्याकारं दकारं च केचित् ॥ * ॥ स्वस्ति । इति पुण्याशीःक्षेममङ्गलप्रत्यभिवादनेषु[१६] । स्वस्त्यस्तु ते धार्मिक मत्प्रसादात् । स्वस्ति तेऽस्तु लतया सह वृक्ष ।

---

१ Cf. Amarak. iii. 5, 8.

२ °लोलुभं° A. B. C.; Siś. 1, 40.

३ F. om. शनैः.

४ पादो° D.; भूतानामनु° F.

५ प्रातिकरण C.

६ क्षुधा D.

७ Raghuv. 2, 16.

८ ईषदित्यस्याक्रियायोः । ईषत्पचति । इषत्करः कटो [ईषत्कारः काय B.] भवता । B. C. F.

९ Amarûś. 77 [where लज्जानम्रमुखी°]. Cf. Sâhityad. p. 7, l. 6.

१० अर्जुनः D.

११ ? मृषा प्रचलार्थे B. C. F.; cf. Sây. on वृषायुध् Rgv. i. 33, 6.

१२ Raghuv. 8, 65.

१३ Raghuv. 8, 50.

१४ अनुषग्° C. D.

१५ प्रविशतीति° D.; °बंधुता C.

१६ पुण्याशीरक्षेममंगलब्राह्मणप्रत्यभि° B. F.; पुण्याशताक्षममंगलब्राह्मण° C.

स्वस्त्यस्तु ते सौम्य चिराय जीव[1]। स्वस्ति श्रीकुसुमपुरात्। राज्ञा नमस्कृता विप्राः स्वस्तीत्येते प्रयुञ्जते ॥ * ॥ पुरः। इत्यग्रत इत्यर्थे। पुरःसरा धामवतां यशोधनाः[2] ॥ * ॥ अन्तः। इति[3] शीघ्रसांप्रतिकयोः। अन्त एव[4] गच्छति। अन्तरेवागच्छति[5]। अन्तसूऊधस्अवसां[6] रो वेति रेफो विकल्पेन[7] ॥ * ॥ इद्धेति प्राकाश्ये। समिद्धमिद्धेश्च महो दधासि[8] ॥ सामीप्यस्मरणयोरपि ॥ १६ ॥

स्थाने वरं दुष्टु हिरुग् बलात्
प्रबाहुकं ज्योक् तिरसो मुहुः शू[9]।
युक्तं प्रशानार्यहलं क्षमाऽर्वाग्-
विनाश्च नाना पृथको सुदिश्च ॥ १७ ॥

स्थाने। इति युक्ते[10]। स्थाने वृता भूपतिभिः[11] परोक्षैः ॥ * ॥ वरमिति हीनोत्कर्षे। वरं विरोधोऽपि समं महात्मभिः ॥ * ॥ दुष्टु। इति कुत्सार्थे। दुष्टुवादी खलः ॥ * ॥ हिरुगिति वियोगहिंसावर्जनेषु। हिरुक्करोति ॥ हिरुक्कर्मणां[12] मोक्षः। कर्मवर्जनाद्[13] मोक्ष इत्यर्थः ॥ * ॥ बलादिति हठार्थे। लक्ष्मीरेव मुखरीकुरुते बलान्माम्[14]। ग्रापयन्नितपौलस्त्यबलात्कारकचग्रहैः[15] ॥ * ॥ प्रबाहुकमिति सम-

१ Cf. Ragh. 14, 59 [प्रीतास्मि ते सौम्य°].

२ Kirâtârj. 1, 43.

३ अम्र° B. D.; अस्व° A.

४ अम्र एव B. D.; अस्व एव A.; अन्तरेव F.

५ अश्वरे° A.; अम्रे B. D.

६ अम्रसू° B.; अस्वसू° A.; अम्रसधस° F.; cf. Pâṇ. 8, 2, 70.

७ B. C. F. add अमनसित्यन्ये [°अन्यः F.]।

८ ? समिद्धमद्धेश्चमहो° B. C.; समिद्धमिलेसमहो ददासि A.; समिद्धमिद्धेसमहो दधीसि। F.

९ मुहुः श्वः B. C. F.

१० इति अवसरे। D.

११ नृपतिभिः A.; Ragh. 7, 13.

१२ °कर्मणां thus A. B. C. F. and Kshîr.; °कर्मणा D.; cf. Hem. Abhidh. 1527 Schol.

१३ कर्मक्षये D.

१४ B. C. om. this example.

१५ Raghuv. 10. 48.

काले। प्रवाह्कं गृह्णीयात्[१]॥ ऊर्ध्वार्थे प्रवाहः प्रवाहक् चेति केचित्पठन्ते[२]॥*॥ ज्योगिति कालभूयस्त्वे[३]। ज्योग् जीवामः। ज्योक्कृत्य नृपतिं गतः[४]॥ शीघ्रार्थे संप्रत्यर्थेऽपि॥*॥ तिरः। इत्यन्तर्धानतिर्यगर्थयोः। विश्वयोनिस्तिरो दधे[५]। तिरः काष्ठं[६] करोति॥ अवज्ञायामपि। यथा

तिरश्चकार भ्रमराभिलीनयोः
सुजातयोः पङ्कजकोशयोः श्रियम्[७]॥*॥

मुहुः। इति पौनःपुन्ये। इह मुहुर्मुदितैः कलभैरवः[८]॥ मुहुर्मुहुर्मुह्यति सा मृगाक्षी। इत्यादिलक्ष्यदर्शनान्मुहुर्मुहुरित्यपि[९]॥*॥ शुड्। इति पूजायाम्। शुड् नासीरमस्येति शुड्नासीरः[१०]॥ शुड् अश्नुते। श्वशुरः[११]॥ क्षिप्रार्थेऽपि। शुड् क्षिप्रं नयत्यन्तरिक्ष इति वा। शुड्नो वायुः[१२]॥*॥ युक्तमिति न्याय्ये। यथा वीराचार्याणाम्।

युक्तं सिताम्बराणां तुम्बग्रहणं कुटुम्बपरिहरणम्।
कथमन्यथा तरीतुं शक्यः संसारतोयनिधिः[१३]॥*॥

प्रशानिति समानार्थे। प्रशान्देवदत्तो यज्ञदत्तेन॥*॥ आर्यहलमिति बलात्कारे। आर्यहलं गृह्णाति[१४]॥ आर्येति प्रीतिबन्धे। हलमिति च

---

१ अश्नीयात् C.

२ Thus A.; ऊर्ध्वाऽर्थे प्रवाहकेति केचित्° F. (always ब); प्रवाहप्रवाहकेति° B.; अर्ध्वार्थे प्रवाहकमित्युच्यते C.; ॥ प्रवाहत्केति D.

३ कालभूयस्त्वाप्रश्नयोः A.; कालभूयस्त्वप्रश्नयोः F.

४ B. C. D. om. this example.

५ Kum. S. 2, 62.

६ कोष्टं C.; om. D.

७ भ्रमरावलीढयो° F.; D. omits this example; Ragh. 3, 8.

८ Śisup. 4, 60.

९ D. om. from मुहुर्मुहुर्मुह्यति.

१० शुनाशीरमस्येति शुनाशीरः B.C.

११ श्वसुरः A. C.

१२ °अन्तरिक्षमिति° A.; श्वनो वायुः A. B.; D. om. from क्षिप्रार्थे. Nir. 9, 40.

१३ संसारतोयधिः F.

१४ गृह्णामि B. C. F.

प्रतिषेधविषादयोरिति[1] शाकटायनः ॥ * ॥ क्षमा । इति क्षान्तौ । भवान् क्षमा[2] ॥ * ॥ अर्वागित्यधरे[3] । वर्षात्षोडशादर्वाक् । अर्वाक्कालीनः ॥ * ॥ विना । इति वर्जने ।

तात नोदधिविलोडनं प्रति त्वद्विनाद्य वयमुत्सहामहे[4] ॥ * ॥

नाना । इत्यनेकविनार्थयोः[5] । नानाविधं[6] कृतकदेहभृतां समाजम् ॥ उभयार्थत्वमनेकार्थत्वान्न व्यतिरिच्यते । तेन[7] नानापक्षावमर्शः संशय इत्यभिहितम्[8] ॥ नाना नारीं निष्फला लोकयात्रा[9] ॥ * ॥ पृथगिति विनार्थे । बहिर्विकारं प्रकृतेः पृथग्विदुः[10] ॥ * ॥ सुदि । इति शुक्लपक्षे ॥ १७ ॥ * ॥

स्वरादीनां कारकशक्त्याश्रयसत्त्वाभिधायिनां स्वर्गन्ता स्वः स्पृहयणीत्यादौ यथायोगमुत्पन्नाया[11] द्वितीयादिविभक्तेर्लुक् । पक्षकृत्वः प्रभृतयस्तु विभक्त्यर्थप्रधानाः । स च विभक्त्यर्थः प्रातिपदिकार्थः[12] संपन्न इति प्रातिपदिकार्थे प्रथमैव भवति[13] । सापि संख्याविशेषाभावान्[14] सर्वा किं तर्ह्येकवचनमेव तस्यौत्सर्गत्वात्[15] । तथा चोक्तम् । एकवचनमुत्सर्गः करिष्यत इति[16] । एतन्नः संमतम् ॥ सुधाकरस्त्वाह[17] । अव्ययेभ्यस्तु

---

१ इत्वमिति षेधविवादयोरिति D.

२ भवान् । क्षमाकरोति A.; भवतः क्षमा D.; सहनं क्षमा । F. (? भवन् क्षमा)

३ °इत्यवरे B. C. F.

४ Śiśup. 14, 83 [विनाद्य eds.].

५ °नेको भयाविनार्थेषु । D.

६ नानाधिकं D.

७ D. om. from उभयार्थ°.

८ इत्यपि सिद्धं A.; om. D.; °पक्षावमर्शाः° C.

९ Thus B. Kshîr. नाना नारी नि° A. D. F.; वानरीं निष्फलोकयात्राः C.

१० Śiśup. 1, 33.

११ शब्दा योगमुन्नीय D.

१२ सर्ववि° D.; प्रातिकार्थः C.

१३ प्रथमैवेति.

१४ °विशेषाविशेषाभावान्न F.

१५ तस्यौत्सर्गिकत्वात् A.; तस्योत्सर्गत्वात् B.

१६ उत्सर्गतः C. D.; करिष्यति इति B. C.

१७ सुखाकर° A. F.; तथा चाह सुधाकरः; (orig. सुधारः) D.; cf. śl. 120 comm. where सुखाकर MSS. exc. D. a. m.

निःसंख्येभ्योऽव्ययादाप्सुप इति[१] ज्ञापकाद्विभक्त्युत्पत्तिः ॥ अत्राहुः । का पुनरसौ[२] । अत्रैके तसिलादीनामदूरविप्रकर्षादानुगुण्याच्च[३] पञ्चम्यादय एवेत्याहुः । तन्न । अभिहितः सोऽर्थोऽन्तर्भूतः[४] प्रातिपदिकार्थीभूत इति प्रथमैव निःसंख्येभ्योऽपि न्याय्या ॥ अपि च । ज्ञापकात्प्रयोजनस्य पदत्वादेः सिद्धये क्रमव्यतिक्रमे प्रयोजनाभावात् कपिञ्जलाधिकरणन्यायेन प्रथमैव युक्ता । न हि कपिञ्जलानालभेतेति पञ्चषा आलभ्यन्ते किंतु त्रय एव[५] । न हिंस्याद्भूतानीति वचनात् । अत्रैवमिति न वाच्यं क्रमव्यतिक्रमे प्रयोजनाभावात्[६] । न ह्योदकान्तात्प्रियं प्रोथमनुव्रजेदिति[७] द्वितीयाद्युदकान्तानुव्रज्या ज्यायसी । तदुक्तम् । प्रथम एव वा नियम्येत कारणादतिक्रमः[८] स्यादिति । प्रथमत्रिले बहुवचनं नियम्यत इत्यत्र सूत्रार्थः ॥ अतस्त्रोच्चैःशब्दादीनामधिकरणशक्तिप्राधान्येऽपि प्रथमा न्याय्येति मत्वा वृत्तिकारैः सपूर्वायाः प्रथमाया विभाषेत्यत्र[९] ग्राम उच्चैस्ते स्वम् । ग्राम उच्चैस्तव स्वमित्याद्युदाहृतम्[१०] । यस्तु तत्रेत्यत्र तत्रेति सप्तम्यन्तं समस्यत इति जयादित्यग्रन्थः स[११] सप्तम्यर्थाभिधानसाधर्म्यादेवमुक्तः[१२] । एवमन्तःशब्दात् स्वयंशब्दाच्च प्रथमैव न्याय्या ॥ एकवचनमुत्सर्गः[१३] करिष्यत इत्यप्युक्तम् । अर्थकथनं चैषां चादीनामुपलक्षणमात्रं[१४] द्रष्टव्यम् । तथा चोक्तम् ।

---

१ Pâṇ. ii. 4, 82.

२ पुनर्वसौ° D.; पुनरसायत्रै° B.

३ तसिलादीनामविप्रकर्षाद्° A.

४ अभिहितस्यार्थे । अन्तर्भूतप्राति° A.; °ऽनुभूतः C.

५ A. om. एव.

६ C. om. from कपिञ्जलाधिकरण°.

७ न ह्या उदकान्तात्° A. B. C.; प्रांथमुनु° D.; प्रांमथनु° A.; प्रोष्ठमनु° C.; cf. Mahâbh. on Pâṇ. i. 4, 56.

८ नियम्येतः कारणाद्दिति क्रमः B.C.

९ सपूर्वाया विभा° A.; °विभाषेत्यत्र B.; P. viii. 1, 26.

१० विभाषेत्यत्र ग्रामे उच्चैस्ते वः स्वमित्याद्यु° F.; cf. P. ii. 3, 46 Mahâbh.

११ Om. C.

१२ °सामर्थ्यादेवमुक्तः F.

१३ एवमुत्सर्गः F.; करिष्यती° A.B.C.

१४ स्वरादीनामुप° D.

निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां[1] निदर्शनमिति ॥

आकृतिगणौ चेमौ । तेनान्येऽपि लक्ष्यानुसारतोऽनुसर्तव्याः[2] ॥ * ॥ इति चादिस्वरादी ॥ * ॥

**कस्कायस्कुण्डसाद्यस्काः सहकौतस्कुता मताः ।**
**सद्यस्कालशुनस्कर्णावयस्कान्ताश्च भास्करः ॥ १८ ॥**

कस्क आदिरित्यनेन कस्क इत्यादिः[3] शब्दगणो निपात्यते ॥ किम् सु[4] । किमः कः[5] । रोरिति[6] विसर्जनीयः । वीप्सायां द्विर्वचनम् ॥ कःक इति तत्र पूर्वस्य विसर्जनीयस्य कस्क आदिरित्यनेन सिः[7] ॥ स च विसर्जनीयजिह्वामूलीयोपध्मानीयानां बाधकः । उदा° । कस्कोऽत्रेत्युक्तिभिः कौतस्कुतीभिर्ध्यानगो स्वभूः[8] ॥ ननु कथं कः कोऽत्र भो इति नाटकादौ प्रयोगः । उच्यते । संधावित्यधिकारादवसानविषयो[9] विसर्जनीयोऽत्रेत्यदोषः ॥ अपरे पुनराहुः । रूढिविषयत्वान्निपातनानां[10] वीप्सायामेवैतत् सित्वम्[11] । अत एव । तिष्ठति कः को वा गच्छतीति वीप्साभावे सित्वं[12] संहितायामपि न कृतम्[13] । एवमिहापि वीप्साभावे क इति पदं पूर्वमन्तर्भूतसत्ताकं[14] प्रयुज्यते । ततः को

---

१ पाठास्तेषां C.
२ ऽनुद्रष्टव्याः B. C.; °सारतो द्रष्टव्याश्च F.
३ इत्यादिना A.; कस्क आदिरित्यनेन कस्क आदिरित्यादिशब्द° F.
४ किम् B.; कम् सु C.
५ Pán. vii. 2, 103.
६ ससजुषोरुः F.
७ कस्कादिरित्य° F.; सः C. F. and corr. D.
८ स्वभूः F.; वधूः D.
९ °अधिकारादवग्रहेष्ववसान°D.; °विषये A. (orig. D.).
१० °निपातानां F.
११ सत्वं C.; सिद्धं D.
१२ सत्वं C. F. and corr. D.
१३ न तत्कृतं F.
१४ इति पूर्वपदसंभवेष्यंतभूत° F.

ऽत्रेति ॥ न च क्रमविवचायां वीप्सेति[१] संहितायां युक्तो जिह्वामूलीयः। कXको[२] ऽत्रेति ॥ * ॥ अयसः कुण्डम्। अयस्कुण्डम् ॥ * ॥ सद्यः क्रीणातीति क्विप्। सद्यस्क्रीः। तस्यापत्यमिदं चेत्यण्[३]। एरितीकारलोपः[४]। ञ्णित्यचामादेरित्यनेनारैच्[५]। तदा विवचितार्थाभिधायी। यदा तु सद्यः क्रीयते क्रयणं वा सद्यस्क्रीस् तत्रभवस्तदा साद्यस्क्रः[६] क्रतुः ॥ अपरे[७] सद्यः क्रियत इति साद्यस्क्रः क्रतुः। तेषां करोतेः स्थादिभ्यः क इति कप्रत्ययः[८]। प्रज्ञादिलक्षणस्त्वाण् ॥ * ॥ सहकौतस्कुता इति। सह कौतस्कुतेन। सहकौतस्कुताः[९] ॥ सहस्य बहुव्रीहेः स इत्यनेन[१०] विभाषितः सः ॥ किमः पञ्चम्या बह्वाद्यादिसर्वादिभ्य[११] इत्यादिना तस्प्रत्यये[१२] वीप्साभीक्ष्ण्येत्यादिना द्विरुक्तिः[१३]। ततः कुतः कुत आगत इति विवक्षायामण्[१४]। तत्र सौ वादेरित्यन्ताजादिलोपः[१५]। कौतस्कुती[१६] ॥ नन्वत्र तत आगत इत्यनेन पञ्चम्यन्तादुच्यमानः प्रत्ययः[१७] कथं तसन्तात् स्यात्। अथ तदर्थवृत्तेरपि समुदायात्सुबुत्पत्तावपि भविष्य-

---

१ C. om. from संहितायामपि न इतं.

२ कम्को B.C.; कःको D.; कस्को A.F.

३ चेत्यण् F.; cf. Pâṇ. iv. 1, 92.

४ परितीº A. B. C.; यस्येति चेतीकारº D.; cf. P. vi. 4, 148.

५ ञ्णित्यº A.; ञ्णित्यचेसां वर्जित्यनेनारैभू C.; तद्धितेष्वचामादेरिति वृद्धिः F.; आदिवृद्धिः D.; cf. P. vii. 2, 115.

६ तत्रभवतःº A.; तत्रभवःº D.; ºसाद्यस्क्रीः C.

७ अपरे पुनराहुः। F.

८ स्थानिभ्य इतिº A.; कः प्रत्ययः B. C. D.; cf. Pâṇ. iii. 1, 136.

९ सहकोतस्कुता B. C.

१० बहुव्रीहौº F.; ºसह इत्यº A.; स इत्यनेकº C.; cf. Pâṇ. vi. 3, 82.

११ बह्वद्यादिसर्वाभ्य B. C.; बहुवद्यावदिसर्वादिभ्य A.; बह्वादिसº F. and corr. D.; cf. Pâṇ. v. 3, 7.

१२ तत्प्रत्यये A.

१३ विभक्तिः D.; cf. Pâṇ. viii. 1, 4.

१४ आगच्छतिº D.; विवक्षयामपि B. C.

१५ सैवादेरित्यंताº B.; सैवादिरिº C.; ºइत्यन्त्याजादिº A.

१६ कौतस्कुतः A.; कौतस्कुता C.; कोतस्कुती B.

१७ F. adds: उत्पद्यमान इत्यापपाठः

तीति चेत् । न । ककुत्रेहामाचतसस्त्यबिति त्यपा[१] भवितव्यम् । कथमण् । गणपाठादिति ब्रूमः ॥ * ॥ सद्यस्कालेति समस्तमसमस्तं वा । उदा° । सद्यस्कालं युयुत्सुभिः ॥ * ॥ शुनः कर्णः । शुनस्कर्णः । स्नुक्प्रतिषेधोऽत एव पाठात्[२] ॥ उदा° । शुनस्कर्णोपमैर्मुक्ता मुष्टिभिस्स्रक्पङ्क्तयः[३] ॥ रत्नमतिस्तु शुनस्कर्ण इति वाक्यं[४] समासे तु श्वकर्ण इति प्राह ॥ * ॥ अयस आकर्षकः कान्तोऽयस्कान्तः । ननु[५] ककमीत्येव सिद्धः किमर्थोऽस्य पाठः । तस्यैव प्रपञ्चार्थः समस्तार्थः कम्यर्थो[६] वा ॥ उदा° । स चकर्ष परस्मं[७] तदयस्कान्त इवायसम् ॥ * ॥ भासं करोतीत्येवंशीलो विभादेरटि[८] । भास्करः ॥ * ॥ १८ ॥

मेदस्पिण्डतमस्काण्डायस्काण्डाहस्करास्तथा ।
रजःकर्णीरजस्कर्ण्यौ भ्रातुष्पुत्रदिवस्पती[९] ॥ १९ ॥

मेदसो वसायाः पिण्डो मेदस्पिण्डः ॥ * ॥ तमसः काण्डं तमस्काण्डम् ॥ प्रशस्तं वा तमः । तमस्काण्डम् ॥ उदा° । क्षपातमस्काण्डमलीमसं नभः[१०] ॥ * ॥ अयसः काण्डम् अयस्काण्डम्[११] ॥ प्रशस्तमयो वा । अयस्काण्डम् ॥ * ॥ न जहाति न त्यजति[१२] दिनकरमित्यहर्दिवा । तत्करोतीत्येवंशीलो[१३]ऽहस्करः ॥ उदा° । अलंचकारास्य वधू-

---

१ ककुत्रेहासुत्रेतसस्त्वपि नित्यया A.; °त्यपि प्रत्ययो C.; °पिति त्यया B.; cf. Pâṇ. iv. 2, 104, Vârtt. 1.

२ प्रतिषेधात् B. C.; एव पात् D.

३ °क्चपंक्तयः F.

४ वाक्ये C. (? शुनः कर्ण).

५ नत्वतः C.; cf. Pâṇ. viii. 3, 46.

६ कन्यर्थो B.; कन्यार्था C.; कत्यर्थो F.

७ परस्थं A.; Ragh. 17, 63 (परस्मात् edd.).

८ विभातिरटि B.C.; cf. Pâṇ. iii.2,21.

९ मेदस्फिण्ड° हस्कारा° स्कर्णौ भ्रातुः पु° A.

१० Śiśup. 1, 38.

११ C. om. from प्रशस्तं.

१२ त्यजतीत्येवं A.

१३ तत्करोत्येवं A. D.

रहस्कर:[१] ॥ * ॥ रजसः कर्णी रजस्कर्णी[२]। हृकमीत्यादिना नित्यं स्यादेशे[३] प्राप्ते विकल्पार्थः पाठः ॥ * ॥ भ्रातुः पुत्रो भ्रातुष्पुत्रः। ऋतो विद्यायोनिसंबन्धाद्वेष्वित्यनेन[४] षष्ठीसमासे लुक्प्रतिषेधः ॥ * ॥ दिवः पतिः। दिवस्पतिः शक्रः। लुक्प्रतिषेधोऽत एव पाठात् ॥ * ॥ सर्पिष्कुण्डिका। धनुष्कपालम्। बर्हिष्कपालम्। यजुष्पात्रमित्येकेषां पाठ उत्तरपदस्थस्यापि षत्वं यथा स्यादिति[५]। परमसर्पिःफलमित्येवमादिप्रत्युदाहरणं पारायणिका आहुः[६]। भाष्ये वृत्तौ नित्यं समासेऽनुत्तरपदस्थस्येत्यत्र[७] परमसर्पिःकुण्डिकेत्येतदेव प्रत्युदाहरणम्[८]। अस्माकं चायमेव पक्षः संमतः ॥

आकृतिगणश्चायम्। तेनापरिगणितशब्दसमूहः। य आकृत्याकारेण[९] लक्ष्यते स आकृतिगणः। अयमर्थः। यथा भास्करादिशब्दः साधुः स्वार्थप्रत्यायने समर्थस्तद्वदो[१०]ऽन्योऽपि सिविधानाच्छिष्टसंमतः स गणेऽस्मिन्प्रणिविष्टः[११] सन् साधुत्वभाग् द्रष्टव्य इति ॥ * ॥ १९ ॥ इति कस्कादिः ॥ * ॥

अहः पतौ गणे पुत्रे पतिपुत्रे च गीर्धुरः।
राज्ञि प्रचेतसो रः स्याद्[१२] विसृष्टस्योषसो बुधे ॥ २० ॥

पत्यादावहरादेर्वेत्यनेन[१३] विकल्पेन रेफादेशो विधीयते ॥ उषसि

१ Śiśup. 1, 58.
२ रजकर्णी A
३ सादेशे A. C.
४ संबंधांतेष्विति अनेन F.; Pâṇ. vi. 3, 23.
५ F. om. यथा.
६ °का: प्राहुः F.
७ °पदस्येत्यत्र F.; अनुत्तरपादस्यत्र A.
८ C. om. from पारायणिका.
९ यया आकृत्या आकारेण B. C. F.
१० भास्करादिशः साधुस्वार्थप्रत्ययेते समर्थस्तद्वयो D.
११ °प्रनिविष्टः B. D.; प्रतिविष्टः A. C.; प्रविष्टः F.
१२ प्रचेतसो ज्ञेया D. E.
१३ पत्यावहरादे° F.; D. corr. पत्यादिष्वहर°.

रात्रौ बुध्यते प्रकाशते। उषर्बुधः॥ उषर्भुदित्यपि श्रीवसुक्तः[1]॥ शेषं तु सुगमम॥ * ॥ २० ॥ इत्यहरादिपत्यादौ॥

सर्वान्यविश्वोभयनेमयत्तदः किंयुष्मदस्मद्द्विभवत्त्यदेतदः।
उभत्वदन्योन्यपरस्परेतराः समः[2] सिमत्वान्यतरेतरेतराः॥ २१॥

सर्वादेर्गणात्। ए। असि। इ। इत्येतेषां स्थाने। सर्वादेरेभ्यः[3] स्मै। स्मात्। स्मिन्। इत्यनेन यथाक्रमं स्मै। इत्यादय आदेशा भवन्ति॥ सर्व इति संख्याप्रकारकलावद्विषये कार्त्स्न्ये॥ तत्र संख्याकार्त्स्न्ये। यथा। सर्वे आयाता यावन्तो लिखिता दश द्वादश वा[4] त आयाताः। कार्त्स्न्येन समागता इत्यर्थः॥ प्रकारकार्त्स्न्ये। यथा। सर्वाण्यन्नानि भुक्तानि। सर्वप्रकाराणीत्यर्थः॥ कलावत्कार्त्स्न्ये। यथा। सर्व ओदनो भुक्तः। यो दत्त ओदनः स सकलो भुक्त इत्यर्थः॥ सर्वस्मै। सर्वस्मात्। सर्वस्मिन्॥ तत्पुरुषस्योत्तरपदार्थप्रधानत्वात् परमसर्वस्मै। इत्यादावपि॥ असर्वस्मै। इत्यादौ नञ्समासेऽपि स्वार्थापरित्यागात्[5]॥ तथा हि। य एवाश्वशब्देन वक्तुमिष्टः स एव जात्यादिविकलोऽनश्वशब्देनापि[6]॥ विश्वादीनामप्येवम्। अतो न सर्वादिव्याघातः[7]॥ यदा पुनरुपसर्जनीकृतस्वार्थानामर्थान्तरवृत्तित्वं तदा प्रियसर्वायेत्यादौ न स्यात्। एतच्च सर्वादेरिति षष्ठीनिर्देशान्निश्चीयते[8]॥ * ॥ अन्यस्मै। अन्यत्। पृथ-

---

१ श्रीवसुक्तः A.; श्रावसुक्तः C. F.; D. om. from उषर्भुदि°.

२ सिमः A.

३ सर्वादेरस्य: B.; om. F.; सर्वादेरादेशाः स्युः C.

४ C. om. द्वादश.

५ नसमासे° F.; °सर्वापरि° D.

६ °विकलोत्वमश्व° A.; D. corr. ऽसर्वशब्दे°.

७ सर्वादित्वाघातः। A.

८ षष्ठीति निर्दे° C.

त्वचनो[१]ऽयम् ॥ * ॥ विश्वस्मिन् ॥ * ॥ उभयस्मिन् ॥ * ॥ नेम इति सर्वार्धार्थयोः[२]। नेमस्मिन् ॥ * ॥ यदिति निर्देशे। यस्मिन्। यतते प्रयत्नं करोति। तेनार्थमुद्देष्टुमिति व्युत्पत्त्या उद्देशेऽपि ॥ * ॥ तदिति परोक्षे। तस्मिन्। तनोति विस्तृणाति[३] प्रतिनिर्देशमिति[४] व्युत्पत्त्या निर्देशेऽपि वर्तते ॥ * ॥ किमिति प्रश्नक्षेपयोः[५]। पृच्छ्यते[६] क्षिप्यतेऽनेनेति किं प्रश्नवाची ॥ कस्मिन् ॥ * ॥ युष्मदिति प्रत्यक्षे। युष्यते सेव्यत उपचारवतीभिर्वाग्भिरिति। त्वकम् ॥ * ॥ अस्यते क्षिप्यते सत्कार इति। अहकम्[७] ॥ परात्मवाचिनौ युष्मदस्मच्छब्दौ ॥ * ॥ द्वकौ[८] ॥ * ॥ भवतुशब्दः[९] परोक्षे। भवकन्तः[१०]। उदित्त्व[११] च्छन्दोभङ्गभयान्नोपात्तः[१२] ॥ * ॥ त्यस्मिन् ॥ * ॥ एतदिति प्रत्यक्षे। एतस्मिन्। एजति[१३] कंपतेऽनेन वचसा सामीप्यवाचिना सत्वमिति व्युत्पत्त्या सामीप्येऽपि[१४] ॥ * ॥ उभौ। उभाभ्यां हेतुभ्याम्। उभयोर्हेत्वोः। अस्य पाठः सर्वादेरबित्यनेन[१५] सर्वविभक्त्यर्थः ॥ * ॥ त्वदिति समुच्चयवाचकः। त्वकत्[१६] ॥ * ॥ अन्योन्यपरस्परशब्दौ क्रियाविनिमये। अन्योन्यस्मै। परस्परस्मै ॥ * ॥ इतरेति पृथगर्थे। इतरस्मिन् ॥ * ॥ समसिमशब्दौ

---

१ अन्यतः। पृथक्त्ववचनो B. C. F.

२ सर्वार्थयोः A.; सर्वार्द्धनेमयोः। D.; सर्वार्धार्थे C.

३ क्षीणाति। D.

४ निर्देशस्मि C.

५ प्रश्नाक्षेपयोः A.

६ काल्यते पृच्छ्यते F.; A. om. from पृच्छ्यते to प्रश्नवाची.

७ A. has only कस्मिन्। त्वकं। अहकं।

८ द्विकौ D.

९ भवच्छब्दः A. D.

१० भवंतः B.; भवतः C.; भवत्काम् D.

११ उदित्तु B. C. F.

१२ ०न पठिताः A.; न कृतः। D.

१३ एजते F.

१४ A. om. from एजति.

१५ सर्वादेरचित्य० D. a. m.; सर्वादेरदित्य० F.; C. om. from वचसा सा०.

१६ त्वति व्युत्पत्त्यासामीप्यवत् D.

सर्वार्थे। समस्मिन्। सिमस्मिन्॥ सिमः शक्तः। सितः[1]। अवबद्ध इत्यर्थ इत्येके। सिम इति मर्यादायामित्यपरे॥ * ॥ त्वान्यतरशब्दावन्यार्थे। त्वस्मै। अन्यतरस्मै। अस्य त्वस्मादेव गणपाठात्सिद्धिः॥ शाकटायनस्तु यत्तत्किमन्याद् द्वयोर्निर्धार्ये डतरः[2]। वैकाद्बहूनां प्रश्ने डतमश्चेति सूत्राभ्यां डतरडतमौ। अन्यतरान्यतमौ[3] सिद्धौ। ततोऽन्यतरशब्दस्य डतरान्तद्वारेणैव ग्रहणे सिद्धेऽन्यतरग्रहणमन्यतमव्यवच्छेदार्थमित्याह॥ * ॥ इतरेतरेति क्रियाविनिमये। इतरेतरस्मै॥ २१॥

एकेदमदसो ज्ञेया डतरो डतमस्तथा।
स्वमज्ञातिधनेऽनाम्नि कालदिग्देशवृत्तयः॥ २२॥
[पूर्वापरावरपरा उत्तरो दक्षिणाधरौ[4]।]

एकेति संख्यासहाययोः। एति गच्छति गणनामित्येकः[5]। एति गच्छत्यद्वितीय इति वा[6]। एकस्मिन्॥ * ॥ इदमिति प्रत्यक्षे। अस्मिन्॥ * ॥ अदस्। इत्यप्रत्यक्षे[7]। अमुष्मिन्॥ * ॥ डतरडतमौ प्रत्ययौ। तदन्तः सर्वादिर्भवति। यतरस्मिन्। यतमस्मिन्। ततरस्मिन्। ततमस्मिन्। कतरस्मिन्। कतमस्मिन्। एकतरस्मिन्। एकतमस्मिन्॥ * ॥ स्वमज्ञातिधन इति स्वशब्दोऽर्थचतुष्टयवृत्तिस्तत्रात्मनि ज्ञातिधनयोश्च रूढितः। अस्य वृत्तिः। यथा हरिशब्दस्य तुरङ्गवानरदर्दुरादिषु।

---

१ ? शक्तः स्मितः A.; शक्तः सितः F.; शक्तेः स्मितः B.; शक्तेः। C.; D. corr. °शक्तः। सिम अव°. ? सिमः = 1. शक्तः 2. सितः *i.e.* अवबद्धः; Sâyana records the meanings सर्वः, सर्वजनः, श्रेष्ठः, शत्रूणां बन्धकः; cf. also Mahîdh. V.S. 23,37.

२ यत्किम° D.; °किमन्याद्द्वयो नि° र्धार्ये° A. D.; cf. Pâṇ. v. 3, 92-94.

३ A. om. अन्यतरान्यतमौ.

४ Conjectured to complete metre. परावराधराः पूर्वदक्षिणावुत्तरापरौ। B. C. F.; पूर्वापरावरधरदक्षिणोत्तर इत्यमी। व्यवस्थायामसंज्ञायां ज्ञेयाः पूर्वादिकार्येण॥ D.; om. A. E.

५ एति येननास्तिकालादि गच्छति; गणनामित्येकः D.; om. A.

६ एको गच्छति अद्वितीय° E.; om. A.

७ इति प्रत्यक्षे B. C. F.; D. om. from अदस to यतरस्मिन्

आत्मीये तु सर्वत्र विशेषणरूपतया वृत्तिस्तत्रास्य सर्वनामसंज्ञा । स्वे पुत्राः । स्वेषां गृहाणां स्वामी । आत्मीयानामित्यर्थः ॥ स्वस्मै बहुमानः । आत्मन इत्यर्थः ॥ स्वे पुत्रा[1] इति न पुत्रा ज्ञातयः किंतु पितृव्यमातुलश्वशुरादयः सपरिच्छदाः । स्वे गाव इति न गावो धनं[2] किंतु स्वर्णरजतकार्षापणरूपकादिकं[3] धनमुच्यते ॥ ज्ञातिधनयोस्तु न भवति । स्वे रक्षा विधेया । ज्ञाताविर्त्यर्थः ॥ स्वाय स्पृहयति । धनायेत्यर्थः ॥ तथा ज्ञातिधनविशेषणत्वेऽपि स्वशब्दस्य निषेध एव । स्वा ज्ञातयस्तैत्रस्य[4] । स्वे धने रक्षा । आत्मीय इत्यर्थः ॥ अपरे तु स्वस्मै पुत्राय । स्वस्मै गव इति ज्ञातिधनार्थयोः प्रतीतौ कथं न निषेधः । उच्यते । पुत्रगोशब्दयोर्हि सान्निध्यादेतदुभयं गम्यते स्वशब्दात् स्वात्मीयत्वमात्रमिति । स्वाय[5] ज्ञातये । स्वाय धनायेत्यत्र च शब्दान्तरमनपेक्ष्य ज्ञातिधने स्वरूपेणैव स्वशब्देनाभिधीयेते[6] । यद्येवं ज्ञातिधनयोरनुप्रयोगोऽपि नोपपद्यते पर्यायत्वात्[7] । यथा वृक्षशब्दप्रयोगे तरुशब्दस्य । नैष दोषः । पर्यायशब्दो हि यत्रानेकार्थः संदिग्धार्थो वा तत्र तदर्थस्य व्यक्तीकरणार्थः[8] पर्यायान्तरस्यानुप्रयोगो[9] न विरुध्यते । यथाऽक्षाद्यनेकार्थहरेर्हरिशब्दस्य प्रयोगे सिंहशब्दस्य । यथा च संदिग्धार्थस्य पिकशब्दस्य प्रयोगे[10] कोकिलशब्दस्य । स्वशब्दस्यायमनेकार्थ इति तत्रासत्यनुप्रयोगे[11] किंविषयोऽयं प्रयुक्त इति संदेहः स्यात् । तन्निरासार्थो[12] युज्यते ज्ञातिशब्दस्यानुप्रयोग इति नाचक्षते ॥ * ॥

---

१ स्वपुत्रा D.
२ स्वे मात्रा इति न मात्रा धनं D.
३ किंतु कनकरजत° F.
४ ज्ञातयस्तैत्रस्य D.
५ स्वाये D.
६ अभिधीयते A. B.
७ पर्यायशब्दत्वात् F.; om. C.
८ व्यक्तीकरणार्थपर्यायान्तर° B. C.
९ °नुपयोगो A.
१० यथा संदिग्धार्थस्य प्रयोगे A.
११ तत्रासत्यप्रयोगे C.
१२ °निराशार्थो A.

अनान्ति कालदिग्देशवृत्तय इति । पूर्वादयः शब्दा असंज्ञायां वर्तमाना दिगादिवृत्तयः[1] सर्वादिकार्यभाजो भवन्ति । तदत्र ।

पूर्वापरादिशब्दानां केषांचित् प्रविभागतः ।
सामान्येनाभिधानेऽपि प्रवृत्तिर्देशकालयोः ॥

तथा हि । पूर्वापरावरपरोत्तरशब्दा मुख्यवृत्त्या दिक्कालयोर्वर्तन्ते । तदवच्छिन्ने देशग्रामारामस्तम्भकुम्भादौ च । तथा हि । पूर्वस्यां दिशि वसति । पूर्वस्या दिश आगतः । पूर्वदिक्संबन्धात्[2] पूर्वा वापी । पूर्वस्यां वाप्यां[3] शीतमुदकम् । तथा पूर्वस्मिन्ग्रामे वने देशे वा सुखवासः[4] ॥ पूर्वः कालो[5] रम्यः । पूर्वकालसंबन्धात् पूर्वो[6] गुरुः । पूर्वस्मिन्गुरौ वसति । पूर्वस्मात्प्रासादादागतः[7] ॥ * ॥ अपरावरपरशब्दत्रयस्य विनापि दिक्कालसंबन्धं देशवृत्तित्वं[8] स्यात् । तथा हि । अपरदेशसंबन्धादपरो[9] ग्रामः । अवरो वा ॥ तस्मिन् परस्मिन् पर्वते वसति । सति संनिकर्षे विप्रकर्षे च सर्वासु दिक्षु तुल्योऽयं व्यपदेशः । ततो न दिगभिसंबन्धवृत्तिः । एकस्यामेव दिशि स्थितयोर्निकटानिकटयोः परावरादिव्यपदेशप्रवृत्तेरेतच्छब्दत्रयापेक्षया[10] मुख्यवृत्त्या सार्थकं देशग्रहणं न त्वन्यस्य[11] स्वतो देशवृत्तित्वम् । संनिकर्षासंनिकर्षयोर्देशवत्कालो[12]ऽप्युपाश्रयः[13] । ततः परः कालः[14] । अपरोऽवरो वा । परस्मिन्

---

१ °वृत्तय इति A.
२ सर्वदिक्° A.
३ व्याप्यां C.; वा D.; om. B.
४ देशे वासः C.
५ पूर्वकालो C. F.; पूर्वकाले B.
६ पूर्वको C.
७ °प्रसादादा° C.
८ °संबंधदेश° B. C.
९ अपदेशे सं° D.
१० °प्रवृत्तेरेव शब्द° D.
११ सार्थकदेशग्रहणं न त्वस्य F.
१२ वृत्तित्वं सन्निकर्षयोर्दे° C.
१३ प्युपाश्रयः D.; कालोप्युपान्श्रयः B.
१४ परकालः B. C. F.

काले जातः। अपरस्मिन्। अवरस्मिन् वा[१]॥ अथ परकालसंबन्धात् परः श्रीहर्षः। अपरकालसंबन्धादपरो भोजदेवः॥ परः पाणिनिः। अपरः शिवस्वामी[२]॥ परस्मिञ्श्रीहर्षे भक्त इत्यादि[३]॥*॥ दक्षिणाधरशब्दौ दिशि[४] दिगवच्छिन्ने च कलशादौ वर्तेते[५] न तु काले नापि कालावच्छिन्ने। दक्षिणस्यां दिशि वसति। दक्षिणस्मिन्पर्वते देशे वा तदवच्छिन्ने। तथा हि। अधरस्यां दिशि पर्वताद्वसति। अधरदिक्संबन्धादधरस्मिन्प्रासादे[६] देशे वा वसति॥ अनाप्नोति किम्। उत्तराः कुरवः। संज्ञारूपेण रूढो[७]ऽत्रोत्तरशब्दः। विदेहवर्षवासिनामेकस्यामेव[८] दिशि देवकुरूत्तरवर्षे॥ दिग्देशकालेभ्योऽन्यत्र[९]। दक्षिणा गाथकाः। प्रवीणा इत्यर्थः॥ एवम् अधरे ताम्बूलरागः। उत्तरे प्रत्युत्तरे वा शक्तः॥ दक्षिणायां कृतमतिर्विप्रः। इत्यदिग्देशकालवृत्तय[१०] इति विस्पष्टो[११]ऽयमर्थनिर्देशः॥ ननु व्यवस्थायामसंज्ञायामित्येवमुपक्षिप्य स्वाभिधेयापेक्षो[१२]ऽवधिनियमो[१३] व्यवस्थेति यथान्यैर्व्याख्याता[१४]। दुरवबोधत्वात्[१५]॥ ननु। स्वेषां चैव परेषां च[१६] जायन्ते कम्पसंपदः। क्षीणाः परे[१७] शत्रवः। इत्याऊरपरे। इत्यादिप्रयो-

---

१ °वा परस्मिन् परस्मिन् काले जातः° B.; °वास्मिन् परस्मिन् काले° C.; °वा परस्मिन् अपरस्मिन् काले जातः। अपरस्मिन वा। A.

२ अवरः D. and corr. क्षीरस्वामी।

३ अपरस्मिञ्° B. C. D.; °हर्षभक्त° A. B.; °हर्षसक्त° C.; °हर्षे मत्त° D.; °इत्यादिः B. C.

४ हि दिशि F.; दिश B.

५ वर्तते B. C.

६ °अवरस्मिन्° A.

७ संज्ञारूपेणारूधो F.

८ °वर्षावा° C.; °वासिनामेव B.

९ ऽन्यत्त्र C.

१० इत्यादिदिग्° B. C. F.; इत्यादिग्° D.

११ इति स्पष्टो B. C. F.

१२ स्वाधिभिधे° B.

१३ °धेयापेक्षाविधिनियमो F.

१४ व्याख्यातः A. B. C.

१५ दुरवरोधत्वात् A.

१६ वा A.; चैव D.

१७ क्षीणापरे B. C.

गेषु कथं जसादीनां सर्वादिकार्यविधिः । न ह्यत्र दिग्देशाद्यवच्छेदो ऽस्तीति[1] । उच्यते । सारूप्योपचाराच्छिष्टाभीष्टेश्च न[2] दुष्टता ॥ २२ ॥

**अन्तरं चोपसंव्याने बहिर्योगे तथापुरि ॥ २३ ॥**

उपसंव्यान इति । उपसंवीयत आच्छाद्यते यत्तदित्युपसंव्यानम् । यद्वा । संवीयतेऽनेनेति संव्यानम् । तस्य समीपम् उपसंव्यानम् । तस्मिन् ॥ बहिर्योग इति । बहिरित्यनावृतो देशः । तेन योगो बहिर्योगः । एतस्मिंश्च पूर्वर्जिते[3] ऽन्तरशब्दः सर्वादिर्भवति ॥ अन्तरस्मै शाटकाय[4] । वस्त्रान्तरेणावृतायेत्यर्थः[5] ॥ अन्तरस्मै गृहाय । बाह्याय चाण्डालगृहायेत्यर्थः[6] ॥ अपुरीति किम्[7] । अन्तरायां पुरि वसति । बाह्यायामित्यर्थः ॥ अयमनयोरन्तरे तापसः प्रतिवसतीत्यादौ मध्यवृत्तित्वेन न भवति[8] ॥ २३ ॥ इति सर्वादिः ॥

**त्यत्तद्यदिदं युष्मद्द्व्येकादः स्यादथो भवत्वेतत् ।**
**अस्मत्किमौ च विबुधैर्विज्ञातव्यौ त्यदादिगणे ॥ २४ ॥**

एषां त्यदादित्वे यथास्थानं प्रयोजनं द्रष्टव्यम्[9] ॥ इति त्यदादिः[10] ॥

**यस्कोत्कासवशिष्ठकुत्सखरपाः[11] कुड्यचिजङ्गारथाः[12]**
**पर्णाटोपरिमेखलौ[13] विषपुटद्रुह्याङ्गिरोविश्रयः ।**

---

१ भवतीति F.

२ क सारू॰ शिष्टाभीष्टिवतन दुष्टता क D.; शिष्टाभीष्टेन F.—? śloka.

३ पूर्ववर्जिते C.

४ शाकटाय A.

५ नवमुन्नेरेणावृताये॰ D.

६ चंडाल॰ A.; F. C. om. अपुरीति किम्.

७ F. om. अपुरीति किं.

८ ॰त्वे न भवति A. D.; मध्यावृत्तत्वे न॰ B. C.; मध्यावृतत्वेन न॰.F.

९ Om. F.; यथास्थानप्र॰ A.

१० D. E. om. from त्यत्तद्यदिदं

११ ॰वसिष्ठ B. C.; खरप D. E.; खरपाः B.

१२ कुड्यचि॰ F.

१३ ॰मेषलौ B.

पिसडीजङ्घभलन्दनौ[1] च भडिलः कर्णाटकर्णाढकौ[2]
लह्योभरिडलशीर्षमायभृगवो रक्षोमुखो वर्षुकः ॥ २५ ॥

यस्कादयः शब्दाः खगलपर्यन्ता[3] यस्कादिभ्योऽपत्य इत्यनेन सूत्रेण[4] विहितापत्यप्रत्ययस्लुग्भाजो[5] भवन्ति बहुत्वेऽस्त्रियाम् ॥ यच्छति निगृह्णाति पापमिति यस्क ऋषिः । तस्यापत्यानि यस्काः । शिवादिपाठादुत्पन्नस्याणः ॥ * ॥ उत्कसतीत्युत्कासः । तस्य[6] । उत्कासाः । अत इञः[7] ॥ * ॥ वशिषु तिष्ठतीति वशिष्ठः । तस्य वशिष्ठाः[8] ॥ * ॥ कुत्साः । ऋष्यणः ॥ * ॥ खरान्पातीति खरपः । तस्य खरपाः । नडादिफणः[9] ॥ * ॥ कुद्रेः कुद्र्यः[10] । गृष्ट्यादिढञः[11] ॥ * ॥ अत्ति ग्रसते सर्वविद्या इत्यत्रिः । तस्य । अत्रयः । इतोऽनिञ इत्यनेन विहितस्य ढणः[12] ॥ * ॥ जङ्घे एव रथो यस्य स जङ्घारथः । तस्य जङ्घारथाः ॥ अन्ये । जङ्घे एव रथो यस्य स जङ्घेरथः । निपातनात्सुपः[13] लुगभावः । तस्य जङ्घेरथा इत्याहुः ॥ * ॥ पर्णार्थमटतीति पर्णाटः । तस्य पर्णाटाः ॥ * ॥ उपरि ग्रीवायां मेखला यस्य तस्योपरिमेखलाः ॥ * ॥ विषं पुटे[14] ओष्ठयोर्यस्य स विषपुटो दुर्भाषी[15] । तस्य विषपुटाः ॥ एभ्योऽत इञः ॥ * ॥

---

१ पिंडाजंघ० C.

२ भडिकर्णाटकौ A.; भडिलः कर्णाटकौ D.; ०कर्णाटकर्णाटकौ लह्यो C.

३ खगिलपर्यंता F.; om. A.; शब्दा गलपर्यंता B. C.

४ Cf. P. ii. 4, 63 यस्कादिभ्यो गोत्रे.

५ विहितापत्यस्य लु० A.; ०प्रत्ययाः लग्भाजो C.; ०प्रत्ययभाजो corr. D.

६ तस्यापत्यानि C.; उत्कसतीत्युत्कासः ०उत्कासाः D.

७ इञ C. F. In the following also one or ther MS generally read the nom. of the affix instead of the genitive; supply लुक्.

८ वशिषु० वशिष्ठः । तस्य वसिष्ठाः । B. C.; A. om. कुत्साः.

९ नडादण् C.; नडादिफणः D.; ०फणः A. B.; ०यणः F.; cf. under śl. 232.

१० कुद्रेः कुद्र्यः F.

११ ०ढणः MSS.; cf. śl. 226.

१२ विहतस्य० A.; विहितढणः B. F.; मिहितढण् C.; cf. Pâṇ. iv. 1, 122.

१३ F. om. निपातनात्सुपः.

१४ विषपुटे B.

१५ दुर्भाषः D.; B. C. om. from स.

द्रुहि साधुर्द्रुह्यः। तस्य द्रुह्याः। शिवाद्यण्: ॥ * ॥ अङ्गिरा बृहस्पति-पिता। तस्य। अङ्गिरसः। ऋष्यण्: ॥ * ॥ विश्रेर्विश्रयः। गृष्ट्यादि-ढञ्:[१] ॥ * ॥ पिण्डीयुक्ते जङ्घे[२] यस्य तस्य पिण्डीजङ्घाः[३]। अत इञ्: ॥ * ॥ भलन्दनस्य भलन्दनाः। शिवाद्यण्: ॥ कलन्दनेति[४] भोजः ॥ * ॥ भडिलस्य भडिलाः। अश्वादिफ्फस्य[५] ॥ * ॥ कर्णाटस्य कर्णाटाः ॥ * ॥ कर्णस्याढकं यस्य स कर्णाढकः। तस्य कर्णाढकाः[६]। आभ्यामत इञ्: ॥ * ॥ लह्यस्य लह्याः। शिवाद्यण्:[७] ॥ * ॥ भण्डिलस्य भण्डिलाः। अश्वादिफ्फस्य[५] ॥ * ॥ शीर्षं मिनाति। शीर्षमायः। तस्य शीर्षमायाः। अत इञ्:[८] ॥ * ॥ अशुभकर्माणि तपसा भृज्जतीति भृगुः शुक्रपिता[९]। तस्य भृगवः। ऋष्यण्: ॥ * ॥ रक्षस इव मुखमस्य स रक्षोमुखः। तस्य रक्षोमुखाः ॥ * ॥ वर्षतीत्येवंशीलो[१०] वर्षुकः। तस्य वर्षुकाः ॥ आभ्या-मत इञ्: ॥ २४ ॥

वशाकपर्णाढकमिच्छका[११] बहिर्-
योगोऽजबस्तिस्तृणकर्णवर्ष्मकौ।
पटाकयुक्तौ बकसक्थगोतमौ[१२]
स्यात् क्रोष्टुमायः कटुमन्थमित्रयू ॥ २६ ॥

वशाकस्यापत्यानि[११] वशाकाः[११] ॥ * ॥ पर्णस्याढकं यस्य स पर्णाढकः। तस्य पर्णाढकाः ॥ * ॥ मिच्छतीति मिच्छकः। तस्य मिच्छकाः ॥ * ॥

---

१ °ढण्: A. B. D. F.; गृष्ट्याद्यण् C.; cf. ṣl. 226.

२ पिण्डायुक्ते C. D.; जंघो A.

३ पिंडाजंघाः C.

४ कलद्नेति C.

५ °फ्यस्य A. B. D. F.; अश्वादिभ्यस्य C.; cf. ṣl. 239 (Pâṇ. फञ्)

६ °टकं° कर्णाटकः° कर्णाटकाः C.

७ शिवाद्याण्: B.; शिवाद्यण् C.

८ आभ्यामत इञ्: F

९ Om. F.

१० °शीलो यं C.

११ वशाक° C.

१२ °युक्ता° C.; °गौतमौ A. C F

बहिर्योगो यस्य स बहिर्योगः । तस्य बहिर्योगाः ॥ अन्ये तु । अहिना योगो यस्येति । अहिर्योगः । गणपाठाद्रेफ इत्याहुः ॥ * ॥ अजवस्तयः[१] । शुभ्रादिढञः[२] ॥ * ॥ तृणकर्णाः । शिवाद्यण् ॥ * ॥ वर्म्मकाः[३] ॥ पटाकाः ॥ बकसक्थाः[४] ॥ एभ्योऽत इञः[५] ॥ * ॥ गोतमस्य गोतमाः[६] ॥ ऋष्यण् ॥ * ॥ क्रोष्टारं मिमीते[७] । क्रोष्टोरिव मायाऽस्येति वा । क्रोष्टुमायः । तस्य क्रोष्टुमायाः ॥ * ॥ कटु[८] मथ्नातीति कटुमन्थः । तस्य कटुमन्थाः ॥ अपरे कटुकमन्थ इत्याहुः । अन्यस्तु[९] कटुक मन्थकेति पृथक् शब्दद्वयमिदमित्याह ॥ आभ्यामत इञः ॥ * ॥ मित्रयोर्मित्रयवः[१०] ॥ औत्सर्गिकस्याण् ॥ २६ ॥

क्रोष्टुपादसदामत्तायःस्थूणकृशभण्डिताः ।
पदकः[११] कषको हारः कम्बलात् स्थगलस्तथा[१२] ॥ २७ ॥

क्रोष्टोरिव पादौ यस्य स क्रोष्टुपादः । पाठसामर्थ्यात् पादस्य समासान्ते[१३] लुग्न भवति । क्रोष्टून्पादयति निष्कासयतीति[१४] वा । क्रोष्टुपादः । तस्य क्रोष्टुपादाः ॥ क्रोष्टुमानमिव[१५] मानं यस्य स क्रोष्टुमान इति केचित् ॥ * ॥ सदामत्तस्य सदामत्ताः ॥ आभ्यामत इञः ॥ * ॥ अयोमयी स्थूणा यस्य सोऽयःस्थूणः । तस्यायःस्थूणाः ॥ शिवाद्यण् ॥ * ॥

---

१ अजवस्तयः A. D.; अजवस्तः तस्याजवस्ताः C.; D. om. to वकसकथाः.
२ °ढण्: MSS.; cf. śl. 226.
३ वर्म्माकाः B.
४ वकसकथाः A.
५ इञ् C.; B. C. add शब्दा एते.
६ गौतमस्य गौतमाः A.
७ क्रोष्टुं मिमीते D.F.; क्रोष्टुवत् मिमीते शब्दायतो । A.
८ कटुं F.
९ अपरे कटुमंथक इत्याहुः । भोजस्तु D.
१० B. om. मित्रयोर्.
११ पादकः E.
१२ कंबलास्थ° B.; हारकंबलास्थागल° C.; स्थगिल° F.
१३ समासांतो A. B. C. D.
१४ निःकाशयतीति A.; निष्काश°D
१५ क्रोष्टुमान° D. F.

छग्रस्य छग्राः । अत इञः ॥ * ॥ भण्डितस्य भण्डिताः । अश्वादिष्फस्य[१] ॥ * ॥ पदं वेत्त्यधीते वा । पदकः । तस्य पदकाः ॥ * ॥ कषतीत्यौणादिके[२]ऽके । कषकः । तस्य कषकाः ॥ कडम इति भोजः ॥ * ॥ हारः कम्बलादिति[३] कम्बलपूर्वो हारशब्दो ज्ञेयः ॥ कम्बलं हरतीति[४] कम्बलहारः । तस्य कम्बलहाराः[५] ॥ * ॥ स्थगतीति स्थगेरौणादिकेऽलप्रत्यये । स्थगलः । तस्य स्थगलाः[६] ॥ एभ्योऽत इञः ॥ * ॥ एवं पुष्करसच्छब्दस्य बाह्वादीञः[७] लुग् द्रष्टव्यः ॥ अन्ये तु भृगुकुत्सवशिष्ठगोतमाङ्गिरोऽत्रेरिति[८] सूत्रं पृथग्विदुः । तेषां मते यञादित्वाद्[९] यञादेर्द्व्येकेषु षष्ठ्यास्तत्पुरुष[१०] इत्यनेन भृगुकुलं भार्गवकुलमित्यादि सिध्यति ॥ २७ ॥ इति यस्कादिः ॥

उपकलमकौ पिष्टोदङ्कौ कुषीतककर्णकौ
कमककलशीकण्ठौ[११] कृष्णाजिनानुपदौ तथा ।
बधिरकखरीजङ्घावेतौ वटारकपर्णकौ
गडुकजतुकौ लेखाभ्रूश्च प्रतानपतञ्जलौ ॥ २८ ॥

उपकादयः शब्दा[१२] वोपकादेरित्यनेन सूत्रेणापत्यप्रत्ययलुग्भाजो[१३] वा भवन्ति ॥ उपकस्यापत्यानि । उपकाः । औपकायनाः[१४] ॥ * ॥

---

१ See Note ५, page ५५.

२ कथयतीति° A.

३ हारकंबला° C.

४ F. om. from कम्बलं.

५ कंबलाहार: C.

६ स्थागला: C.

७ बह्वादिपाठात् लुग् C.

८ °गोतमांगिरोतिरिति A.; °वशिष्ठांगिरोगोतमेभ्य इति D.; cf. P. ii. 4, 65; Kât. ii. 4, 7.

९ यञादित्वात् A. B. F.; याञादित्वात् C.

१० Cf. Pâṇ. ii. 4, 64 Vârtt.; D. om. from तेषां मते to end.

११ कमकाकल° B. C.

१२ शब्दाश्चोप° C.; शब्दा भवन्नकपर्यंता D.; शब्दाः अबंधकपर्यंता F.

१३ °प्रत्ययाश्च लुग्भाजो C.

१४ उपकायनाः C.

लमकाः । लामकायनाः ॥ नडादिफणः स्रुक्[1] ॥ * ॥ पिष्टस्य पिष्टाः । पैष्टायनाः[2] ॥ * ॥ उदङ्कस्य । उदङ्काः । औदङ्कयः । अत इञः ॥ * ॥ कुष्णाति भवबन्धनादात्मानमिति[3] कुषीतको नाम मुनिः । तस्य कुषीतकाः । कौषीतकयः[4] ॥ * ॥ कर्णयतीति कर्णकः । तस्य कर्णकाः । कार्णकयः[5] ॥ * ॥ कमेरौणादिके ऽके[6] कमकः । तस्य कमकाः[7] । कामकयः ॥ * ॥ कलशी कण्ठे यस्य तस्य कलशीकण्ठाः । कालशीकण्ठयः[8] ॥ * ॥ कृष्णमजिनं यस्य तस्य कृष्णाजिनाः । कार्ष्णाजिनयः ॥ * ॥ अनुगतं पदं यस्य तस्य । अनुपदाः । आनुपदयः ॥ * ॥ बन्धेः[9] किरः । बधिरः । बधिर एव बधिरकः[10] । तस्य बधिरकाः । बाधिरकाः[11] । शिवाद्यण् ॥ भोजस्तु बधिरकाः । बाधिरकय इत्याह ॥ * ॥ खरी जङ्घे यस्य तस्य[12] खरीजङ्घाः । खारीजङ्घयः ॥ * ॥ वटारको वैश्रवणभक्तः[13] । तस्यापत्यानि वटारकाः[14] । वाटारकयः ॥ * ॥ पर्णानि करोतीति पर्णकः । तस्य पर्णकाः । पार्णकयः ॥ * ॥ गडुकस्य गडुकाः । गाडुकयः ॥ * ॥ जतुकस्य जतुकाः । जातुकयः ॥ * ॥ लेखाकारे भ्रुवौ यस्य स लेखाभ्रूः । तस्य लेखाभ्रुवः । लैखाभ्रेयाः[15] । शुभ्रादिढण् ॥ * ॥

---

१ ०पण:० A. B. and orig. D.; यण:० F.; नडादित्वात्पुक् C.

२ पिष्टायनाः A. B. C. F.; D. corr. पैष्टायनाः.

३ कुष्णाति बंधनाद्० A. D.

४ कुषीतकयः A.; कोषीतकयः D.

५ कर्णकयः A.

६ Om. C.; ०औणादिको के B.; ऽकि F.

७ कामकाः C.; om. B.

८ कलसी० कलसीकंठाः । कालसीकंठयः A. B. C. (but श in the text).

९ बधेः A. B. C. D.; ०किरौ D.; cf. also Uṇ. S. 1, 52.

१० A. om. बधिर एव.

११ तस्य बधिराः । बाधिरकाः । A. D.; तस्य बाधिरकाः । बधिरकाः । F.

१२ Om. B. C.

१३ वैश्रवणः भक्तः B.

१४ Om. B. C.

१५ लेखाभ्रेयाः F.; लेखाभ्रेयः A.; लेखाभ्रेयाः D.; लेखाभ्रुयः B. C. (see śl. 219).

प्रतामस्य प्रतानाः । प्रातानयः[१] ॥ * ॥ पतञ्जलति घनीभवति[२] । पतञ्जलः । अत एव निपातनात्तकारस्य मकारः[३] । तस्य पतञ्जलाः । पातञ्जलयः[४] ॥ भोजस्तु पतञ्जलिशब्दमिकारान्तं[५] मन्यमानः पतञ्जलयः । पातञ्जलाः[६] । औत्सर्गिकाणः स्नुकीत्याह[७] ॥ २८ ॥

शलाथलाडारककृष्णपिङ्गलाः
कठेरणिः[८] पिङ्गलकः कमन्दकः ।
निदाघचूडारककृष्णसुन्दराः[९]
सुपिष्टपिञ्जूलकवर्णकास्तथा ॥ २९ ॥

शले स्थलमस्य । शलाथलः । सकारलोपो दीर्घस्य निपातनात् । तस्य शलाथलाः । शालाथलयः ॥ थलाथल[१०] इत्यन्ये ॥ * ॥ अडतीति । अडारकः[११] । तस्य । अडारकाः । आडारकयः ॥ * ॥ कृष्णश्चासौ पिङ्गलश्च । कृष्णपिङ्गलः । तस्य कृष्णपिङ्गलाः । कार्ष्णपिङ्गलयः ॥ * ॥ कठेरणेः[१२] कठेरणयः । काठेरणाः[१३] ॥ वामनस्त्वोकारान्तं मन्वानः कठेरण इत्याह[१४] । अत्राणः । अन्ये कठेरणेत्याहुः[१५] ॥ * ॥ पिङ्गलकस्य पिङ्गलकाः । पैङ्गलकयः ॥ पिञ्जलक[१६] इति शाकटायनः ॥ * ॥ मन्द

---

१ प्रतानयः B.
२ पूतीभवतीति F.
३ नकारः A. (पतत् + जल).
४ Om. A.
५ °शब्दमकारांतं B. C.
६ D. om. from पतञ्जलति.
७ स्नकित्याह D.; स्नुगित्याह F.; कोण् । लुगित्याह C.
८ कष्टेरणिः E.
९ निर्दाघ° F.
१० यलाथल B.
११ आडारकः A.; अडतीति अडः इयर्त्ति आरकः कर्मधारयसमासे अडारकस् D.
१२ कठेरणः D.
१३ ? काठेरणयः F. cf. ṣl. 318; कवेरणेः कावेरणायः । कवेणाः । D.
१४ कठेरणीत्याह C.; कावरण्य° D.; काठेरण्य° F.
१५ ? कठेरतेत्याहुः A.; कठेरितेत्याहुः B.; कठेरित्याहुः C.; कावेरिणमित्याहुः D.; कठेरिमित्याहुः F. (? कठेरिण । इत्याहुः cf. ṣl. 318 com.).
१६ पिंजतेक C.

एव मन्दकः । के शिरस्यात्मनि वा मन्दकः । कमन्दकः । तस्य कमन्दकाः । कामन्दकयः ॥ * ॥ निर्गतो दाघो यस्मात् स निदाघः[१] । तस्य निदाघाः । नैदाघयः[१] ॥ * ॥ चूडारकस्य । चूडारकाः । चौडारकयः ॥ वडारक[२] इति भोजः ॥ मटारक इति वामनः ॥ * ॥ कृष्णश्चासौ सुन्दरश्च । कृष्णसुन्दरः । तस्य कृष्णसुन्दराः । कार्ष्णसुन्दरयः[३] ॥ * ॥ शोभनं पिष्टं यस्य स सुपिष्टः । तस्य सुपिष्टाः । सौपिष्टाः । शिवाद्यण् ॥ * ॥ पिञ्जूलकस्य पिञ्जूलकाः । पैञ्जूलकयः ॥ * ॥ वर्णयतीति वर्णको गणकः । तस्य वर्णकाः । वार्णकयः ॥ २९ ॥

मसुरकर्णपदञ्जलजन्तुका
ऽनभिहितप्रतिलोमकपिष्ठलाः[४] ।
जतुरकः कशकृत्स्नसुधायुकौ
जटिलकश्च मदाघकवन्तकौ ॥ ३० ॥

मसुर इव कर्णावस्य मसुरकर्णः । तस्य मसुरकर्णाः । मासुरकर्णाः[५] । शिवाद्यण् ॥ अपरे मसूराविव कर्णावस्य । मसुरकर्णः[६] । निपातनाद् ह्रस्व इत्याहुः ॥ मयूरकर्णमपरे[७] पठन्ति ॥ * ॥ पदञ्जलस्य पदञ्जलाः । पादञ्जलयः ॥ * ॥ जायत इति जन्तुः । ततः के जन्तुकः । तस्य जन्तुकाः । जान्तुकयः ॥ * ॥ अभिपूर्वस्य हिनोतेर्दधातेर्वा क्ते नञि च । अनभिहितः । तस्य । अनभिहिताः । आनभिहितयः ॥ केचिद् अभिहितेति नञा विना पठन्ति । तत्राऽभिहिताः । आभिहितयः ॥ * ॥ प्रतिगतानि लोमान्यस्य । प्रतिलोमः । प्रत्यन्ववात्[८] साम-

---

१ निर्दाघः °निर्दाघाः °नैर्दाघयः F.

२ ? Thus C. D.; चडारक A. B. F. (cf. वटारक sl. 28).

३ कार्ष्णसुन्दरीयाः A.; सुंदरणः B.

४ मसुरः क° - - - कपिषुकाः । B.; °प्रतिलोमककनिष्टलाः C.

५ Om. C.

६ मसूराविर् कर्णाः निपात° A.

७ मयूरकर्णानपरे B. C.; मयूरकर्ण अप° A.

८ प्रत्यन्वयात् A.; °प्रतिलोमप्रत्ययात् C.; केचिदभिहिप्रत्यन्ववात् D.

लोम्न इत्यत्[1] समासान्तः। प्रतिलोमाः। प्रातिलोमयः॥*॥ कपीनां स्थलमिव[2] स्थलमस्य। कपिष्ठलः। तस्य कपिष्ठलाः। कापिष्ठलयः॥ केचित् कपिष्ठलाः। कापिष्ठलायनाः। नडादिफणन्तमुदाहरन्ति[3]॥*॥ जतुरकस्य जतुरकाः। जातुरकयः॥*॥ कशाभिः[4] कृन्तति। कृतेः क्ले। ड्याप्त्वे च[5] ह्रस्वस्य बहुलमित्यनेन ह्रस्वत्वे। कशकृत्स्नः[4]। तस्य कशकृत्स्नाः[4]। काशकृत्स्नयः[4]॥ वामनस्तु कसकृत्स्नेत्याह[6]॥*॥ सुधायुकस्य। सुधायुकाः। सौधायुकयः॥*॥ जटाः सन्त्यस्य जटिलः। के जटिलकः। तस्य जटिलकाः। जाटिलकयः॥ शाकटायनस्तु शिवाद्यणन्तमाह॥*॥ मदेनाघं यस्य स मदाघः। तस्य मदाघाः। मादाघयः॥*॥ कव्ट वर्णे इत्यस्य क्विपि कव्। कव् अन्ते यस्य[7] स कवन्तकः। तस्य कवन्तकाः। कावन्तकयः॥ एभ्योऽत इञः[8]॥ ३०॥

**कमन्तकः कदामत्तः खरीखभ्रष्टकौ[9] तथा।**
**अपजग्धानुलोमौ च दामकण्ठोऽप्यबन्धकः॥ ३१॥**

कमु कान्तावित्यस्य विचि कम्[10]। कम् अन्ते यस्य स कमन्तकः। तस्य कमन्तकाः। कामन्तकयः॥*॥ कदामत्तस्य कदामत्ताः। कादामत्तयः[11]॥*॥ खरी रासभी। तां खनतीति विचि खरीखा[12]।

---

१ इत्यच स° A.; इत्यत्समा° D.; इति समासांतः C.; cf. P. v. 4, 75.

२ कपिस्थल° D.

३ °पणंत° A. B.; °यणंत° D. F.; नडाद्यणंत° C.

४ कसाभिः° कसकृत्स्नः etc. A.

५ व्यात्। ड्त्वेव A.; ड्याड्त्वे च B.C. (? ड्याड्°); क्ले घा इत्वेवह्रस्व D.; कृंतेः कशे इञ्वे च F.; cf. P. vi. 3, 63, 64.

६ काशकृत्स्ने° B. C.; कशक्रात्स्य इत्याह F.

७ कवं अंते यस्य C.

८ इञ् B. C.; अपत्ये इञ् D.

९ खरीखणभ्रष्टकौ F.

१० विवि° B. C.; विचि कमु कमु अंते° A.

११ कदामंतस्य कदामंताः कादामंतयः। B. C.

१२ खरीखाणः। A.; खरीखण F.

तस्य खरीखाणः । खारीखणाः[१] ॥ सामान्याणः[२] ॥ * ॥ भ्रष्टकस्य भ्रष्टकाः । भ्राष्टकयः ॥ * ॥ अपपूर्वस्यादेर्जग्धादेशे । अपजग्धः । तस्यापजग्धाः । आपजग्धयः[३] ॥ भोजस्त्वपदग्धेत्याह[४] ॥ * ॥ अनुलोमस्य । अनुलोमाः । आनुलोमयः ॥ वामनस्तु गणपाठात् समासान्ताभावेऽनुलोमानः । प्रतिलोमानः कुमारा इत्याह ॥ * ॥ दाम कण्ठे यस्य स दामकण्ठः । तस्य दामकण्ठाः । दामकण्ठयः ॥ * ॥ बन्धं करोतीति बन्धकः । न बन्धकोऽबन्धकः । न विद्यते बन्धोऽस्येति वा । अबन्धकः । तस्य । अबन्धकाः । आबन्धकयः ॥ अबद्धक इत्येके[५] ॥ एभ्योऽत इञः ॥ ३१ ॥ इत्युपकादिः ॥

तिककितवौरसलङ्कटकृष्णाजिनकृष्णसुन्दराः कथिताः ।
उपकलमकाश्च वह्वरभण्डीरथपफकनरकाश्च ॥ ३२ ॥

तिककितवादयस्तिककितवादौ[६] ६-७ इत्यनेन बहुत्वापत्यप्रत्ययलुग्भाजो[७] भवन्ति । तैकायनयश्च कैतवायनयश्च[८] । तिककितवाः । अत्र तिकादेरित्यनेन[९] विहितस्य फिञः लुक्[१०] ॥ * ॥ औरसायनयश्च लाङ्कटयश्च[११] । औरसलङ्कटाः । अत्र तिकादिफिञोऽत इञ-

१ खरीखणाः B.; खारीखाणाः C. D.; तस्य खरीखाणाः । खरीखणः । F.

२ सामान्यणः D.; सामान्येण.

३ अपजग्धयः A.; अपजग्धस्तस्यापजग्धस्तस्यापजग्धाः । आपजग्धयः । F.

४ Thus B. C.; °अपजग्धेत्याह A. B. (but both ग्ध for ग्ध before).

५ ? अदहक° A. B. C.; °इत्यन्ये F.

६ तिककितवादयः पृथोर्ज्जककुभपर्यन्तास्तिककितवादौ D.

७ बहुत्वापत्ययस्तु° A.; °प्रत्ययाश्च लुग्भाजो C

८ तिकायनाश्च कैतवायनाश्च A.; तैकायनश्च कैतवायनश्च B. C.; तिकस्य कितवस्य वा अपत्यानि बहवः कुमारास्तिककितवाः । D. [cf. sl. 229 and Pâṇ. iv. 1, 154.

९ अप्रतिकादेरि° B. C. F.; अत्र तिका° D.

१० पिञस्लुक् A.; फिञो लुक् C.; फञस्लुक् D.; पिञः स्लुक् B.

११ औरसायनाश्च A. B. C. F.; औरसायश्च° D.; °लांकटायश्च A

स्य[1] ॥ * ॥ कार्ष्णाजिनयस्य कार्ष्णसुन्दरयस्य[2]। कृष्णाजिनकृष्णसुन्दराः। अत्रात इञः ॥ * ॥ औपकायनास्य लामकायनास्य[3]। उपकलमकाः। नडादिफणः[4] ॥ * ॥ वाङ्करयस्य भाण्डीरथयस्य। वङ्करभण्डीरथाः ॥ वङ्कर[5] इत्यन्ये ॥ * ॥ पाफकयस्य नारकयस्य। पफकनरकाः। अत इञः ॥ पफको विकत्थनः ॥ अनुकरण इत्यन्ये। पफ करोतीति पफकः ॥ ३२ ॥

बकनखगुदपरिणद्धाः शण्डिलकशकृत्ललङ्कशान्तमुखाः।
प्रहितनरकौब्जककुभाः प्रोक्ता भ्रष्टककपिष्ठलाश्चात्र ॥ ३३ ॥

बाकनखयस्य गौदपरिणद्धयस्य[6]। बकनखगुदपरिणद्धाः। आभ्यामत इञः ॥ * ॥ शाण्डिल्यास्य[7] काशकृत्स्नयस्य। शण्डिलकशकृत्स्नाः[8]। अत इञः। बह्वचु यञो लुक् सिद्धेवेञो नित्यं सुगर्थं वचनम्[9] ॥ * ॥ लाङ्कयस्य शान्तमुखयस्य। लङ्कशान्तमुखाः[10]। अत्रात इञः ॥ शं सुखं तनोतीति शंतनं मुखमस्येति शंतनमुख[11] इत्यन्ये ॥ * ॥ प्राहितयस्य नारकयस्य[12]। प्रहितनरकाः ॥ * ॥ औब्जयस्य काकुभास्य। उब्जककुभाः। अत्रात इञः शिवाद्यणस्य ॥ * ॥ भ्राष्टकयस्य कापिष्ठलयस्य[13]। भ्रष्टककपिष्ठलाः। अत इञः ॥ ३३ ॥

---

१ तिकादिफिञो॰ A. B.; ॰फञो॰ D.; ॰इत उञस्य C.

२ कार्ष्णाजिनयस्य कार्ष्णसुंदरयस्य A.; ॰कार्ष्णासुंदरयस्य D.

३ औपकानास्य लामकानास्य॰ A.

४ ॰यणः A. F.; ॰पणः B.; ॰फुकः D.; नडादिभ्योण् C.

५ वंथर् C. F.

६ गौदपिरिणद्धयस्य B.

७ शंडिलास्य A. B. C. D.; शांडिलास्य F.; cf. गर्गादि sl. 248.

८ कासक्त॰ शंडिलकस॰ D. (श in the text).

९ वङ्कपयञो लुक्॰ सुगर्थवचनम्। A.; यञो लुक्। लुकि सिद्धेऽपि नित्यं सु॰ F.

१० शांतमुखस्य॰ C.; ॰लंकाशांत॰ A.

११ शंतानं॰ शंतानमुख F.

१२ नारकायस्य B.; वारकयस्य॰ A.

१३ कपिष्ठलस्य A.; कापिष्टलायस्य D.

दंशेरकाग्निवेशेभ्यो गडेरकदंशेरकाः ।
कृष्णेभ्यः सुन्दराः प्रोक्ताः ककुभश्च[1] पृथोर्जकात् ॥ ३४ ॥

दंशनशीलो दंशेरः । सर्पः सारमेयश्च । स्वार्थे के सति तस्यापत्यानि । गडति सिञ्चति पर्वताङ्गमिति गडेरो निर्झरः[2] । तद्योगात्पुरुषो गडेरः । तस्यापत्यानि । दांशेरकयश्च गाडेरकयश्च[3] । दंशेरकगडेरकाः । अत इञः ॥ * ॥ अग्निवेशाश्च दांशेरकयश्च[4] । अग्निवेशदंशेरकाः[5] । यञः पूर्वेणैव लुक् सिद्धा ॥ परपदस्थदांशेरकिशब्दोपसंग्रहार्थं लिहोपादानम्[6] ॥ * ॥ कार्ष्णयश्च सौन्दरयश्च । कृष्णसुन्दराः । अत इञः ॥ * ॥ पार्थोर्जकयश्च काकुभयश्च । पृथोर्जकककुभाः । अत इञः ॥ ककुभशब्दस्य[7] शिवादौ पाठः प्रायिकः ॥ पृथां पृथिवीमूर्जयति वर्धयति । पृथोर्जकः । पृथगूर्जक इति वा[8] गणनिपातनात् कलोपः ॥

उपकलमकभ्रष्टककपिष्ठलकृष्णाजिनकृष्णसुन्दराणां नित्यार्थः पाठः । अन्येषां तु द्वन्द्वेऽपि पूर्वेण[9] विकल्पः । तेन पिङ्गलककृष्णपिङ्गलाः । पैङ्गलककार्ष्णपिङ्गलयः[10] ॥ ३४ ॥ इति तिककितवादिः ॥

ज्ञेयो गोपवनो बिन्दुः शिग्रुश्यामाकभाजनाः[11] ।
श्यामकाश्वावतानौ च श्यापर्णः सम्लकस्तथा[12] ॥ ३५ ॥

---

१ सुंदरीः° C.; ककुभाश्च B. C.

२ निर्झरस् B.; तस्यापपानि गडेनि सिंचति° गडेरो निष्भरस् C.

३ दासेरकयश्च गडेरकयश्च B. C.; गाडेरकाश्च F.

४ दासेरकय अ° B.

५ अग्निवेशदाशेरकाः A.; अत इञ्। अग्निवेशाश्चा दासेरकाः। C.; [अग्निवेश occurs in गर्गादि, hence यञ् cf. sl. 254; Kârikâ 4].

६ °दाशेरकशब्दो° C.; °स्लिहोपादानं B.; D. see next note.

७ D. om. from शब्दोपसंग्रहार्थं to ककुभ.

८ A. om. पृथगूजक and वा

९ पूर्वेणैव F.

१० पैंगलिक° A. D., पिंगलककार्ष्णपिंगलयः F.

११ श्यामकभाजनाः A.

१२ श्यापर्णश्यावकौ तथा C. F.; श्यापर्णास्यवकौ° B.

यञ्ञोश्चेत्यनेन[१] लुक् प्राप्ता न गोपवनादिभ्य[२] इत्यनेन निषिध्यते ॥ गोपवनस्यापत्यानि । गौपवनाः ॥ * ॥ बैन्दवाः ॥ * ॥ शिग्रुरिव[३] शिग्रुर्निःसारः कश्चित् । तस्य शैग्रवाः[४] ॥ * ॥ श्यामा लताः कायति[५] । श्यामाकः । तस्य श्यामाकाः[६] ॥ * ॥ भाजयतीति भाजनः । तस्य भाजनाः ॥ * ॥ श्यामं करोतीति श्यामकः । तस्य श्यामकाः ॥ श्यावक इत्यन्ये ॥ * ॥ अश्वानवतनोति । अश्वावतानः । तस्य । आश्वावतानाः ॥ * ॥ श्यामानि पर्णान्यस्य । श्यापर्णः[७] । अत एव निपातनान्मलोपः[८] ॥ * ॥ सम्बकस्य साम्बकाः । श्ववक इत्यन्ये[९] ॥ * ॥ बिन्दुभाजनस्थपणावन्ये पठन्ति ॥ वामनमते शिग्रुः प्रत्याहारः[१०] ॥ ३५ ॥ इति गोपवनादिः ॥

क्रौडिव्याड्यापष्छितिसौधातकिदेवदत्तिचैकयताः[११] ।
कापिष्ठलिचैटयतावापिशलिर्लौडिचौपयतौ[१२] ॥ ३६ ॥

क्रौड्यादीनामित्यनेनैषां पौत्राद्ये स्त्रीलिङ्गेऽपत्येऽणिञोर्ष्यो भवति[१३] ॥ क्रौडि । क्रीडतीति । अचि बाहुलकादोले । क्रोडः । तस्यापत्यं स्त्री । क्रौड्या ॥ * ॥ व्याडि[१४] । विविधमडतीति व्यडः । तस्यापत्यं स्त्री ।

---

१ यञिञोश्चेत्यनेन F.; Pâṇ. ii. 4, 64.
२ Pâṇ. ii. 4, 67.
३ शिग्रुरिति A.
४ सैग्रवाः B. C.
५ श्यामलताः कायति A.; श्यामा लताकाकृतिः । F.
६ श्यामकस्तस्य श्यामकाः A.
७ श्यामपर्णः । A. F.
८ निकतनान्मलोपः A.
९ श्ववकस्य श्वावकाः । संबक [संवक F.] इत्यन्ये । B. C. F.
१० ? Thus F.; सिग्रुः प्रत्याहारः B. C.; शिग्रुप्रत्याहारः A. D.
११ क्रौडि° वैकयति C.; °सौधातकि° A.
१२ °वैटयेतावापि° C.; °वौपयतौ । A. C. D.
१३ णिञोर्ष्यो भवति A.; णिञोर्ष्योर्भवति C.; D. om. from क्रौड्यादीनाम्.
१४ Om. D.; व्याति । विविधमडतीति यडस्° A.

व्याघ्या[1]। स्वागतादेरित्यपवादादैज् न भवति[2]॥ * ॥ आपच्चिति। दुष्टु मिथ्या चितोऽपचितः[3]। तस्यापत्यं स्त्री। आपचित्या[4]॥ * ॥ सौधातकि। शोभनं दधातीति सुधाता। तस्यापत्यं व्यासादीनामकञ् चेत्यनेनेञ्यकञादेशे च विहिते। सौधातक्या स्त्री[5]॥ * ॥ दैवदत्ति। देवदत्तस्यापत्यं स्त्री। इञि[6]। दैवदत्त्या॥ * ॥ चैकयत। चीक आमर्षणे[7] चुरादिणिजन्तस्ततः[8] शतुरणि स्त्री। चैकयत्या[9]॥ पाणिनिस्तु चित संवेदन इत्यस्य चैतयत इत्याह[10]॥ * ॥ कापिष्ठलि। कपिष्ठलस्यापत्यं स्त्री। कापिष्ठल्या॥ * ॥ चैटयत। चिट प्रैष्य[11] इत्यतो णिचि शतरि[12]। चेटयतोऽपत्यं स्त्री चैटयत्या[13]॥ * ॥ आपिशलि। पिंशतीत्यौणादिककलप्रत्यये। पिशलः। न पिशलोऽपिशलः कुलप्रधानम्[14]। तस्यापत्यं स्त्री। आपिशल्या॥ * ॥ लाडि। लड विलास इत्यस्याचि[15]। लडः। तस्यापत्यं स्त्री। लाड्या[16]॥ * ॥ चौपयत। चोपयतीति चोपयन्। तस्यापत्यमण् स्त्री। चौपयत्या[17]॥ ३६॥

---

१ छ्या A.; व्याडा B.; F. om. स्त्री व्याड्या.

२ स्वागताद्यपवादादैर्ण्ण भवति D.; स्वरोनादेरित्य° A.; cf. Pâṇ. vii. 3, 7.

३ द्रष्टुमापचितो° C.; दुष्टुमिथ्याचितो अपचितस्यापत्यं° D.; अप दुष्टं°F.

४ स्त्रीया आप° A.

५ व्यासादीनामकञ्चेत्यनेनेञ्यञादेशे° A.; व्यासादीनामकञ्चेत्यनेने [न suppl.] अकञादेशे च विहिता। सौ° D.; व्यासादानामकढेत्यनेनेञपकडादेशाव सौ° C.; °कडादेशेव सौ° B.; वेत्यनेनाकञ् आ° F.; [Pâṇ. iv. 1, 97, अकङ्]

६ इति B. C.; अञि D.; om. F.

७ चैकयति° A.; वैकयती वीक° C.; वैकयत वीक° B. D.; आमकर्षणे B.

८ °णिजन्त° A. B.; चुरादिन्यंत° F.; cf. Pâṇ. iii. 1, 25.

९ शतुरणि° A.; शतुरणि आवैकपत्या C.; चैकयत्त्या F.

१० चैकयत इति। D.

११ प्रैष्ये D.; वैटयत। विट प्रैष्ये C.

१२ णिचि A. B. C. D.; सवाङि A.; शचा D.; णिचि शतरि F.

१३ चैटयतोऽपत्यं° A. B. D. F.; विटयतो °वैटयत्या C.; चैतयत्त्या F.

१४ पशिलः° B.; आपिशलेः कुल° C.

१५ इत्यस्यावि A. B. C.; लडि।° इत्यस्यादचि D.

१६ लाडिमा C.

१७ वौपयती। वोपयतीति वोपयतस्यापत्यम् स्त्री वौपयत्या। C.

**वैल्वयतोऽथ क्षत्रियवाच्यो भोजश्च सूतवाग्युवतौ।**
**भौरिकिभौलिकिशालास्थलिशाल्मलिकौटिसैकयताः[1]॥३७॥**

वैल्वयतः। बिल्ववन्तमाचष्ट इति णिचि[2]। विन्मतोरिति मतुब्लोपे शतरि[3]। वैल्वयतोऽपत्यमित्यणि स्त्री। वैल्वयत्या ॥*॥ क्षत्रियवाच्यो भोज इति क्षत्रिये वाच्ये भोजशब्दः क्रौड्यादौ भवति स्त्रियाम्। भोज्या क्षत्रिया ॥ यथा। भोज्यां प्रति व्यर्थमनोरथत्वात्[4] ॥ भोजाऽन्या ॥*॥ सूतवाग्युवताविति सूतशब्दो युवतौ[5] वाच्यायां क्रौड्यादौ भवति। सूत्या युवतिः[6]। प्राप्तयौवना स्त्रीत्यर्थः ॥ अन्ये तु सूताः सारथयः। तत्संबन्धिनी[7] युवतिः सूत्या। न सर्वेत्याहुः[8] ॥ सूताऽन्या ॥*॥ भौरिकि। भूरिरेव भूरिकः। तस्यापत्यं स्त्री भौरिक्या ॥*॥ भौलिकि। वारादेर्वेति[9] लत्वे। भौलिकिः। तस्यापत्यं स्त्री। भौलिक्या[10] ॥*॥ शालास्थलि। शालास्थलस्यापत्यं[11] स्त्री शालास्थल्या ॥*॥ शाल्मलि। शाल्मलेः शाल्मल्या ॥*॥ कौटि। कूट[12] दाहेऽच्। अत इञ्। कौट्या[13] ॥*॥ भौरिकिभौलिकिशब्दयोर्गोत्रादिपठितादिति[14] ष्ये प्राप्ते[15] तद्बाधनार्थं गौरादिषु पाठः। क्रौड्यादिलक्षणस्तु

१ भौरिकिलौलिकशा° C.; °सैकतयताः D.

२ णिञि A. D.; वैद्यति यवंतमाचष्टे° विन्मतोरिति C.; विन्मंगेरिति D.

३ शत्रा A. D.; cf. Pâṇ. v. 3, 65.

४ Ragh. vii. 2; D. om. from यथा.

५ A. om. from भोजान्या to युव.

६ B. om. from स्त्रियां। भोज्या क्षत्रिया.

७ तत्र व्याधनी C.

८ युवति सूत्या सर्वेत्योहुः A.; सूत्यानिसर्वेत्याहुः C.; D. om. from सूत्या युवतिः.

९ लौलिकि° C.; वाचादेर्वेति B. C.; cf. ṣl. 446.

१० लोलिकिस्तस्या° लौलिवता C.

११ शालस्थलस्या° D.

१२ कुट D.; om. C.

१३ अच् तृत इति कौच्या A.; असू अत इञि कौटिल्या D.; दाहेऽच अत इञि B. C.

१४ Thus A.; गोत्रादपठितादिति B. F.; °गोत्रादपविता° C.; गोत्रादपत्यंतादिति D. corr.; cf. Pâṇ. iv. 1, 78.

१५ डो प्राप्ते A.

च्यो भवत्येव। अन्यथा पाठानर्थक्यं स्यात् ॥*॥ सैकयत। सेक्ट गताविल्यतो णिचि[1] शत्रा। सेकयन्। तस्यापत्यं स्त्री सैकयत्या ॥*॥ आकृतिगणोऽयम्। तेनाश्वक्या काश्या रौढ्या याज्ञदत्त्या[2] इत्यादयो द्रष्टव्याः ॥ रौढिः। रूढस्यापत्यमणि स्त्री। रौढ्या[3] ॥ केचिद् गोकचशब्दं यञन्तमच[4] पेठुः। तन्मते गौकच्या[5]। फलं तु गौकचीपतिः। गौकचीपुत्रः। व्यङः[6] संप्रसारणं भवेदिति गोनर्दीयो मन्यते। अस्माकं तु मते पौतिमाष्यावत्सिद्धिः। तथा गौकच्यापतिः। गौकच्यापुत्र इत्येव भवितव्यम्[7]। अत्रापाठात्। तथा च सौनागाः पठन्ति। व्यङः[8] संप्रसारणे गौकच्याप्रतिषेध इति[9] ॥ ३७ ॥ इति क्रौड्यादिः ॥

अजपरभृताश्वकोकिलचटकैडकमूषिका विलातश्च।
बालः पाको मन्दः कन्यो वत्सास्त्वहोडाश्च[10] ॥ ३८ ॥

अदजादिभ्योऽस्वस्रादिभ्य आडित्यनेन[11]। अकारान्ताच्छब्दात्स्वस्रादिवर्जितादजादिभ्यश्च स्त्रियां स्वार्थे आट्प्रत्ययो भवति ॥ अज गतिक्षेपणयोः। ततोऽचि। अदजादिभ्योऽस्वस्रादिभ्य आड् इत्यने-

---

१ णिजि C.; णिञि A. F.; सेक्ट गता णिञि B.; सीक्ष सेचने इत्यतो णिञि° D.

२ ? तेन काश्यारौढायायाज्ञदत्त्या F.; तेनाश्वाक्याकारोवायाचावृत्त्या B.; तेनास्वाक्याक्यारोवायाचावृत्या C.; तेनास्याकास्यारौवायाज्ञदत्त्या A.; तेन [स्या obliterated] रौवायायाज्ञदत्त्या D.

३ रौदिलहस्यापत्यमणि स्त्री रौदा। B.C. [? रौढिः °रौड्या P. iv. 1, 79, V. 4].

४ गोकचसर्वयज्ञंतमच A.; यज्ञंतमच B. C.; D. om. from केचित् to end.

५ गोकच्या C.; तन्मतेन गौकचा A.

६ घञः A.; C. om. to गौकच्यापुत्रः cf. Mbh. on Pâṇ. vi. 1, 13.

७ तथा गोकचामपि गोकचापुत्र इत्यनेन भ° A.; see note ६.

८ सोमगाः° C.; सौमागा B.; शौनागा पठंति घञः A.; षाङः [षङः ?] B.

९ गोकचाप्र° A.; गोकच्याप्र° C.; संप्रसारणं गोकच्याः प्रतिषेधः। F.; see note ४.

१० °होडस्य E.; वत्सो थ होडस्य B. C.; वत्सौ थ होडास्य A.

११ अजादिभ्योऽश्वादिभ्यो आङ्° C.; A. D. om. from अदजादि.

नाडि । अजा ॥ * ॥ परभृता ॥ * ॥ अश्नुते पृथिवीं व्याप्नोतीत्यौणादिके वप्रत्यये । अश्वा ॥ * ॥ कुक वृक आदाने । कोकते गृह्णाति सहकारमञ्जरीमिति कोकिला ॥ * ॥ चट स्फुट भेदे[1] । चटति भिनत्ति वस्तूनीति चटका ॥ * ॥ ईड स्तुतौ । आङ्पूर्वः[2] । एडयतीति । एडका ॥ * ॥ मुष स्तेये । मुष्णात्यपहरति वस्तुजातमिति मूषिका ॥ एषां जातिलक्षणे ङीप्रत्यये[3] प्राप्ते ॥ * ॥ विपूर्वो रा ला दाने । ततः क्ते शीतादय इत्यौणादिके वा ते[4] । विलाता ॥ * ॥ बल प्राणने । बलतीति ज्वलादेर्णः[5] इति णे । बाला ॥ * ॥ पाति पिबति पायति वा[6] तमाहाराचारानुसंस्कारैरित्यौणादिके[7] कप्रत्यये । पाका ॥ * ॥ मन्दते स्वपितीति[8] मन्दा । यौवनस्था स्त्री ॥ यदा तु स्त्रीजातिनाम[9] तदा जातिलक्षणे ङीप्रत्यये ॥ * ॥ कनति शोभते वपुषा । कन्या ॥ अथवा । कनन्ति गच्छन्ति तस्यां रागिमनोनयनानीति कन्या । कुमारी ॥ * ॥ वदति । आह्वयति[10] पयस्कामा मातरमिति वत्सा । पुत्रिका ॥ * ॥ अवति पालयति गर्भाधानात्प्रभृत्या जीवितान्तात् पुत्रमिति । अम्बा माता[11] ॥ * ॥ होडा ॥ * ॥ मन्दादन्ये षडपि बाल्यवचनाः[12] । अन्यमते तु मन्दोऽपि ॥ वयस्यनन्त्य[13] इति ङीप्रत्यये प्राप्ते विलातेत्यत्र । क्तादल्पोक्तावित्यनेन ङीप्राप्तावित्यन्ये[14] ॥ ३८ ॥

१ Thus Kât. Dhâtup.; °भेदने F. Pâṇ. Dhp. 33, 47.

२ D. om. from ईड.

३ ङीष्प्रत्यये C. and corr. D.

४ Cf. Uṇ. S. 3, 40.

५ °न B. D.; वल प्राणानुवलतीति जलादेर्णः A.; cf. Pâṇ. iii. 2, 140-2.

६ च A.; का D.; पाययति वा F.

७ तमाहानुसं° F.; C. om. from वाते । विलाता । cf. Uṇ. S. 3, 43.

८ स्वप्यतीति F.

९ A. om. from यदा to स्त्री.

१० आह्वाययति F.

११ Thus D. F.; A. B. C. om. from अवति.

१२ मंथादावष्टऽपि वाल्यवसुदा A.; मन्दा । अन्ये° C.; D. om. from मन्दादन्ये to मन्दोऽपि.

१३ वयस्यानंत्य C.; cf. P. iv. 1, 20.

१४ °इत्यनेन वा ङीष्प्रत्यये प्राप्ते इत्यन्ये C.; D. om. from विलातेत्यत्र; cf. Pâṇ. iv. 1, 51.

मध्यज्येष्ठौ मध्यमकनिष्ठपूर्वापहाणदंष्ट्राः स्युः ।
अपरापहाणमुग्धौ पालान्ताः संप्रहाणश्च ॥ ३९ ॥

मां ध्यायतीति मध्या । मध्यस्य भार्या वा । मध्या ॥ * ॥ इयमनयोरतिशयेन वृद्धा प्रशस्या वा । ज्येष्ठा ॥ ज्येष्ठस्य भार्या वा । ज्येष्ठा ॥ * ॥ मध्ये भवा । मध्यमा[१] । मध्यान्म इति मप्रत्यये[२] ॥ मध्यमस्य भार्या वा । मध्यमा ॥ * ॥ अल्पतमा । कनिष्ठा । कनिष्ठस्य भार्या वा । कनिष्ठा ॥ वयस्यनन्त्य इत्यनेन[३] स्त्र्याख्यादित्यनेन वा ङीप्रत्यये प्राप्ते ॥ * ॥ अपहीयतेऽनयाऽस्यां वा । अपहाणा । पूर्वस्यापहाणा[४] । पूर्वापहाणा ॥ अथ समासात्प्रागेवात्र ङीः कस्मान्न भवतीति चेत् । न । वचनानर्थक्यप्रसङ्गः[५] ॥ यद्वा । पूर्वस्यासावपहानस्चेति पूर्वापहानः[६] । स्त्री चेत् पूर्वापहाणा । णत्वं निपातनादेव । टिल्लक्षणे ङीविधौ[७] प्राप्ते ॥ अपरे णत्वं नाधीयते[८] । ते हि । ओहाङ् गतावित्यस्मिन् कृतनिष्ठातकारनकारे पूर्वमपहानमस्या[९] इति वाऽनाच्छादाज्जातेरित्यादिना ङीप्राप्तिर्बाध्यत[१०] इत्याहुः ॥ * ॥ एवम् अपरापहाणा ॥ केचित्तु परापहाणेति पठन्ति ॥ परप्रहाणेत्यपि[११] ॥ * ॥ दश्यतेऽनया । दंष्ट्रा ॥ * ॥ मुग्धा । वयोलक्षणे ङीप्रत्यये[१२] प्राप्ते । यदा त्ववयोवाचकत्वं तदाऽत ए-

---

१ मध्यमाः A.; C. om. मध्ये.

२ मध्यात्ममण्टा इति° A.; मध्यान्ममष्टा इति° B.; मध्यान्ममिति मम्प्रत्यये D.; मध्यान्मन् वा इति मप्र° F.; Pâṇ. iv. 3, 8.

३ वयस्यानंत्य° C.; इत्यने स्त्र्याख्या° B.; इत्यनेन चाख्या° A.

४ अपहाना पूर्वस्या अपहाना F.; ऽस्या अपहाणा° C., om. पूर्वापहाणा.

५ ङीप् कस्मात्तन्न भवति इतिवत् न च वच° C.; °भवतीति वेदने वच°D.

६ पूर्वापहाणः F.

७ ङीष्विधौ C.; cf. P. iv. 1, 15.

८ णत्वं विधीयते corr. D.

९ पूर्वमपहाणमस्या A. (om. हि).

१० नास्थादाज्जातेरि° B.; तास्थराज्जातेरि° ङीष्प्रा° C.; ताच्छादाज्जा° D.; इति वचनास्थानाज्जाते° ङीप्रत्ययप्राप्ति° F.; cf. P. vi. 2, 170; iv. 1, 52.

११ परपहाणेत्यपि A.; अपरग्रहणेत्यपि D.

१२ ङीष्प्रत्यये C.

वाड्[1] भवति। एतत्तु पूर्वेष्वपि यथासंभवं द्रष्टव्यम्[2] ॥ * ॥ पालान्ता इति पालोऽन्ते[3] येषां ते पालान्ताः शब्दा अस्मिन्गणे द्रष्टव्याः ॥ गोपालकस्य भार्या। गोपालिका। स्याख्यादिति ङीप्प्राप्तौ[4]। या तु स्वयं प्रतिविधानेन गाः पालयति न तत्र प्राप्तिरस्ति[5] ॥ एवं पशुपालिका। द्वारपालिकेत्यादयो द्रष्टव्याः ॥ * ॥ संप्रहाणेति पूर्वापहाणावत् ॥ भोजस्तु पूर्वापहायणा। अपरापहायणा। संप्रहायणेति[6] पठति ॥ ३९ ॥

दिशा दृशा[7] क्षुधा वाचा क्रुञ्चा देवविशोष्णिहा।
विकल्पाडो[8] बुधैर्लक्ष्या जातिः शूद्रो ऽमहत्परः ॥ ४० ॥

दिशा। दिक् ॥ * ॥ दृशा। दृक् ॥ * ॥ क्षुधा। क्षुत् ॥ * ॥ वाचा। वाक् ॥ * ॥ क्रुञ्चा। क्रुङ् ॥ निपातनान्नलोपाभावो[9]ऽन्याजादिलोपाभावश्च ॥ * ॥ देवविशा। देवविट्। देवानां प्रजेत्यर्थः ॥ भोजस्त्वनयोर्विकल्पं[10] नेच्छति ॥ * ॥ उष्णिहा। उष्णिक् ॥ पाणिनिस्तु त्रयाणां विकल्पं नेच्छति। भाष्यकारस्तु हलन्तान्नाप् किंलकारान्तादित्याह[11] ॥ * ॥ शूद्रा जातिः ॥ जातिरिति किम्। शूद्रस्य भार्या। शूद्री[12] ॥ अमहत्पर इति किम। महाशूद्री[12]। आभीरजातिः ॥ ४० ॥

---

१ इत्येव अत इत्येवाड् A. B. D.; ङीष् C.

२ यथासंभवं योज्यं द्रष्टव्यं A.

३ पालोंतो D.

४ आख्यादिति॰ A.; ॰ङीप्प्राप्तौ C.

५ प्रतिविधानेनावा गाः॰ D.; तत्राप्राप्तिरस्ति B. C.; cf. Pâṇ. iv. 1, 48. v. 1.

६ पूर्वापहाणा। अपरापहायणा। संप्रहाणेति C.

७ Om. C.

८ Thus (? ॰आडो) A. B. C. E. F.; विकल्पाहो D.

९ निपातान्न॰ C.; A. om. from [निपातना] न्नलोपाभावो to the end.

१० भोजस्त्वेतयोर्वि॰ F.

११ हलंतान्नाप्र किं॰ B.; हलंतानामाप्॰ C.; D. om. from भाष्यकार॰.

१२ शूद्रा।॰ महाशूद्रा। C.

संभस्त्रापिण्डाजिनशणत्रिपूर्वं फलं नञो मूलम् ।
प्राक्शतसदेककाण्डप्रान्तात्पुष्पं परं ज्ञेयम्[१] ॥ ४१ ॥

संफला ॥ भस्त्राफला ॥ पिण्डफला ॥ अजिनफला ॥ शणफला ॥ ओषधिजातिविशेषाणां संज्ञा एताः[२] ॥ * ॥ त्रीणि फलानि समाहृतानि[३] । त्रिफला । द्विगोरिति ङीप्राप्तौ[४] ॥ * ॥ अमूला । मूलान्तलक्षणे[५] ॥ * ॥ प्राञ्चि पुष्पाणि यस्याः । प्राक्पुष्पा ॥ शतपुष्पा ॥ सत्पुष्पा ॥ एकपुष्पा ॥ काण्डपुष्पा ॥ प्रान्तपुष्पा ॥ पुष्पान्तलक्षणे[६] ॥ * ॥

आकृतिगणोऽयम् । तेन गिरा । गीः ॥ बलाका । वडवेत्यादयः सिद्धाः[७] ॥ ४१ ॥ इत्यजादिः ॥

स्वसा माता ननान्दाऽथ दुहिता तिसृयुष्मदौ ।
स्तश्चतस्रस्मदौ याता नान्ता संख्याऽपि कीर्तिता ॥ ४२ ॥

स्वस्यति सम्यगाकर्षति कुलगृहद्रव्यं सोदर्यमनांस्यात्मनि प्रणयाद्वा[८] । स्वसा । भगिनी ॥ * ॥ मान्यते पूज्यतेऽप्रमेयोपकारितया[९] सुतैरिति माता । जननी ॥ * ॥ न नन्दति[१०] । न समृध्यति । ननान्दा । भर्तृभगिनी[११] ॥ * ॥ दोग्धि । अपहरति सर्वस्वं मातृकुलादिति दुहि-

---

१ ०पुष्पा परा ज्ञेयं C.

२ औषधि० C.; एता ओषधिविशेषाणां संज्ञाः F.

३ समाहितानि C.; om. D.

४ ङीप्प्राप्तौ C.; ङीपि प्राप्ते F.; Pāṇ. iv. 1, 21.

५ Om. D.; cf. P. iv. 1, 64.

६ Om. D.; D. F. add अस्त्री येत्यादिना ङीप्राप्ते एतेषां पाठः ।

७ वलाकावत्यादयः० B.; A. om. śloka 41 and comment; see note ९ on preceding page.

८ स्वसिति सम्यग० सोदर्येस्य मातायाः प्रणयाद्वा D.; A. B. C. om. from स्वस्यति.

९ मन्यते पूज्यते । प्रेमेणोपकारितया D.

१० न नदति D.; नंदति C.

११ भ्रातृजाया । भर्तृभगिनी च । D.F.

ता। सुता ॥ * ॥ तिस्रः ॥ युष्मभ्यम् ॥ चतस्रः ॥ अस्मभ्यम् ॥ * ॥ यतत उत्सहते हितप्रतिपादनेनेति याता ॥ * ॥ पञ्च ॥ सप्त[१] ॥ * ॥

युष्मदस्मदोराडि प्राप्तेऽन्येषां तु ङीप्रत्यये प्राप्ते प्रतिषेधः[२] ॥ पाणिनिप्रभृतयस्तु युष्मदस्मदोर्गणे पाठं न प्रदर्शयन्ति[३]। अलिङ्गत्वात्। एतच्चायुक्तम्। यतो नान्ता संख्याऽप्यलिङ्गैव ततस्तेऽपि तत्प्रदर्शनं किमिति कृतवन्तः। तस्माद्च शब्दतत्त्वज्ञा एव प्रमाणम् ॥ ननु तिस्रश्चतस्र इत्यत्र त्रिचतुरोर्विभक्तिसंनिपातेन तिसृचतसावुच्येते[४] तत्र संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ङीर्न भविष्यति[५]। सत्यम् एतदेव ज्ञापयति। अनित्येयं परिभाषा। तेन या सेत्यादौ[६] विभक्तिसंनिपातलक्षणस्त्यदाद्यकार आड्विधिनिमित्तं स्यात्[७] ॥ ४२ ॥ इति स्वस्रादिः ॥

क्रोडबालागला भालभगोखाः[८] खुरसंयुताः।
शफो भुजो गुदो घोणाकरौ[९] क्रोडादिनामनि[१०] ॥ ४३ ॥

क्रोडशब्दः स्त्रीलिङ्गः। विष्ठा मञ्जिष्ठा काष्ठेत्यादिलिङ्गकारिकासामर्थ्यात्। कल्याणी क्रोडा यस्याः सा कल्याणक्रोडा गौः[११]। नना क्रोडं भुजान्तरमिति वचनादपि च[१२] ॥ रत्नमतिस्तु कल्याणः क्रोडो

१ सप्तसु। F.; हितप्रतिपादनानिति याता। एवं पंच° C.

२ प्राप्ते च निषेधः.

३ प्रवेशयंति C.

४ तिसृ चतसृ पठ्येत C.

५ °स्यनिमित्ततद्विघातस्येति टाप् अ° C.

६ परिभाषातिनयासेत्यादौ B.; यासयोरित्यादौ C.; D. corr. यातेत्यादौ.

७ °तदाद्यकारा° C.; A. om. this śloka and comment, and the beginning of śloka 43 to क्रोडबालाग; see note ७ on preceding page

८ °बालगला° F.; °गला नालभ°D.

९ °घोणे करौ B.; गुदं घो° D

१० क्रोडादिनामिति C.

११ क्रोड यस्याः° A.; सा कल्याणा क्रोडा गौः B.

१२ वचनान्नपिच A.; D. om. from नना°; Am. K. 2, 6, 2, 28.

यस्या इति विग्रहं दर्शयन् पुंलिङ्गतां ख्यापयति ॥ * ॥ कल्याणा बालाऽस्याः[१] । कल्याणबाला ॥ * ॥ शोभनो गलोऽस्याः । सुगला ॥ * ॥ भव्यो भालोऽस्याः । भव्यभाला[२] ॥ * ॥ शोभनो भगोऽस्याः सुभगा ॥ * ॥ उत्खनतीति । उखा स्फिक् । गणपाठाद् डप्रत्यय उदो दलोपः ॥ श्रीमत्युखा यस्याः । श्रीमदुखा ॥ कल्याणो गोखो यस्याः । कल्याणगोखा । इत्यपि शाकटायनः ॥ * ॥ कल्याणः खुरोऽस्याः । कल्याणखुरा ॥ * ॥ गवादेः पादाग्रं शफः । पवित्रः शफोऽस्याः । पवित्रशफा ॥ * ॥ मृणालवद्भुजावस्याः[३] । मृणालभुजा ॥ * ॥ कल्याणो गुदोऽस्याः । कल्याणगुदा[४] ॥ कल्याणं गुदमस्या इति तु शाकटायनः[५] ॥ * ॥ उन्नता घोणाऽस्याः । उन्नतघोणा ॥ * ॥ किसलयाकारौ करावस्याः । किसलयकरा[६] ॥ * ॥

आकृतिगणश्चायम् । तेन सुरङ्गाप्रभृतयो[७]ऽन्येऽपि द्रष्टव्याः ॥ ४३ ॥
इति क्रोडादिः ॥

**गौरारीहणखारकर्करचराः सारङ्गभृङ्गाढका**
**द्रोणालिन्दवराहबिम्बबदरा लोहाण्डपाण्टौ[८] पुटः ।**
**नाटः पिण्डसृपाटचेटबरटा[९] मूलाटसूपारटाः**
**शूर्पासन्दनदाः[१०] पितामहमहौ मातामहो मालतः ॥ ४४ ॥**

---

१ कल्याणो वालोऽस्याः D.
२ भव्यो नालोऽस्या । भव्यनाला । D.
३ °भुजोऽस्याः F.
४ D. om. from कल्याणा.
५ D. om. from इति.
६ किशलय° twice A. F.; किसलयाकारः करो स्याः° D.
७ शुभांगाप्रभृतयो D.; सुरंगादयो F.
८ °पाटौ F.; °पांडौ E. See note १६ next page.
९ °वेलबरटबटरा C.; °बेटवरटा F.; वेटवरटा orig. D.
१० सूर्पा° MSS.

गौरादेरित्यनेन गौर इत्यादेः शब्दगणात् स्त्रियां[१] ङीप्रत्ययो भवति ॥ गौरी वर्णयुक्ता नामधेयं वा ॥ यथा[२]। सरोजकर्णिका गौरी गौरीं प्रति मनो दधे ॥ * ॥ अरोहणी। ओषधिः काचित्। हरीकणीत्येके[३] ॥ * ॥ खारी। षोडशद्रोणपरिमाणा ॥ * ॥ कर्करी जलभाजनम् ॥ ह्रस्वः कर्कः। कर्कटी[४]। ग्रामटी। लौकिकष्टप्रत्यय इति कश्चिदाह[५] ॥ * ॥ चरी दिगम्बरप्रसिद्धा ॥ तदन्तादपि। अनुचरी। सहचरीत्यादि[६] ॥ * ॥ सारङ्गी। शबलवर्णयुक्ता[७] वाद्यविशेषो वा[८] ॥ * ॥ शृङ्गयुक्तत्वात्। शृङ्गी। प्रतिविषा कर्कटशृङ्गी च ॥ * ॥ आढकी। तुवरी[९] ॥ आढजीति[१०] केचिदाङ्गः ॥ * ॥ द्रोणी। जलक्षेपिका ॥ * ॥ अल्यते भूष्यते पुष्पप्रकरेण[११]। अलिन्दी[१२] प्रघणः ॥ अथवा[१३]। अल्यन्ते निवार्यन्ते तस्यां पतनाद् भाजनानीत्यलिन्दी। कोष्ठिका[१४] ॥ * ॥ वराही ॥ * ॥ बिम्बी। तुण्डिका ॥ बिम्बेति कश्चित्। बिम्बं वनस्पतिजातिरित्येके ॥ * ॥ बदरी वृक्षः ॥ * ॥ लोह इवाण्डमस्याः। लोहाण्डी नाम शकुनिः ॥ स्त्रीविषय एवायम् ॥ * ॥ पाण्टी[१५] पिच्छिका ॥ पाण्डोरपत्यमित्येके[१६] ॥ * ॥ पुटी[१७] ॥ * ॥ नाटयतीति नाटी ॥ नाटीसंज्ञया दे

---

१ D. F. add नित्यं.

२ गोरी वर्णो नामधेयं वा॰ D.; शेषां for यथा A.

३ ददरीकर्णीत्येके D., orig. ॰कर्णित्येके.

४ ह्रस्वः कठटी। D.

५ A. B. C. om. from ह्रस्वः कर्कः.

६ D. om. from तदन्तादपि.

७ ॰सवला। A. C.; शबला B.

८ A. B. C. om. वाद्यविशेषो वा.

९ आठकी तुवरी॰ C. D.

१० आठजीति D.; आडजीति A.

११ ॰प्रकारेण A. B. C.

१२ पुष्पप्रकरेण अलंदी B.; प्रकेरेण॰ D. (अल्यते भूष्यते। अलिन्दः Ksh. on A. K. 2, 2, 12).

१३ तथा B. C. F.

१४ केष्ठिका C.; कोष्टिका F.

१५ पाटी A. C. F.; पांठी D.

१६ Thus MSS.; ? पाण्डोरपत्यं पाण्डीत्येके, or पाण्ड in the text with E.

१७ पुटि पुठी D.

काव्ये[1]। एको भेदः प्रख्यातो नाटिकाख्यः। इतरस्त्वप्रख्यातः[2] प्रकरणिकासंज्ञः[3]। तथा च।

अनयोश्च बन्धयोगादेको[4] भेदः प्रयोक्तृभिर्ज्ञेयः।

प्रख्यातस्त्वितरो वा नाटीसंज्ञाश्रिते काव्ये ॥ * ॥

पिण्डी। मदनफलम् ॥ * ॥ सर्पति गच्छति क्षुद्रद्रव्यसंघातमिति सृपाटी। उपानत् कुप्यं क्षुद्रपुस्तकः परिमाणविशेषश्च[5] ॥ * ॥ चेटी[6] ॥ * ॥ बरटी। क्षुद्रधान्यम्[7] ॥ वटरीति कश्चित् ॥ * ॥ मूलैरटतीति मूलाटी ॥ * ॥ सूपी ॥ * ॥ आरटी ॥ * ॥ शूर्पी[8]। परिवपनं मानं च ॥ * ॥ आसन्दी। वेत्रासनम् ॥ आनन्दीति पाणिनिः ॥ * ॥ नदी ॥ * ॥ पितामही ॥ * ॥ मही। पृथ्वी नदी च[9] ॥ * ॥ मातामही ॥ * ॥ मलत्यामोदैर्वसुंधराम्। मालती जातिः ॥

गौरसारङ्गचेटपितामहमातामहानामजातित्वात्। अन्येषां[10] तु जातित्वेऽपि स्त्रीविषयत्वादप्राप्ते पाठः[11] ॥ ४४ ॥

कदरकदलसूचा मण्डलो मण्डकश्च
प्लवभषकृशभङ्गा यूषतर्कारमत्स्याः।
गवयमुकयगाहा मेधशर्कारपुचाः
शबलगडुलगूर्दाः सूदकल्माषदेवाः ॥ ४५ ॥

---

१ नाटी। नाडीसंज्ञया° B. F.; नाडी। नाडीसं° C.; °द्वे कन्ये D.

२ इतरस्त्वख्यातः D.; इतरश्च प्रख्यातः A.

३ प्रकारिका° D.; प्रकरिणिकासंज्ञा B. C.

४ Bhar. Nâṭyaś. 18, 54; also quoted by Dhanika Daśar. 3, 39. बंधुयो° A.; वधूयो° (orig. वधुयो°) ‾

५ परमाणुविशेषश्च D.

६ बेटी B. F.; बेली C.; वेटी orig. D.

७ गुडधान्यं corr. D.

८ सूर्पी A. B. C. F.

९ पृथक् वा नदी च C.

१० वेट for चेत C.; बेट F.

११ °अप्राप्तपाठः A.; D. om. from गौरसारङ्ग°.

कदरी। वृक्षविशेषः ॥ * ॥ केन वायुना दल्यते[1]। कदली। मोचा करिपताका[2] च ॥ * ॥ सूची।[3] सूचिभेद्यैस्तमोभिरित्यादिदर्शनात् सूचिशब्दोऽप्यस्ति। परमस्य पाठादिदं सिद्धम् ॥ पञ्चभिः सूचीभिः क्रीतः। पञ्चसूचः। तस्य तु पञ्चसूचिरिति स्यात्[4] ॥ * ॥ मण्डली। संहतिर्देशश्चतुरस्रता च ॥ * ॥ मण्डकी ॥ * ॥ प्लवत इति प्लवी ॥ * ॥ भषति पैशुन्येन वक्ति। भषी[5] ॥ * ॥ कृशी ॥ * ॥ भङ्गी। वृद्धवैयाकरणाभिप्रायेण दर्शितम्। विवेचकास्तु[6] भङ्गिभङ्गीशब्दौ विच्छित्तिपर्यायौ भङ्गशब्दात्त्वोषधिवृत्तेराडेव[7] स्यात् तिलमाषोमाणुभङ्गाभ्यो[8] नेति सौत्रनिर्देशादिति मन्यन्ते। उमा। भङ्गी[9] नाम काचिदोषधिरिति शाकटायनः ॥ * ॥ यूषति ज्वरं हिनस्तीति यूषी। मुद्गादिनिर्यासः ॥ यूपीति भोजः ॥ * ॥ तर्कति। दूयति। तर्कारी। जया[10] ॥ * ॥ मत्सी जलचरी ॥ मत्स्या नाम जनपदः। तदीश्वरश्च चत्रियस्तन्नामधेयः। तत्र मत्स्यानां राज्ञी मत्स्यस्यापत्यं स्त्रीति वा। पुरुद्रुन्मगधेत्यादिनाणि[11] तस्यातोऽप्राच्यभर्गादेरिति लुचि[12]। मत्सी ॥ * ॥ गो-

---

१ Om. B.

२ करपताका A. C.

३ शूची A. D.; °शूचिभे° A.; Megh. 37; D. om. from सूचिभेद्यैः to पञ्चसूचिरिति स्यात्।

४ D.F. add ननु ह्रलादेव [टिलादेव D., orig. दीदलादेव] ङी सिद्धः। किं गणपाठेन [स्वरपा° F.] अनेनैतज्ज्ञापयति। उणादयोऽव्युत्पन्नानि नामानीत्येतदस्ति [F. om. नामानि] तेन तसित्यादि [D. corr. तेन तंसदस्यादि] सिद्धं॥

५ भषकी F.

६ विवेकास्तु F.

७ भंगशब्दात्तत्वोषधि° B.; °तत्वौषधि° C.; °शब्दात्वोषधेवृत्तेराटेव D.

८ माभंगाभ्यो C.; माणभ° B.; °माषोमाभंगाणुभ्यो F.; cf. P. v. 2, 4.

९ ? उमाभङ्गी; F. alone separates उमा। भङ्गी. MS. Kâs. V., I. O. 2440 reads उमा। भङ्गा। in the *gaurâdi*.

१० तर्कारी। केलुत्वात्। जया D.; cf. Kshîr. A. K. 2, 4, 2, 46 (जयति जया। तर्कमियर्ति तर्कारी केरुहत्वात्।).

११ पुरुद्रुग्नगधे° A.; पुरुद्रुमगवेत्य° D.; पुरुषमग° C. [cf. Pâṇ. iv. 1, 168 v (पूरु°); 170].

१२ °आदिनाश्चत् अस्यातो प्राच्यां भ° लुकि C.; °प्राच्याभर्गा° B.; प्रोस्यभर्गा° श्रची D. [cf. P. iv. 1, 178].

रिवायो गमनमस्येति पृषोदरादित्वात्[1] सिद्धौ। गवयी। गोप्रतिनिधिर्मृगः[2] ॥ * ॥ मुकं वैवर्ण्यं यातीति मुकयी। मृगजातिः। गर्दभ्यामश्वतराज्जातेत्येके[3] ॥ * ॥ गाहत इति गाही ॥ * ॥ मेधृ संगमे वेत्यस्याचि[4]। मेधी ॥ * ॥ शर्कारी ॥ * ॥ पुत्री। सूतोग्रराजमेरुभ्यो[5] दुहितुः पुत्रादेशेति वक्तव्यमुशन्ति। तन्न। समासेऽप्यनेनैव सिद्धम्[6] ॥ * ॥ शवति याति वर्णान्। शवली। शवलवर्णयुक्ता ॥ * ॥ गडुली ॥ * ॥ गूर्दी ॥ * ॥ सूदत इति सूदी काचित् ॥ सूर्द[7] इत्यपि शाकटायनः ॥ * ॥ कलयति वर्णान्। कल्माषी। कलेर्माषमासाविति वचनाद् मूर्धन्यदन्त्यौ ॥ * ॥ देवी। कृताभिषेका[8] ॥

मत्स्यगवयमुकयानां जातित्वेऽपि योपान्त्यत्वात्। पुत्रशवलकल्माषाणामजातित्वात्। इतरेषां तु जातित्वेऽपि स्त्रीविषयत्वादप्राप्ते पाठः[9] ॥ ४५ ॥

**उभयहयमनुष्याः कुम्भदासौ पिशङ्गः[10]**
**कुवलहरिणयूथाः शूषमेथौ गुडूचः[11]।**
**अमरपिठरसूर्माः पिप्पली वैजयन्ती**
**विकलमठकरीरीकेतकास्थानचोराः[12] ॥ ४६ ॥**

उभयी। स्थितिः ॥ पाणिनीयास्त्वयच्प्रत्ययविधानेन टित्त्वाद् ङीप्-

१ पृथोदरादित्वात् A.; गवय is not given in the *gaṇa* पृषोदरादि sl. 144-9.

२ ॰गौपति इतिर्मृगः। A.

३ गर्दभ्यामराज्जाते॰ B.

४ चेत्य॰ F.; वेत्यस्येति C. In the *gaṇa* पचादि sl. 455 the root is given as मिधि.

५ ?॰राजमेतेभ्यो A. B. C.; सूतोग्राराजमेतेभ्यो F.; cf. P. vi. 3, 70, Vârtt. 10 (? राजन्नेतेभ्यो).

६ D. om. from सूतोग्र॰.

७ शूर्द D.; भूर्द C.

८ B. adds महिषी.

९ ॰अप्राप्तपाठः A.; D. om. from मत्स्यगवय॰.

१० पिसंगः A. E. and orig. D.

११ ॰पूथाः॰ D. E.; ॰यूषोः सूषमेथौ गुडुवः। C.; ॰यूथा यूषमेथौ॰ A.; ॰यूथा ऋषमेथौ गडूचः F.; सूषमेथौ गुरूचः B.

१२ ॰करारी॰ C.; चौराः F.

प्रत्ययमाहुः[1] ॥ * ॥ हयी । अश्वा ॥ * ॥ मनुष्यी[2] । शाकटायनस्तु मनोरपत्यमिति मनोर्जातौ षुक् चेति यप्रत्यये[3] मत्स्यतद्धितहलो य इत्यनेन यलोपे मनुषीत्याह ॥ * ॥ कुम्भी । रसाधारत्वात् कुमुदिका । मृदादिपात्रवाची तु[4] कुम्भशब्दः कुण्डादौ द्रष्टव्यः ॥ * ॥ दासते प्रयच्छति स्वामिने वचनकाल[5] इति दासी । चेटी ॥ दासयन्ति प्रयच्छन्ति[6] वेतनं तस्या नद्युत्तारणहेतोरिति[7] दासी । प्लविका ॥ अथवा । दासते प्रयच्छत्यारोग्यमिति दासी । शैलेयद्रव्यम् । सकारस्तालव्यो दन्त्यो वा । दासः श चेत्युणादिवचनात्[8] ॥ * ॥ पिशङ्गी[9] । पिङ्गवर्णयुक्ता । यथा ।

बिभ्राणमानीलरुचं पिशङ्गीर्जटास्तडित्वन्तमिवाम्बुवाहम्[10] ॥ * ॥

कुवली । चुद्रबदरी ॥ * ॥ हरिणी । शुक्लवर्णयुक्ता ॥ * ॥ यूषी[11] । मागधी ॥ * ॥ शूषी[12] ॥ * ॥ मेथति हिनस्ति वातमिति मेथी ॥ * ॥ गुडति रक्षति दोषेभ्यः । गुडूची[13] । वत्सादनी ॥ * ॥ अमति गच्छत्यष्टगुणमैश्वर्यमिति । अमरी ॥ * ॥ पिठति हिनस्ति तण्डुलानिति पिठरी । भाण्डम्[14] ॥ * ॥ सूर्मी । लोहप्रतिमा ॥ यत्स्मृतिः[15] । सूर्मीं ज्वल-

---

१ After उभ अयच् is substituted (P. v. 2, 44) for तयप् which takes ङीप् P. iv. 1, 15 (? टिड्डादित्वात्).

२ ? मनुषी C.

३ षुत्तेति° A. B.; मनोर्जातावयतौ षुक् चेति यत्प्रत्यये C.; युक्तेति यप्रत्ययमस्य तद्धित° D.; cf. Pâṇ. iv. 1, 161.

४ शिल्पक्षतास्तु D.; cf. ṣl. 55.

५ वचनं काल B. F.

६ दासंति° B. C. F.; दाशयति प्रयच्छति D.

७ Kshîr. A. K. 2, 3, 4, 15 has दशति दाश्नोति वा मत्स्यान् दाशः ।

८ दासेः श° A.; दाशः श्चेत्यु° D.

९ पिसंगी A.; पेशतीति पिशंगी D.; पेशत इति पिशंगी F.

१० Kirât. 3, 1.

११ यूषी C.; पूषी D.

१२ Thus A. D.; श्यूषी B.; सूषी C. रूषी F.

१३ गुडूवी B.; गुडुवी C.; गडुची F.

१४ मांडं D.; भीदं A.

१५ श्मूर्मी° श्मूर्मी A.; लोहिताप्रतिमा । यथा । D.; cf. M. 11, 103.

न्तोमालिङ्गन्मृत्यवे गुरुतल्पगः ॥ चुल्लिस्य[1] ॥ * ॥ पिपर्ति । पिप्पली । वैदेही ॥ * ॥ वैजयन्ती । पताका[2] ॥ * ॥ विकली ॥ विकलनिष्कलपुष्कलशब्देभ्यो[3] वनस्पतिवृत्तिभ्य एव ङीविधिः संभाव्यते रूढितः । अन्यत्र विगता कला यस्याः । विकला । निष्कला । पुष्कला धनर्द्धिरित्येवं स्यात्[4] ॥ वामने च । कृती स्मराज्ञा यदि पुष्कला स्याम्[5] ॥ छित्तपस्तु[6] ।

न पुष्कली[7] ते स्वर्लोके जनता किंतु सामरी ।
विकली शल्कमात्रेण महती निष्कलीष्यते[8] ॥

इति सामान्येनाह ॥ कथं विकला कालविशेषवाचिनो नित्यस्त्रीविषयत्वादाबेव भवतीति भोजोऽपि ॥ * ॥ मठन्ति निवसन्त्यस्यामिति मठी ॥ * ॥ करीरी[9] । करिदन्तमूलम् ॥ * ॥ केतकी ॥ * ॥ आस्थानी । संसत्[10] ॥ * ॥ चोरयतीति चोरी । तथा च ।

नृचित्तचोर्यः[11] सुन्दर्यो दुरुद्वहकटीतटाः[12] ।
नदीगाहीलवीचर्य इव यद्भूप्रभाम्भसि[13] ॥

हयमनुष्ययोर्जातित्वेऽपि योपान्त्यत्वात्[14] । उभयदासपिशङ्गहरिणामरचोराणामजातित्वात्[15] । इतरेषां तु जातित्वेऽपि स्त्रीविषयत्वादप्राप्ते पाठः[16] ॥ ४६ ॥

---

१ दुल्लिस्य B.; व्युत्पत्तिस्य C.

२ उपकारिका C.

३ A. om. पुष्कल; cf. p. 87, l. 4.

४ °इति स्यात् A.; पुष्कला इत्येवं स्यात् C.; धनरिद्धिरित्येवं° D.; धनवृद्धिरित्ये° F.

५ Vâm. Kâvyâl. 4, 1, 2; D. om. from वामने.

६ Thus A. B. D.; छिनत्ति यस्तु C.; वित्तपस्तु । F. Probably *Chhinnama* (? *Chhinnapa*).

७ पुष्कला F.

८ शल्कमात्रेण° A.; शाल्कमात्रेण° B. C.; निष्कलायत B. C. F.

९ करारी C.

१० शंशत् A.

११ °चौर्यः A. D.; नृचिह्नचोर्यः B.; ह्यविह्नचोर्यः C.

१२ सौदर्यो° D.; °तटा । A.

१३ पद्भूप्रभाभसि D.

१४ °योपांतत्वात् A.

१५ °पिसंगः । राहरिणामंचोराणामजातित्वात् A.

१६ D. om. from हयमनुष्ययोः.

द्रुणाविटसरसायःस्थूणसौधर्ममाचाः[1]
पटललवलपादा वल्लकालम्बिनाचाः[2]।
अतसपृथिवभृङ्गाः कन्दलारट्टिदोटाः[3]
शमतमकुटपेटा[4] मञ्जरो निष्कलश्च[5] ॥ ४७ ॥

द्रुणी। कच्छपस्त्रिय एवोच्यन्ते न कच्छपाः पुमांसः ॥ * ॥ विटी। महत्तरः ॥ * ॥ सरसी। कर्णाटदेशे[6] प्रसिद्धिरेषा हलन्तत्वादप्राप्ते ॥ * ॥ अयोमयी स्थूणा यस्य सोऽयःस्थूणः। तस्यापत्यं शिवाद्यणि। आयःस्थूणी। ङ्यस्य प्राप्तौ ॥ अयोमयी स्थूणा यस्याः सा। अयःस्थूणी[7]। कुटी। तस्यान्यार्थे वृत्तिः स्वार्थे त्वयःस्थूणेति[7] स्यादिति कश्चिदाह ॥ आयस्थेणीति[8] केचित् ॥ * ॥ शोभनो धर्मो यस्य स सुधर्मा। तस्यापत्यं स्त्री सौधर्मी। ऋष्यणि ङ्यस्य[9] प्राप्तौ ॥ * ॥ माची[10]। अम्बष्ठा ॥ * ॥ पटली। संघातः ॥ * ॥ लवली। लताविशेषः ॥ * ॥ पादी[11] ॥ * ॥ वल्लकी ॥ * ॥ अलम्बस्यापत्यं स्त्री। आलम्बी[12]। अत इञि ङ्यस्य प्राप्तौ[13] ॥ * ॥ नाची ॥ * ॥ अतति गच्छति नीलैः कुसुमैः स्नेहवद्बीजानीति[14]। अतसी। उमा ॥ * ॥ पृथिवी ॥ पाणिनिप्रभृतयस्तु ङीप्रत्ययान्तमाहुः ॥ * ॥ भृङ्गी।

---

१ द्रुणविट° A. B. C. [D. om. this śl. with comment, cf. p. ८०, note १६]; °सरसायः स्थौण° B. C.; सरसोऽयःस्थूण° E.; °मावाः C.

२ °लवलवालांपादावलकालंविनाचाः A.; वल्लकालंबनाचाः F.

३ Thus A. B. F.; कंदलारट्टदोटाः C.; कंदलारदद्दौढाः E. [आरट śl. 44].

४ °कुठपेटा A.; °कुटपेता E.

५ निष्कुलस्य MSS.

६ Cf. Mbh. on P. i. 1. 19: दक्षिणापथे हि महान्ति सरांसि सरस्य उच्यन्ते.

७ अयःस्थूणा यस्य प्राप्तौ अयोमयी स्थूणा कुटी तस्यान्यार्थे त्वयः। स्थूणेति C.

८ Cf. Prâk. थेणो or थूणो (S. स्तेन) Hem. I, 147; आयस्थैणीति A.; आयःस्थूणीति C.

९ ङास्य B.; यस्य A.

१० मावी B.; मावा C.

११ पाटी A. F.

१२ F. adds आलद्दी। कालद्दी (or आलद्दी। कालद्दी?) इति शाकटायनः।

१३ अत प्राप्तौ A.

१४ नावा ॥ अनति तिलैः °स्नेहवद्बाजाह्नाति C.

भृङ्गराजः । लवङ्गो वा ॥*॥ कन्दली । कन्दविशेषः[1] ॥*॥ अरट्टस्यापत्यमिञि स्त्री । आरट्टी[2] । ञ्फस्य[3] प्राप्तौ ॥*॥ दोटी[4] ॥*॥ शमयति दोषान् । शमी । सक्तुफला सिम्बा वा[5] ॥*॥ ताम्यन्त्यस्यामिति तमी । रात्रिः ॥

विभूषणं के कुचमण्डलानां — हाराः
कीदृक्शुभा चन्द्रमसः कुतो भाः । — महादेवरता तमातः ।
सीता कथं रौति दशास्यनीता — हा राम हा देवर तात मातः ॥
हारामहादेवरतातमातः[6] ॥

इति लक्ष्यात् तमापि ॥*॥ कुटी ॥*॥ पेटी[7] वृन्दं परिच्छदश्च ॥*॥ मञ्जरी[8] । पुष्पयष्टिः[9] ॥*॥ निष्कली ॥ विकलनिष्कलशब्दौ[10] जनपदवाचिनौ । स्त्रीविषयाविति शाकटायनः ॥ उक्तेभ्योऽन्यत्र जातित्वेऽपि स्त्रीविषयत्वादप्राप्ते ॥ ४७ ॥

**कृश्यो[11] बन्धकधातकावनडुही शष्कण्डकोशातका-**
**ऽनड्वाहीबृसवेतसाः[12] पटनटक्रोष्ट्र्योकणाः[13] काकणाः ।**
**आलक्ष्यालजभिक्षुकोर्दसुषवा[14] औद्गाहमानिर्गरो**
**गायत्र्यामलकौ हरीतकशचावालब्धिमांसौ तरः[15] ॥ ४८ ॥**

---

१ °विशेषस्य C.; कंदली विशेषः A.

२ अवट्टस्या° A.; आरटी B.; ? आरट्टस्य° आरट्टी cf. ṣl. 83 and 231.

३ ञ्यस्य MSS.; cf. ṣl. 239, 231.

४ दोढी A. [cf. दोडी, डोडी].

५ शक्तुफला° A.; शिंबा वा A. F.; C. om. सिम्बा वा.

६ Prof. Aufrecht calls my attention to Râyam. on Am. K. i. 1, 3, 4, where he quotes: टापा तमेत्यपि । तथा च विदग्धमुखमण्डनम् । हारामहादेवरतातमात इति°. ? Not in the Vidagdh.

७ पेठी C.

८ मंजंति सीदंति तस्यां भूतपरभृतचित्तानीति मंजरी F.

९ पुष्पं यष्टिः A.; पुष्पवृष्टिः F.

१० निष्कुली । विकलनिष्कुल° C.

११ कृष्यो A.; वाप्यो E.

१२ वृश° A. B. F.; दृश° C.

१३ क्रोष्ट्रोकणः A.; °क्रोष्टोक्षणा C.; °क्रोष्ट्रौकणाः B.; °क्रौष्ट्योकणाः F.; पटनक्रोष्टणाकाः E.

१४ °सुषुवा B. C. F.; °उद्गाह° C.

१५ हरीतकसचा° A. B. E. F.; °सवावालंबिमांसौ° C.; D. om. this ṣl. and the comment on the first half-verse.

ऋश्यी[1] ॥ * ॥ बध्नाति मनो यूनामिति बन्धकी ॥ * ॥ धातकी । ताम्रपुष्पी ॥ * ॥ अनडुही । ङीप्रत्ययान्तपाठो गणेऽस्त्रीत्वप्रतिषेधार्थः[2] । तेन । अनडुही । वृन्दारिका ॥ वामनादयस्त्वनडुहीभार्य इत्युदाहरन्ति[3] । तन्न युक्तम् । जातिप्राण्यङ्ग्योऽमान्यादाविति[4] नियमितत्वात् पुंवद्भावस्य निषेधः सिद्ध एव ॥ अथवा । पञ्चभिरनडुहीभिः क्रीतः । पञ्चानडुहिरित्यादौ ष्यः लुचीत्यनेन[5] लुक्प्राप्ता निषिध्यते । एवं सर्वत्र ॥ * ॥ ग्रष्कण्डी । हैमवतः कश्चिद्वृक्षः[6] ॥ * ॥ कोशातकी । पटोली ॥ * ॥ अनड्वाही ॥ * ॥ वृसी । व्रतिनामासनम्[7] ॥ * ॥ वेतसी । वञ्जुलः । अम्लवेतसश्च ॥ * ॥ पटी । प्रच्छादनवस्त्रम् ॥ * ॥ नटी ॥ * ॥ क्रोष्ट्री । क्रोष्ट्रीशब्दस्य[8] पाठः सुखार्थः । क्रोष्टोः स्त्र्यनौ क्रोष्टृजिति[9] । ऋदन्तन्वनुगिदञ्च इत्यनेन[10] ङीप्रत्ययः सिद्धः ॥ * ॥ ओकणी[11] । पर्यन्तवनस्य संज्ञा । उकणीत्यन्यः[12] ॥ * ॥ काकणी । पणचतुर्थभागः ॥ * ॥ अलजस्यापत्यमिञि स्त्री । आलजी । ङ्यो प्राप्ते[13] ॥ * ॥ आलजी ॥ * ॥ भिक्षुकी ॥ * ॥

---

१ ऋष्यी A.

२ गणे स्त्रीत्वाप्रतिषेधार्थं° F.

३ भार्या इत्युदा° C.

४ ? °प्राण्यंगड्योमान्यादाविति F.; प्राण्यंगयोर्मा° A.; °प्राण्यंगयोर्मा° B.; °प्राण्यंगादिति C.; cf. P. vi. 3, 40-1.

५ ? ष्युङः A. B.; यङः लुकीत्यनेन लुक्प्राप्तिर्निषिध्यते C.; ङीङः लुचीत्यनेन लुक्प्राप्त्या नि° F.; on the *luk* cf. P. i. 2, 49. 50; iv. 1, 88.

६ कश्चिद्वत्सः B. C.

७ वृशी°A.F.; वृशी बतीनासना। C.

८ क्रोष्टाशब्दस्य C.; क्रोष्टीशब्दस्य F.

९ ? क्रोष्टोस्त्र्यनौ क्रोष्ट्रजिति B.; क्रोष्ट्रोस्त्र्यनौ° A.; क्रोष्टोस्त्र्यतौ क्रोष्टजिति C.; क्रोष्टोस्त्र्यानौ क्रोष्ट्रजिति F.; cf. P. vii. 1, 95-7 [? स्त्र्यनोः, where अन् (? अनु) = sarvanâmasthâna].

१० ऋदंतत्वेनुगिदं इत्य° A.; ऋदंतत्वेत्तुगिदंच ऋदंतक्केत्तुगिदंच इत्यनेन ङीप्प्र° C.; ऋदंतत्वेन ऋन्नेभ्य इत्यनेन° F. [ऋदन्त-न्-वन्-उगित्-अञ्च? cf. P. iv. 1, 5-7].

११ उकणी A. B. C.

१२ Thus A. B. C. F.; पर्यंतं वनस्य° C.; [Pâṇ. iv. 1, 41 ed. उणक; Kâṣ. V. ed. उकण, MS. I. O. 2440 उणक].

१३ ङे प्राप्ते A.; ष्याञि प्राप्ते D.; ङ्यपाप्तौ C.; cf. P. iv. 1, 78.

ऊर्द्दी। विमानम् ॥ * ॥ सुषुवति प्रेरयति दोषानिति सुषवी[1]। कृष्ण-जीरकम् ॥ सुष्ठु सवतीति सुसवीति नन्दी प्राह[2] ॥ * ॥ उद्गाहमानस्यापत्यमिञ्[3] स्त्री। औद्गाहमानी। ङ्यै प्राप्ते[4] ॥ * ॥ गरो। देशविभागस्य संज्ञा ॥ * ॥ गायतस्त्रायतेऽवश्यम्। गायत्री। छन्दोविशेषः खदिरो वा ॥ * ॥ आमलति गुणान्[5]। आमलकी। वयःस्था ॥ * ॥ हरति रोगान्। हरीतकी। पथ्या ॥ * ॥ शचति। शची[6]। इन्द्राणी ॥ * ॥ अलब्धस्यापत्यमिञ्[3] स्त्री। आलब्धी[7]। ङ्यै प्राप्ते ॥ कालब्धीत्यपि शाकटायनः[8] ॥ * ॥ मांसी। जटा ॥ * ॥ तरी। नौः ॥

ऋष्यस्य[9] जातित्वेऽपि योपान्त्यत्वात्। बन्धकनटभिक्षुकाणामजातित्वात्। अनडुहो हलन्तत्वात्। अन्येषां च स्त्रीविषयत्वादप्राप्ते[10] ॥ ४८ ॥

**कुसुम्भसुन्दरौ पूयः शष्कुलो देहलस्तटः[11]।**
**तापसोऽथ सिनीवालः पूलसल्लकगौतमाः[12] ॥ ४९ ॥**

कुसुम्भी। ओषधिविशेषः ॥ * ॥

अस्मिन् रतिश्रमजितस्य[13] सरोजवाताः
स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः।

अत्र दिव्यस्त्रीविषयत्वाज्जातिलक्षणो ङीन्न भवति। गुणवचनात्तु[14] सुन्दरशब्दात् शोणादिपाठात् पाक्षिके ङीप्रत्यये कृते सुन्दरीणां

1 ? Thus D.; सुषुवी A. B. C. F.

2 सुष्ठु सववीति नंदी° A. [सुष्ठु सूयते सुषवी Kshîr. A. K. 2, 4, 5, 20].

3 °पत्यमिति B. C. F.

4 ङ्यप्राप्तौ B.; ष्यञि प्राप्ते D.

5 गुणाऽगुणान् F.

6 सचति। सची MSS.; D. corr. श°.

7 आलयी A.; अलंबस्या° आलंबी C. °पत्यमालब्धिः स्त्री° D.

8 ? Thus F.; B. C. om. ङ्यै प्राप्ते कालब्धी; A. D. om. from ङ्यै प्राप्ते°.

9 ऋष्यस्य A. F.

10 तु for च A.; D. om. from ऋश्यस्य.

11 पूयशष्कुलौ° C.; देहलस्तथा। A. D. E.

12 शिनीवालः° A. B. C. D. E.; °गोतमाः D. E.

13 Kirât. 5, 28, रतिश्रमनुदस्य eds.

14 गुणवचनान्न A.; गुणशब्दात् D.

सुन्दरा गिर इति भवति[१] ॥ भोजस्तु सामान्येनैव ङीप्रत्ययं दर्शयति ॥ * ॥ पूयी । दुर्गन्धा ॥ * ॥ शक्यन्ते मृष्यन्ति तस्यां परस्परसंबन्धं निस्तुषतिला[२] इति शष्कुली । भक्ष्यविशेषः ॥ अथवा । शक्नोति पर्याप्नोति पुद्गलविकारं शब्दं ग्रहीतुमिति शष्कुली । कर्णशष्कुली ॥ * ॥ दिह्यते । देहली । द्वाराग्रस्थला ॥ * ॥ तटी[३] ॥ * ॥ तपः शीलमस्याः ।[४] छत्रादेर्ण इति णे सति । तापसी ॥ * ॥ सिनी सिता[५] वाला कला यस्यां सा सिनीवाली[६] । दृष्टेन्दुरमावास्या ॥ * ॥ पूली । तृणसंघातः ॥ * ॥ असकृल्लक्यत[७] आस्वाद्यते गजैरिति सल्लकी । गजप्रिया[८] ॥ * ॥ गौतमी[९] । अस्य पाठः सुखार्थः । मतान्तरे तु स्वरः प्रयोजनम्[१०] ॥ * ॥ तटतापसयोरजातित्वात् । अन्येषां तु स्त्रीविषयत्वादप्राप्ते ॥ ४९ ॥

कटेटभौलिङ्ग्यधिकारदेहा
गवादनोद्वाहनतेजनाः स्युः ।
आपच्चिको भौलिकिभौरिकी च
काकादनः प्रत्यवरोहिणी च[११] ॥ ५० ॥

कटस्य ईटः । कटेटः । कटेटी[१२] ॥ * ॥ भुवि लिङ्गं कीर्तिरस्येति भूलिङ्ग ऋषिः । तस्यापत्यमिति शाल्वांसेत्यादिना[१३] । इञि भौलि-

---

१ सुंदरगिर° C.; सुंदरीणां सुंदराणामिति° D.; cf. śl. 53 comm.

२ तस्या परस्परसंवधस्तुष° C.; तस्याः परस्परसंवंधं स्तुषतिला B.; तस्यां परस्परसंवंधिनस्तुषतिला F.

३ Or देहली । द्वाराग्रस्थला तटी ॥ acc. to the other version.

४ तपतेऽस्यां C.; cf. śl. 386.

५ शिनी° A. B. C. D.; °शिता A. D.

६ शिनीवाली A. B. C. D.; cf. Aufr. Hal. *s.v.*

७ °लच्यते A. C.; शक्नत् शब्दते? D.

८ गजप्रिया लता F.

९ गोतमी D.

१० स्वरप्रयोजनं A.; D. om. from तटतापस° to end.

११ आपिच्चको °प्रत्यवरोहणी च F.

१२ °इटः कटेटी । C.

१३ शाल्वांशे° A.; साल्वांसे° B.; साल्वांशे° F.; संघासे° C.; cf. Pâṇ. iv. 1, 173.

ङ्गिः । स्त्री भौलिङ्गी । ष्यञि प्राप्ते[1] ॥ * ॥ अधिकः कारो[2]ऽस्या इति । अधिकारी । अधिक्रियत इति बहुलाधिकाराद् घञि स्त्रियां यथा शोभेत्येके[3] ॥ * ॥ देही ॥ * ॥ गवादनी । इन्द्रवारुणी[4] ॥ * ॥ उद्राहनी ॥ * ॥ तेजयत्यग्निमिति तेजनी । कङ्कुणी ॥ * ॥ आपच्चिको नाम जनपदः[5] । समाननामा क्षत्रियः । तस्यापत्यं स्त्रीति राष्ट्राख्याद्राज्ञोऽञेवेत्यनेनाञि तस्य च लुचि[6] । आपच्चिकी[7] ॥ * ॥ भूलिकस्यापत्यमिञि[8] स्त्री । भौलिकी ॥ * ॥ भूरिकस्यापत्यमिञि[9] स्त्री । भौरिकी । गोत्रादिपठितादित्यनेन[10] ष्यस्य प्राप्तौ ॥ * ॥ काकादनी । गुञ्जा ॥ * ॥ प्रत्यवरोहिणी ॥ टन्प्रत्ययान्तस्यास्यान्येषां च टिद्वारेणैव ङीप्रत्यये[11] सिद्धे गणे पाठः पुंवद्भावप्रतिषेधार्थः । मतान्तरे तु स्वरः प्रयोजनम् ॥ ५० ॥

बर्बरदाडिमचमसास्तरुणस्तलुनाग्रहायणीबन्दाः ।
पण्डरपुष्कलवणाः पिङ्गलमुसलौ[12] विभीतको नन्दः ॥५१॥

बर्बरी ॥ * ॥ दाडिमी । वृक्षजातिः[13] ॥ * ॥ चमसी । सोमपा-

१ ष्यञि प्राप्ते D. (P. iv. 1, 78); ङी प्राप्ते A.

२ करो B. C.

३ बहुलाधिकाराद् घञि अधिकारी । स्त्रियां यथा शोभा इत्येके F.; शोभतेत्येके A.; °कारात्ष्यञि° corr. D.; ? cf. Vâmana Kâvy. 5, 2, 43.

४ इंद्रवारणी F.; इंद्रवारिणी A. B. C. and orig. D.

५ अपस्विको° A.; आपिच्चिको जनपदसमाननामा° F.

६ ऽञचेत्य° लुकि C.; लुकि D.

७ आपिच्चिकी F.

८ °इति B. F.; om. C.

९ °इञिः A.; om. C.

१० गोत्रादपठिताद्° A.; cf. P. iv. 1, 79.

११ टनप्रत्ययांतस्य । तस्यां च टि° A.; टन्प्रत्ययास्यान्त्येषां च° C. F.; ङीप्प्रत्यये C.; cf. Pâṇ. iv. 1, 15.

१२ पंडुरपुष्कल° B. F.; पंडुरपुन्नल° C.; °पुष्करलवणाः° D.; °पिंगलमुशलौ A. C. F.; बिभीतको B. C. F.

१३ वृक्षभेदः F.

त्रम् ॥ * ॥ तरुणी । सुरा ॥ * ॥ तलुनी । सुरा[1] ॥ * ॥ अग्रं हायनमस्याः[2] । आग्रहायणी पौर्णमासी । अत एव निपातनाद्दीर्घत्वं णत्वं च ॥ * ॥ बन्दी । हठहृता[3] स्त्री ॥ * ॥ पण्डते याति मनोऽस्मिन् । पण्डरः । तद्योगात् पण्डरी[4] । पटी ॥ * ॥ पुष्कली । वनस्पतिः[5] ॥ * ॥ लवणी । ओषधिः[6] । समुद्रपार्श्वस्रोतो यत्र वहनानि स्थाप्यन्त इत्येके[7] ॥ लवणा यवागूरिति गुणशब्दोऽजातौ द्रष्टव्यः[8] ॥ * ॥ पिङ्गली । पिशङ्गी[9] ॥ * ॥ मुसली । ओषधिः[10] ॥ * ॥ विभीतकी[11] ॥ * ॥ नन्दति । वृद्धिं यातीति नन्दी । प्रज्ञाद्यणि । नान्दी ॥ * ॥

पण्डरपिङ्गलनन्दानामजातित्वात्[12] । अन्येषां तु स्त्रीविषयत्वादप्राप्ते ॥ आकृतिगणोऽयम् । तेन देवदाली पटोलीत्यादयो[13] द्रष्टव्याः ॥ ५१ ॥ इति गौरादिः ॥

शोणोऽथ भरुजस्तूणकमलौ विकटाहनी ।
चान्द्रभागा भवेन्नद्यां क्त्यर्थशून्यादिकारतः ॥ ५२ ॥

शोणादयः शब्दाः शोणादिरित्यनेन[14] ङीप्रत्ययभाजो वा भव-

---

१ तलुनी च ॥ F.; तलुनी ॥ C.

२ अग्रहायनमस्याः A.; अग्रे हा° F.

३ हठगृहीता F.

४ ? पंडुरः° पंडुरी B. C. F.; C. F. om. पटी.

५ पुन्नली° B. C.; पुष्कली धनवृद्धिः । D.; see p. 80, l. 2.

६ लवली° B. C. (not in text); औषधिः C.; उषरिः D.

७ समुद्रपार्श्वश्रोतो° A. B. C.; समुद्रपार्श्वे स्तः । यत्र वाहनानि° F. D. om. from समुद्र°; A. inserts these words before लवणी.

८ °शब्दो जादिर्द्रष्टव्यः D.; °इति लवणशब्दोऽजादौ द्रष्टव्यः F.

९ पिप्पली । पिसंगी A.; °पिशंगवर्णयुक्ता D.

१० मुशली° A. B. D. F.; मुषली C.

११ बिभीतकी B. C. F.

१२ पंडुर° B. C. F.; D. om. from पण्डर° to अप्राप्ते.

१३ देवदाली पटोली बेदी [वेदी F.; बेटी C.] बाकुची धातकी पांटसीत्यादयो B. C. F.

१४ शोणादयः शब्दा विशंकटपर्यंताः [विसंकट° F.] शोणादेरित्य° D. F.

न्ति ॥ शोणी । शोणा । रक्तवर्णयुक्ता ॥ कश्चित्संज्ञायामपि शोणी शोणा वडवेति[1] ॥ * ॥ भरुजी । भरुजा । स्नेहभ्रष्टाः किल तण्डुलाः[2] ॥ * ॥ तूणी । तूणा । तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति[3] । वीणा धिषणा तूणा[4] स्थूणेत्यादि ॥ * ॥ कमली । कमला नाम काचित् ॥ * ॥ विकटी । विकटा । रचना ॥ * ॥ दीर्घाह्नी । दीर्घाह्ना शरत्[5] ॥ अहन्शब्दः केवलः स्त्रियां न संभवति नित्यं नपुंसकलिङ्गत्वात्[6] । अतस्तदन्त उदाहृतः ॥ अह्नी । अह्ना । इति कश्चित् केवलस्य स्त्रियामुदाहरति ॥ * ॥ चान्द्रभागी वनराजिः । चान्द्रभागा[7] नदी । टिड्ढाणञित्यादिना[8] ङी प्राप्तः स शोणादिपाठान्नद्यां निषिध्यान्यत्र विधीयत इति विकल्पार्थः ॥ चन्द्रभागा नद्यामिति केचिदाहुः[9] । यदृच्छया चन्द्रभागी[10] चन्द्रभागा काचित् । नदी तु चन्द्रभागेति[11] मतद्वयं वामनाचार्यस्य[12] ॥ पाणिनिशकटाङ्गजौ तु चन्द्रभाग इव भागो यस्याश्चन्द्रभागो[13] चन्द्रभागा नाम नदी । अन्यच्च चन्द्रभागा[14] नाम देवता स्त्री वा काचिदित्याहतुः ॥ केचित्तु चन्द्रभागो नाम पर्वतः । ततः प्रभवतीत्यणि । चान्द्रभागी चान्द्रभागा[15] नदी । चान्द्रभाग्यन्येत्युदाह-

---

१ चोघी । चोघा ॥ C.; cf. Pâṇ. iv. 1, 43.

२ स्नेहभ्रष्टा किल तंडुला । A.; स्नेहपृष्टाः किल तंडुलां C.; स्नेहभ्रष्टाः° F.

३ Raghuv. 9, 56.

४ धिषणाक्षूर्णा D

५ ? रीर्घाह्नी । दीर्घाह्ना । दीर्घाहा शरत् B. C.; दीर्घाही । दीर्घाहा । दीर्घाहा वर्षा । D.; सरत् A.; शरत् । प्रावृट् F.

६ नपुंसकत्वात् B. C. F.

७ चंद्रभागा F.

८ P. iv. 1, 15; B. C. F. om. ङी.

९ Thus Kâś. V. iv. 1, 45.

१० Om. C.

११ नदी चंद्रभगेति D.

१२ °द्वयं ॥ वामनावोर्यैभ्य पा° C.

१३ Om. B.; F. om. from चन्द्रभागा काचित्.

१४ चंद्रभागो C.

१५ ततः भवतीत्यणि चंद्रभागी चांद्रभागा A.

रन्ति[1] ॥ भोजस्तु चान्द्रभागादनद्यामिति[2] सूत्रं पपाठ ॥ * ॥ त्वर्थशून्यादिकारतः। त्यकणाविति क्तिप्रत्ययो भावाकर्त्रोर्विहितस्तदन्तस्तदर्थप्रत्ययान्तो वा यो न भवति[3]। ततोऽनेन ङी विकल्पितः। अशनिः। अशनी ॥ शक्तिः। शक्ती। शस्त्रम्[4] ॥ आत्मंभरिः। आत्मंभरी ॥ त्वर्थशून्यादिति किम्। शक्तिः सामर्थ्यम् ॥ कश्चिदस्मादपि ङीं मन्यते। अहरणिः। कां त्वं कारिमकार्षीः[5] ॥ ५२ ॥

चण्डः पद्धतिकल्याणपुराणकृपणध्वजाः[6]।
विशालारालमूषा हन्बहूदारविशङ्कटाः[7] ॥ ५३ ॥

चण्डी। चण्डा। परुषा।

सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ[8] ॥

चण्डारालशब्दयोर्गौरादिलक्षणे ङीप्रत्यये सिद्धे बह्वादौ[9] पाठः संज्ञायां विकल्पार्थ इति शाकटायनः ॥ * ॥ पादयोर्हतिः[10]। पद्धतिः। पद्धती। त्वर्थः पाठः ॥ * ॥ कल्याणी। कल्याणा कथा ॥ * ॥ पुराणी। पुराणा काया ॥ * ॥ कृपणी। कृपणा नाम काचित् ॥ * ॥

---

१ चांद्रभाग्या इत्युदा० C.

२ ? चांद्रभागादनद्यामिति A.; चांद्रभागी बुनद्यामिति C.; चंद्रभागाद्० F. The *Kâtantrapariśishṭa* remarks: चान्द्रभागादनद्याम्। अनद्यामर्थे चान्द्रभागादीर्भवति। चन्द्रभागभवा चान्द्रभागी बुतिः ॥ अनद्यामिति किम्। चन्द्रभागनामगिरिः। तत्र भवतीत्यणि चान्द्रभागा नदी ॥

३ भावाकर्त्रो वि० B.; भावाकर्त्तोर्वि० A.; त्यकरणाविति० भावात्कर्त्ता हितस्त० C.; भावकर्त्रोर्विहित० F.; ०प्रत्ययांते० B. C.; D. corr. ०तदांस्तदर्थप्रत्ययांता ज्याटो न भवंति.

४ शक्ता। शस्त्र आ० C.; शिक्षत्कारिः। शक्षत्करी। वत्सा। D.; शस्त्रं। शक्षत्कारिः। शक्षत्कारी F.

५ ङीप् मन्यते० C.; मन्यते। सामर्थ्यात्। अहरणिः। का त्वं० A.; त्वर्थ० किं। क्षतिः। हतिः। अहरणिः। कां त्वं० D. F.; अहरतिः।० B. C.

६ चंडपद्धति० B. C.

७ ०विसंकटाः F.

८ Raghuv. 12, 5.

९ शोणादौ F.; *Śâkaṭâyana* apparently begins this *gaṇa* with बह्व.

१० पादयोहतः A.

ध्वजी । ध्वजा । पताका ॥ * ॥ विशाली । विशाला कीर्तिः ॥ * ॥ अराली । अराला । भूमिः[1] ॥ * ॥ मूषी । मूषा । सुवर्णाद्यावर्तनस्थानं[2] प्राणिविशेषो वा ॥ * ॥ वृत्रघ्नी । वृत्रहा ॥ * ॥ बह्वी । बहुर्नाम काचित् । गुणवचनादुतो वाऽखरोरित्यनेन[3] गुणवचनाद्विकल्पः सिद्ध एव ॥ * ॥ उदारी । उदारा सूक्तिः[4] ॥ * ॥ विशङ्कटी । विशङ्कटा[5] बुद्धिः ॥ * ॥ आकृतिगणोऽयम् । तेन सुन्दरकन्दरादयो[6] द्रष्टव्याः ॥ ५३ ॥ इति शोणादिः ॥

**कुण्डः पात्रेऽकृत्रिमार्थे स्थलं च**
**भाजः पक्वे कामुकः स्याद्रिरंसौ[7] ।**
**नागः स्थूले कृष्णवर्णे च कालो**
**धान्याधारे[8] संमतो गोणशब्दः ॥ ५४ ॥**

कुण्डादयः शब्दाः पात्रादावर्थे पात्राद्ये कुण्डादेरित्यनेन[9] ङीप्रत्ययान्ता भवन्ति । पात्रे कुण्डी । कुण्डाऽन्या ॥ दाहक्रियैव तत्संबन्धादन्यद्वा तथोच्यते । यस्तु द्रव्यवचनः कुण्डशब्दः[10] स नित्यं नपुंसक एव वर्तत इति न प्रत्युदाहर्तुं युक्तः[11] ॥ * ॥ अकृत्रिमेऽर्थे स्थली । स्थलाऽन्या ॥ पुरुषप्रयत्ननिष्पाद्या वेदिका इत्यन्ये ॥ * ॥ पक्वेऽर्थे भाजी । भिक्षायामित्यन्यः । भाजाऽन्या । वक्रयष्टिः[12] ॥ * ॥ मैथुनेच्छौ नायि-

---

1 अराला रात्रिः भूमिः B.; भूतिः F.
2 सुवर्णप्रवर्त्तनस्थानं D.
3 वो खरोरित्य° A.; वो खरेरित्यनेन° B.; इत्यनेन विकल्पः° F.; काचित् । गुणवचनात्तु पूर्वेण विकल्पः° D.; cf. P. iv. 1, 44.
4 शक्तिः F.
5 विसंकटी । विसंकटा D. F.
6 सुंदरादयो F.
7 ऽकृत्रिमेर्थे स्थलस्य° E.; °पक्वकामुकः° A.
8 धान्यागारे F.
9 कुंडादिरित्यनेन B. C. F.; F. om. पात्राद्ये.
10 यस्तु व्यवचनः° A.; °कुंडशब्दे D.
11 न प्रत्युदाहरणं । तस्य युक्तं । F.
12 चक्रयष्टिः B. D.

कायां[1] कामुकी। कामुकाऽन्या। धनाद्यभिलाषुका॥ * ॥ स्थूलेऽर्थे नागी। नागाऽन्या। दीर्घादिगुणयुक्ता संज्ञा वा काचित्[2]। चयविशेष इत्यन्ये॥ हस्तिसर्पजातिवाचिनस्तु ङी भवत्येव। प्रत्युदाहरणं गुणवचनस्य[3]॥ * ॥ कृष्णवर्णेऽर्थे काली। छाया बलान्याशु ततान काली॥ कालाऽन्या। धमनी॥ रत्नमतिस्तु कालशब्दस्य संज्ञावाचिनो ङी। न तु कृष्णवर्णवाचकस्य कृष्णत्वाव्यभिचारादित्याह॥ * ॥ धान्याधारे[4] गोणी। यस्याश्छाटीति[5] प्रसिद्धिः। यथा।

गोणीं जनेन स्म निधातुमुद्धृतामनुचणं नोच्चतरः प्रतीच्छति[6]।

गोणाऽन्या। तृणविशेषः॥ ५४॥

**कुशी लोहविकारे स्याद् घटः कुम्भश्च मृन्मये।**
**कबरः केशविन्यासे[7] नीलश्चौषधिदेहिनोः॥ ५५॥**

अयोविकारे कुशी। कृष्युपकरणम्। न सामान्येनायोविकारः॥ कुशाऽन्या। अलोहविकाराकृतिरेव काष्ठादिमयी॥ भग्नस्याचस्य प्रतिष्टम्भ इत्यन्ये। अपरे तु वल्लेति ब्रुवते[8]॥ * ॥ मृन्मये पात्रे। घटी॥ घटाऽन्या। गजघटा। करिघटा॥ * ॥ कुम्भी। तैलादिस्थानं स्तम्भाधारो वा[9]। कुम्भाऽन्या॥ * ॥ केशरचनायां कबरी। वेणी। कबरा[10]

---

१ नायकायां F.; मैथुनेच्छायां C.

२ संस्थवा काचित्° A.; संज्ञेति केचित्। कपिविशेष° D.

३ हस्तिभार्प्यजाति° प्रत्युदाहरणं तु गुण° A.; हस्तिसर्पवाचिनस्तु° F.; D. om. from हस्ति°.

४ धान्यागारे° F.

५ ? धान्याधारे गौणी यस्याश्छहेति A.; °यस्याः छट्टीति C.; यस्यास्त्वट्टीति D.; यस्याः छाटीति F.; cf. Mahr. छाटी (S. शाटी) a piece of cloth.

६ Śiśup. 12, 10.

७ केशविन्याशे A.

८ ? वल्लेविक्रवतो D. (? cf. Mahrâṭhî वल्ली "a pole for impelling a boat in shallow water"); वलेति° C.; वलोवि° B.; वरेलेति° F. (cf. वरल, वरोल).

९ तिलादिस्थानं° B.; for the second meaning cf. कुम्भक.

१० कावरा D.; F. om. वेणी.

ऽन्या। वर्णविशेषोपेता। व्याकीर्णमाल्यकबरां कबरीं तरुण्याः[१] ॥ * ॥ ओषधौ प्राणिनि च। नीली। ओषधिः। नीली वडवा ॥ अन्यत्र। नीला शाटी ॥ ५५ ॥

सूचस्तीक्ष्णे[२] भाजने पात्रपारौ
स्थालः कुम्भ्यां रेवती रोहिणीभे।
ज्ञेयस्तालो[३] लोहमय्यां विपञ्चः
स्याद्वीणायां लोकवृन्दे च गोष्ठः ॥ ५६ ॥

तीक्ष्णाग्रा सूची। सूचाऽन्या ॥ * ॥ भाजने पात्री। काष्ठपात्री ॥ अन्यत्र[४]। पात्रमियं ब्राह्मणी। पात्रं तपस्विसंहतिः ॥ * ॥ पारी। गोदोहनी। यथा। प्रीत्या विमुक्ताँल्लिहतीः स्तनंधयान्

निगृह्य पारीमुभयेन जानुनोः।
वर्धिष्णुधाराध्वनि रोहिणीः पयश्
चिरं निदध्यौ दुहतः स गोदुहः[५] ॥

पाराऽन्या ॥ * ॥ पिठरिकायां स्थाली। स्थालाऽन्या ॥ * ॥ नक्षत्रे रेवती रोहिणी। रेवता रोहिणाऽन्या ॥ ननु कथं रेवती कन्या। रोहिणी कन्येति न ह्याभ्यां नक्षत्रं वाच्यम्। सत्यम्। रै विद्यते[६] यस्याः। निपातनादेत्वे कृते[७]। रेवती ॥ रोहितस्य रोहिणी ॥ रेवतरोहिणशब्दौ च नक्षत्रवाचिनौ प्रातिपदिकौ। पञ्च रोहिण्यो रेवत्यो वा देवता यस्य। पञ्चरोहिणः पञ्चरेवत इत्यादिप्रयोगदर्शनाद्विशेषो[८] द्रष्टव्यः ॥ * ॥ लोहविकारे ताली लोकप्रसिद्धा। तालाऽन्या ॥ * ॥ वीणायां वि-

---

१ Śiś. 5, 19; om. D.

२ सूचस्तीक्ष्णो E.

३ ज्ञेयास्तालो C.

४ Om. B. C.

५ Śiś. 12, 40 (प्रीत्या नियुक्तान् eds.).

६ रैर्विद्यते B. D. F.; A. om. from यस्याः to फालः खण्डेऽथो in śloka 58.

७ C. om. from रेवती रोहिणी। रेवता°.

८ B. C. om. इत्यादि.

पञ्ची। विपञ्चाऽन्या ॥ * ॥ लोकवृन्दे गोष्ठी। समानजातीयो जनसमुदायः[१]। यथा। गोष्ठेषु गोष्ठीकृतमण्डलासनान्[२] ॥ गोष्ठाऽन्या। भूयंत्र[३] गावस्तिष्ठन्ति ॥ ५६ ॥

श्लेषद्रव्ये खलो लक्ष्यो विदारशठमोषधौ[४]।
दूतः संदेशहारिण्यां कुट्टिन्यां शम्भलो बुधैः ॥ ५७ ॥

श्लेषद्रव्ये खली। खलाऽन्या ॥ * ॥ विदारी। शठी। ओषधिः ॥ विदारा। शठाऽन्या ॥ * ॥ दूती संदेशहारिका। दूताऽन्या। यथा।

कुसुमपुष्पशयनाँल्लतागृहानेत्य दूतिकृतमार्गदर्शनः[५]।

इत्यादिलक्ष्यदर्शनादिकारान्तोऽप्यनुमीयते ॥ * ॥ शम्भं श्रेयोयुक्तं लाति गृह्णातीति वा। शम्भली। कुट्टिनी। वामनस्तु दूत्यां शम्भलीत्याह[६]। न तदस्मन्मनोरञ्जकं लक्ष्येष्वदर्शनात् ॥ शम्भलाऽन्या। देशविभक्तिः ॥

कश्चित्[७] शम्भलविदारशब्दौ गौरादावाह। कश्चिन्नायिकायां[८] सुन्दरी। अन्यत्र सुन्दराऽस्य बुद्धिरित्युवाच। तन्न समीचीनं गौरादावस्य दर्शनात्[९]। अयं चास्माभिर्लक्ष्यानुसारेण तत्रैव व्याख्यातः ॥ ५७ ॥

---

१ समानजातीयजन° D.; समानजातीये जनसमुदाये F.

२ Śiśup. 12, 38; °आसनात् MSS.; D. has the whole stanza with several miscorrections.

३ C. om. भूः; F. om. from भूः to खलाऽन्या in the next śloka; for A. see p. ८२, note ६.

४ विदारसठ° D. E.; A. om. this śloka and comment.

५ Raghuv. 19, 23.

६ दूत्या° C.; °शम्भलीत्याह B.

७ रत्नमतिस्तु corr. D.

८ कश्चित् प्रायिकायां C.; °नायकायां F.; om. सुन्दरी.

९ °अस्यादर्शनात् D.; see śl. 49.

[मातङ्गानां स्नेहपानप्रकारे[1]
पीनः शालो वल्लभाया भगिन्याम्।
फालः खण्डे ऽथो खनित्रे कशश्च[2]
ज्ञेयः श्रोण्यां बुद्धिमद्भिः कटश्च[3] ॥ ५८ ॥]

पीनी हस्तिनां स्नेहपानप्रकारः[4]। पीना ऽन्या[5] ॥ * ॥ शाली कलत्रस्वसा। शाला ऽन्या ॥ * ॥ फाली खण्डम्। यथा।

कर्पूरस्फारफालीकलितकिसलयस्वस्तरोद्दामलीला[6]।

फाला ऽन्या ॥ * ॥ खनित्रे कशी। कशा[7] ऽन्या। अश्वताडनहेतुश्चर्ममयी यष्टिः ॥ * ॥ श्रोण्यां कटी। कटा ऽन्या। व्यवस्था स्थित्युपाश्रितिर्वा[8] ॥ * ॥

आकृतिगणो ऽयम्। तेन। एषणी। नाराची वैद्यशलाका वा[9]। एषणा ऽन्या। इत्यादयो ऽर्थविभागेन ज्ञेयाः ॥ ५८ ॥ इति कुण्डादिपाठादी ॥

---

१ मातंगात् स्नेह° C.

२ थो रचवतित्रकुशश्च B.; खंडेथो° F.; कसिश्च [corr. कसश्च] C.; for A. see note ६, page ९२.

३ E. om. this sloka; D. om. text and comment and reads instead: आकृतिगणावेती तेन खनित्रे कशी। कशाऽन्या। अश्वताडन° यष्टिः। खंडे काली। यथा कर्पूरस्फाक्रालीवलितकिशलय अस्तरोद्दामलाधत्वाः क्रीयंते वरयुवतिजनैर्यत्र धारागृहेषु। कालाऽन्या। श्रोण्यां कटी। कटाऽन्या। व्यवस्था स्थित्याधारो वा। करणे एषणी। एषणाऽन्या। कलत्रभगिन्यां शाली। शालाऽन्या। इत्येते शब्दा अन्ये पि अर्थविभागाश्रया द्रष्टव्याः॥

४ पाना हस्तिनां° B.; °प्रकारे F.

५ B. C. om. पीनाऽन्या.

६ किशलय A. F.; अस्तरो° MSS.

७ कसी। कसा B. C.; see note २.

८ व्यवस्था स्थित्युश्रितिर्वा A.; यवस्थास्थितुपाश्रिति वा B.; °उपश्रिति वा C.; °स्थितिरुपाश्रितिर्वा F.; D. see note ३. [*i.e.* 'seat for resting,' as Prof. Roth suggests, cf. Mahr. कटा or कट्टा 'a raised place for resting burdens, a seat.']

९ वैद्यः शलाका वा B.; विद्यः। शलाक वा C.

लोहितभ्रुवकतालिगुकक्षा[1]
बभ्रुवल्गुमनुसूनुतलुक्षाः[2]।
तण्डमण्डुकपिकन्थकवृक्षा[3]
मन्तुतन्तुतनुमङ्क्षुतरुक्षाः[4] ॥ ५९ ॥

यञ्लोहितादिशकलान्तयञ्कौरव्यासुरमाण्डूकाड्डायन्[5] इत्यनेन स्त्रियां नित्यं ङी भवति डायनादेशश्च ॥ लौहित्यायनी ॥ * ॥ औव्यायणी ॥ * ॥ कात्यायनी[6] ॥ * ॥ आलिगव्यायनी[7] ॥ * ॥ काच्यायणी ॥ * ॥ बाभ्रव्यायणी। कौशिकी[8] तु बाभ्रवी बाभ्रव्यायणी॥ गर्गादौ[9] तु बभ्रुः कौशिक इति पाठादिति नः संमतम्[10]। वामनस्तु बभ्रुपाठं मन्यते[11]। कपिशब्दस्य च ॥ * ॥ वाल्गव्यायनी[12]॥ * ॥ मानव्यायनी॥ * ॥ सौनव्यायनी ॥ * ॥ तालुच्यायणी[13] ॥ * ॥ ताण्ड्यायनी ॥ * ॥ माण्डव्यायनी ॥ * ॥ काप्यायनी । आङ्गिरसी तु कापी काप्यायनी[14] ॥ * ॥

---

१ कटालिगु° A.; °काचा B. C.; °गुकच्या F.

२ बभ्रुववाग्लामनु° B.; वभ्रुवल्गु° D. E.; °सूनुतनुचा A.

३ तंडुमंडु° A. C.; तंडमंड° D. मंडुमंडु B.; °कर्थकवृचा C.; °तरचा. F.

४ मरु for तनु D. E.; मंकुरुचा: A.; मंचुतरचा: B. C.

५ ? यञ्लोहि° यञ्कौरव्यासुरिमंडूकानुदेयन्न A.; (य oblit.) लोहितादिशकान्तपञ्चौरव्यासुरिमांडूकाडायन्न D.; °ड्डायम् B.; °यञ्चौरव्यासुरिमांडूकाड्डीयम् C.; °यत्कौरव्या° F.; ? the double यञ्; cf. P. iv. 1, 16-19.

६ लोहित्यायनी औव्यायनी कालायनी A.; लौहत्यायनी औयायणी कात्ययनी B.

७ आलिंगव्यायनी D.; लैगयायना B.; लौगव्यायनी C.; F. adds लैगव्यायनी.

८ कौशका B.; कौसिकी D.

९ °बाभ्रयायणी कौ गर्गादौ° B.

१० °इति न संमतं। B. C. F.; cf. sl. 249.

११ वामनस्तु पाठं मन्यते B. C.

१२ वा for च B. C.; वालायायनी B.; वालाव्यायनी C.; वाल्गव्यायनी D.

१३ तालुचायणी B. C.; तालुत्र्यायणी A.

१४ कापायनी B. C. F.

काथ्यक्यायनी[1] ॥ * ॥ वार्च्चायणी[2] ॥ * ॥ मान्तव्यायनी ॥ * ॥ तान्तव्यायनी[3] ॥ * ॥ तानव्यायनी[4] ॥ * ॥ माक्षव्यायणी ॥ * ॥ तारुच्यायणी[5] ॥ ५८ ॥

गुहलुः संशितः शङ्कुमनायीलिगुसम्बवः[6]।
वतण्डः शकलो मङ्खुलतुच्चक्षजिगीषवः[7] ॥ ६० ॥

गौहलव्यायनी[8] ॥ * ॥ सांशित्यायनी[9] ॥ * ॥ शाङ्कव्यायनी ॥ * ॥ मानाय्यायनी ॥ * ॥ लैगव्यायनी[10] ॥ * ॥ साम्बव्यायनी[11] ॥ * ॥ अनाङ्गिरसी तु वातण्ड्यायनी[12]। शिवादिपाठाद् वातण्डी। आङ्गिरसी तु वतण्डी[13]। अस्त्रीयपाककर्णपर्णपुष्पफलमूलवालान्ताज्जातेरित्यनेन[14] ङीप्रत्ययः ॥ * ॥ शाकल्यायनी ॥ * ॥ माङ्खव्यायनी[15] ॥ * ॥ लातव्यायनी[16] ॥ * ॥ आर्च्चायणी। रौच्चायणीत्यन्यः[17] ॥ * ॥ जैगीषव्यायणी ॥ ६० ॥ इति लोहितादिः ॥

---

१ कांथ्यायनी A. D.; काथक्यायनी C.
२ वार्षायणी D.; याच्यायिणी B.
३ Om. A.; तांतयायनी B.
४ तानयायनी B.; om. F.; °माव्यायणी D.
५ तारच्यायणी B. C. F.
६ शंकुमनावी E. and corr. D.; संकुमनायी लिगुसंबंधः। A.; °संववाः B. C.; संवचः D.; संचचः E.; लिंगुसंबवः F.
७ वतडः सकलो° B.; मन्थुलतु E.; मंखुलंतु° F.; °लनु° D.; चक्षजिगीषवः A.
८ गोहलव्यायनी A. D.
९ शांशित्यायनी A.; सांसित्यायनी B. C.
१० शांकव्यायनी लैमव्यायनी B.; लैंगव्यायनी F.; मानायव्यायणी° C.; मानाव्यायनी° D.
११ सांवव्यायनी A. B. C. D.; Kâs. V. MS. I. O. 2440 has शंवु (not शङ्कु).
१२ अनांगिरसा° B.; वाडंड्यायनी C.; for शिवादि° see sl. 212.
१३ आंगिरसान्तु° C.; वतुंडी B.
१४ (अ obliterated) स्त्रीपाक° D.; cf. P. iv. 1, 63-4.
१५ मांख्ययायनी B.; मांखव्यायनी A.; D. corr. मान्यव्यायनी
१६ लातवयाव्यनी B.; D. corr. लानव्यायनी; लांतव्यायनी F.
१७ Thus D. F.; आच्यायनी। त्यन्यः। A.; आचायणी रौचायणी रौचायणीत्यनः B.; आर्चायणी। रौचायणी। रौचायणीत्यतः C.

यच्छन्दो मेनका चात्र दण्डकापिप्पकेष्टकाः।
रेवका धारका चैव द्वारकादेवकैरकाः[1] ॥ ६१ ॥

यदादय एडकान्ताः स्यातोऽयदाम्[2] इत्यनेनाकारस्येत्वं यत्प्राप्तं यदादिपर्युदासात् तद्भाजो न भवन्ति ॥ यका ॥ * ॥ मनिपचिमचां नाम्नीत्यनेनाकारस्यैत्वे[3]। मेनका। अप्सराः ॥ * ॥ दण्डका। अरण्यम् ॥

वर्षाणि तिष्ठतु चतुर्दश दण्डकायाम्[4] ॥

प्राप्तानि दुःखान्यपि दण्डकेषु संचिन्त्यमानानि सुखीबभूवुः ॥

इति रघुकाव्ये चिन्त्यम्[5] ॥ * ॥ पिप्पका ॥ * ॥ इष्यते काम्यते प्रासादादिषु या सा। इष्टका मृद्विकारः ॥ * ॥ रेवा नदी। ततः संज्ञायां के। कुत्सादौ वा। रेवका ॥ * ॥ धारयतीति धारका ॥ * ॥ द्वारप्रकारा। द्वारका नगरी[6] ॥ यथा धनंजयस्य।

चलत्पताकामुद्बद्धतोरणां तावविचताम्।
द्वारकां गोपुरद्वारैः किष्किन्धनगरीमिव[7] ॥

देवका। अप्सराः ॥ * ॥ एरका। उदकतृणजातिः ॥ ६१ ॥

क्षिपका धुवका चरका तत्सेवकया करकाचटके स्तः[8]।
अवकालहके अलका स्यात् कन्यकया ध्रुवकैडकया च[9] ॥ ६२ ॥

क्षिपतीति क्षिपका। आयुधम् ॥ अथवा। अज्ञाता क्षिपा। क्षिप-

---

१ रेवका द्वारका चैव हारकादेव° A.; °हारकादेव° E.

२ ? एडकांतास्त्यातोयद्दाम् A. D.; °तास्त्यातोय° F.; परकांतास्त्यातोय° B.; एरकास्याख्यातोय° C.; cf. P. vii. 3, 44-46.

३ मतिपचिपचां° B. F.; मेतीति पविपची° C.; मनिपधिमचां नाम्नीत्य° D.; cf. Kâṣ. V. vi. 4, 120; Uṇ. S. 5, 37.

४ Anarghar. (Calc. Ṣ. 1782, p. 116) 4, 66.

५ Raghuv. 14, 25.

६ द्वारका नदी नगरी B. C.

७ द्वारकांगपुर° A. B. C., original D.; किष्किंधानग° F.; किष्विंधन° B. D.

८ क्षिपकाध्रुवकाचटकाः सेव° E.

९ अवकालहले °ध्रुवकै° E.

का ॥ * ॥ धू विधूनने । धुवतीति धुवका । आवपनविशेषः ॥ अथवा । अज्ञाता धुवा । धुवका ॥ * ॥ चरका ॥ * ॥ सका ॥ * ॥ सेवा[1] भक्तिः । कुत्सिता वा सेवा । सेवका ॥ * ॥ करका । वर्षोपलः ।

नाक्कुर्वीथास्तुमुलकरकावृष्टिहासावकीर्णान्[2] ।

केचित्तु करकशब्दं पुंस्याहुः । कमण्डलौ च करक[3] इति ॥ * ॥ चटका ॥ * ॥ अवतीति । अवका । शैवलम्[4] ॥ * ॥ लहका ॥ * ॥ अलका । नगरी ॥ * ॥ कन्यका ।

सवर्णकन्यका रूपयौवनारम्भशालिनी[5] ॥

भुवतीति भुवका । आवपनविशेषः[6] ॥ अथवा । कुत्सिता भुवा । भुवका ॥ * ॥ एडका । अविजातिः ॥

वेगवती छन्दः । त्रिसकारपरं गुरुकं चेद्वेगवतीति च भादथ भौ गौ ॥

आकृतिगणोऽयम् । तेन यथादर्शनमन्येऽपि भवन्तीति ॥ ६२ ॥

इति यदादिः ॥

इति

श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितस्वीयगणरत्नमहोदधिग्रन्थवृत्तौ प्रथमो नामाध्यायः[7] समाप्तः ॥

---

१ सवका सेवा F.; सैवा A.

२ Meghad. 54.

३ कमंडलू च° A. D.; कमंडलू क° C.; कमंडलु: क° F.; कमंडलूक क° B.; Am. K. 3, 4, 1, 6.

४ सैवलं A. D.; शैवलं F.

५ Vâm. Kâvyâl. 3, 2, 3; सवर्णा कन्यका° ed. Capp.

६ आवपनपनविशेषः B.; D. corr. आवर्तनवि°.

७ गोविंदाचार्यशिष्य° D. E.; °प्रथमोध्यायः E. F.

## अथ द्वितीयोऽध्यायः ॥

अर्धर्चध्वजकुञ्जशीधुमधवो वर्चस्ककूर्चाढकाः[1]
पङ्कानीकपिनाकनिष्ककपटाष्टङ्कः किरीटः कुटः ।
कूटः कङ्कटकर्वटाण्डशकटा वल्मीकसानू नटः ।
खण्डोद्योगविडङ्गभृङ्गसरकाः पुङ्खव्रजौ मोदकः[2] ॥ ६३ ॥

एतेऽर्धर्चादयः शब्दाः पुंसि नपुंसके साधवो भवन्ति ॥ अर्धमासौ । ऋक् च । अर्धर्चः । अर्धर्चम् ॥ * ॥ ध्वजं पताका ॥ * ॥ कुञ्जो वनषण्डो हस्तिदन्तस्य[3] । यथा ।

अथोष्णभासेव सुमेरुकुञ्जान् विहीयमानानुदयाय तेन[4] ॥

निकुञ्जोऽपि ॥ * ॥ शेते मृत्यत्यनेनास्मिन् वा हिताहितप्रतिपत्तिरिति शीधुर्मद्यम्[5] ।

मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलं च[6] ॥

मधुर्द्राक्षादिमद्यम्[7] ।

बिभ्रती मधुरतामधिपात्रं रागिभिर्युगपदेव पपाते[8] ।

आननैर्मधुरसौ[9] विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥

वर्चस्कं शकृत्[10] ॥ * ॥ कूर्चो दीर्घश्मश्रु[11] ॥ * ॥ आढकं मानविशेषः ॥ * ॥ पङ्कं कर्दमः[12] । यथा ।

---

१ ०ध्वजकुज० E.; ०सीधु० A.; ०कूर्चाटका: D. E.

२ विडंगरसका: B. C. (in C. भृंग is supplied).

३ वनषडो० B.; वनखंडो० A. D.; ०हस्तिदंतिस्य A.; वनखंडे० F.

४ Kirât. 3, 32.

५ शेते सुष्यतेनास्मिन्स्त हि० D.; ०पत्तिसीधु० A

६ ०सीधुं० A.; Ragh. 16, 52.

७ मधु द्रा० B. C.

८ मधुरतां मधुपात्रं D.; Śiś. 10, 8 (०अतिमात्रं eds.).

९ मधुरसो eds. for मधुर् असौ.

१० वर्चस्कः० F.; संहत् A

११ ०श्मश्रुः B. C. F.

१२ पंकः F.; A. om. पङ्कं कर्दमः

पुरोगैः कलुषास्तस्य सहप्रस्थायिभिः कृशाः ।
पश्चात्प्रयायिभिः पङ्काश्चक्रिरे मार्गनिम्नगाः[१] ॥

अनीकं सैन्यं संग्रामश्च ॥ * ॥ पिनाको रुद्रधनुः । त्रिशूलं च ॥ * ॥ निष्क आभरणम् । कण्ठे निष्क इवार्पितः[२] ॥ * ॥ कपटं व्याजः ॥ * ॥ टङ्कः पाषाणच्छेदनः[३] ॥ * ॥ किरीटो मुकुटम् ॥ * ॥ कुटं घटः । हलाङ्गविशेषश्च[४] ॥ * ॥ कूटम् । संघातो माया निश्चलो मृगादिवधार्थं छलं[५] कैतवम् अयोघनः शैलशृङ्गं सीराङ्गं च[६] ॥ * ॥ कङ्कटं संनाहः ॥ * ॥ कर्बटः । नद्यद्रिवेष्टितं खेटं कर्बटं शैलवेष्टितम् ॥ दुर्गस्तु कर्पटम् अल्पोपकरणस्थानमित्याह[७] ॥ * ॥ अण्डं पक्ष्यादिप्रसवः ॥ * ॥ शकटो गन्त्री ॥ * ॥ वल्मीको वामलूरः ॥ * ॥ सानु प्रस्थम् । सानूनि गन्धः सुरभीकरोति[८] ॥ * ॥ नटो नर्तनविशेषः[९] । आनट इति शाकटायनः ॥ * ॥ खण्ड इक्षुविकारविशेषः शकलं च[१०] । यथा ।

ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः[११] ॥

खण्डनक्रियावाचिनस्तु वाच्यलिङ्गतैव । खण्डी घटी । खण्डो घटः[१२] । खण्डं कुलम् ॥ * ॥ उद्योग उत्साहः[१३] ॥ * ॥ विडङ्ग औषधम् ॥ * ॥ शृङ्गो विषाणम् ॥ * ॥ सरकं मद्यम् ॥ * ॥ पुङ्खः शराङ्गम्[१४] ॥ * ॥ व्रजं पुञ्जः ॥ * ॥ मोदकं भक्ष्यविशेषः ॥ ६३ ॥

---

१ पंकं चक्रिरे॰ A. B. C. D.; A. B. C. om. the first half-śloka; Raghuv. 4, 31 additional śl.; cf. Aufr. Cat. p. 112, a.

२ Kum. S. 2, 49, V. L. cf. Oxf. Cat. p. 115, b.

३ पाषाणभेदकः F.

४ हलांकविशेषस्य A.

५ कालं B. C.; मृगादिवत्सर्वं छलं D.

६ शीरांगं च A. D.

७ कर्पटः अल्पो॰ F.; अल्पोपकरण- / मित्याह A.

८ Kum. S. 1, 9.

९ नर्त्तकविशेषः F.

१० शक्तिलं च A.

११ Anarghar. 7, 82 (प्रतिपूरणाय ed. Calc. S. 1782, p. 215); D. om. fr. यथा.

१२ खंडी घ-खंडो॰ B.; खंडी घखंडो C.

१३ उद्योगमुत्साहः A. D.

१४ शरस्य । A. B. C. (!); सरस्य । D.; शरस्यानुजं F.

शाको मस्तककल्कशूकनिकटाः शुल्कं निदाघो नखो
बाणद्रोणसुवर्णभूषणरणाः कार्षापणस्तोरणः।
काण्डस्ताण्डवदण्डमण्डपिटकाः सक्तुस्तडागव्रणौ[1]
पेटो मञ्चकवारबाणचरणा वस्त्राम्बरैरावताः॥ ६४॥

शाकं भक्ष्यविशेषः[2]॥*॥ मस्तको मूर्धा॥*॥ कल्कम्। औषधानां निर्यासो दम्भः पातकं च[3]॥*॥ शूकं धान्यादेः सूची। वृश्चिकादेः कण्टकोऽपि॥*॥ निकटः समीपम्॥*॥ शुल्को मण्डपिकायामायस्थानं स्त्रीधनं च[4]॥*॥ निदाघं ग्रीष्मः॥*॥ नखं पाणिजः। यथा रुद्रस्य त्रैलोक्यसुन्दर्यां हस्तिवर्णने[5]। ज्योत्स्नाजनितदन्तवेदनाशङ्कया प्रसादनार्थं पादलग्नानि चन्द्रमण्डलानीवोज्ज्वलानि नखानि धारयन्तम्[6]॥*॥ बाणं शरः॥*॥ द्रोणं चतुराढकोऽष्टाढको वा देशभेदात्[7]॥*॥ सुवर्णं कनकम्॥ दुर्गस्तु स्त्रीनरलिङ्ग इत्याह[8]। सवर्ण इति शाकटायनः[9]॥*॥ भूषणम् अलंकारः॥*॥ रणन्ति दुन्दुभयोऽत्रेति रणम्। यथा।[10] रणे रभसनिर्भिन्नद्विपपाटविकासिनि॥ रभसेन निर्भिन्ना द्विपपाटविकानामसयो यत्र तदित्यर्थः॥*॥ कार्षापणं हिरण्यप्रमाणम्। अण्प्रत्ययं विनापि पुंनपुंसकवाचीत्यर्थः॥*॥ तोरणं वन्दनमाला॥*॥ काण्डः शरो नालं वर्गो वारि कुत्सितं च॥*॥ ताण्डवम्। उद्धतनृत्तं[11] तृणविशेषस्य॥*॥ दण्डं यष्टिश्चतुर्थोपायो दमो मन्थाश्च॥*॥ मण्डं सर्वरसानां द्रवद्रव्याणां मुख्यम्॥*॥ पिटकं

---

१ शक्तु° A.; सक्तुस्तटाकवृणौ पोटो मंच° E.

२ भक्ष्यादिविशेषः D.; भत्त्वविशेषः A.

३ दंशः° D.; दंभपातकं च B. C.

४ स्त्रीपणं च D.

५ Om. B. C. F. [? हस्तवर्णने].

६ °इवोज्ज्वलनखानि° A.; D. om. from यथा रुद्रस्य.

७ B. C. om. ऽष्टाढको cf. Weber Jyot. p. 81; D. om. from द्रोणं.

८ दुर्गस्तु नरलिंग° F.

९ सुवर्णः कनकं। दुर्गः स्त्री° इत्यपि शाकटायनः A.; om. D. [? स्वर्ण इति° or सुवर्ण masc. only].

१० D. om. from भूषणं; Śiś. 19, 56.

११ उद्धतनृत्तं B.; उद्धतं नृत्तं F.

गण्डोलकः[१] । विस्फोटवाची तु त्रिलिङ्गः[२] ॥ * ॥ सक्तु यवादिविकारः[३] ॥ * ॥ तडागः सरः ॥ * ॥ व्रणं चतम् ।

विपक्षचित्तोन्मथना नखव्रणास्तिरोहिता विभ्रममण्डनेन ये[४] ॥

समासे तु पुंलिङ्गो यथा नाडीव्रणः ॥ * ॥ पेटं[५] संहतिः परिच्छदस्य ॥ * ॥ मञ्चकं शयनविशेषः ॥ * ॥ वारम् आच्छादकं बाणमस्य णन्यादेः[६] प्राग्वदित्यनेन णत्वे[७] । वारबाणं कञ्चुकः ॥ बाणे वारणस्य व्यत्ययो[८] मयूरव्यंसकादित्वादिति श्रीभोजः ॥ * ॥ चरणं पादः । यथा ।

स्खलति चरणं भूमौ न्यस्तं न चार्द्रतरा मही
स्फुरति च तथा वामो बाहुस्तनुश्च[९] विकम्पते ।
शकुनिरहितश्चायं तारं विरौति हि नैकशः
कथयति महाघोरं वृत्तं न चात्र विचारणा[१०] ॥ * ॥

वस्त्रो वासः ॥ * ॥ अम्बरो वस्त्रम् ॥ * ॥ ऐरावतम् । इन्द्रगजः ॥ ६४ ॥

चरकमठविटङ्कक्ष्वेडिता भूतवृत्त-
प्रयुतघृतवसन्ता हस्तबुस्तापराह्णाः ।
पलितफलककखा[११] नामकर्माभिधाना-
ऽयुतशततृणनीडा यौवनोद्यानयानाः ॥ ६५ ॥

---

१ गाडालकः B. C.

२ विस्फाढवाचा तु° B.; विस्फोटकवाची° F.

३ शक्तु जवादिविकारः A.

४ Kirât. 8, 34; विपक्षचित्तो° A.; D. om. from विपच to नाडीव्रणः.

५ पटं A. B.; पेटः C. (orig. पटः).

६ नद्यादेः D.; येनाग्न्यादेः F. (? P. viii. 4, 3; 36).

७ णीत्वे A. B.; णित्वे C.

८ Thus A. (? वारस्य); वाणवारणस्य° D.; वारणं वारणस्य यत्ययो B.; C. corr. वाणवारस्य°; वारणं बाणस्य वा मयूर° F.

९ बाहुः स्तनस्य B. C. F.

१० नृत्तं° A.; वृत्तं तवात्र B. C. D.—Mrichchh. act 9, p. 143 (ed. St.):
स्खलति चरणं° न चार्द्रतमा मही
स्फुरति नयनं वामो बाहुर्मुहुश्च वि° ।
शकुनिरपरश्चायं तावद्विरौति हि°
कथयति महाघोरं मृत्युं न चात्र°॥ eds.

११ °कंठा A.; °कथा C.; कंवा D.; °किखा F.

चरकं शास्त्रविशेषः ॥*॥ मठं व्रतिनां स्थानम् ॥*॥ विटङ्कं कपोतपाली ॥*॥[1] क्ष्वेडितो मुखध्वनितभेदः[2] ॥*॥ भूतः पिशाचः ॥*॥ वृत्तः शीलम् ॥*॥ प्रयुतम् । दश लक्षाः ॥*॥ घृतः । आज्यम् ॥*॥ वसन्तम् । ऋतुविशेषः[3] ॥*॥ हस्तं पाणिः ॥*॥ वुस्तं मांसशष्कुली[4] ॥*॥ अपराह्णं दिवसापरार्धभागः ॥*॥ पलितः । पाण्डुराः केशाः[5] ॥*॥ फलकः खेटकम्[6] ॥*॥ कण्वं[7] पापम् ॥*॥ नामा ॥*॥ अयं कर्मा[8] ॥*॥ अभिधानं नाम शब्दस्य ॥*॥ अयुतम् । दश सहस्राणि ॥*॥ शतः । संख्याविशेषः ॥*॥ तृणः शष्पः ॥*॥ नीडः कुलायः ॥*॥ यौवनो द्वितीयं वयः ॥*॥ उद्यान आरामः ॥*॥ यानो वाहनम् ॥ ६५ ॥

तीर्थप्रोथौ नलिनपुलिनस्तेनयोधौषधानि
स्थानं शूर्पं[9] निधनशयनद्वीपपुच्छायुधानि ।
यूथं गूथं कुणपकुतपक्षेमवर्णासनानि
छत्त्राकाशप्रतिसरमुखाष्टापदारण्यवर्षाः[10] ॥ ६६ ॥

तीर्थः पुण्यस्थानम् ॥*॥ प्रोथोऽश्वादीनां नासा ॥*॥ नलिनः कमलम् ॥*॥ पुलिनः सैकतम्[11] ॥*॥ स्तेनं चौर्यं चोरस्य ॥*॥ योधं सुभटः । यथा सूराचार्याणाम्[12] ।

---

[1] कपोतपाला चेडितो॰ B.
[2] मुखध्वनिभेदः F.
[3] वसन्त ऋ॰ B. C. F.
[4] मांसं । F.; मांशष्कुली D.
[5] पांडुरः केशः F.
[6] खेकं B.; खेठकं D.
[7] कंठं A.; कंवं D.; किण्वं F.
[8] अयकर्मा A.; अयाकर्मा C.
[9] सूर्पं all MSS.
[10] छन्नाकाश॰ E. and corr. D.; ॰प्रतिशर॰ C. D. E.
[11] शैकतं A.; सौकतं B.
[12] शूराचार्याणां A.; D. corr. स्तेनाचार्याणां.

योधैर्योधानि हन्यन्ते क्रोधान्धैः सिन्धुरैर्गजाः ।
न गण्यते श्वपचोऽपि धिक् क्रोधमसमञ्जसम् ॥

औषधो भेषजम् ॥ * ॥ स्थानम् । आधारः ॥ * ॥ शूर्पं[1] मानविशेषः ॥ * ॥ निधनो मृत्युः ॥ * ॥ शयनः शय्या ॥ * ॥ द्वीपम् । अन्तरीपः ॥ * ॥ पुच्छं लाङ्गूलम्[2] ॥ * ॥ आयुधो हेतिः ॥ * ॥ यूथः पशुसमूहः । द्वयोर्यूथयोः समाहार इति विग्रहे द्वियूथमित्यपि शाकटायनः ॥ * ॥ गूथो विष्ठा ॥ * ॥ कुणपं शवः ॥ * ॥ कुं तपति सूर्योऽत्रेति कुतपः श्राद्धकालः । यत्स्मृतिः ।

दिवसस्याष्टमे भागे मन्दीभवति भास्करः[3] ।
स कालः कुतपो यत्र पितृभ्यो दत्तमक्षयम् ॥

यद्वा छागरोममयो वस्त्रविशेषः ॥ * ॥ क्षेमः । कुशलम् ॥ * ॥ वर्णम् । अक्षरम् । शुक्लादिद्विजादिश्रुतिवाची तु पुंलिङ्गः[4] ॥ * ॥ आसनः पीठम् ॥ आवृत्त्या । असनं[5] वृक्षविशेषः ॥ * ॥ छत्त्र आतपत्रम् ॥ * ॥ आकाशो नभः ॥ * ॥ प्रतिसरः । कङ्कणं वाहिनीजघनं च[6] ॥ * ॥ मुखो वदनम् ॥ * ॥ अष्टसु लोहेषु पदं प्रतिष्ठाऽस्येति संज्ञायामष्ट[7] इत्यनेनात्वे । अष्टौ पदान्यत्र । अष्टापदं शारीफलम्[8] । अष्टापदः सुवर्णम् ॥ * ॥ अरण्यः । अटवी ॥ * ॥ वर्षं वृष्टिः संवत्सरश्च । यथा । पुष्पवर्षं इव मौक्तिकवर्षः[9] ॥ ६६ ॥

---

१ शूर्पं all MSS.

२ पुच्छं भांडं लांगूलं F.

३ °भास्करे A. B. C. F.; Ṣabdakalp. s.v. कुतप reads: °रः । स कालः कुतपो ज्ञेयः पितॄणामन्नमक्षयम् ॥ इति शातातपः । cf. Schol. on Hem. Abh. 141. Acc. to Prof. Roth, not in Ṣât. in Calc. Smṛitis. The Vâchaspatyam has °रः । स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥ मत्° पु°. The Matsyap., acc. to Prof. Haas, has: । तत्राष्टमो मुहूर्तो यः स कालः कुतपः स्मृतः ॥ मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः ।

४ शुक्लादिद्विजातिश्रुति° B. C. F.

५ अवृत्या° B.; आसनं F.

६ प्रतिशरः° D.; °कषणं । वाहिनी जलघनं च A

७ Cf. Pâṇ. vi. 3, 125.

८ सारीफलं A.; शारफलं B.; शारीरफलं C.; शारिफलं F.

९ D. has only वर्षं संवत्सरः; cf. Ṣiṣ. 10, 74; पुष्पवृष्टिरिव मौक्तिकवृष्टिः eds.

कमण्डलुर्मण्डपकुट्टिमार्बुदा-
ऽवतंसपाराः शतमानचन्दनौ[१]।
समानयूषौ दृढमूषिकौदना[२]
दिनं विमानं च वितानलोहितौ ॥ ६७ ॥

कमण्डलुः करकं कुण्डिका च[३] ॥ * ॥ मण्डपं जनाश्रयः ॥ * ॥ कुट्टेन निर्वृत्तः । घञभावादिम[४] इत्यनेन । इमप्रत्यये । कुट्टिमो बद्धभूमिकम्[५] ॥ * ॥ अर्बुदो दशकोटिरक्षजो व्याधिश्च[६]। पर्वते तु पुंलिङ्गः ॥ * ॥ अवतंसं शेखरम्[७] ॥ * ॥ पारः परतीरम् ॥ * ॥ शतं मानानामस्य[८]। शतमानो भूभागविशेषः ॥ यद्वा । शतमानं रूप्यपलम् ॥ यत्स्मृतिः[९]।

द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ।
शतमानं तु दशभिर्धरणैः पलमेव च ॥ * ॥

चन्दनो मलयजम् ॥ * ॥ समानः सदृशम् ॥ * ॥ यूषो मुद्गनिर्यासः ॥ * ॥ दृढोऽविनष्टम् ॥ * ॥ मूषिकम्[१०]। आखुः ॥ * ॥ उद्यते मिश्र्यते व्यञ्जनैरिति । ओदनम्[११] ॥ * ॥ दिना वासरः ॥ * ॥ विमानो देवतायानं सप्तभूमिकगृहं च[१२]॥ * ॥ वितानो याग उल्लोचो विस्तारश्च । तुच्छवाची तु त्रिलिङ्गः ॥ * ॥ लोहितः शोणितम् । गुणवचनस्तु वाच्यलिङ्गः । लोहितो गौः । लोहिता शाटी । लोहितं वस्त्रम् ॥ ६७ ॥

---

१ वतंसपराः° E.; शततमानं वंदनौ B.

२ समानयूपौ A.; °मूषकौदना F.

३ कुटिका च B.; कुंटिका च C.

४ Thus A. (? घणच्); °घणङ्भावा° B.; यणवङ्भावा° C.; घकवावादिम D.; घनभावादिम F.; cf. P. iv. 4, 20 V.

५ °भूमिका D.

६ °कोटि वचसो व्याधिश्च D.

७ शेषरं B. F.

८ शतं मानमस्य D. F.

९ Yâjn. I. 363-4.

१० मुषकं F.

११ उद्यते मध्यते पच्यते इत्योदनं D.

१२ देवयानं F.; °कं गृहं च B. C. F.

अंसक्षीरकषायबिम्बविटपा[1] नेत्राव्ययौ शेखरः
केदाराश्रमशल्यशूलवलया बालस्तमालो मलः ।
गुल्माङ्गारविहारतोमररसाः पात्रं पवित्रं पुरं
मध्यं बुध्नमृणालमण्डलनला नालप्रवालोत्पलाः ॥ ६८ ॥

अस्यते भारेण । अंसं स्कन्धः[2] ॥ * ॥ क्षीरं पयः ॥ * ॥ कषायं तुवराख्यो[3] रसो निर्यासरागविशेषौ च ॥ * ॥ बिम्बो मण्डलम् आकृतिश्च ॥ * ॥ विटपं स्तम्बः । स्कन्धादूर्ध्वं तरोः शाखा ॥ * ॥ नेत्रो नयनं परिधानपरिमाणविशेषौ च[4] ॥ * ॥ अव्ययम् । अलिङ्गसंख्यम्[5] ॥ * ॥ शेखरम् । आपीडः ॥ * ॥ क्लिद्यति । आर्द्रीभवति पाकार्थं जलेनेति केदारम् । क्षेत्रविशेषः ॥ * ॥ आश्रमो मुनीनां स्थानम् ॥ * ॥ शल्यं वंशादीनां कीलविशेषः ॥ * ॥ शूलं प्रहरणविशेषो रुजा च ॥ * ॥ वलयो हस्ताभरणम् । यथा ।

तनुतररमणीयस्य मध्यस्य च भुजस्य च ।
अभवन्नितरां तस्या वलयः कान्तिवृद्धये[6] ॥

बालं शिशुः केशश्च ॥ * ॥ तमालं वृक्षविशेषः ॥ * ॥ मलः पापविट्किट्टानि[7] । यथा सागरचन्द्रस्य ।

मुष्णातु कल्मषमलानि मनोऽपकूल-
खेलन्मरालमिथुनात्तपनात्मजेव[8] ॥

स्मृतौ तु । वसा शुक्रमसृङ् मज्जा मूत्रं विट्कर्णविण्नखाः ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः[9] ॥

---

१ अंश० A.; अंसं क्षी० विटमा B.
२ अश्नते० D.; अंशं० A.; अस्यंते० अंसः स्कंधः C. F.
३ तुंबराख्यो C.; तुचराख्यो D.
४ नयनं परिमाणविशेषश्च A. D. F.
५ ०संख्ये D.; ०संज्ञं A.
६ A. D. om. fr. यथा; cf. p. ११५, n. ३.
७ ०किहानि A.; ०वीर्याणि corr. D.
८ ? पुष्णातु० A. D.; मनौपकूलखेलमराल० A.; मनोपिकूल० D.; मतोपकूल० मिथुनातप० F.; मनोप० B. C.
९ Man. 5, 135.

गुल्मः प्रकाण्डम्[1]। यद्वा। गुह्यन्ते व्याकुलीक्रियन्ते[2] पथिकसार्थास्तस्मिन्निति गुल्मः। आयस्थानम् ॥*॥ अङ्गति[3] गच्छति निर्धूमकालाग्नितामिति। अङ्गारो वह्निदग्धकाष्ठम् ॥*॥ विहारं भिक्षुस्थानम् ॥*॥ ताम्यन्ति काङ्क्षन्ति तेनारीन्प्रहर्तुमिति तोमरं शर्वला[4] ॥*॥ रसम्। मधुरादिः शृङ्गारादिश्च विषं वीर्यं रागश्च ॥*॥ पात्रो भाजनम्[5]। अत्रास्य पाठः प्रचुरप्रयोगापेक्षः[6] ॥*॥ पवित्रः पावनम् ॥*॥ पुरः पुरी ॥*॥ मध्यः। उदरम्।

आकर्षते वोर्ध्वमपि क्रशीयान्
अत्युन्नतत्वात् कुचमण्डलेन[7]।
ननाम मध्योऽतिगुरुत्वभाजां[8]
नितान्तमाक्रान्त इवाङ्गनानाम् ॥

बुध्नम् अधोभागः ॥*॥ मृणालो बिसम्[9]। मृणालीत्यपि दृश्यते महाकविलक्ष्येषु[10] ॥ बिसाङ्कुर इत्यन्ये ॥*॥ मण्डलो बिम्बं भूभागविशेषश्च। यथा।

अयमनेन महोदधिभोगिना वलयितो वसुधाफणमण्डलः[11] ॥

नलं शुषिरं[12] तृणम् ॥*॥ नालः पुष्करादीनां दण्डः ॥ अमरमालायां तु नालं नाला स्त्रियामिति स्त्रीलिङ्गोऽभिहितः[13] ॥*॥ प्रवालं पल्लवो विद्रुमश्च ॥*॥ उत्पलो जलजम् ॥ ६८ ॥

---

१ A. om. from गुल्मः.
२ गुह्यते° क्रियते A. D.; गुप्यते° F.
३ अगति B.; आयस्थाने अगति C.
४ नाम्यं कांचंति° D.; शर्वरा A.; सर्वला F.; सर्वरा B. C.
५ भोजनं MSS.; पात्रं° C.
६ प्राचुरप्रयोगोपक्षे C.; °प्रयोगोपक्षो B.
७ चोर्ध्वमपि°? MSS.; अभ्युन्नतत्वात् A. D.; कुचं मंडलेन B.
८ ऽपि गुरुत्व° A. D.; °गुरुत्वभाजा B. C. D. F.
९ विशं A. D.
१० दृश्यते। कविलक्ष्येषु F.; । कथितलक्ष्येषु C.; कथितलक्ष्येषु B.; महाकविसूक्तिषु D.
११ Anargh. 7, 28; D. om. from यथा.
१२ सुषिरं A.
१३ नालं नालो स्त्रियामिति° B. C.; cf. A. K. 1, 2, 3, 41.

जृम्भो वज्रकबन्धकर्षककुदाश्वक्रान्धकाराङ्कुशा[१]
वक्त्रं संगमदेहदाडिमहिमाः पत्रं बलं वल्कलम् ।
कर्पासामिषकाशकोशकुसुमप्रग्रीवमासेक्कसा[२]
निर्यासः कलशाम्बरीषकलला माषः करीषं कुशः[३] ॥ ६९ ॥

जृम्भो जृम्भणम् ॥ * ॥ वज्रः कुलिशम् । यथा । वनस्पतिं वज्र इवावभज्य[४] ॥ यथा वा । भिन्दानो हृदयमसह्यि नोदवज्रः[५] ॥ हीरकश्च ॥ * ॥ कबन्धं रुण्डः । यथा ।

वामांससंसक्तसुराङ्गनः स्वं नृत्यत्कबन्धं समरे ददर्श[६] ॥

कर्षः पलचतुर्थभागः ॥ * ॥ ककुदः । प्रधानं राजचिह्नं शृङ्गं च ॥ * ॥ चक्रो रथाङ्गम् ॥ * ॥ अन्धकारस्तमः । यथा । प्रोषितार्यमणं मेरोरन्धकारस्तटीमिव[७] ॥ * ॥ अङ्कुशः सृणिः[८] । यथा ।

प्रत्यन्यनागं चलितस्त्वरावता निरस्य कुण्ठं दधतान्यमङ्कुशम्[९] ॥

वक्त्रो मुखं छन्दोजातिश्च ॥ वक्त्रेत्यपि शाकटायनः ॥ * ॥ संगमं[१०] नद्यादिमेलः ॥ * ॥ देहं शरीरम् ॥ * ॥ दाडिमं फलविशेषः ॥ * ॥ हन्ति[११] हिनस्ति पद्मवनानीति हिमः । तुहिनम् ॥ * ॥ पत्रं पर्णं वाहनं च ॥ * ॥ बलं सामर्थ्यं सैन्यं च ॥ * ॥ वल्कलं तरुत्वक् ॥ * ॥ कर्पासं तूल-

---

१ क्षंभो° C.; °ककुदात्साक्राधकारांकुशा A.

२ मासेक्कसा MSS. (क्क often for क्क).

३ कलसांवरीषकलिला° A.; मा-

४ Kum. S. 3, 74.

५ Śiṣ. 8, 39; भिंदतो हृ° A.; D. has the whole stanza; C. om. from जृम्भो to हीरकश्च.

६ Raghuv. 7, 48; वामाङ्गसंसक्त° ds.

७ Śiṣ. 2, 39; D. has the whole śloka; it also quotes Kum. S. 1, 12a (नीलं for भीतं).

८ आंकुश: B.; अंकुशं A. D.; घृणिः A.; सृणिः D.; cf. Nirukta 5, 28.

९ Śiṣ. 12, 12; D. quotes the whole, but corrupt.

१० संगमो B. C. F.

११ हेति B.; हति D.; cf. Uṇ. S. 1, 146.

कारणम् ॥ * ॥ आमिषो मांसम् ॥ * ॥ काशं तृणभेदः ॥ * ॥ कोशं धनम् । अमरसिंहस्तु कोष इत्याह[1] ॥ * ॥ कुसुमः पुष्पम् ॥ * ॥ प्रग्रीवं वातायनं वास्तुनिमित्तधारणं च[2] ॥ * ॥ मासं त्रिंशदहोरात्रः ॥ * ॥ इक्कसः ।[3] चिक्कसं यवपिष्टपर्यायम् अमरसिंहाद्याः ॥ * ॥ निर्यासं वृक्षादेर्निस्यन्दः ॥ * ॥ कलशं घटः । कलशस्त्रिष्वित्यमरसिंहः[4] ॥ * ॥ अम्बरीषं भ्राष्ट्रः । अमरसिंहस्तु क्लीबे[5] ॥ * ॥ कललं शुक्रशोणितपर्यायः ॥ * ॥ माषं दशार्धगुञ्जो व्रीहिविशेषश्च ॥ * ॥ करीषो गोमयाग्निः । शुष्कगोमयसंघात इत्येके[6] ॥ * ॥ कुशं दर्भः ॥ ६९ ॥

मुसलमुकुलमूलाः पार्श्वपाचीवपूर्वाः[7]
कमलहलचषालाः[8] खण्डलं कुण्डलं च ।
निगडफलपलाला[9] मङ्गलं शालशीले[10]
विषचषकविशालाः[11] पूलतैले कपालम् ॥ ७० ॥

मुसलम् । आयुधविशेषः चोदनविशेषश्च[12] ॥ * ॥ मुकुलः कुड्मलम्[13] । यथा विक्रमोर्वश्याम् ।

---

१ A. K. 3, 4, 29, 233; Kshîr. takes no notice of another spelling, but Râyam. refers to the double spelling in Med. *ṣânta* 5.

२ सुग्रीवं° वस्तुनि° A.

३ क्क for क्क B. C. D. F.; इच्छसः । चिक्कसं A., for चिक्कसं cf. A. K. 3, 6, 35 (यवपिष्टं Kshîr.; गोधूमादिचूर्णं Rây.).

४ कलशस्त्रियामित्य° C.; A. K. 2, 9, 31.

५ A. K. 3, 9, 30.

६ शुष्कगोमयं । संघात॰ शुष्कगोमयसयात:° D.; ==

७ मुशल° A. C.; °पाचाकपूर्वा: B.: °पाचीकपूर्वा: C. F.

८ °चखाला: A. D.; °वखाला: B. C.; °वषाला: E.

९ निगल° A. D. E.; निगडपलपलाला C.; निगद्रपलप° B.; निगमपलप° F.

१० सालशीले B. F.; शालीले E.

११ विषवषक° B. C. D. E.

१२ मुशलं° A. B. C.; चादन B. C.

१३ कुह्मलं A. B. D.; om. C.

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरि कर्णिकारमुकुलान्यध्यास्ते षट्पदाः[१] ॥

मूलः। प्रतिष्ठा। आदिः। शिफा। नक्षत्रभेदश्च[२] ॥*॥ पर्शूनां समूहः। पार्श्वम्। कक्षयोरधः ॥*॥ पात्रीवं[३] यज्ञोपकरणम् ॥*॥ पूर्वं रूढितोऽर्थोऽवगन्तव्यः ॥ दिक्कालयोगे त्वाश्रयलिङ्गः। पूर्वः पर्वतः। पूर्वा नदी। पूर्वं वनम् ॥*॥ कमलं पद्मम् ॥*॥ हलः सीरम्[४] ॥*॥ चषालं[५] यज्ञपात्रम् ॥*॥ खण्डलं खण्डम् ॥*॥ कुण्डलः कर्णवेष्टनम् ॥*॥ निगडं[६] पादबन्धः। यथा कालिदासस्य।

मणिबन्धविगलितमिदं संक्रान्तोशीरपरिमलं तस्याः।
हृदयस्य निगडमिव मे मृणालवलयं स्थितं पुरतः[७] ॥

फलं[८] प्रयोजनं कुसुमादिसंभवश्च ॥*॥ पलालः। धान्यादेः शुष्कतृणम् ॥*॥ मङ्गलः[९] प्रशस्तम् ॥*॥ शालो[१०] वृक्षविशेषः ॥*॥ शीलः। चरित्रम् ॥*॥ विषः शृङ्गिकादिद्रव्यभेदः[११] ॥*॥ चषको मधुपानभाजनविशेषः[१२]। यथा।

अधिरजनि वधूभिः पीतमैरेयरिक्तं
कनकचषकमेतद्रोचनालोहितेन।

---

१ Vikr. śloka 41; °मुकुलान्यध्यासते खट्पदाः A.; मुकुलानध्यासते B. C.; [कुसुमान्याश्रते षट्पदाः or (Pisch.) मुकुलान्यालीयते षट्पदः eds.; cf. also the scholium कर्णिकारमुकुलानि° Boll. p. 303] D. adds the half-verse, reading क्रीडावेश्मनि वैष°, cf. Pischel °चैष.

२ A. D. om. from मूलः

३ पात्रीकं B. C. F. [MSS. Kshîr. A. K. 3, 6, 35 read पात्रीयं; Rây. पात्रीवं].

४ शीरं A. B. C. D.

५ चखालं A. C. D.; खखालं B.

६ निगड्रं B.; निगलं D.

७ Śak. Pischel śl. 83 (मणिबन्धनगलित° ed.).

८ फलः A.

९ मंगलं B. C.

१० सालो B. F.; शाका A.

११ शृं[illegible]दि° B. C.; शृंगारादि° D.

१२ [illegible] C.; मधुपानविशेषः A.

उदयदहिमरोचिर्ज्योतिषाक्रान्तमन्तर्-
मधुन इव तथैवापूर्णमद्यापि भाति[1] ॥

विशालो विशङ्कटम्[2] ॥ * ॥ पूलं बद्धतृणसंचयभेदः[3] ॥ * ॥ तैलः । तिलादीनां विकारः[4] ॥ * ॥ कपालः । शिरसोऽस्थि । घटादिखण्डोऽप्युपचारात् ॥ ७० ॥

समरतिमिरवारा राजसूयोपवासौ
चमसदिवसकंसा वाजपेयो हिरण्यम् ।
जठरदरशरीरारावकान्तारराष्ट्राः[5]
पटहगृहकवाटाः कुक्कुटाद्रौ च धाम[6] ॥ ७१ ॥

समरो रणम् ॥ * ॥ तिमिरः । तमः ॥ * ॥ वारं परिपाटिः ॥ * ॥ राजसूयं क्रतुः ॥ * ॥ उपवासं भोजनच्छेदः ॥ * ॥ चमसं यज्ञपात्रविशेषः ॥ * ॥ दिवसं दिनम् । यथा ।

प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः[7] ॥

कंसं परिमाणभेदः । लोहभेदो वा ॥ नृवाची तु पुंलिङ्गः[8] ॥ * ॥ वाजपेयं यागः[9] ॥ * ॥ हिरण्यो धनम् ॥ * ॥ जठरम् । उदरम् ॥ * ॥ दरं त्रासः श्वभ्रं च[10] ॥ * ॥ शरीरः कायः ॥ * ॥ आरावं शब्दः ॥ * ॥

---

१ Śiṣ. 11, 51. In the second pâda, the Calc. ed. 1815 reads कनकचषककमेतत्प्रातरालोहितेन ।; Târânâtha reads as above.

२ विसंकटं F.

३ तृणवद्धसंचयभेदः A.; बद्धतृणसंचयः F.

४ तिलादीनां कारः B. C.

५ °शरीराव° D. E.; कांतारा राष्ट्राः A.

६ कुक्कुटार्द्रौ° A.; कुर्कुटाद्रौ° B.; कुर्कुटार्द्रौ C.; कुक्कुराद्रिं वि । धाम D.

७ Śiṣup. 1, 53.

८ लोहभेदनृवाचौ° B. C.; [कंसः । चषको मल्लिका पारी च Kshîr.; A. K. 2, 9, 32] D. om. from लोह°.

९ यज्ञविशेषः C.; B. om. from वाजपेयं.

१० स्वभ्रं च A.; स्वत्रं च B.; स्वसं च C.; वेत्रं च D.

कान्तारो महारण्यं दुर्गपथश्च ॥ * ॥ राष्ट्रम् । जनपद उपद्रवश्च । पराद्राष्ट्रभयम्[१] ॥ * ॥ पटहं डिण्डिमः ॥ * ॥ गृहो वासः । गृहाः पुंसि च भूम्न्येवेति कश्चित्[२] ॥ * ॥ कं शिरः पाटयति प्रविशताम् । जपादित्वात् । कवाटो द्वारपिधानम्[३] ॥ * ॥ कुक्कुटं ताम्रचूडः । अमरसिंहस्तु कुक्कुटः पुंस्येवेत्याह[४] ॥ * ॥ आर्द्रः शृङ्गवेरम् ॥ * ॥ धामा गृहं तेजश्च ॥ ७१ ॥

**पद्माषाढकपित्थषष्टिककुलान्यम्भोजवाजामृताः[५]**
**स्थूलद्यूतखलीनलोहकवचाशोकक्षयानेकपाः ।**
**शङ्खस्ताडकधर्मचर्मरजतस्नेहासिहंसापराः**
**सारः सैन्धवमध्यमाध्वरधनुर्मानस्तनस्थाणवः ॥ ७२ ॥**

पद्मो जलजम् । निधिवचनस्तु पुंलिङ्ग एव । यथा श्रीहर्षस्य ।

अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं दधत्या दृशां[६]
याताया विगलत्पयोधरपटाद्द्रष्टव्यतां कामपि ।
अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता
यन्नैते[७] मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥

यथा वा कुमारिलस्य[८] ।

---

१ परराष्ट्रं भयं C.

२ Viz., Amaras. 2, 2, 5.

३ कं शिरः पाटयति प्रविशतां कवाटो द्वारपट्टः । जपादित्वाद्दत्वं Kshîr. on A. K. 2, 2, 17.—Vardh. does not give the *japâdi* in this work.

४ A. K. 2, 5, 17.

५ पद्मषाटक॰ E.; पद्माषातकपि॰ ॰कपित्थषष्ठि॰ A.

६ Priyadarsikâ (Calc. S. 1931) 2, 7; ददत्या for दधत्या ed.; दृशा यतायाः॰ A.; दृशो या॰ F.; दृशो यो विग॰ B.; दृशीं या विगलन्॰ C.; दृशोर्यातायाः विगलसत्पयो॰ D.; पयोधरपदद्रष्टव्यतां॰ MSS.

७ नैते यन्मु॰ ed. Calc.; यन्नेते B.; यचैते C.; यचैते D.; ॰मुचुलीभ॰ A.; मुनुलीभ॰ D.

८ कुमारलस्य C.

संपिण्डिताङ्गावयवा उदीयुः पद्मा नवाः कण्टकितोर्ध्वदण्डाः[1]।
अन्तर्जलावासविवृद्धशीतत्रस्ता वसन्तातपकाम्ययेव[2]॥

आषाढम्। व्रतिनां दण्डं मासश्च ॥ * ॥ कपित्थो वृक्षविशेषः ॥ * ॥ षष्टिकं व्रीहिभेदः ॥ * ॥ कुलोऽभिजनो गृहं च ॥ * ॥ अम्भोजः कमलम् ॥ * ॥ वाजं पिच्छम्[3] ॥ * ॥ अमृतम्। सलिलं[4] सुधा मोचो हृद्यं च ॥ * ॥ स्थूलं दृढः ॥ * ॥ द्यूतो दुरोदरम् ॥ * ॥ खलीनं कविकम्। खलिनेति[5] शाकटायनः ॥ * ॥ लोहोऽयःप्रभृतिद्रव्यविशेषः ॥ * ॥ कवचः संनाहः ॥ * ॥ अशोकं तरुविशेषः ॥ * ॥ चयं गृहम् ॥ * ॥ अनेकपं हस्ती ॥ * ॥ शङ्खं कम्बुः। निधिललाटास्थिवचनस्तु पुंलिङ्ग एव ॥ * ॥ तण्डकम्। छन्दोगयोग्यो ब्राह्मणो ग्रन्थविशेषः[6] परिष्कारो दण्डको वा ॥ * ॥ धर्मोऽदृष्टार्थवाची[7]। तत्साधनवाची तु नपुंसकलिङ्गः[8]। तानि धर्माणि प्रथमान्यासन्[9] ॥ अमरसिंहस्तु धर्ममस्त्रियामिति[10] पठन् सामान्येनाह। धर्माः पुण्यमन्यायस्वभावाचारसोमपा इति च[11] ॥ * ॥ चर्माऽजिनम् ॥ * ॥ रजतो रूप्यं श्वेतं च ॥ * ॥ स्नेहं सौहृदम् ॥ * ॥ असि खड्गः ॥ * ॥ हंसं सितच्छदः ॥ * ॥ अपरोऽपरमन्यत् ॥ * ॥ सारो

१ कंटकितांगदंधाः A.

२ अंतजला च। सविवृद्धशीतच आतप° A.; °काम्ययैव C. F.; अंतर्ज्ञालावातवलद्वशीतचस्ता वंसानातप° D.

३ पित्यं B.; पिष्ठं D.

४ शलिलं B. C. D.; सलिला A.

५ खनितेति A.

६ C. om. from कवचः संनाहः°; °परिस्कारो B. C. D.

७ धर्मो दृष्टार्थवाची B. C.

८ तत्साधनवाची च पुल्लिंगः। A. D.

९ Rigv. i. 164, 43; V. S. 31, 16.

१० A. K. 1, 1, 4, 2; धारणाद्धर्मः। यागाङ्गे नपुंसकम्। तानि धर्माणि प्रथमान्यासन्॥ फले तु पुमान्। एष धर्मः सनातनः। इति विशेषोऽस्य नेष्टः। लोकधर्मी नाथ्यधर्मीति पारिभाषिको धर्मशब्दोऽप्यस्ति। Kshîr.

११ A. K. 3, 4, 141; पुण्यः। यागाद्यहिंसा वा॥ यमो धर्मराजः। धर्मस्तु भीमवत्॥ न्याये च। धर्माधिकारिणः॥ स्वभावे यथा क्रूरधर्माः॥ आचारे यथा धर्मशास्त्रम्॥ सोमपे यथा। एष धर्मः सनातनः॥ युधिष्ठिरपितापि तावद्वैव॥ धर्मसाधने यागादौ च क्लीवे। यच्छ्रुतिः। तानि धर्माणि प्रथमान्यासन्। Kshîr-

बलं चन्दनादिस्थिरांशश्च[1]। सारं न्यायादनपेतम्। उत्कर्षवाचकस्तु त्रिलिङ्गः॥ यत्तु जयादित्येनोक्तम्। उत्कर्षे सारशब्दः पुंलिङ्ग एवेति[2] तन्न समीचीनम्। सज्जा सुतवती सारा दर्पिकाव्रतगर्धिनः[3]॥ तथा। जये धरित्र्याः पुरमेव सारम्[4]। इत्यादिबहुतरलक्ष्यविरोधात्॥ ननु वाच्यलिङ्गत्वेऽस्य। सारं सारङ्गलोचना[5]।

राज्ये सारं वसुधा वसुंधरायां पुरं पुरे सौधम्[6]।

इत्यादौ कथं न विशेष्यपदलिङ्गपरिग्रहः। सत्यम्। सामान्यविशेषभावयोजनाया[7] अङ्गीकृतत्वादिति न यथोक्तदोषप्रसङ्गः॥ * ॥ सैन्धवो लवणोत्तमम्। यौगिकस्तु त्रिलिङ्गः। सैन्धवं वस्त्रम्। सैन्धवोऽश्वः। सैन्धवी शाटी[8]॥ * ॥ मध्यमो मध्यमं[9] नातिप्रधानम्॥ * ॥ अध्वरं क्रतुः॥ * ॥ धनुः कोदण्डम्। यथा।

धनुर्वंशविशुद्धोऽपि निर्गुणो किं करिष्यति[10]॥ * ॥

मानं दर्पः॥ * ॥ स्तनं पयोधरः॥ * ॥ स्थाणुः कीलकः॥ ७२॥

महिमनेत्रकपञ्चकदण्डकाः क्रकचशम्बलकुण्डपकन्दराः[11]।
कटकमालकमर्मरदैवताः शिखरकेशरदारुभगंदराः[12]॥ ७३॥

---

१ °स्थिरांसश्च B. C.; Kshîr. A. K. 3, 4, 173: बले यथा। सुसारः। घृतान्नांसं तु सारकृत्॥ स्थिरांशे। चन्दनसारो मज्जासारः॥ न्याय्ये। नैतत्सारं चरेत्। जये धरित्र्याः पुरमेव सारम्॥

२ Kâś. V. ii. 4, 31.

३ ? सज्यासुतवनीसारादर्प्पिकाव्रतगर्द्दितः A.; सस्वासुतं वनी° C.; सरवासुताचनीसारादृर्प्पिका व्रतगर्द्धितपाजये° D.—The above reading is suggested by Prof. Roth, who translates: 'Eine bereitwillige und kindergebärende (Gattin) ist die beste für einen liebesüchtigen.' Prof. Weber proposes: सखा सुतवती सारा° 'Eine treffliche Gattin ist ein Freund für etc.'

४ Brihats. 74, 1; Böht. Sp. 2347.

५ Böhtl. Sp. 778.

६ Böhtl. Sp. 5776.

७ °भावेन योजनाया D.

८ साटी A. D.

९ मध्यं B. C. F.; twice मध्यमो D.

१० Böhtl. Sp. 5369; A. D. om. from यथा.

११ °संवल° A. D.

१२ देवताः° A. C.; °केसर° B. C. F.

महिम महत्त्वम् ॥ * ॥ नेत्रकः शृङ्खलकम् ॥ * ॥ पञ्चकः पञ्चकं विस्तारः ॥ * ॥ दण्डकं छन्दोविशेषः ॥ * ॥ क्रकचः करपत्रम् ॥ * ॥ शम्बलं[1] पाथेयम् ॥ * ॥ कुण्डपं क्रतुविशेषः ॥ * ॥ कन्दरं दरी ॥ * ॥ कटकः सैन्यम् । यथा सागरचन्द्रस्य ।

कटकः कण्टकान्यस्य दलयामास निर्दयम् ।
स हि न क्षमते किंचिद्विन्दुनाप्यात्मनोऽधिकम्[2] ॥

वलयं भूम्न्नितम्बस्य[3] ॥ * ॥ मालको ग्रामान्तरालाटवी ॥ * ॥ मर्मरं शुष्कपत्रध्वनिः ॥ * ॥ दैवतो देवः ।

यथायं दारुणाचारः सर्वदैव विभाव्यते ।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथवा[4] ॥

शिखरोऽग्रम् । यथा ।

अगस्त्याज्ञासद्यःशमितविकलोच्छ्रायविषमान्
उदस्यन्तः सेतावलगितवतो विन्ध्यशिखरान्[5] ॥

केशरः[6] किञ्जल्कम् । यथा ।

संपिण्डीकृतजीर्णजीरककणश्रेणीश्रियः केशरान्
संनद्धे परितो निरन्तरदलद्रोणीनिवेशैस्त्रिभिः[7] ॥

दारुः काष्ठम् । केचिद् दार्विति नपुंसकमेवाहुः ॥ * ॥ भगंदरो रोगः ॥ ७३ ॥

---

१ संवलं D.; om. क्रकचः करपत्रं.

२ कटकैः कंट० D.; कटकः कटका-न्य० C.; ०क्षमति० B.

३ A. D. add: यथा । तनुतरमणीयस्य मध्यस्य च भुजस्य च । अभवन्नितरां तस्या वलयः कांतिवृद्धये ॥ transferred here by mistake from the comment on वलय in śl. 68 above; cf. p. 106, n. 6.

४ सर्वदेव० C.; देवतोऽस्य A. C. This śloka is quoted by Mammaṭa on Kâvyapr. 7, 3.

५ Anarghar. 6, 32; ०विपुलोच्छ्राय० ed. Calc. p. 166; D. om. from यथा.

६ केसरं F.

७ Bâlarâm. 5, 27 (संनद्धं ed. Ben.).

दीपोद्यमब्रह्मपिधानभावा
वास्तुव्रतार्धप्रवरापिधानाः[1]।
अर्मो मुहूर्तं धनवप्रसौधा
रेणुस्तलं लोम पटो विहायः[2]॥ ७४॥

दीपं प्रकाशविशेषः ॥ * ॥ उद्यमम् उत्साहः । शाकटायनस्त्वस्मादेव पाठादाल्वे । उद्याममित्याह ॥ * ॥ ब्रह्म । प्रजापतिर्वेदाः शाश्वतं ज्ञानं तपश्च ॥ वेधसि पुंस्त्वमित्यन्यः[3] ॥ * ॥ पिधानः संवरणम् ॥ * ॥ भावम् । स्वभावः शब्दविषयोऽभिप्राय आत्मा योनिश्च ॥ * ॥ वास्तुः । वेश्मभूर्गृहं च[4] ॥ * ॥ व्रतो ब्रह्मचर्यादिनियमः ॥ * ॥ अर्धं समभागः । अर्धोऽसमभागः[5] ॥ * ॥ प्रवरः प्रकृष्टम् ॥ * ॥ अपिधानः स्थगनम्[6] ॥ * ॥ अर्मं चक्षूरोगविशेषः[7] । अर्मन्निति दुर्गः[8] ॥ * ॥ मुहूर्तो द्वादश क्षणाः ॥ * ॥ धनो वित्तम् ॥ * ॥ वप्रं प्राकारः केदारं तटं च । तत्र तटे ।

वप्रेण पर्यन्तचरोडुचक्रः सुमेरुवप्रोऽन्वहमन्वकारि[9] ॥

तथा । अर्कोपलोल्लसितवह्निभिरह्नि दीप्तास्
तीव्रं महाव्रतमिवास्य चरन्ति वप्राः[10] ॥

---

१ दासुव्रता° A.; वास्तुव्रतेऽर्धं° B. C.; °प्रवराऽभिधानाः D.

२ अर्मा मुहूर्त्तध° लोमपटौ विहाय A.; अर्मा मुहूर्त्तस्य धनं वप्रं सौधं रेणुस्ततलं विहायाः D.; अर्मामुहूर्त्तौ° E.

३ साज्यंतज्ञातं तव वेधसिपुंस्त्व° A.; वेदाः शास्त्रं तत्र ज्ञानं° F.; D. om. from वेदाः (? वेदः); cf. A. K. 3, 4, 117.

४ वेश्मभूगृहं च A. B. C.

५ C. only अर्धो समभागः ।

६ F. adds अभिधानो नाम शब्दश्चेत्यपि ।; D. has only अभिधानो नाम शब्दश्च ।

७ अर्मा चक्षुरो° D.; अर्मो चक्षु° A.

८ घर्मन्निति° A.; om. D.

९ Śiśup. 3, 37.

१० Śiśup. 4, 58 (eds. अह्नि तप्तास्° इवात्र चरन्ति).

सौधः सुधाधवलितम् ॥ * ॥ रेणुर्धूलिः ॥ * ॥ तलोऽधो रूपं च ॥ * ॥ लोमा तनूरुहम् ॥ * ॥ पटं वस्त्रविशेषः ॥ * ॥ विहायः । आकाशम् ॥ ७४ ॥

उटजचापनपुंसकपातका
भुवनकोटरपल्लवगोमयाः ।
अतिखरं हरिचन्दनमूलकौ
भवनसंक्रमगाण्डिवपत्तनाः ॥ ७५ ॥

उटजः पर्णशाला ॥ * ॥ चापो धनुः । यथा परिमलस्य ।

विपक्षहृद्भङ्गकृता नितान्तं भ्रूलेखया कुञ्चितयोल्लसन्त्या ।
नाकारमात्रेण परंतपस्य यस्यान्वकारि क्रिययापि चापः[१] ॥

नपुंसकं शण्ढः । स नपुंसकोऽभवदिति भाष्यकारवचनात्पुंस्यपि ॥ * ॥ पातकः पापम् ॥ * ॥ भुवनो लोकः ॥ * ॥ कोटरं निष्कुटः ॥ * ॥ पल्लवं किशलयम् । यथा ।

लोलौष्ठमौष्ट्रकमुदग्रमुखं तरूणाम्
अभ्रंलिहानि लिलिहे नवपल्लवानि[२] ॥

गोमयः करीषः ॥ * ॥ अतिखरम् । अर्थस्तु लोकादवसेयः ॥ * ॥ हरिचन्दनम् । हरेरिन्द्रस्य चन्दनो हरिचन्दनः । स चातिपीतः शीतश्च[३] देववृक्षश्च ॥ * ॥ मूलकं शाकविशेषः ॥ * ॥ भवनो गृहम् ॥ * ॥ संक्रमः । दुर्गसंचरः सेत्वादिः ॥ * ॥ गाण्डिर्विद्यते यस्य । गाण्ड्यजगात्संज्ञायामित्यनेन[४] वप्रत्यये । गाण्डिवोऽर्जुनधनुः ॥ * ॥ पत्तनोऽधिष्ठानम्[५] ॥ ७५ ॥

---

१ परंतपस्य वस्याध्वकारि° A.; D. om. from यथा परिमलस्य ।

२ Śiś. 5, 65; D. has the whole verse, but corrupt.

३ शीतलश्च D.; °पीतशीतश्च A.

४ Pâṇ. v. 2, 110.

५ D. om. from नो दुर्गसंचरः सेत्वादिः

कर्पूरकुर्पासकषष्ट्युशीरा[1]
गाण्डीवनिष्ठेवसुपर्णभस्त्राः[2]।
पिण्याकपुस्तौ नखरेषुषण्डा[3]
वैनीतकं द्वीपिनमारकूटम्[4] ॥ ७६ ॥

कर्पूरं घनसारः ॥ * ॥ कुर्परेऽस्यते । कुर्पासकः[5] । स्त्रीणां कञ्चुकिकाख्यः[6] ॥ * ॥ षष्टिः संख्यावाची[7] । अन्ये पुनः स्त्रियामेव मन्यन्ते ॥ * ॥ उशीरो वालकम् ॥ * ॥ गाण्डी विद्यते यस्य । गाण्ड्यजगात्संज्ञायामित्यनेन[8] वप्रत्यये । गाण्डीवोऽर्जुनधनुः ॥ * ॥ निष्ठेवो निष्ठीवनम्[9] ॥ * ॥ सुपर्णं गरुडः[10] ॥ * ॥ भस्त्रम् ॥ * ॥ पिण्याकः । सुगन्धिसल्लकीप्रभवधूपस्तिलकल्कं च ॥ * ॥ पुस्तं लेप्यकर्म ॥ * ॥ नखरं नखः ॥ * ॥ इषुः शरः । स्त्रीपुंसयोरित्यन्ये ॥ * ॥ षण्डः[11] पद्मादीनां समुदायः ॥ * ॥ वोढृपरंपरया वाह्यते यत्तद्विनीतानामिदम् । वैनीतकं[12] यानम् ॥ * ॥ द्वीपिनं व्याघ्रः ॥ * ॥ आरकूटं पित्तलम्[13] ॥ ७६ ॥

[मञ्जीरनूपुरशफाणुतरण्डमेढ्राः[14]
संसारचूर्णवटवासरजन्तुसस्त्राः ।

---

१ कर्प्पूरकर्प्पासक॰ E.; D. om. śloka 76 with comment

२ निष्ठिव C., om. A.; सवर्ण॰ A.E.; ॰सुवर्ण॰ B. C.

३ पिनाकपस्तौ॰ F.; पण्याक॰ नखेषुषडा A.; खंडा B. C. E. F.

४ वैनीतिकं॰ A. B. C. E. (D. n. १).

५ कूर्परे॰ कूर्पासकः F.

६ Thus MSS. (कंत्रकि॰ A.); Kshîr. A. K. 2, 6, 3, 19: कुर्परेऽस्यते कुर्पास स्त्रीणां कञ्चुलिकाख्यः ॥

७ षष्टि सखावाची C.; षष्टिः॰ F.

८ Pâṇ. v. 2, 110.

९ निष्टिवो निष्टावनं C.

१० सुवर्णं॰ B. C.; गरुडं B. C. F.; cf. Hem. Anek.; सवर्णं । अर्थस्तु यमप्यूह्यः । A.; for D. see note १.

११ खंडः B. C. F.

१२ वैनीतिकं MSS.; D. see note १.

१३ पित्तला A. B.; पित्तलाः C.; for D. see note १.

१४ ॰शिफाणु॰ B. C.; A D. E. om. this śloka and comment.

कोलाहलः ककुभजानुभगाब्दवेषा
वित्तस्वभूर्जलशुनाः शललं च गेहम् ॥ ७७ ॥]

मञ्जीरो हंसकम् ॥ * ॥ नूपुरं तुलाकोटिः ॥ * ॥ शफं[1] खुरः ॥ * ॥ अणुः सूक्ष्मपरिमाणविशेषोऽन्नविशेषश्च ॥ * ॥ तरण्डं प्लवः ॥ * ॥ मेढ्रं मेहनम् । यथा । ह्रस्वं वृत्तं मृदु स्थूलं मेढ्रं शस्तं[2] महासुखं ॥ * ॥ संसारं जगत् ॥ * ॥ चूर्णं चोदः ॥ * ॥ वटं तुल्यता गोलस्य[3] ॥ * ॥ वासरं दिनम् । यथा ।

वासराणि कतिचित्कथंचन स्थाणुना पदमकार्यत प्रिया[4] ॥

जन्तुसत्त्वेति । जन्तौ प्राण्यभिधेये सत्त्वं पुंनपुंसकं भवति । यथा । वन्याद्विनेष्यन्निव दुष्टसत्त्वान्[5] ॥ जन्ताविति किम् । सत्त्वं द्रव्यं प्रकृतिगुणश्च ॥ * ॥ कोलाहलम् । अव्यक्तो ध्वनिः ॥ * ॥ ककुभो वीणावादनम् ॥ * ॥ जानु । अष्ठीवान् । यथा । जानुमस्य गृह्णीयात्[6] ॥ * ॥ भगं योनिः ॥ * ॥ अब्दं संवत्सरः ॥ * ॥ वेषो नेपथ्यम् ॥ * ॥ वित्ते स्वम् । वित्ते वाच्ये स्वं पुंनपुंसकम् । स्वाः । स्वानि ॥ * ॥ भूर्जो वृक्षविशेषः ॥ * ॥ लशुनः । रसोनः स्निग्धश्चोष्णश्च लशुनः कटुको गुरुः ॥ * ॥ शललं सल्लकसूची[7] ॥ * ॥ गेहं वेश्म ॥ * ॥ अरुणदत्ताभिप्रायेणैते दर्शिताः ॥ ७७ ॥ इत्यर्धर्चादिः ॥

राजदन्तार्पितोतावक्लिन्नपक्वपरःशताः ।
नृवरोऽग्र्यवर्णा भृष्टलुञ्चितो लिप्तवासितः[8] ॥ ७८ ॥

राजदन्तादौ समासे पूर्वनिपातो न भवति[9] । दन्तानां राजा ।

१ शिफं B. C.
२ मेढ्रः शिश्नं F.; cf. Brihats. 68, 7-8.
३ गुलकस्य B. C.
४ Kum. S. 8, 13.
५ Raghuv. 2, 8.
६ मृद्नीयात् B.; मृड्नीयात् F.
७ सल्लं सल्लकपूर्वः C.
८ पक्वशरः॰ नृवराग्र्यवर्णा॰ A.
९ F. om. न भवति.

राजदन्तः। प्रमुखदृश्यदन्तद्वयम्। अत्र षष्ठीत्यनेन[१]। यदा तु राजा च दन्ताश्चेति समासान्तरं[२] तदा न नियमः ॥ * ॥ पूर्वमुतम्[३] आतानवितानीकृतं पश्चादर्पितम्। अर्पितोतम्। यथा।

ज्योत्स्नापटे तुहिनदीधितिनार्पितोते[४]

द्यौराश नग्नमुषितेव हृतेऽरुणेन[५]।

व्योमोप्तगाढमिव भानुमरीचिसस्यं[६]

विक्लिन्नपक्वफलिनीफलवच्च बभ्रे ॥[७]

पूर्वं पक्वं पश्चादवक्लिन्नम् आर्द्रम्। अवक्लिन्नपक्वम्।[८] अनयोरेकादिसूत्रेण ॥ * ॥ शतात्परे। परःशताः। यथा।

स जवेन पतन्परःशतानां पततां व्रात इवारवं वितेने[९]।

पृषोदरादित्वात्सकारागमः। अत्र पञ्चमीसूत्रेण[१०] ॥ * ॥ ना चासौ वरश्च। नृवरः। प्रधानपुरुषः ॥ * ॥ वनस्याग्रे। अग्रेवणम्। अत एव पाठात्सप्तम्या अलुक्। अस्याव्ययीभावत्वात्।

बहुधा भिन्नमर्माणो[११] भीमाः खरणसादयः।

अग्रेवणं वर्तमाने प्रतीच्यां चन्द्रमण्डले ॥

वनस्याग्रम् अग्रेवणमित्येके[१२]। निपातनाण्णत्वम्। अत्र षष्ठीसूत्रेण ॥ * ॥ पूर्वं लुञ्चितम् अपनीतं पश्चाद्भृष्टं पक्वम्। भृष्टलुञ्चितम्। यथा।

---

१ Cf. Pâṇ. ii. 2, 8.

२ यसा तु राजदंताश्चेति° A.; °समासानंतरं C.

३ पूर्वमूतं F.

४ दीधिनार्पितोते F.

५ हतेऽरुणेन A. B. C.

६ शस्यं A. D. F.; सस्यविक्लिन्न° C.; D. om. from the beginning of śloka 77 to व्योमोप्तगाढमिव.

७ °फलवभ्रुपूर्वम्° C.; पलिनीफलवच्च वभ्रो D.

८ A. D. add विक्लिन्नं.—For एकादिसूत्रेण cf. Pâṇ. ii. 1, 49.

९ Kirât. 13, 26.

१० Cf. Pâṇ. ii. 1, 37-9.

११ भिन्नधर्माणो all MSS.; Bhaṭṭ. 9, 93.

१२ वणस्यायमग्रवणमित्येके F.

यद्भृष्टलुञ्चितशशेव शशाङ्कपाची[1] ॥ * ॥

पूर्वं वासितं भावितं पश्चाल्लिप्तं दिग्धं लिप्तवासितं । अनयोरेकादिसूत्रेण । यथा । यल्लिप्तवासितमिव द्युसदोऽजवातैः ॥ ७८ ॥

**उप्तगाढकुरुश्रेष्ठौ सिक्तसंमृष्टसंयुतौ[2] ।**
**उत्तमर्णाधमर्णौ च परःसहस्र इत्यपि ॥ ७९ ॥**

पूर्वं गाढम् अवलोडितं पश्चादुप्तम् उप्तगाढम् । अत्रैकादिसूत्रेण । यथा । व्योमोप्तगाढमिव भानुमरीचिसस्यम्[3] ॥ * ॥ कुरुस्वामी श्रेष्ठस्य । कुरुश्रेष्ठः ॥ * ॥ पूर्वं संमृष्टं पश्चात्सिक्तम् । सिक्तसंमृष्टम्[4] ॥ सिक्तसंसृष्टमित्यन्ये[5] ॥ अत्रैकादिसूत्रेण । यथा ।

यत्सिक्तमृष्टमसृणेव नभोऽङ्गणश्रीः[6] ॥

ऋण उत्तमः । उत्तमर्णः ॥ ऋणेऽधमः । अधमर्णः । अत्र सप्तमी शौण्डैरित्यनेन[7] ॥ * ॥ सहस्रात्परे । परःसहस्राः । अत्र पञ्चमीत्यनेन ॥ शतसहस्रावित्युपलक्षणम् । तेन

परोरजोभिः स्वगुणैरगाधः सगाधिपुत्रोऽपि गृहानुपैति[8] ।

इत्यपि सिद्धं भवति । पृषोदरादावप्येतद्द्रष्टव्यम्[9] ॥ ७८ ॥

**कुबेरकेशवौ ब्रह्मातपसी विष्णुवासवौ ।**
**सोमरुद्रौ शिरोजानु चित्रास्वाती शिरोविजु[10] ॥ ८० ॥**

---

१ यल्लिप्तवासितमिव द्वित्पदोज्ववातैर्यत्सिक्तमृष्टमसृणेव नभोंगणश्रीः यद्भृष्टलुंचितशसेव शशाकपाची तत्प्रातरासभके । द्विवचालसूर्यः । D.

२ Thus D. E.; सिक्तसंसृष्टसंयुतौ A. B. C. F.

३ °शस्यं A. D.; C. om. from पूर्वं गाढं to कुरुश्रेष्ठः.

४ पूर्वं संसृष्टं° सिक्तसंसृष्टं MSS.

५ °समृष्टमित्यन्ये C.; । संमृष्ट° F.

६ नभोगणश्रीः A.; ऽगणः श्रीः B.

७ Pâṇ. ii. 1, 40.

८ Anarghar. (Calc. Ș. 1782) I, 21.

९ एतत्सिद्धं द्रष्टव्यं F.; cf. șl. 145-6.

१० °चित्रस्वाती° F.; शिरोविजुः B. C. F.; शिरोविदुः A.; शिरोविज्ञः D.

कुबेरश्च केशवश्च। कुबेरकेशवौ। पूज्यद्वारेण ॥ * ॥ श्रद्धा च तपश्च। श्रद्धातपसी। लघुद्वारेण ॥ * ॥ विष्णुश्च वासवश्च। विष्णुवासवौ। वर्णभ्रातृणामनुपूर्वमित्यनेन[१] ॥ * ॥ सोमश्च रुद्रश्च। सोमरुद्रौ। पूज्यद्वारेण ॥ * ॥ शिरश्च जानुश्च। शिरोजानु ॥ * ॥ चित्रा च स्वातिश्च। चित्रास्वाती ॥ * ॥ शिरश्च विजुश्च। शिरोविजु।[२] विजुर्ग्रीवा स्कन्धो वा। असखियुद्द्वारेण[३] ॥ भोजस्तु शिरोविजू[४] इत्याह ॥ ८० ॥

जंपती दंपती जायापती पुत्रपती तथा।
गौपालिधानपूलासविष्वक्सेनार्जुना मताः[५] ॥ ८१ ॥

जाया च पतिश्च। जंपती। दंपती। जायापती। इह पाठाज्जायाशब्दस्य जंदंभावश्च[६] ॥ * ॥ पुत्रश्च पतिश्च। पुत्रपती। एषामसखियुद्द्वारेण ॥ * ॥ गाः पालयतीति गोपालः। तस्यापत्यं गौपालिः[७]। स धीयते यस्मिंस्तद् गौपालिधानम्। ग्रामोऽवस्थानं वा[८] ॥ पूलानस्यतीति पूलासः ॥ गौपालिधानं च पूलासश्च। गौपालिधानपूलासम् ॥ अल्पाज्द्वारेण[९] ॥ * ॥ विष्वक्सेनश्चार्जुनश्च। विष्वक्सेनार्जुनौ। अजाद्यद्द्वारेण[१०]। यदा पूज्यता न विवक्ष्यते तदा परनिपातार्थः पाठः। अथवा। विष्णोरन्यो विष्वक्सेनः ॥ ८१ ॥

---

१ Cf. Pâṇ. ii. 2, 34, Vs. 5, 6.

२ शिरोविजुः।° A. B. C. F.; विजुग्रीवा° A. B. C.; विज्जश्च। शिरोविज्ज। विज्ज ग्रीवा° D.

३ युत् (MSS. mostly यु) prâtip. in इ and उ; cf. Pâṇ. ii. 2, 32.

४ शिरोविद्रू A.; शिरोविज D.

५ गोपालिधान° A.

६ जाया च पतिश्च जायापती ॥ C.

७ गोपालिः A.

८ ग्रामो वा अवस्थानं वा A. D.; ग्रावोऽव° F.

९ Cf. Pâṇ. ii. 2, 34.

१० A. and D. read this reference generally अजाद्यद्वारेण; B. C. and F. throughout अजाद्यज्द्वारेण; [D. here अजाद्यदंत्तद्वा°, and once अजाद्यतद्वा°] cf. P. ii. 2, 33.

वैकारिमतं तण्डुलकिण्वावन्त्यश्मकाश्च दारगवम्।
केशश्मश्रु स्नातकराजानौ नग्नमुषितश्च ॥ ८२ ॥

विकारस्यापत्यं वैकारिः। स च मतश्च। वैकारिमतम्। अल्पाज्द्वारेण॥ शाकटायनस्तु वैकारेर्मतो वैकारिमतः। गाजयतीति गाजः। वाजयतीति[1] वाजः। गाजस्य वाजः। गाजवाजः[2]। वैकारिमतश्च गाजवाजश्च। वैकारिमतगाजवाजमित्याह॥ * ॥ तण्डुलाश्च किण्वं च। तण्डुलकिण्वम्॥ * ॥ अवन्तिर्नाम राजा जनपदो वा। अश्मका नाम जनपदः[3]। अवन्तयश्चाश्मकाश्च। अवन्त्यश्मकम्। अजाद्यद्द्वारेण॥ * ॥ दाराश्च गौश्च। दारगवम्। अल्पाज्द्वारेण॥ * ॥ केशाश्च श्मश्रु च[4]। केशश्मश्रु॥ केशश्मश्रू[5] इति भोजः॥ असखियुद्द्वारेण॥ * ॥ स्नातकः समाप्तवेदः। स च राजा च। स्नातकराजानौ। अल्पाज्द्वारेण॥ * ॥ पूर्वं मुषितः पश्चान्नग्नः। नग्नमुषितः। यथा।

घौरास नग्नमुषितेव हृतेऽरुणेन[6]।

एकादिसूत्रेण॥ ८२॥

दृषदुपलं पुत्रपशू पूलासकुण्डगाजवाजानि[7]।
आरट्वायनिचान्धनिसिञ्जास्योशीरबीजानि[8]॥ ८३॥

दृषच्चोपलं च। दृषदुपलम्। अजाद्यद्द्वारेण॥ * ॥ पुत्रश्च पशुश्च।

---

१ वाजयंतीति C.

२ गाजश्च वाजश्च गाजवाजं F.

३ अश्मकोवाजनाम जनपदः A.; अश्मको नाम° F.

४ श्मश्रुश्च B. C. F.

५ केशश्मश्रु A.; om. C.; B. om. केशश्मश्रु.

६ नग्नमुखिते° F.; हृतेऽरु° A.B.C.D.

७ पूलाश° B. C.

८ आरद्वानिचांधविशिजा° A.; आरद्वापनि° D.; आरह्वयनिवांधनि° E.; आरट्टायनि° D. C. F.—Cf. śl. 83 (अरट्टस्य। आरट्टी?) and 231 (*tikâdi* where MSS. and Kâś. V. आरद्वायनि!).

पुत्रपशू । असखियुद्द्वारेण ॥ * ॥ पूलासश्च कुरण्डश्च । पूलासकुरण्डम्[१] ॥ शाकटायनस्तु कुरण्डानां स्थलं कुरण्डस्थलम् । कुरण्डस्थलं च पूलासश्च । कुरण्डस्थलपूलासमित्युवाच[२] ॥ * ॥ गाजश्च वाजश्च । गाजवाजम् ॥ अन्यस्तु । गजानां समूहो गाजम् । वाजिनां समूहो वाजम् । गाजं च वाजं चेति गाजवाजम् । तत्प्रत्ययस्तु[३] गणपाठादेव न भवतीत्याह ॥ अनियमप्रसङ्गे वाजशब्दस्यैव परनिपातः ॥ * ॥ आरटतीति । आरड्वो नाम कश्चित् । तस्यापत्यम् आरड्वायनिः[४] । तिकादित्वात् फिञ्[५] ॥ चर्म्यं भक्ष्यं धनमस्य । तस्यापत्यं चान्धनिः[६] ॥ आरड्वायनिश्च चान्धनिश्च । आरड्वायनिचान्धनि[७] । अल्पाज्द्वारेण ॥ कश्चिद् आरड्वायनिबन्धनीत्याह[८] । पाणिनिस्तु । आरड्वायनिबन्धकीत्याह[९] ॥ * ॥ सिञ्जनं सिञ्जा । आस्थानम् आस्था । सिञ्जा चास्था च । सिञ्जास्थम् । अत्रानियमे प्राप्ते नियमः ॥ * ॥ उशीरं च बीजं च । उशीरबीजम् ॥ शाकटायनस्तु । उशीरं बीजं यस्मिन् । उशीरबीजो नाम पर्वतः । सिञ्जायां तिष्ठतीति सिञ्जास्थः पर्वतः । उशीरबीजश्च सिञ्जास्थश्च । उशीरबीजसिञ्जास्थम्[१०] ॥ अल्पाज्द्वारेण ॥ ८३ ॥

---

१ °कुरंडं A.; पूलाश° twice B. C.

२ A. thrice कुरंड° (om. कुरण्डानां स्थलं); B. C. twice पूलाश°.

३ तत्प्रापयस्तु A.; तत्प्रयोजनस्तु C.; ततः प्रत्ययस्तु D.; A. om. from गाजं च to गाजवाहम्.

४ आरद्वो °आरद्वायनिः A.; D. corr. आरट्टा° आरट्टायनिः (orig. ड्व); आरट्टो° आरट्टायनिः B. C. F.; cf. p. १२३, note ८.

५ पिञ् A. B. (*tikâdi* śl. 231).

६ चर्म्म भक्ष्यं °चाधनिः A.; चं भक्ष्यं F.; चम्यं लक्ष्यं C.; वस्यं °वंधनीत्याह D.

७ आरट्टायनि° twice B. C. F.; आरढायनिश्च रांधनिश्च आरद्वायनिचांधनि A.

८ ? आरद्वायनचांधतीत्याह A.; D. om. from आरट्टायनिश्च, but see note ६.

९ आरट्टा° B. C. F.; A. D. om. from पाणिनिस्तु [*gaṇa* Pâṇ. ii. 2, 31, आरग्वायनिबन्धकी; id. Kâś. V. ed.; MS. I. O. 2440 आद्यजनवंधकी; MS. Beng. As. Soc. आरधापनिवंधुकी].

१० उसीरवीजश्च° उसीर° D.

विषयेन्द्रियाधरौष्ठाः स्थलपूलासं च दारजारौ च ।
भार्यापती उलूखलमुसलाक्षिभ्रुवगजाश्वशूद्रार्याः[1] ॥ ८४ ॥

विषयाश्चेन्द्रियाणि च । विषयेन्द्रियाणि । अजाद्यदन्तद्वारेण ॥ * ॥ अधरश्चौष्ठश्च । अधरौष्ठम्[2] । अल्पाज्द्वारेण ॥ * ॥ स्थलं च पूलासश्च[3] । स्थलपूलासम् ॥ * ॥ दारयति हृदयमिति दारः । जरयतीति[4] जारः । दारश्च जारश्च । दारजारौ । अत्रानियमप्रसङ्गे दारशब्द एकवचनान्तोऽपि दृश्यते । यथा । धर्मप्रजासंपन्ने दारे नान्यं कुर्वीत ॥ * ॥ भार्या च पतिश्च । भार्यापती । असखियुद्द्वारेण ॥ * ॥ उरूयन्त इत्युर्वो धान्यानि । आप्ये क्विप् । उर्वः[5] खल्यन्ते संचीयन्ते प्रक्षिप्यन्त इति । उलूखलम् । तच्च मुसलं च । उलूखलमुसलम्[6] ॥ * ॥ अक्षिणी च भ्रुवौ च । अक्षिभ्रुवम् । अत एव पाठात्समासान्तः ॥ अनयोरल्पाज्द्वारेण ॥ * ॥ गजश्चाश्वश्च । गजाश्वौ ॥ * ॥ शूद्रश्चार्यश्च । शूद्रार्यौ ॥ अनयोरजाद्यदन्तद्वारेण ॥ ८४ ॥

काकमयूरौ मेधातपसी दारार्थपाण्डुधृतराष्ट्राः ।
नरनारायणदीक्षातपसी चित्ररथबाल्हीकौ ॥ ८५ ॥

काकश्च मयूरश्च । काकमयूरौ ॥ * ॥ मेधा च तपश्च । मेधातपसी । अनयोरर्च्यलघुद्वारेण[7] ॥ * ॥ दाराश्चार्थश्च । दारार्थम् । अजाद्यदन्तद्वा-

[1] °उदूखल° A. B. D.; मुशला° A. B. C. F.

[2] अधरस्य ओष्ठं च °D.; अधरोष्ठं B. C. F.

[3] पूलासं च C.; °शु° D.

[4] जारयतीति A. D.; thus also MS. Kshîr. on A. K. 2, 6, 1, 35.

[5] उलूयंत इति° D.; इति उल्ला° उल्लः C.; इति उल्लो° उल्लः F.

[6] °उदूखल° A. B. D. F.; °मुशल° A. B. C. F. throughout.

[7] अनयोरर्थ्यलघु° A. perhaps right; °अनयोरपालघुद्वारेण D.; cf. P. ii. 2, 34 Vs. 3 and 4.

रेण ॥ * ॥ पाण्डुश्च धृतराष्ट्रश्च । पाण्डुधृतराष्ट्रौ । वर्णभ्रातृणामनुपूर्वमित्यनेन ॥ * ॥ नरश्च नारायणश्च । नरनारायणौ ॥ * ॥ दीक्षा च तपश्च । दीक्षातपसी ॥ अनयोरर्च्यलघुद्वारेण[1] ॥ * ॥ चित्ररथश्च बाल्हीकश्च । चित्ररथबाल्हीकौ राजानौ । अल्पाज्द्वारेण । पाणिनिवामनमतेन ॥ शाकटायनस्तु बल्होऽस्यास्तीति बल्ही । बल्हीव बल्हिकः[2] । संज्ञाप्रतिकृत्योरित्यनेन[3] के । चित्ररथबल्हिकम्[4] ॥ भोजस्तु चित्ररथवाल्हिकावस्मिन्गणे[5] पपाठ । उणादिमध्ये तु मृद्वीकातिन्तिडीकबाल्हीकवल्मीककल्मीककिङ्किणीकापुण्डरीकचञ्चरीकसमीकप्रतीकपूतीकपर्फरीकादय[6] इत्यस्मिन् बाल्हीकमिति प्रादर्शयत्[7] ॥ एतेषामेतैः सूत्रैः प्राङ्निपाते प्राप्ते परनिपातः क्रियते ॥ ८५ ॥

पूर्वोऽप्यर्थो धर्मतः शब्दकामाद्
इन्द्रार्कान्तेभ्योऽग्निचन्द्रादयोऽपि ।
भीष्मादित्यं द्रोणचन्द्राच्च राहोश्[8]
चन्द्रो भीष्मो वा वसन्ताद्विभाव्यः ॥ ८६ ॥

पूर्वोऽप्यर्थ इति न केवलं धर्मशब्दकामेभ्यः पूर्वोऽर्थशब्दः परोऽपि द्रष्टव्यो गणपाठसामर्थ्यात् । अर्थश्च धर्मश्च । अर्थधर्मौ । धर्मार्थौ ॥

---

१ अर्च्यालघु° D.

२ ?Thus A.(व°); वाल्हो° वाल्ही । वाल्हीव वाल्हिकः B. C. D.; बाल्हो °बाल्ही । स एव बाल्हीकः F.

३ संज्ञाप्रकृत्योर् A.; cf. Pâṇ. v. 3, 96-7.

४ Thus A. D. F.; चित्ररथवाल्हिकं B. C.

५ चैत्ररथवाल्हीकाव° F.

६ तृद्वीका D.; तित्तिडीक A. D.; वाल्हिक C.; B. C. F. om. कल्मीक; B. om. चञ्चरीक; ववरीक C.; C. om. प्रतीक; A. om. पूतीक; cf. Uṇ. S. 4, 16-25.

७ प्रदर्शयति C.; प्रदर्शयत B.; प्रादर्शयत D.; प्रदर्शयंत F.

८ भीष्मादित्यौ° E.; भीष्मादित्यद्रोण° C. F.; °द्रोणचंद्रान्वरोहोश् A.

अर्थशब्दौ । शब्दार्थौ ॥ अर्थकामौ । कामार्थौ ॥ * ॥ न केवलम् अग्नि-चन्द्रादयः पूर्वं भवन्ति परतोऽपि । अग्निश्चेन्द्रश्च । अग्नीन्द्रौ । इन्द्राग्नी ॥ * ॥ चन्द्रार्कौ । अर्कचन्द्रौ ॥ * ॥ आद्यन्तौ । अन्तादी ॥ * ॥ भीष्मद्रोणौ । द्रोणभीष्मौ ॥ * ॥ चन्द्रादित्यौ । आदित्यचन्द्रौ ॥ * ॥ राहुचन्द्रौ । चन्द्रराहू ॥ * ॥ ग्रीष्मवसन्तौ । वसन्तग्रीष्मौ ॥ ८६ ॥

शुक्रशुचिकरभरासभगुणवृद्धिसमीरणाग्निकुशकाशाः ।
सर्पिर्मधुदीर्घलघू सतपःश्रुतपाणिनीयरौढीयाः ॥ ८७ ॥

शुक्रशुच्यादयः शब्दाः शकृन्मूत्रशब्दपर्यन्ता विपर्ययेणापि भवन्ति ॥ शुक्रश्च शुचिश्च । शुक्रशुची । शुचिशुक्रौ ॥ * ॥ करभरासभौ । रासभकरभौ ॥ * ॥ गुणवृद्धी । वृद्धिगुणौ ॥ * ॥ समीरणाग्नी । अग्निसमीरणौ ॥ * ॥ कुशकाशम् । काशकुशम् ॥ * ॥ सर्पिर्मधुनी । मधुसर्पिषी ॥ * ॥ दीर्घलघू । लघुदीर्घौ ॥ * ॥ सतपःश्रुतेति । सह तपःश्रुताभ्यां वर्तन्ते । सतपःश्रुताः । सतपःश्रुताश्च ते पाणिनीयरौढीयाश्च ॥ तपःश्रुते । श्रुततपसी ॥ * ॥ पाणिनीयरौढीयाः । रौढीयपाणिनीयाः[1] ॥ ८७ ॥

भीमसेनार्जुनावेतौ कपित्थाश्वत्थसंयुतौ ।
शकृन्मूत्रं कृतद्वन्द्वा[2] व्यत्यासेन सतां मताः ॥ ८८ ॥

भीमसेनार्जुनौ । अर्जुनभीमसेनौ ॥ * ॥ कपित्थाश्वत्थौ । अश्वत्थकपित्थौ ॥ * ॥ शकृन्मूत्रम् । मूत्रशकृत् ॥ * ॥ एतेषां स्त्रीयस्त्रीयसूत्रेण नियमे प्राप्ते गणपाठाद्विकल्पः ॥ सतां मता इति साभिप्रायम्[3] । तेन

---

१ C. has throughout रौठीय.
२ सकृन्मूत्रं° A.; शकृन्मूत्रपर्यंता F.
३ सतां मतः । मतांसतः । सतां मतां सत्य इति साभिप्रायं C.; F. adds वचनं.

जित्याविपूयविनीयाः । विपूयविनीयजित्याः ॥ देवापिशन्तनू । शन्तनुदेवापी इत्यादयोऽपि भवन्ति ॥ ८८ ॥ इति राजदन्तादिः ॥

**कडारः पिङ्गलो गौरो भिक्षुकः खलतिस्तनुः ।**
**शौण्डः कुण्टो वृकः खञ्जो बठरो गडुलस्तथा[1] ॥ ८९ ॥**

कडारादयः शब्दाः कडाराः कर्मधारये वेत्यनेन पूर्वं वा निपतन्ति । कडारजैमिनिः । जैमिनिकडारः[2] ॥ * ॥ पिङ्गलमाण्डव्यः । माण्डव्यपिङ्गलः[3] ॥ * ॥ गौरगोतमः । गोतमगौरः[4] ॥ * ॥ भिक्षुकदाक्षिः । दाक्षिभिक्षुकः ॥ * ॥ खलतिखारपायणः । खारपायणखलतिः ॥ * ॥ तनुतृणबिन्दुः । तृणबिन्दुतनुः । तनुशब्दः कृशवाची[5] ॥ * ॥ शौण्डलिगुः । लिगुशौण्डः[6] ॥ * ॥ कुण्टमाण्टिः । माण्टिकुण्टः[7] ॥ * ॥ वृकशाण्डिल्यः । शाण्डिल्यवृकः ॥ * ॥ खञ्जवात्स्यः । वात्स्यखञ्जः[8] ॥ * ॥ बठरच्छान्दसः । छान्दसबठरः[9] ॥ * ॥ गडुलगालवः । गालवगडुलः ॥ ८९ ॥

**वृद्धखोडाविमौ काणः कूटखेलौ च कीर्तितौ ।**
**आहिताग्निगतार्थोढभार्यपीतघृतप्रियाः ॥ ९० ॥**

वृद्धमनुः । मनुवृद्धः ॥ * ॥ खोडकहोडः । कहोडखोडः ॥ * ॥ काणद्रोणः । द्रोणकाणः ॥ * ॥ कूटदाक्षिः । दाक्षिकूटः ॥ * ॥ खेल-

---

१ खंडो बठरो° C.; बठरोडुलस्तथा A.; वंठरो° F.

२ कडारजैमनिः। जैमनिकडारः (जैमनिः क° A.) A. B. D.

३ पिंगलमाढव्यः । माढव्यपिंगलः F.

४ गौरगौतमः । गौतमगौरः D. F.

५ कृशाऽर्थवाची F.

६ लिगुंशौंडः D.; शौंडलिंगुः । लिंगुशौंडः F.

७ कुंडमांडिः । मांठिकुंटः A.

८ खंडवात्स्यः । °खंडः । C.

९ वठरः च्छांदसः° A.; वंठर° वंठरः F.; ववर° । °ववट । D.

शाण्डिल्यः । शाण्डिल्यखेलः ॥ * ॥ एतेषां गुणवचनत्वात्पचे परत्वार्थं वचनम् ॥ * ॥ इति कडारादिः ॥

एते शब्दा बहुव्रीहौ प्राप्तपूर्वनिपाताः सन्तो[1] वाहिताग्न्यादाविल्यनेन पूर्वपदत्वभाजो वा भवन्ति ॥ आहितोऽग्निर्येन स आहिताग्निः । अग्न्याहितः । यथा च भट्टिकाव्ये ।

अग्न्याहितजनप्रष्ठे विजिगीषापराङ्मुखे ।
कस्माद्दा नीतितीच्णस्य संरम्भस्तव तापसे[2] ॥

यथा वा । प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः[3] सामिधेनीरधीत्य ।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्
हुतमयमुपलीढे साधु सांनाय्यमग्निः[4] ॥

गतोऽर्थो यस्यासौ गतार्थः । अर्थगतः ॥ * ॥ ऊढा भार्या येन । ऊढभार्यः । भार्योढः ॥ * ॥ पीतं घृतं येन । पीतघृतः । घृतपीतः ॥ * ॥ प्रियशब्दस्य केवलस्येहोपदेशादुत्तरपदमनियतम् । तेन प्रियगुडः । गुडप्रियः ॥ प्रियविश्वः । विश्वप्रियः ॥ प्रियद्विः । द्विप्रियः ॥ एतेन चाहिताग्न्यादयो गणाधीता एव ग्राह्या नाधिकप्रयोगाः[5] । तेनाहितवसुरित्यादौ यथाप्राप्तं स्यान्न विकल्पः ॥ ९० ॥

**जाताद्न्तः सपुत्रोऽथ तैलं मद्यं च पीततः ।**
**गड्वादेः सप्तमी क्तान्तं जातिकालसुखादितः ॥ ९१ ॥**

---

१ सतो A. D.; संति C.; cf. P. ii. 2, 37.

२ Bhaṭṭ. 9, 111; °नीतीतिजस्य° D.: नीतिनिष्णस्य ed. 1828; B. C. F. om. from भट्टिकाव्ये to यथा वा.

३ Śiśup. 4, 41; °विरच्चैः A.; विरिञ्चैः D.

४ B. C. F. om. from कृतगुरु°.

५ एतेन वाहि° B. C.; नाधिकाप्रयोगाः C.

जाता दन्ता अस्य। जातदन्तः। दन्तजातः ॥ * ॥ पुत्रो जातोऽस्य पुत्रजातः। जातपुत्रः ॥ * ॥ तैलं पीतं येन। पीततैलः। तैलपीतः ॥ * ॥ मद्यं पीतं येन। मद्यपीतः। पीतमद्यः ॥ * ॥ गड्वादेः सप्तमीति गड्वादिभ्यः सप्तम्यन्तो[1] बहुव्रीहौ पूर्वं वा निपतति। गडुः कण्ठे यस्य। गडुकण्ठः। कण्ठेगडुः[2] ॥ गडुशिराः। शिरसिगडुः[3] ॥ गुरुमध्यः। मध्येगुरुः[4] ॥ गुर्वन्तः। अन्तेगुरुः[5] ॥ इन्दुर्मौलौ यस्य। इन्दुमौलिः। मौलीन्दुः। यथा च।

मौलीन्दोर्मौलिभूषा मनसिजनृपतेरान्तरः केलिकोशः
प्राचीदिङ्नायिकायाः[6] कनकविरचितप्रौढताडङ्ककान्तिः[7]।
पीयूषासारवर्षी त्रिभुवननयनानन्दवृन्दैकपात्रं
देवः श्रीश्वेतभानुर्जयति कुमुदिनीबान्धवः सिन्धुजन्मा ॥

भोजस्तु नेन्दादिभ्य[8] इत्यनेन निषेधान्मौलीन्दुरिति मन्यते[9] ॥ समर्थाधिकाराद् वक्षेगडुरित्येव[10] भवति। तथा शशिशेखरः। पद्मनाभः। ऊर्णनाभः। शङ्खपाणिः। पद्मपाणिरित्यादौ परनिपात एव ॥ * ॥ क्तान्तमित्यादि। क्तान्तं च वा पूर्वं निपतति ॥ जातेः। पलाण्डुभक्षिती। भक्षितपलाण्डुः ॥ सारङ्गजग्धी। जग्धसारङ्गः[11] ॥ पाणिगृहीती। गृहीतपाणिः ॥ * ॥ कालात् ॥ मासजाता। जातमासा ॥ संवत्सरजाता। जातसंवत्सरा ॥ * ॥ सुखादेः। सुखजाता। जातसुखा ॥ जातदुःखा।

---

१ सप्तम्यंतं A. D.; cf. P. ii. 2, 35 V. 3.
२ कंठगडुः A. B. C. F.
३ F. adds शिरोगडुरित्यपि.
४ मध्यगुरुः C. and om. शिरसिगडुः.
५ अंतगुरुः F.
६ दिग्मायकायाः A. F.
७ °प्रौढतांडङ्कांतिः A.; °ताटंककांतिः F
८ गंड्वादिभ्य C.
९ इति न मन्यते F.
१० कंठेगडु° C.; cf. Kâs. V. ii. 2, 35.
११ Thus D. F.; सांगरजग्धी जग्धसांगरः। A.; शांगरजग्धी जग्धशांगरः B. C. [सारङ्गजग्धः Kâs. V. vi. 2, 170; शार्ङ्गजग्धी ii. 2, 36, ed.; MSS. सारङ्ग°].

दुःखजाता ॥ तृप्तोत्पन्ना । उत्पन्नतृप्ता[1] ॥ न्यासकृता सुखादयो गुणवचना इत्युक्तम् । भोजस्तु सुखादयो द्रष्ट क्यङ्विधौ[2] निरूपिता इत्युक्तवान् जातिग्रहणमकृत्वाकृतिग्रहणात् ॥ आकृत्या संस्थानेन व्यज्यते सा जातिः । तेनेह न भवति । आहृतब्राह्मणः । सेवितक्षत्रियः । तर्पितदाक्षिः । प्रीणितकठ इत्येके ॥ जातिपरत्व आकृतेः पूर्वनिपातः । न व्यक्तिपरत्व इत्येके[3] ॥ ८१ ॥

**ज्ञेयो जातश्मश्रुः पीतदधिश्छिन्नशीर्षपीतविषाः ।**
**क्तः प्रहरणवाचिभ्यः[4] सप्तम्यपि संमता विदुषाम् ॥ ९२ ॥**

जातं श्मश्रु यस्य । जातश्मश्रुः । श्मश्रुजातः ॥ * ॥ पीतं दधि येन । पीतदधिः । दधिपीतः ॥ * ॥ छिन्नं शीर्षं यस्य । शीर्षच्छिन्नः । छिन्नशीर्षः ॥ * ॥ पीतं विषं येन । विषपीतः । पीतविषः ॥ * ॥ क्त इति । प्रहरणं धनुःखड्गाद्यर्थो येषां तेभ्यः क्तान्तं सप्तम्यन्तं च पूर्वं निपतति[5] । उद्यत उत्खातोऽसिर्येन स उद्यतासिः । अस्युद्यतः ॥ कलितप्रहरणः । प्रहरणकलितः ॥ दण्डः पाणौ यस्यासौ दण्डपाणिः । पाणिदण्डः । विश्रान्तन्यासकृत्त्वसमर्थत्वाद्[6] दण्डपाणिरित्येव मन्यते ॥ वज्रपाणिः । पाणिवज्रः । अविशेषोक्तावप्यसमर्थत्वात्[7] । शूलपाणिः । शार्ङ्गपाणिः । धनुष्पाणिः ॥ पाशहस्त इत्यादौ परनिपात एव ॥ आकृतिगणोऽयम् ॥ ८२ ॥ इत्याहिताग्न्यादिः ॥

१ तृप्तोत्पन्ना । उत्पन्नतृप्ता C.D. [Kâś. V, iii. 1, 18 MSS. तृप्र; ed. तृप्त (var. l. तीव्र); but cf. vi. 2, 170, ed. तृप्र].

२ क्यच्विधौ C.; क्यङ्विधौ D. F.; क्यद्विधौ A.; क्यड्विधौ B.; cf. P. iii. 1, 18.

३ ०परात्वे० C.; ०परत्वे पोत्रेके D.

४ क्तप्रहरण० A.; क्तःप्रेरण० E.

५ प्रहरणधनुः । षड्गाद्यर्था येषां० A.; प्रहरणां धनुः षडाद्येर्थो येषां० B.; ०खड्गादि । यथा एषां तेभ्यः क्तांतसप्त० C.

६ ०न्यासकृतुरसमर्थत्वात् F.

७ अविशेषात्तावपि ०प० F.

तिष्ठद्गु प्ररथं खलेबुसमधोनाभं समंभूमि च
प्राह्णं पुण्यसमं वहद्गु विषमं प्रान्तं तथा निःषमम्।
एकान्तं च समंपदाति सुषमं तीर्थं समानात्परम्
पूतेनान्वितपूयमानखलतो लूनाद्यवं वा बुशम्[१]॥९३॥

तिष्ठद्गु । इत्येवमादयः समासास्तिष्ठद्ग्वादिरयमित्यनेनाव्ययीभावसंज्ञा निपात्यन्ते[२]। अयमेव निपातितः समासो भवति नान्यः ॥ * ॥ तिष्ठन्ति गावो यस्मिन्काले दोहाय स कालस्तिष्ठद्गु । प्रथमरात्रेरर्धघटी । प्रावृट्काल इत्यन्ये । अयमेवेति वचनात्कथमयं भट्टिकाव्ये प्रयोगः ।

आतिष्ठद्गु जपन्संध्यां प्रक्रान्तामायतीगवम् ।
प्रातस्तरां पतत्रिभ्यः प्रबुद्धः प्रणमन् रविम्[३] ॥

तिष्ठद्गु यावद् आतिष्ठद्गूच्यते । भाष्योदाहरणात्तावदयं[४] विजातीयः । न च समासमात्रेण न भवितव्यमित्युक्तम्[५]। अभिधानप्रमाणश्च समासः ॥ * ॥ प्रगतलं रथस्य[६]। प्रगताः प्रभूता वा रथा अस्मिन्देशे[७]। प्ररथम् ॥ * ॥ खले बुसानि यत्र काले स कालः खलेबुसम्[८]॥ * ॥ नाभेरधोऽधोनाभं प्रहृतवान्[९]। गणपाठादकारः समासान्तः ॥ * ॥ समत्वं भूमेः। समंभूमि । निपातनान्मुगागमः ॥ शाकटायनस्तु समभूमीत्यप्याह ।

---

१ खलतौ° A. E.; बुसं (वुसं) A. B. C. E. F.; D. has वुशं both here and in the first pâda. Cf. note ११, p. १३३.

२ तिष्ठद्गु इत्येव समासस्ति° C.; °तिष्ठद्ग्वादिरयमित्य° A.; °दिरेवमित्यनेन° D.

३ Bhaṭṭik. 4, 14.

४ भाष्योदाहरणाभावादयं C.

५ °मात्रेण भवितव्य° D.

६ प्रगतं रथं यस्य C.

७ °प्रहृता वा रथा अस्मिन् वा देशे A. D.; C. om. प्रभूता.

८ वुशानि° खलेवुशं D.; cf. next page, note ११.

९ अधोभागं नाभं° B.; प्रहृतवान् B. C.

अन्यार्थत्वे तु[1]। समभूमयो वीथय इत्येवं यौगिकत्वेनास्य लक्षणस्य प्रवृत्तिः। अन्यार्थत्वेऽपि समभूमीति[2] केचित् ॥ * ॥ प्रगतत्वमह्नां प्रगतमह्न इति वा। प्राह्णम्। निपातनाद् अह्नादेशः ॥ * ॥ पुण्यत्वं समायाः पुण्या समेति वा। पुण्यसमम्। पुण्येन समं तृतीयासमासापवाद इति केचित्[3] ॥ * ॥ वहन्ति गावो यस्मिन्काले स कालो वहद्गु। शरत्काल[4] इत्यन्ये ॥ * ॥ विगतं समं विगतत्वं समस्य वा। विषमम् ॥ समाद्विप्रकृष्टो हीनो वा देश इति केचित् ॥ * ॥ प्रगतत्वमन्तस्य प्रगतोऽन्तोऽस्मिन्देश इति वा। प्रान्तम् ॥ * ॥ निर्गतं समं निर्गतत्वं समस्येति वा। निःषमम् ॥ समान्निष्क्रान्तो निःषममिति केचित् ॥ * ॥ एकोऽन्तो यस्य तद् एकान्तम् ॥ * ॥ समत्वं पदातेः। समंपदाति। निपातनान्मुगागमः ॥ समपदातीत्यपि[5] शाकटायनः ॥ अन्यार्थत्वे तु। समपदातयो राजान इति यौगिकत्वेनास्य लक्षणस्य प्रवृत्तिः[6] ॥ * ॥ शोभनाः समा यत्र स कालः सुषमम्। शोभनत्वं समस्येति वा ॥ * ॥ समानं तीर्थं तीर्थस्य समानत्वमिति वा। समानतीर्थम् ॥ * ॥ पूताः पूयमानाश्च यवा यत्र काले स पूतयवम्। पूनयवमिति भोजः[7] ॥ पूयमानयवं कालः ॥ * ॥ खलं[8] रणाजिरं धान्यावपनस्थानं च। खलन्ति संचीयन्ते[9] यशांसि शूरैर्धान्यानि वा यत्र तत् खलम्। खले[10] यवा बुशानि च[11] यस्मिन्काले

---

१ अन्यार्थे तु A.; अन्यार्थ तु orig. D.; B. C. om. तु.

२ समभूमिरिति D.

३ B. om. समं तृतीया; C. om. पुण्येन समं.

४ सरत्काल A. D.

५ समपदाती। अपि A.; समपदात्यपि C.; समंपदातीति D.

६ B. C. F. om. लक्षणस्य.

७ F. om. from पूनयव.

८ ॥ खले यवा बुसानि च खलं F.

९ खलति° C.; संवीयंते B.

१० A. om. from स पूतयवम्.

११ यवा धुनान्नि च A.; D. om. from च। खलन्ति; A. B. C. F. read बुस throughout. The distinction between बुस and बुश was probably not intended here by the author. Cf. p. १३२, n. १.

स[1] खलेयवम् । खलेबुसम् ॥ * ॥ लूना यवा यस्मिन्काले स लूनयवम् ॥ * ॥ वा बुसमिति वाशब्दो व्यवस्थावाची । तेन बुसशब्दः खलशब्दादेव द्रष्टव्यः ॥ ९३ ॥

**समपक्षं पापसमं समानतीरं प्रदक्षिणं प्रमृगम् ।**
**अपदक्षिणं च संप्रति वासंप्रति लूयमानयवम् ॥ ९४ ॥**

समत्वं पक्षस्य समः पक्षोऽस्मिन्निति वा । समपक्षं देशः ॥ * ॥ पापाः समा यस्मिन्युगे काले वा । पापसमम् ॥ * ॥ समानं तीरं समानत्वं तीरस्येति वा । समानतीरम् ॥ * ॥ प्रस्तुत्य दक्षिणतो भ्रमति । प्रदक्षिणम् । भोजस्तु प्रदक्षिणं वाममित्याह[2] ॥ प्रकृष्टत्वं दक्षिणाया वा । प्रदक्षिणम् ॥ * ॥ प्रगता मृगा यत्र काले यतो वाऽरण्यादेस्तत् प्रमृगम्[3] ॥ * ॥ अपगता दक्षिणा यत्र तद् अपदक्षिणम्[4] ॥ * ॥ संप्रतीति प्रादिसमुदायरूपः शब्दः । स एव नञ्संपर्काद् असंप्रति ॥ * ॥ लूयमाना यवा यत्र काले स लूयमानयवम् ॥ ९४ ॥

**संहृतसंह्रियमाणाद् बुसं यवं चायतीगवाविषमे ।**
**अपरायत्योश्च समं दुःषममिच्प्रत्ययोऽपि गणे ॥ ९५ ॥**

संहृतानि संह्रियमाणानि च बुसानि यवाश्च यत्र काले स कालः संहृतबुसम् । संह्रियमाणबुसम् ॥ संहृतयवम्[5] । संह्रियमाणयवम् ॥ * ॥ दोहार्थं जलपानार्थं निवासार्थं[6] वायत्यो गावो यत्र काले स आय-

१ निवापनं यस्मिन्° D.; F. om. from खलम् । खले.

२ भोजस्त्वप्रदक्षिणवाममि° प्रकृत्वं° A.; भोजस्तु प्रदक्षिणत्वमित्याह D.

३ D. om. यतो; F. om. वा; काले याता वारण्यदेशे प्रमृगं C.

४ अपगता दक्षिणं अपदक्षिणं C.

५ C. D. F. om. संह्रियमाणबुसं । संहृतयवं (supplying यथाक्रमं?).

६ A. om. निवासार्थं.

तीगवम्। यथा। आतिष्ठद्गु जपन्संध्यां प्रक्रान्तामायतीगवम्॥*॥ न विषमम्। अविषमम्॥*॥ अपरा आयत्यो वा समा यत्र काले सोऽपरसमम्। अवरसममिति भोजः[१]॥ आयतीसमम्॥*॥ दुष्टत्वं समाया दुष्टाः समा वा यत्र तद् दुःषमम्। गणपाठसामर्थ्यात्स्त्रीत्वनिवृत्तिः[२]॥*॥ इच्प्रत्ययोऽपीति। इज् युद्ध इत्यनेन[३] य इज् विहितस्तदन्तः शब्दोऽत्र गणे द्रष्टव्यः। तेन परमं भीमं वा केशाकेशीति समासारम्भकत्वं न भवति॥

तिष्ठद्गु वहद्गायतीगवं लूनलूयमानपूतपूयमानयवाः[४] खलेसंहृतसंह्रियमाणयवबुसाश्च कालविशेषवाचिन एव गणे द्रष्टव्याः[५]॥ अन्ये तु देशवृत्तित्वमपि मन्यन्ते। तेनान्यत्र पूर्वेण बहुव्रीहिः स्यात्। तिष्ठन्ति गावो यत्र स तिष्ठद्गुः। तिष्ठद्गवो ग्रामाः॥ वहन्त्यो गावो यत्र सा वहद्गुर्हलपङ्क्तिः। वहद्गवः कुटुम्बिनः॥ आयत्यो गावो यत्र स आयद्गुः॥ लूनयवेषु चैत्रेषु वसतीत्यादि॥ लूनयवादयस्तु प्रथमैकवचनान्ता एव प्रयोक्तव्याः। तेन द्वितीयादिका विभक्तिर्न भवति॥ समं भूमिपदातिभ्यामन्यपदार्थे[६] प्राऽह्नरथमृगदक्षिणाभिरित्येताभ्यां सूत्राभ्यां[७] कालभावयोरेवान्यपदार्थ इष्यते। तेन समा भूमिरस्मिन्ग्रामे। समभूमिर्ग्रामः। प्रगता मृगा अस्मात्। प्रमृगो देशः। प्राह्णः। प्ररथः। प्रमृगः। प्रदक्षिणः॥ अन्यपदार्थ एव[८]। समा भूमिः। समभूमिरित्यादौ[९] तत्पुरुष एवेति भोजः॥ आकृतिगणोऽयम्। तेन यत्प्रभृति

१ अपरसमं। अपरसममिति° A.; D. om. from अवर°.

२ °स्त्रीत्वान्निवृत्तिः A. D.

३ Cf. Pâṇ. ii. 2, 37.

४ °आयतीयवलून° A. B.; आयतगवलू° C.; °लूनगवं लूयमान° D.

५ °वाचन एव° A.; F. om. गणे.

६ समंभूमिसमपदातिभ्याम° B.C.F.

७ A. C. D. om. सूत्राभ्यां.

८ अन्यपदार्थश्च D.

९ °इत्यादि। A.

तत्प्रभृतीत्यादीनामपि क्रियाविशेषणवृत्तीनां व्युत्पत्तिरनेनैव द्रष्टव्या ॥ ९५ ॥ इति तिष्ठद्ग्वादिः ॥

ऊरीभ्रंशकलोररीगुलुगुधाधूसीस्वधाविःसजूर्-[1]
धूलीध्वंसकलोरुरीमसमसाविक्लीफलीमस्मसाः ।
ताली संशकला फलू च शकला[2] स्वाहा वषट्श्रौषटौ
वेताली च पशूपलीगुलुगुलाताली वितालीश्रुदः[3] ॥ ९६ ॥

डस्युक्तेत्यादिना[4] सूत्रेणोर्यादयः सुबन्ता भ्वादिना सह समस्यन्ते । स समासस्तत्पुरुषो भवति ॥ * ॥ ऊरीत्यङ्गीकारे विस्तारे च । ऊरीकृत्य । अङ्गीकृत्य विस्तारं कृत्वा वेत्यर्थः ॥ केचिद् अनुकरणविस्तारयोरिति पठन्ति । अपरे भृशार्थशब्दप्रशंसासु[5] । यथा ।

तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते[6] ॥ * ॥

भ्रंशकलेति हिंसायाम् । भ्रंशकलाकृत्य । हिंसित्वेत्यर्थः ॥ * ॥ उररी । ऊरीवत् ॥ * ॥ गुलुगुधेति पीडायाम् । गुलुगुधाकृत्य[7] । पीडयित्वेत्यर्थः । क्रीडायामित्यन्ये ॥ गुलूगुधेत्यन्ये[8] ॥ * ॥ धूसीति विस्तारे । धूसीकृत्य । विस्तार्येत्यर्थः ॥ धूसी कान्ताविति शाकटायनः । अपरे धूसी काङ्क्षायाम्[9] । धूसीकृत्य । काङ्क्षां कृत्वेत्यर्थः ॥ * ॥ स्वधेति संप्रदाने । स्वधाकृत्य स्वधाशब्दोच्चारितमग्न्यादिकर्म[10] कृत्वा गत इत्यर्थः ॥

---

१ ऊरीभ्रंस° A.; °गुलगुधा° F.

२ ताली संसकला A. B. C. E. F.; °शंसकला° D.; °सकला MSS.

३ °आवालीवितालो° B.C.F.; °आतालीविवाली° A.; °अद: A. D. E. F.

४ ? डस्फक्ते° A.; दस्फक्रेत्यादिना D.; ऊर्थ्यादिना C.

५ भृशार्त्तशब्द° B.; भृशास्त्रशब्द° C.; भृशार्थप्रशंसासु D.

६ Śiś. 2, 30; वितायते A.; विधीयते D.; D. has the whole stanza.

७ गुलगुधेति° गुलगुधाकृत्य । F.

८ ? Thus B.; गुलुगुधेत्यन्य: A.; गुबुगुधेत्यन्ये C.; om. D. F.

९ B. C. om. धूसी काङ्क्षायां.

१० स्वधादिशब्दो° A.; °आग्न्यादि° C.

तृप्तिप्रीत्योरित्यन्यः ॥ * ॥ एवं स्वाहावषट्श्रौषड्वौषटामर्थो द्रष्टव्यः। वषट् पूजायामित्यन्यः। एतेषां संप्रदानार्थत्वात्करोतिनैव संबन्धः ॥ * ॥ आविस्। इति प्राकाश्ये। यथा।

तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम्[१]।

आविष्करोति। प्रकटयतीत्यर्थः। आविःशब्दस्येह पाठात्सूक्तले[२] धातोः प्रागेव निपातः। एवं च योऽयं प्रयोगः[३]।

वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः ॥

इति। तथा। पृथुदर्विभृतस्ततः फणीन्द्रा
विषमाशीभिरनारतं वमन्तः।
अभवन् युगपद्विलोलजिह्वा-
युगलीढोभयसृक्कभागमाविः[४] ॥

इति च सप्रमादज एव नास्त्यभ्युद्धारः[५]। आविरभवद्रागः। आविरभवन्फणीन्द्रा इति क्रियायोगस्य समीहितत्वात् ॥ * ॥ सजूरिति सहार्थे। सजूःकृत्य। सहितं साहित्येन वा कृत्वा गत इत्यर्थः। सहार्थत्वादयं कृभ्वस्तिभिर्युज्यते। आविःशब्दस्य[६] प्राकाश्यार्थत्वात् ॥ * ॥ धलीति विदूरव्याकुलीभावे[७]। धूलीकृत्य। विदूराकुलतां[७] कृत्वेत्यर्थः ॥ * ॥ ध्वंसकला। भ्रंशकलावत् ॥ * ॥ उररी। ऊरीवत्[८] ॥ * ॥ मसमसेति ध्वंसकलावत् ॥ * ॥ विक्ली फली। इति विकारे। हिंसायामिति वामनः। विकारार्थत्वात् कृभ्वस्तिभिर्युज्यते। विक्लीकृत्य ॥ अपर आह्नो विक्लीति विचारे। विक्लीकृत्य विचार्येत्यर्थः[९] ॥ फलीकृत्य ॥ * ॥ मस्मसेति मसमसावत। अपरे तु मस्मसा मसमसेति द्वौ संचूर्णने संवरणे

---

१ Kum. S. 2, 2.
२ सक्कले B.; सत्वं C.; सूचले corr. D.
३ एवंविधो यं॰ D.; Śiśup. 10, 19.
४ Śiś. 20, 42; A. C. D. om. the first half.
५ इति च प्रमाद॰ D.; नास्त्युद्धारः C
६ आविःशब्दस्य B. C. F.
७ विद्दर॰ A. B.; विज्वर॰ C.
८ उररीवत् B. C. F.
९ D. om. from अपरे.

चेत्याङ्गः[1] ॥ * ॥ ताली विदूराकुलीभावे[2] । तालीकृत्य ॥ ताली आताली वर्णे शाकटायनः ॥ अपरे तृत्तमार्थे । तालीकृत्य । उत्तमं कृत्वेत्यर्थः ॥ विस्तारे तु भोजः ॥ * ॥ मंशकलेति मममसावत्[3] । अ-सङ्कलेति[4] भोजः ॥ * ॥ फलू[5] विक्लीवत् । फलू फलीति[6] क्रियासंपत्तौ । फलूकृत्य । फलीकृत्य । क्रियां संपाद्येत्यर्थः ॥ * ॥ शकला । मस्समा-वत्[7] ॥ अपरे शकला संशकला[8] ध्वंसकला भ्रंशकलेति चत्वारः परि-भवे । शकलाकृत्य[8] । परिभूय गत इत्यर्थः ॥ * ॥ वेतालीति तालीवत् । विस्तारे तु भोजः ॥ * ॥ पशू । इति हिंसायाम् । पशूकृत्य गतः । हत्वा गत इत्यर्थः ॥ * ॥ पलीति विक्लीवत् ॥ * ॥ गुलुगुला । गुलुगुधावत् ॥ * ॥ आताली वितालीति[9] तालीवत् ॥ * ॥ अुदिति शीघ्रार्थे । अुत्कृत्य[10] गतः । शीघ्रं कृत्वा गत इत्यर्थः ॥ अन्यस्तु अदिति अद्धाने । अद्धाय । अद्धां कृत्वेत्यर्थः[11] । अयं दधातिना युक्तः प्रयुज्यत इत्याह ॥ ८६ ॥

**प्रादुः पाम्पालम्बीपाम्पालीसङ्कलाश्च[12] केवाली ।**
**आलोष्ठी केवासी सेवाल्याक्ली च वार्दाली[13] ॥ ८७ ॥**

१ मस्ससमसमसा इति° F.; मस्ससेति मस्ससाव यस्येदं स वृजिनात् । अन्ये मस्ससा मसमसेति° A.; D. om. from अपरे तु; see note ७.

२ विद्वर° A. B.; विज्वर° C.

३ संसकलेति A. B. C. F.; शंसक-लेति मसावत् D.; समसावत् A.

४ ? Thus A.; अशंकालेति B.; असं-कालेति C.; संसकलेति (corr. शं° ?) D.; अंसकलेति F.

५ फलु A.

६ विक्लीति B. C.

७ सकला° A. D. F.; D. adds here अपरे तु मसमसमस्ससा इति संपूर्णने संवरणे चेत्याङ्गः; see note १.

८ सकला° D. F.; संसकला° सक-लाकृत्य D.

९ आवाली वितालीति B. C. F.; आवाली विवालीति A.

१० ? Thus B. C. F.; अदिति° अत्कृत्य D.; अदिति° अत्कृत्य A.

११ अन्यस्तु अदिति अद्धायां । अद्धां° D.

१२ प्रादुः पांयालंबी° E.; °सकलाश्च D.

१३ शेवाल्याक्ली° A.; C. om. this śl. with comment.

प्रादुः प्राकाश्ये। यथा ममैव।

निःसीमाश्चर्यधाम त्रिभुवनविदितं[1] पत्तनं यत्त्वदीयं
तन्मध्ये वृद्धिमीयुः फलभरनमिताः शाखिनः तन्मुख्याः।
नैतच्चित्रं विचित्राद्विहितकृतयुग त्वत्प्रभावात् क्षितीश[2]
प्रादुःषन्ति प्रभूता यदि सुरतरवश्चित्रमेतद्बुधानाम्॥

भ्वादिनेति सामान्योक्तावपि कृभ्वस्तिभिरेव योग एतेषां समासः॥*॥ पाम्पी विस्तारविध्वंसमाधुर्येषु करुणविलापे च। पाम्पीकृत्य। विस्तारं विध्वंसं माधुर्यं च कृत्वेत्यर्थः॥ पाम्पीकृत्य। करुणं विलप्येत्यर्थः॥*॥ आलम्बीति प्राकाश्ये हिंसायां च। आलम्बीकृत्य॥*॥ पाम्पाली। सङ्कला[3]। केवाली। आलोष्ठी। केवासी। सेवाली। आक्ली[4] हिंसायाम्॥ पाम्पालीकृत्य। हिंसित्वेत्यर्थ[5] इत्यादि॥ आक्लीशब्दो विकारेऽपि। आक्लीकृत्य॥*॥ वार्दालीति प्राकाश्ये हिंसायां च। वार्दालीकृत्य॥ पार्दालीति[6] कश्चित्॥ ९७। इत्यूर्यादिः॥

**साक्षाद्बीजरुहानमःप्रसहनेचिन्ताविसो रोचना[7]**
**बीजर्या लवणं सह प्रतपने भद्रार्थयग्रावमाः।**
**श्रद्धा प्राजरुहोदकं विसहने मिथ्यार्द्रमास्थोऽष्टमः[8]**
**प्राजर्या च विकम्पने विहसने शीतंवशेप्रादुसः॥ ९८॥**

साक्षादित्यादयः शब्दास्त्र्यर्थविषयाः करोतिना सह साक्षादा-

१ निःसीमाश्चर्यधानस्त्रिभु° A.
२ त्वत्प्रभाक क्षितीश। A.; D. om. from निःसीमाश्चर्य°.
३ संकली B.
४ शेवाल्याक्ली A.
५ °हिंसायां विस्तारे च वेतालीति कश्चित्। पालीकृत्य। हिंसिकार्थ D.
६ वार्द्दालीति A.; पार्द्दालीति D.
७ °प्रहसने° E.
८ °स्थो स्तमः C. F.; °स्थोत्क्रमः E.

द्याच्चिरित्यनेन[१] वा समस्यन्ते । स च तत्पुरुषसंज्ञो भवति । साक्षात्कृत्य । साक्षात् कृत्वा । असाक्षाद्भूतं साक्षात् कृत्वेत्यर्थः ॥ * ॥ बीजरुहेति रुहिक्रियार्थः । बीजरुहाकरोति सेवकः ॥ शोभायामित्यन्ये ॥ * ॥ नमस्कृत्य ॥ * ॥ प्रसहने । इत्युत्साहे सामर्थ्ये[२] च । प्रसहनेकृत्य ॥ * ॥ चिन्ता । इति मानसे व्यापारे । चिन्ताकृत्य ॥ चिन्तेति कश्चित् । स चाचिन्ता चिन्ता कृत्वा । चिन्ताकृत्य[३] । अव्ययत्वादसमासेऽपि विभक्त्यश्रवणमव्ययत्वं च स्वरादेराकृतिगणत्वादित्याह । एवमन्येष्वपि ॥ * ॥ आविष्कृत्य ॥ * ॥ रोचना । इति[४] श्रद्धोत्पादने प्रशंसायां च । रोचनाकृत्य ॥ लोचनेति दीप्तौ कश्चिदाह ॥ * ॥ बीजर्या । इति जरणक्रियार्थः । बीजर्याकृत्य धनस्य[५] गतः ॥ शोभार्थ इत्यन्ये ॥ * ॥ लवणमिति रुच्यर्थे । लवणंकृत्य ॥ * ॥ सह । इति संवद्धार्थः । सहकृत्य ॥ * ॥ प्रतपने । इति तापार्थः । मिथ्याकृतां प्रतपनेकृदथ चितीशः[६] ॥ वितपन इत्यपि वामनः[७] ॥ * ॥ भद्रा इत्यालोचनाप्रशंसामङ्गलेषु । अभद्राभद्राकरणं पूर्वम् । भद्राकृत्य ॥ केचिद् अभद्रां भद्रां कृत्वेति विग्रहे विभक्तिमुच्चारयन्ति ॥ * ॥ अर्थेकृत्य श्लोकं पठति । सार्थकं कृत्वेत्यर्थः । यद्वा । अर्थेकृत्य वदति । सप्रयोजनं कृत्वा वदतीत्यर्थः । यथा क्लिप्तपस्य[८] ।

साक्षात्कृतेऽथ लवणंकृति दिङ्मुखानाम्[९]
उष्णंकृतोऽर्चिषि वशेकृदसाकृदास्ते[१०] ।

---

१ ? साक्षादाद्योच्चिरित्य॰ A.; साक्षादाद्यो च्चिरित्य॰ B.; साक्षादाद्योरित्य॰ C. F.; साक्षादाद्योः च्चिरित्य॰ D.; cf. P. i. 4, 74 V.

२ सामर्थे A.; साहित्याद्यर्थे D.

३ स चाचिन्ता कृत्वा चिंत्य । A.; स वा चिन्ता कृत्वा॰ C.· चिन्ता कृत्वा चिंताकृत्य D.

४ रोचते तु A.

५ वनस्य A.; वतस्य D.

६ मिथ्याकृता॰ A. D.; मिथ्याकृतं॰ B. F.; मिथ्याकृतप्र॰ C.; ॰कृदर्थ corr. D.

७ इति वामनः D.

८ क्लिप्तपस्य B.; cf. p. ८०, note ६.

९ साक्षात्कृत्याथ॰ D.

१० उष्णकृतोर्ब्विषषि वतीकृद॰ D.; ॰विषिविशेकृदसा॰ F.

आस्थाकृताः कृतनमस्कृतयोऽर्थमर्थे-[१]
कृत्य व्रती च नृपतौ च नृपस्य जग्मुः ॥

अग्नौकृत्य । अग्नौ कृत्वा ।

अग्नौकृतामथ कृतैरुदकंकृदंशाव्
आर्द्रेकृते विहसनेकृति पद्मिनीनाम्[२] ॥

अग्नाविति तैक्ष्ण्ये शाकटायनः ॥*॥ अमा । इति रहःसमवायसंयोगसामर्थ्येषु । अमाकृत्य ॥*॥ अद्धाकृत्य । यथा ।

शीतंकृदर्चिषि तटीमपराम्बुधेः सं-
सर्याचिकीर्षति रवावुदयाद्रिशृङ्गम्[३] ।
प्रादुष्कृता मिलितकोकयुगे मुहूर्तम्
अद्धाकृतेव वियता सरसि स्वलक्ष्मीम्[४] ॥

प्राजरुहा । इति रुहिक्रियार्थः । प्राजरुहाकृत्य पर्जन्यो निवृत्तः[५] ॥ शोभार्थ इत्यन्ये ॥*॥ उदकंकृत्य ॥*॥ विसहने । प्रसहनेवत् ॥*॥ मिथ्याकृत्य[६] ॥*॥ आर्द्रेकृत्य ॥ आर्द्रे । इत्येकारान्तमपि कश्चित् । आर्द्रेकृत्य ॥*॥ आस्था । इत्यादरे प्रतिज्ञायां च । आस्थाकृत्य ॥*॥ प्राजर्या । इति बीजर्यावत्[७] ॥ प्राजुरा । इत्यपि शाकटायनः[८] ॥*॥ चिन्ताकृताश्रितहितोरिविकम्पनेकृत् ॥ शाकटायनस्तु विकपने[९] प्रकपने

---

१ आख्याकृता कृत° A.; आविःकृताः कृत° D.

२ उदकैकृदंशाचार्द्रेकृते A.; उदकंकृशंदावर्थेकृते° C.; °कृदंशावार्देकते विहवने° D.; अर्थेकृते वि° B.; कृदंशावर्थेकृते° F.

३ तटीमपरांबुधिः ससर्या विकर्षति° C.

४ मुहूर्त्तमद्धार्त्तमद्धाकृतेव° C.; मुहूर्त्तमद्धाकृतेव° A.; °कोकयुगैर्मुहूर्त्तमद्धाकृतेव वियता सरति स्व° F.

५ पर्यन्यो° B.; पर्यान्या° C.; °कृत्य निवृत्त D.

६ उदकंकृत्या उत्साहनेवृत्य मिथ्याकृत्य D.

७ आजर्येति° C.

८ प्राजरा° C.; D. om. अपि.

९ ? विकंपने A. C. F.; C. F प्रकपने.

वैरूप्ये। विकपने हिंसायाम्। प्रकपने[1] संताप इत्यन्ये। इत्याह ॥ * ॥ विहसनेकृत्य ॥ * ॥ शीतंकृत्य ॥ शीतमनादर इति शाकटायनः ॥ * ॥ वश। इत्यस्वातन्त्र्ये। वशेकृत्य ॥ * ॥ प्रादुष्कृत्य ॥ * ॥

विकम्पनेप्रभृतीनामेजन्तत्वं[2] लवणंप्रभृतीनां मान्तत्वं च गणपाठसामर्थ्यादेव। अथवा। एते सप्तमीप्रतिरूपका द्वितीयाप्रतिरूपकाश्च निपाताः ॥ चादित्वाभावे। आस्थां कृत्वा। अग्नौ कृत्वा जलं तापयतीत्यादि स्यात् ॥ आकृतिगणोऽयम्। तेन पर्यटनंवृत्तिसंसर्याप्रभृतयो द्रष्टव्याः ॥ ९८ ॥ इति साक्षादादिः ॥

स्युर्याजकोद्वर्तककर्तृकारकाः
प्रयोजकोत्सादकभर्तृवर्तकाः।
अध्यापकस्नापकगोप्तृपूजकास्
तुर्यः परेश्चारकवेषकाविमौ[3] ॥ ९९ ॥

याजकादिभिः शब्दैः सुबन्तं पदम् अकयाजकादिभिरित्यनेन समस्यते। स समासस्तत्पुरुषसंज्ञो भवति ॥ * ॥ ब्राह्मणानां याजकः। ब्राह्मणयाजकः। याजयिता ॥ * ॥ शरीरस्योद्वर्तकः। शरीरोद्वर्तकः ॥ * ॥ प्रणम्य सर्वकर्तारम्[4] ॥ * ॥ धर्मस्य कारकः। धर्मकारकः ॥ * ॥ तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः[5] ॥ * ॥ रिपूणामुत्सादकः। रिपूत्सादकः ॥ षद अपवारण उत्पूर्वः। चत्रियस्योच्छादकः। चत्रियोच्छादक इति शाकटायनः ॥ * ॥ भुवो भर्ता। भूभर्ता ॥ * ॥ वर्तयतीति वर्तकः। भाष्यस्य वर्तकः। भाष्यवर्तकः ॥ * ॥ पुत्राणामध्यापकः। पुत्रा-

---

१ विकंपने हिंसायां प्रकंपने F.
२ विकपनेप्र॰ A. B. C.
३ D. corr. गोपपुज॰ : परीवारकवे-
४ Beginning of Trilochanadâsa's Kâtantravṛittipañjikâ; cf. Kât. p. 466.
५ Sisup. 2, 71.

ध्यापकः ॥ * ॥ स्नापयतीति स्नापकः । राज्ञः स्नापकः । राजस्नापकः ॥ * ॥ धात्र्या गोपकः । धात्रीगोपकः ॥ * ॥ साधूनां पूजकः । साधुपूजकः ॥ * ॥ ब्राह्मणानां तुर्यः । ब्राह्मणतुर्यः ॥ * ॥ परिचरतीति परिचारकः । गुरोः परिचारकः । गुरुपरिचारकः ॥ * ॥ परिवेवेष्टि । परिवेषकः । राज्ञः परिवेषकः । राजपरिवेषकः ॥ यद्वा । घृतस्य परिवेषकः । घृतपरिवेषकः ॥ ९९ ॥

गणको रथपत्तिभ्यां चतुर्थोन्मादकौ तथा ।
होता द्वि त्रि च तीयान्तं तुरीयोऽपि[1] सतां मतः ॥ १०० ॥

रथानां गणकः । रथगणकः ॥ पत्तीनां गणकः । पत्तिगणकः ॥ * ॥ आत्मनश्चतुर्थः । आत्मचतुर्थः ॥ * ॥ चित्तस्योन्मादकः । चित्तोन्मादकः ॥ * ॥ चौरस्य होता । चौरहोता ॥ * ॥ राज्ञां द्वितीयः । राजद्वितीयः ॥ राज्ञां तृतीयः । राजतृतीयः ॥ राज्ञां तुरीयः । राजतुरीयः । तुरीयोऽपि सतां मत इति साभिप्रायम् । तेन द्वितीयतृतीयेत्यादि[2] सूत्रं बृहत्तन्त्रे व्यर्थम् । गणसमाश्रयणमेव श्रेयः ।

क्रियानुगतिमास्थाय लोके ख्यातिमुपागताः ।
ये कान्ताः पावकाद्यास्ते द्रष्टव्या याजकादिषु ॥

तेन गोमयानां पावकः । गोमयपावकः ॥ गृहस्य दीपकः । गृहदीपकः ॥ पिष्टस्य मोदकः । पिष्टमोदक इत्यादि ॥ न कर्तरीति प्रतिषेधे[3] प्राप्ते पाठः ॥ १०० ॥ इति याजकादिः ॥

शौण्डव्याडौ निपुणचपलौ पण्डितान्तःप्रवीणाः[4]
स्यात् संवीतः कुशलकितवाधीनधूर्तप्रधानम् ।

---

१ चतुर्थोऽपि F.
४ पण्डित...तप्रवीणाः ... चोरः C.

सव्यध्यानप्रवणविदिताः[१] सारगुर्वायसाः स्युः[२]
सिद्धो बन्धः कटकविरसौ शेखरः शुष्कपक्कौ[३] ॥ १०१ ॥

सप्तम्यन्तं शौण्डादिभिः सह सप्तमी शौण्डैरित्यनेन वा समस्यते। स समासस्तत्पुरुषसंज्ञो भवति ॥ अक्षेषु प्रसक्तः[४] शौण्डः। अक्षशौण्डः॥ वृत्तौ प्रसक्तक्रियाया[४] अन्तर्भावः शौण्डः प्रवीणः। यथा पण्डितश्रीसागरचन्द्रस्य[५]।

द्रव्याश्रयाः श्रीजयसिंहदेव[६] गुणाः कणादेन महर्षिणोक्ताः।
त्वया पुनः पण्डितदानशौण्ड गुणाश्रयं द्रव्यमपि व्यधायि[७] ॥

यद्यपि शौण्डशब्दो मद्यपे रूढस्तथापि लक्षणया प्रवीणोऽपि भण्यते दुर्व्यसनो वा ॥

पानशौण्डः श्रियं नेता नात्यन्तीनत्वमुन्मनाः[८] ॥

इति मुख्यार्थोऽपि[९] समासभाक् ॥ * ॥ अस्त्रव्याडः ॥ * ॥ आचारनिपुणः ॥ * ॥ वाक्चपलः ॥ * ॥ रणपण्डितः ॥ * ॥ ते नालिकेरान्तरपः पिबन्तः[१०]। न चैतत् षष्ठीसमासेन सिध्यतीति शक्यं प्रतिपत्तुमर्थभेदात्। न ह्यर्णवेऽन्तर् अर्णवस्यान्तरिति चैकोऽर्थः। किं चाव्ययत्वात्षष्ठीसमासप्रतिषेधः ॥ श्रीभोजस्त्वन्तरशब्दं पपाठ ॥ * ॥ शास्त्रप्रवीणः। शाकटायनस्तु। अर्थप्रवीणः[११]। अर्थविषये निपुण इत्याह ॥ * ॥ लोक-

---

१ भव्यध्यान° E.; भव्याधान° F.; मध्यध्यानं° C.; सुध्यध्यान° D.; °प्रणवविदिताः (!) MSS.

२ गुर्वायसाश्च E.; °यशास्त्र D.

३ शुष्कपचौ B.

४ प्रशक्त° A. D.

५ Thus B. F.; पंडितं। सागरचंद्रस्य A.; पंडितश्च सागर° C.; पंडितरामचंद्रस्य (corr. from °सामचंद्रस्य) D.

६ श्रीयुतसिंहदेव F.

७ °शौंडो गुणाश्रयद्रव्यमसि व्यधायि D. and om. the first half sloka.

८ Bhaṭṭik. 5, 10; °शौंडश्रियं° MSS.; ? नात्यंतीनां त्वमु° A. B. D. F.; वेतान्यंतीनां त्वमु° C.

९ मुख्योपि A.

१० Śiśup. 3, 81; [नारिकेला° eds.].

११ ? अर्थसवीणः A. B.

संवीतः ॥ * ॥ सेवाकुशलः ॥ * ॥ अचकितवः ॥ * ॥ जिनवचनाधीनः[1] । अधीनशब्दोऽस्मादेव गणपाठात् तस्याधीन इति ज्ञापकाद्वा खप्रत्ययान्तो बोद्धव्यः ॥ अथवा । अधिगत इनम्[2] । अधिगत इनोऽनेनेति वा । अधीनः । यथा लोकाधीनः[3] ॥ * ॥ अचधूर्तः ॥ * ॥ विबुधप्रधानम् ॥ * ॥ कार्यसव्यः[4] । कार्यविषयेऽनिपुण[5] इत्यर्थः ॥ * ॥ कर्मध्यानः । कर्मसु युक्त इत्यर्थः[6] ॥ * ॥ पृथिवीप्रणवः[7] ॥ * ॥ पृथिवीविदितः ॥ * ॥ त्वचिसारः ॥ * ॥ मध्येगुरुः ॥ * ॥ कायायसः । कायविषय[8] औदरिक इत्यर्थः ॥ * ॥ काम्पिल्यसिद्धः ॥ * ॥ चक्रबन्धः ॥ * ॥ हस्तकटकः ॥ * ॥ अवसानविरसः ॥ * ॥ शिरःशेखरः ॥ * ॥ छायाशुष्कः ॥ * ॥ कुम्भीपक्कः ॥

आकृतिगणोऽयम् । तेन व्यवहारपटुः । आतपरमणीय[9] इत्यादयो द्रष्टव्याः ॥ १०१ ॥ इति शौण्डादिः ॥

ध्वान्तात्पाचात्समितबहुलौ[10] गेहगोष्ठात्प्रगल्भ-
क्ष्वेडिन्नर्दिन्विजितिपटवः पण्डितव्याडशूराः ।
गर्भाच्छूरः सुहितसहितस्तृप्रदृप्तौ च धीरः
पिण्डीशूरो व्रणकृमिरथो कूपमण्डूकयुक्तः ॥ १०२ ॥

पात्रेसमितादयः सप्तमीतत्पुरुषा निपात्यन्ते । क्षेपे गम्यमाने पा-

१ जितनवच° A.; जन° B.F.; गज°C
२ इन इति C.; अधिगतमिनो D.
३ यतो लो° A.; om. C.
४ ? कार्यसव्यं A.; कार्यं मध्यः B.; कार्यमध्यः C.; कार्यभव्यः D.; °नव्यः F.
५ अनिपुण A., orig. D.; °येनिपुण B. C. F.
६ ? कर्मव्यानः ।° A.; °कर्मयुक्तः C.; कर्मसु शक्तः D.; कर्मसु व्यक्त° F.
७ Thus B. C. D. F.; पृथिवीप्रवीणः A.—Correct प्रणव for the conjectured प्रवण in śl. 101. [? Prof. Roth says: 'Might be a drum in the ground (cf. पणव) *i.e.* a hole covered over with boards to be beaten upon, cf. उपरव;' Prof. Weber: 'As it were a drum standing on the ground (& hence not sounding), cf. Hâla Sapt. 256 in Zeitsch. D. M. Ges. 28, p. 412, l. 1.']
८ कार्यायसः° A.F., om.D.; कार्यविषये A.D.F.; °उदरिक° C.; औदारिक° B.
९ व्यवहारपटुतरातपरमणीय F.
१० Kâś.V.ii.1,48 ed. पात्रेसंमितादि; MSS. both readings; here ag. metre.

त्रेसमितादयोऽयमित्यनेनायमेव निपातितः समासो भवति नान्यः। अन्तादिति यथासंभवं सर्वत्र संबध्यते ॥ * ॥ पात्रेसमिता। अपचितक्षीरा धेनुर्या सा पात्रसंगतिमात्रपर्यवसितव्यापारा सत्येवमुच्यते। तद्वदन्योऽपि यः फलविकलव्यापाराडम्बरः स तदुपमानात्तथा वाच्यो यथा चञ्चा खरकुटी चैत्र इति ॥ * ॥ पात्रे बाहुल्येन संघटनात्[1] क्षीरादिफलविकला। पात्रेबहुला। शेषार्थः पूर्ववत् ॥ अथवा। पात्र एव समिता मिलिताः[2]। पात्र एव बहुलाः प्रचुराः। नान्यत्र कार्ये पात्रशब्देन साहचर्याद्भोजनं लक्ष्यते ॥ * ॥ गेह एव प्रगल्भः। गेहेप्रगल्भः ॥ एवं गोष्ठेप्रगल्भः ॥ * ॥ गेह एव क्ष्वेडति विक्रमं दर्शयति। अन्यत्र भीरुः। गेहेक्ष्वेडी ॥ गोष्ठेक्ष्वेडी[3] ॥ * ॥ गेह एव शौर्याडम्बरं[4] प्रकाशयन्। गेहेनर्दी। तत्तुल्यवृत्तिरन्योऽप्येवमुच्यते ॥ गोष्ठेनर्दी ॥ * ॥ विजितमनेन। विजिती। यद्वा। विजितमस्यास्तीति विजिती ॥ गेह एव विजयते न शत्रुमध्ये। गेहेविजिती ॥ एवं गोष्ठेविजिती[5] ॥ * ॥ एवं गेहेपटुः। गोष्ठेपटुः ॥ * ॥ गेहेपण्डितः। गोष्ठेपण्डितः ॥ * ॥ गेहेव्याडः। गोष्ठेव्याडः ॥ * ॥ गेहेशूरः। गोष्ठेशूरः ॥ * ॥ गर्भ एव शूरः। गर्भान्निःसृत्य भीरुः। गर्भेशूरः ॥ * ॥ गर्भ एव सुहितो न तु बहिर्निःसृतः। गर्भेसुहितः ॥ * ॥ गर्भ एव तृप्तः स्वमात्राहृतेनाहारेण ततो निःसृत्य न कदाचिदुदरपूरं कृतवानिति[6]। गर्भेतृप्तो दरिद्रः ॥ * ॥ गर्भ एव दृप्तो मातुश्चेष्टया मातुरायासनेन वा ततोऽन्यत्र निस्तेजाः। गर्भे-

---

१ संघट्टनात् F.

२ A. om. मिलिताः.

३ गेह एव क्रीडति° गेहेक्रीडी। गोष्ठेक्रीडी corr. D.; om. F.

४ सौर्याडंबरं A.; शौर्यडिंबरं C.; सामर्थ्याडंबरं corr. D.

५ गेहेविजिता° A.; B. C. om. from गेह एव विजय°.

६ स्वभात्राहृतेना° and lacuna for कदाचिदुद B.; स्वमात्राहृत्तेनाहा° उदरपूरं कृतवामिति A.; °उदरं भृतवानिति F.

कृष्टः ॥ अथवा गर्भेसुहितादीनामयमर्थः । यो ऽलीकाभिमानित्वाद-नुचितचेष्टः स एवमुच्यते ॥ * ॥ गर्भ एव धीरो गर्भाद्बहिःस्तत्सचपलः । गर्भेधीरः ॥ * ॥ पिण्ड्यां खादितव्ये वस्तुनि शूरः । कलहवर्धनादिकं कृत्वा खादितव्यं खादत्यन्यत्र[1] कार्यान्तरे निर्विक्रमः स पिण्डीशूरः ॥ * ॥ व्रणमध्य एव क्रमिः[2] । व्रणक्रमिः । अल्पदृष्टा ॥ क्रमिशब्दः संयोगादिः संयोगविकल्पोऽप्यस्ति । उदुम्बरे क्रमिरिव । उदुम्बरक्र-मिः[3] । तस्माद्रसादिविशिष्टं रसमन्यं न वेत्ति स एवमुच्यत इति कश्चि-दाह ॥ * ॥ कूपे मण्डूक इव । कूपमण्डूकः । ततोऽन्यज्जलस्थानं सरः समुद्रं वाऽधिकं न पश्यति । तददन्यः पुरुषो ग्रामे नगरे वा शास्त्रे वा प्रतिबद्धः ।[4] ततोऽन्यन्न पश्यति विशिष्टं स एवमुच्यते ॥ १०२ ॥

गेहेनन्दी गृहकलविङ्को गेहेमेह्याखनिकबकौ च[5] ।
गेहेवादी ननु नगरस्था ज्ञेयः कर्णेटिरिटिरियासौ[6] ॥ १०३ ॥

गेह एव नन्दति । गेहेनन्दी ॥ गेहेनर्तीत्यपि कश्चित्[7] ॥ * ॥ गृहे कलविङ्क इव । गृहकलविङ्कः ॥ * ॥ गेह एव मेही । गेहेमेही । य आवश्यकार्यमपि बहिर्न निर्गच्छति भोजन एव च संरभते स एवमु-च्यते[8] ॥ * ॥ आखनिको जलस्रोतः खातं[9] तस्मिन् बक इव । आख-

१ वादत्यन्यत्र A.; खादितव्यं । खा-दितव्यं खादत्य° C.; खादना[द suppl.] न्यत्र D.

२ F. throughout क्रिमि; C. क्रमि; A. B. D. now क्रिमि now क्रमि.

३ संयोगादि संयोग° A.; C. om. उदुम्बरे क्रमिरिव; संयोगादिश्छदो भंगभयाच दर्शितः अथ च बङ्कषु पस-केषु (lacuna of 3 syll.) घ्यो (lac. of 11 s.) दुंबरक्रमिः । D.

४ पुरुषो न ग्रामे° B.; शास्त्रे वा प्रसिद्धनिर्वचत्ततोऽन्यतोऽन्यन्न पश्यति° D.

५ गेहेमेत्याखनिकवाकौ च A.

६ टिरटिरियासौ E.

७ गेहेनर्त्तीत्यपि° B. C.; गेहेनर्त्ती आवृत्त्या द्रष्टव्यं । D.

८ वहिन्निर्गच्छति° A.; C. om. संरभते.

९ वातं A.; पूरोवात D.

निकबकः । यत्किंचिदात्मीय आखनिके लभते तद्भक्षयति नान्यत्र गच्छति तद्वदन्यो ऽपि[1] । य आत्मीये गृहे यत्किंचिदस्ति तद्भक्षयति[2] नान्यत्र गच्छति स एवमुच्यते ॥ अपर आह । आखनिरेव । आखनिकः । कुत्साद्यर्थे कः । स्वल्पखातनिम्नप्रदेशो[3] जलाधार उच्यते तस्मिन् बकः । आखनिकबकः[4] । स हि जलाश्रयक्षुद्रजन्तुभक्षणानुसंधानेन संकुचितात्मा[5] बद्धलक्ष्यस्तद्वदन्यो ऽप्येवमुच्यते ॥ * ॥ गेह एव दहनशीलो नान्यत्र । गेहेदाही ॥ * ॥ नगरे श्वेव । नगरश्वा धृष्ट उच्यते ॥ * ॥ टिरिटिरा चापलेनानुचितचेष्टोच्यते ॥

मत्ता छन्दः । ज्ञेया मत्ता मभसगयुक्ता ॥ १०३ ॥

कर्णेचुरचुरा[6] कूपकच्छपावटकच्छपाः ।
गेहेमेली गृहात्सर्पो नगरात्काकवायसौ ॥ १०४ ॥

कर्णेचुरचुरा[7] चापलेनानुचितचेष्टोच्यते । टिरिटिरीति गत्यनुकरणम् । चुरचुरिति वाक्यानुकरणम्[8] । तत्करोतीति ण्यन्तादप्रत्ययो निपातनसामर्थ्याद्धातो ऽनो न भवति[9] ॥ शाकटायनस्तु कर्णेटिरिटिरिः[10] कर्णेचुरुचुरुरित्याह । अनयोश्च व्याख्या । कर्णे किमपि जल्पित्वा जी-

---

१ यद्वदन्यो पि A.; D. om. ऽपि.

२ B. om. य; D. om. अस्ति; F. om. नान्यत्र गच्छति.

३ स्वल्पघातनिम्न॰ A.; स्वल्पखातनियतप्र॰ D.; स्वल्पखातः नि॰ F.

४ C. om. from यत्किंचिदात्मीय॰.

५ जलाश्रयः क्षुद्र॰ A.; ॰जंतुलक्षणानुसंधानेनासंकु॰ C.; ॰भक्षणा [या suppl.] कुंचितपक्षः तद्वद॰ D

६ Thus B. C. E. F. & Kâṣ. V. ii. ६, 48 ed. & MSS.; cf. Marâṭhî चुरचुरणें "to smart, tingle;" कर्णेचुरुचुरा D.; कर्णेचुरुस्तुरा A.

७ कर्णेचुरचुरा B. C. F.

८ गुर्विति॰ C.; वाद्यानुकरणं D.

९ ॰अल्प्रत्ययो॰ D.; ऽतो न॰ A.; सामर्थ्याद्धातोर्न भवति F.

१० कर्णेरिटिरिः A.; कर्णेटिरि २ D.

वति। नास्य विक्रम इति चेपः[1]। टिरिटिरि चुरुचुर्वित्यनुकरणशब्दौ[2] तद्वाकारिणि व्यवह्रियेते ॥ * ॥ कूपकच्छपावटकच्छपौ कूपमण्डूकवत् ॥ * ॥ गेह एव मिलनशीलो नान्यत्र। गेहेमेली ॥ * ॥ गृह एव सर्पः। गृहसर्पः[3]। दुष्ट इत्यर्थः ॥ * ॥ नगरे काक इव। नगरकाकः ॥ नगरे वायस इव। नगरवायसः ॥ स्वार्थनिष्ठः परवञ्चनानिपुण[4] उच्यते ॥ अथवा। नगरकाको न क्वचित्तिष्ठति सर्वमेव नगरं परिभ्रमति तद्वत्तत्रान्यत्र वाऽनवस्थितः पुरुष उच्यते ॥ १०४ ॥

**मातरिपुरुषोदुम्बरमशकौ गेहेविचित्यपि प्रोक्तः।**
**श्रमणा प्रव्रजिताथो कुलटा पटुना च मृदुनापि ॥ १०५ ॥**

मातरिपुरुषः। यः सदाचारं भिनत्ति स एवमुच्यते। यद्वा। मातरि पौरुषमवलम्बमानो मातरिपुरुषः। तत्तुल्यवृत्तिरन्योऽप्येवमुच्यते ॥ पितरिशूर इत्यपि भोजः ॥ * ॥ उदुम्बरे मशक इव। उदुम्बरमशकः। अल्पदृश्वा[5] ॥ अथवा। उदुम्बरमशकोऽल्पप्राणः सुकुमारश्च। तादृशो यः स उदुम्बरमशकः[6] ॥ * ॥ विचितमनेन। विचिती। गेह एव विचिती। गेहेविचिती। अयमर्थः। गेहे स्थित्वेदं युक्तमिदमयुक्तमिति विचिनोति निरूपयति बुद्धिमत्तां[7] प्रकाशयति न सभामध्ये कार्ये वा स एवमुच्यते ॥ * ॥ एतेषां यथासंभवं गणपाठसामर्थ्यात् सप्त-

---

१ अनयोश्चाव्याख्या° जीवितनास्य° A.; इति शेषः D.; C. om. from टिरिटिरिः कर्णचुरु°.

२ चुरुर्वित्य° A.

३ गृहेसर्पः A.

४ परवचना° C.; परवंचनान्निपुणपुण A.; D. corrupt.

५ अनन्यदृश्व D. (and श्रीभोजः as usual for भोजः); C. om. अल्पदृश्वा.

६ तादृशो यः° D.; B. C. om. from अथवा; A. om. अथवा.

७ बुद्धिमतां B. C., and omit इदमयुक्तं.

व्या अणुक ॥ आकृतिगणोऽयम् । तेन । उदपानमण्डूक इत्यादयो ऽनुसर्तव्याः ॥ * ॥ इति पात्रेसमितादिः ॥ * ॥

कुमारशब्दः श्रमणादिभिर्विशेष्यैः[1] सह समस्यते । समासस्तु कर्मधारयः ॥ श्राम्यतीति श्रमणा । कुमारी चासौ श्रमणा च । कुमारश्रमणा[2] ॥ * ॥ कुमारप्रव्रजिता ॥ * ॥ कुमारकुलटा ॥ * ॥ कुमारश्चासौ पटुश्च । कुमारपटुः ॥ * ॥ कुमारमृदुः ॥ १०५ ॥

तापसीनिपुणादासीगर्भिण्यध्यापकाः स्मृताः ।
कुशलः पण्डितश्चाच चपलश्चाभिरूपकः ॥ १०६ ॥

कुमारतापसी ॥ * ॥ कुमारनिपुणा ॥ * ॥ कुमारदासी ॥ * ॥ कुमारगर्भिणी ॥ * ॥ कुमाराध्यापकः ॥ * ॥ कुमारकुशलः ॥ * ॥ कुमारपण्डितः ॥ * ॥ कुमारचपलः ॥ * ॥ कुमाराभिरूपकः ॥ * ॥

लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् कुमारशब्दः श्रमणादिभिः[3] स्त्रीलिङ्गैः स्त्रीलिङ्ग एव समस्यते । पट्वादिभिस्त्वभिधेयलिङ्गैस्तल्लिङ्गः । तेन कुमारपट्वी । कुमारमृद्वी । इत्यादि सिद्धं भवति ॥ १०६ ॥ इति श्रमणादिः ॥

किंशुकः किंवदन्ती स्यात् किंकिरातश्च[4] किंनरः ।
किंपुरुषोऽथ किंदासः[5] किंजल्काद्या बुधैर्मताः ॥ १०७ ॥

किंशुकादयस्तत्पुरुषसंज्ञायां विषये साधवो भवन्ति ॥ * ॥ किंशुकः । पलाशः ॥ * ॥ किंवदन्ती । जनश्रुतिः ॥ * ॥ किंकिरातः[6]

---

१ श्रवणादिभिर्° A. D.; विशेषैः F.
२ श्रवणा च° A.; °कुमारश्रवणा B.
३ श्रमणादिभिः A.
४ किंकरातश्च A. B. C.
५ किंपुरुषो थ दासश्च D. E.
६ किंकरात A. B. C.

कुरण्टकः ॥ * ॥ किंनरः । मयुः ॥ * ॥ किंपुरुषः । स एव ॥ * ॥ किंदासः । राजर्षिः ॥ * ॥ किंजल्कः । पुष्परेणुः ॥

आद्यशब्दादन्ये[1] ऽपि द्रष्टव्याः । अयं च गणः श्रीभोजदेवाभिप्रायेण ॥ १०७ ॥ इति किंशुकादिः ॥

व्याघ्रः कुञ्चामहिषरुरवः[2] कुञ्जरेन्दू वराहः
सिंहो वज्रं वृषभकलशौ चन्दनं पुण्डरीकः[3] ।
चन्द्रः कुम्भर्षभकिसलयं पल्लवस्त्वृक्षपद्मौ[4]
हस्तिश्वानावृषितरुवृका बिम्बमप्यत्र लक्ष्यम् ॥ १०८ ॥

सुबन्तं पदं केनचिद्गुणेन परार्थे प्रयुक्तैर्व्याघ्रादिभिः सह गौणैर्व्याघ्रैरित्यनेन समस्यते । समासः कर्मधारयसंज्ञो भवति ॥ * ॥ व्याघ्र इव । व्याघ्रः । पुरुषश्चासौ व्याघ्रश्च । पुरुषव्याघ्रः ॥ * ॥ स्त्रीकुञ्चा[5] ॥ * ॥ पुरुषमहिषः ॥ * ॥ पुरुषरुरुः[6] ॥ * ॥ पुरुषकुञ्जरः ॥ * ॥ वदनेन्दुः[7] ॥ * ॥ पुरुषवराहः ॥ * ॥ पुरुषसिंहः ॥ * ॥ वाग्वज्रः ॥ * ॥ पुरुषवृषभः ॥ * ॥ कुचकलशौ ॥ * ॥ मुनिचन्दनः ॥ * ॥ मुखपुण्डरीकम्[8] ॥ * ॥ मुखचन्द्रः ॥ * ॥ स्तनकुम्भौ ॥ * ॥ पुरुषर्षभः[9] ॥ * ॥ करकिसलयम् ॥ * ॥ पाणिपल्लवः ॥ * ॥ पुरुषर्क्षः[10] ॥ * ॥ पाणिपद्मम् ॥ * ॥ पुरुषहस्ती ॥ * ॥

१ आदिशब्दाद° A. B. C. F.

२ व्याघ्रकुंभा° A.; कुंचा° B. C. D.; कुंवा° E.

३ कलसौ° A. E.; कलभौ° B.; चंदनः° F.

४ ? पल्लवस्तुञ्जपद्मौ A. B. C. E. (!); पल्लवः कुंभपद्मौ F.; पल्लास्कुंजपद्मौ D. (? °तुष or तुच्छ).

५ स्त्रीकुंचा B. C.; स्त्रीकुचा A.

६ पुरुषभीरुः A.; पुरुषरुभः B.; अत्पभीरुः D.

७ F. adds पुरुषेंदुरित्यपि.

८ °पुंडरीकः B. C. F.

९ भरतर्षभः A.; पुरुषर्षभ B. C. F.

१० ? पुरुषतुंजः C.; पुरुषरुंजः (i.e. °ऋच = ऋच ?) D.; पुरुषमुंजः A.; पुरुषजंढः B.; om. F.; see note ४.

वानरस्था ॥ * ॥ राजानः ऋषय इव । राजर्षयः ॥ * ॥ वैरं तरुरिव समूलत्वात् । वैरतरुः ।

बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः[१] ॥

पुरुषव्रकः ॥ * ॥ ओष्ठो लौहित्याद्बिम्बमिव ।

ओष्ठेन रामो रामौष्ठबिम्बचुम्बनचुञ्चुना[२] ॥

आकृतिगणोऽयम् । तेन पुरुषवृष इत्यादयोऽपि भवन्ति[३] ॥ १०८ ॥

इति व्याघ्रादिः ॥

श्रेणिः पूगो निधननिपुणब्राह्मणाः पण्डितोऽथो[४]
मन्त्रो मुण्डो निचयचपलक्षत्रियाध्यापकाश्च ।
इन्द्रो देवः कृपणविशिपौ निर्धनोकौ पटुर्वा
राशिर्भूतश्रमणकुशलाः[५] कुन्दुमः स्याद्वदान्यः ॥ १०९ ॥

श्रेणीत्यादयः शब्दा अच्व्यन्ताः कृतादिभिः सह वा समस्यन्ते । समासः कर्मधारयो भवति ॥ * ॥ अश्रेणयः श्रेणयः कृताः । श्रेणिकृताः पुरुषाः ॥

वणिक्पथे पूगकृतानि यत्र भ्रमागतैरम्बुभिरम्बुराशिः[६] ॥

अनिधनरूपा निधनरूपाः कृताः । निधनकृताः[७] शत्रवः ॥ * ॥ निपुणोदाहृताः ॥ * ॥ ब्राह्मणमताः ॥ पण्डितज्ञाताः ॥ * ॥ मन्त्रमिताः ॥ * ॥ मुण्डसंभाविताः ॥ * ॥ निचयोच्चारिताः ॥ * ॥ चपलापाकृताः ॥ * ॥ क्षत्रियमताः[८] ॥ * ॥ अध्यापकोदिताः । अधीतेऽध्यापक इति शकटा-

---

१ Śiś. 2, 38; A. C. D. om. the first pâda.

२ Śiśup. 2, 14; रामोष्ठ° B. C. F.; °चुंबनचुंबना A. B. D.; °चंचुना F.; °चुंबजचुंबजा C.

३ A. om. ऽपि; इत्यादावपि भवति D.

४ पंडितोथौ D. E.; पंडितोघौ F.

५ °श्रवणकुशला: A.

६ Śiśup. 3, 38.

७ अनिधनरूपा निधनकृता: A.C.D.

८ क्षत्रियमिता: A.; om. D.

ञ्जः ॥ * ॥ इन्द्रावधारिताः ॥ * ॥ देवाम्नाताः । वेदेति रत्नमतिः ॥ * ॥ क्षपणाख्याताः ॥ * ॥ विशिपं गृहम् । अविशिपं विशिपं कृतम् । विशिपकृतम् ॥ भोजस्तु विशिष्ट इत्याह । वामनो गण इत्यपि ॥ * ॥ निर्धनोपकृताः ॥ * ॥ ऊको राशिस्थानम् । किलिञ्जा इत्यपरे[1] । ऊकावकल्पिताः ॥ * ॥ पटूक्ताः ॥ * ॥ राशिकल्पिताः ॥ * ॥ भूतनिराकृताः[2] ॥ * ॥ श्रमणविश्रुताः ॥ * ॥ कुशलाख्याताः ॥ * ॥ कुं भूमिं दुनोति । कुन्दुः । उन्दुरः ।[3] तं मीनाति हिनस्ति । कुन्दुमो मार्जारः । कुन्दुमावकल्पिताः ॥ अपरे तु कन्दुमेति पठन्ति । कन्दुः पाकस्थानम् । तस्मिन्मिनोतीति[4] कन्दुमः । अकन्दुमाः कन्दुमाः कृताः[5] । कन्दुमकृताः शालयः ॥ कुङ्कुमेति रत्नमतिः ॥ * ॥ वदान्योदीरिताः ॥

कृतादयस्तु सर्वैरपि व्याघ्रादिभिः संबन्धमनुभवन्ति । अश्रेणयः श्रेणयो विहिताः । श्रेणिविहिताः । श्रेणिनिरूपिताः । श्रेण्यासीना इत्यादयो भवन्ति । यत्र सामर्थ्यं नास्ति तत्रेति शब्दाध्याहारो द्रष्टव्यः । अनिर्धना निर्धना इत्युपकृताः । अचपलाश्चपला इत्यपाकृताः । अभूता भूता इति निराकृता इति ॥ आकृतिगणोऽयम् । तेन तूलकृता इत्यादयोऽपि द्रष्टव्याः[6] ॥ १०९ ॥ इति श्रेण्यादिः ॥

कृतादयस्तु यथायोगं व्याख्याताः । ते च

**कृतमितभूतोदाहृतविश्रुतकलितावधारितोपकृताः ।**
**आस्थितनिराकृतोक्ताः संभावितमतविकल्पितासीनाः[7]**
**॥ ११० ॥**

---

१ कलिंजा इत्यपरे B. C.; ओको° कलिंज इत्यपरे । ओकावकल्पिताः F.

२ सूतनिराकृताः C.; om. A.

३ कुंदुरुंदुरुः F.; तं मिनोति° D.; तं सीना हिनस्ति° A.

४ कंदु पा° D.; कंदू पा° A.; तन्मिनोतीति A. D.

५ °कंदूम° thrice A.

६ तेन कृता इत्यादयो° A.; तूलकृताः गणकृता इत्यादयो पि भवन्ति । अभूता भूता इति निराकृता इः ॥ D.

७ E. om. मत; C. om. the second half stanza; D. om. from कृतादयस्तु.

अवकल्पितो निरूपितविहितोपाकृतसमाम्नाताः[1]।
आम्नातोदितदृष्टावज्ञातोदीरिताख्याताः[2] ॥ १११ ॥

इति कृतादिः ॥

वृन्दारको वराहश्च नागकुञ्जरपुङ्गवाः।
वृषभव्याघ्रशार्दूलहंससिंहर्षभादयः ॥ ११२ ॥

गौश्चासौ वृन्दारकश्च। गोवृन्दारकः ॥ * ॥ नृवराहः ॥ * ॥ पुंनागः ॥ * ॥ अश्वकुञ्जरः ॥ * ॥ मुनिपुङ्गवः ॥ * ॥ रघुवृषभः ॥ * ॥ नरव्याघ्रः ॥ * ॥ राजशार्दूलः ॥ * ॥ राजहंसः ॥ * ॥ पुरुषसिंहः ॥ * ॥ भरतर्षभः[3] ॥ आदिग्रहणात्। नवतमालनिभस्य नभस्तरोरित्यादयो[4]ऽपि भवन्ति ॥ ११२ ॥ इति वृन्दारकादिः ॥

मतल्लिकोद्घमिश्राः स्युः प्रकाण्डस्थलभित्तयः[5]।
हस्तपाशतटाः पादः पालीमचर्चिकादयः[6] ॥ ११३ ॥

अश्वमतल्लिका। गोमतल्लिका। यथा।

अभ्याजतोऽभ्यागततूर्णतर्णकां[7]
निर्याणहस्तस्य पुरो दुधुक्षतः।
वर्गाद्गवां हुंकृतिचारु निर्यतीम्
अरिर्मधोरैक्षत गोमतल्लिकाम् ॥

१ विहितोपकृताः स° E.; विहितोप्तपाकृताः स° B.; °कृताः समा° A. F. against metre.

२ अस्नातोदित° E.; आत्मनोदितः दृष्टो दृष्टावज्ञानोदीरि° A.; °दीरिताः ख्याताः B. E. F.; C. D. om. the *gaṇa* kṛitâdi.—[ज्ञात, उच्चारित, अपाकृत, and कल्पित, though instanced in the comment on the ṣreṇyâdi, are not included in these stanzas.]

३ भरतऋषभः B. C. D.

४ Ṣiṣup. 6, 29

५ मतल्लिकोद्य° A. B. C. D.; °वित्तयः A.

६ °पाशतराः E.; हस्तपादतटाः °A.

७ Ṣiṣ. 12, 41; °तूणतर्णिका A.; °तूर्णतीर्णिका D.; B. C. F. omit the whole stanza.

साध्वीं गामपश्यदित्यर्थः ॥ * ॥ पुरुषोद्वः[1] ॥ * ॥ आर्यमिश्राः ॥ * ॥ गोप्रकाण्डम् ॥ * ॥ वचःस्थलम् ॥ * ॥ अंसभित्तिः[2] ॥ * ॥ केशहस्तः ॥ * ॥ केशपाशः ॥ * ॥ स्तनतटम् ॥ * ॥ तातपादाः ॥ * ॥ पंसपाली ॥ * ॥ गोमचर्चिका ॥

एत आविष्टलिङ्गत्वान्मतल्लिकादयोऽन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना[3] एव समानाधिकरणा भवन्ति । प्रशंसावचनत्वं चैषां समास एवेति वाक्यं न भवति[4] ॥ आदिग्रहणात् तमस्काण्डः । उरःकवाटः । कुमारीतल्लजकादयो भवन्ति[5] ॥ ११३ ॥ इति मतल्लिकादिः ॥

खसूचिखेटौ कितवोऽथ चौर-
मूर्खब्रुवास्तस्करदुर्दुरूटौ[6] ।
धूर्तो विटः स्याद्धतकश्च भीरुश्
चेलश्च जाल्मापसदौ च धृष्टः[7] ॥ ११४ ॥

कुत्सितवाचिपदमेतैः[8] खसूच्यादिभिः सह समस्यते । तत्पुरुषश्च समासः ॥ * ॥ वैयाकरणश्चासौ खसूची च । वैयाकरणखसूची । यः पदपदार्थनिर्णयं कर्तुमुचितं पृष्टः सन् निष्प्रतिभत्वात्[9] खम् आकाशं सूचयति स एवमुच्यते ॥ शाकटायनस्तु पृषोदरादित्वात् षत्वे खषू-

---

१ पुरुषोद्यः A. B. C. D.

२ अंशभित्तिः A. D.

३ शब्देस्त्रिलिंगो° C.; D. corr. अविसलिंगत्वान्° शब्दबलाङ्गोपादाना; A. cf. note ५.

४ प्रशंसावचनत्वे चैषां° F.; C. om. from प्रशंसा°.

५ कुकुमारी । मतल्लिकादयो° C.; A. om. from केशपाशः.

६ खसूचीखेटौ B. C. F. against metre; °खेडौ कितवो च° C.; मूर्खौ ध्रुवस्तस्कर° D.; दुर्दुरूढौ D. F.

७ पूर्खौ विटः °च वृष्णः । D.; °अपशद्रौ° B. C.; °दृष्टः B. C.; °वृष्णः D.;
A. om. this śloka and the comment.

८ कुत्सितपदभेदैः D. (orig. °मेतैः).

९ निष्प्रतिपन्नत्वात् C.; D. corr. °निर्णयर्भुमुत्सर्य पृष्टो निःप्रतिभः सन्.

च्याह[1]। वामनप्रभृतयस्तु खसूचिरित्याहुः[2] ॥ * ॥ मुनिखेटः ॥ * ॥ याज्ञिककितवः ॥ * ॥ कविचौरः ॥ * ॥ पाठकमूर्खः ॥ * ॥ ब्राह्मणब्रुवः । जातिमात्रोपजीवी[3] ॥ * ॥ रक्षकतस्करः ॥ * ॥ मीमांसकदुर्दुरूटः[4]। मीमांसाध्ययनेन शौचाचारादिलक्षणं फलमनवाप्य[5] वेदविप्लावनमद्यपानाद्यनुष्ठाननिरतो नास्तिको जात इत्यर्थः ॥ * ॥ मुनिधूर्तः ॥ * ॥ मुनिविटः । शिरस्तुण्डमुण्डनदण्डादिमुनिवेषधारणाद्वेश्यागमनमद्यपानाद्यनाचारप्रवृत्त एवमुच्यते[6] ॥ * ॥ राक्षसहतकः ॥ * ॥ क्षत्रियभीरुः ॥ * ॥ ब्राह्मणचेलः ॥ * ॥ ब्राह्मणजाल्मः ॥ * ॥ तापसापसदः ॥ * ॥ ग्राम्यधृष्टः[7] ॥

आकृतिगणोऽयम् । तेन काण्डीरकाण्डस्पृष्टच्छान्दसबठर[8] इत्यादयो द्रष्टव्याः ॥ एतच्च गणत्रयं श्रीभोजदेवाभिप्रायेण द्रष्टव्यम् । अन्यवैयाकरणमतेन सूत्राण्येतानि ॥ ११४ ॥ इति खसूच्यादिः ॥

**मयूराच्छत्रतश्छात्राद्व्यंसकः प्रेहिवाणिजा[9]।**
**कम्बोजाद्यवनान्मुण्डोऽथ प्रेहिस्वागता तथा[10] ॥ ११५ ॥**

मयूरव्यंसकादयः समासा मयूरव्यंसकादयोऽयमित्यनेन[11] कर्म-

---

१ D. om. from शाकटायन°; F. om. षष्ठे.

२ °तु सूचिरित्याहुः C.; खशूचिरित्याहुः D.; cf. Kâș.V. on Pâṇ. ii.1,53.

३ ब्राह्मणध्रुवः° D.; °जातिमात्रोपजातिर्वा । C.

४ °दुर्दुरटः C.; दुर्दुरूढः F.; D. corr. दुर्दुरूढः च्युतः जैमिनीयनिध्यातोपि तत् फलमनवाप्य वेदविरुद्धमघपाना°.

५ फलमवाप्य° B. C.

६ शिरस्तुंडनदंडादिमुनिधारणात्° B.; °मद्यपानाद्यूतागारप्रवृष्ट° D.

७ ग्रामदृष्टः B. C. D.

८ °छांदसः बठर B.; छांदसं बठर C.; कांडीरकां स्पृष्टछांदसववर D.

९ मयूराच्छवतश्छा° B.; मयूरछत्रवछा° E.; °व्यंशका° D.; प्रहिवा° C.

१० कंबोजाद्यववान्° C.; A. om. this śloka and the comment to प्रेहि आदरेणागच्छे[त्यर्थः].

११ °व्यंसकादयसेत्यनेन D.; C. om. from समासा to ऽयम्.

धारयसंज्ञा भवन्ति ॥ * ॥ विगता अंसा यस्य । व्यंसकः । रमणीयाकारदेहनेपथ्योपेतत्वाद्[१] मयूरवन्मयूरः पुमान् । स चासौ व्यंसकश्च बाङ्गसाध्यव्यापारपुरुषकारविकलः[२] कश्चिदेवं प्रतिक्षिप्यते ॥ यद्वा । व्यंसयति छलयतीति[३] व्यंसकः । स चासौ स च यो लुब्धकानां मयूरो गृहीतशिक्षो[४]ऽन्यान्मयूरांश्छलयति वञ्चयति स विप्रलम्भक उच्यते[५] ॥ * ॥ छत्त्रवद्व्यंसकः । छत्त्रव्यंसकः । छत्त्रं हि प्रसारितं सत् सुन्दराकारमाभाति स्वयं तु स्थातुमशक्तमन्येन प्रयत्नवता धार्यते । एवमन्योऽपि यः सदा परावष्टम्भबलस्थितिः सुन्दराकारोऽपि स एवमुच्यते ॥ * ॥ छात्त्रवद्व्यंसकः[६] । छात्त्रव्यंसकः । छात्त्रो हि यथा लब्धभिक्षामात्रवृत्तिकृतसंतोषो निर्व्यापारतया कार्यतो व्यंसकस्तद्वदन्योऽप्येवमुच्यते[७] ॥ छात्त्ररूपेण वञ्चको वा लोकस्य । छात्त्रव्यंसकः ॥ * ॥ कम्बोज इव मुण्डः । कम्बोजमुण्डः ॥ यवन इव मुण्डः । यवनमुण्डः ॥ दीक्षितेन मुण्डितव्यम् । कम्बोजा यवनाश्च मुण्डा भवन्ति । एवमिमौ वृथा मुण्डावित्येकोऽर्थः ॥ * ॥ प्रेहि म्रियस्व वाणिजेति[८] यस्यां सा प्रेहिवाणिजा । प्रपूर्व इण् मरणे । यथा प्रेतः ॥ अन्ये त्वाहुः । प्रेहि । आदरेणागच्छेत्यर्थः[९] । स्त्रीलिङ्गत्वादाड् निपातनादेवाकार इति केचित् ॥ * ॥ प्रेहि स्वागतमस्याम् । प्रेहिस्वागता ॥ ११५ ॥

---

१ °देहवेष[नैपुण्योपलंभान् corr.]D.

२ बङ्गसाध्य° C. F.

३ बलयतीति B.; व्यंसयतीति बलयति C.

४ D. corr. thus for orig. गृहीतशिषो (? i.e. °शिखो).

५ विप्रलंभ उच्यते D.

६ C. om. from छत्त्रं हि.

७ °मात्रवृत्तिः कृतसंतोषो निर्व्यापारतयार्यतो° D.

८ प्रेहियस्व वा° C.; प्रेहियस्व वाणियेति B.; प्रेहि मृवयस्व° D.

९ अदारणागच्छेत्यर्थः D.; आगच्छे° F.; A. see p. १५६ note ९

एह्यपेहि क्रियापूर्वा वाणिजा स्वागतापि च ।
द्वितीया विघसा चापि प्रघसा प्रकसा तथा[1] ॥ ११६ ॥

एहि वाणिजेति यस्यां तिथौ क्रियायां वा सा[2]। एहिवाणिजा ॥ केचिद् आयान्ति गच्छन्ति[3] वाणिजा यस्यामिति विगृह्य निपातनादेहिभावः ॥*॥ अपेहि । अपसर वाणिजेति यस्यां सा[4] । अपेहिवाणिजा ॥*॥ एवम् एहिस्वागता ॥ अपेहिस्वागता ॥*॥ एहिद्वितीया ॥ अपेहिद्वितीया ॥*॥ एहिविघसा ॥ अपेहिविघसा ॥*॥ एहिप्रघसा ॥ अपेहिप्रघसा[5] ॥*॥ एहिप्रकसा ॥ अपेहिप्रकसा ॥ अपेहिप्रकसं दूरमिति यस्याम् । अपेहिप्रकसा । इति तु शाकटायनः[6] ॥ ११६ ॥

स्नात्वाकालकपीत्वास्थिरकाकिंचननिपत्यरोहिण्यः ।
आहरपूर्वाश्चेलावसनावनितास्तथा वितता[7] ॥ ११७ ॥

स्नात्वा कालीभूतः कृष्णीभूतः । स्नात्वाकालकः ॥*॥ पीत्वा स्थिरीभूतः । पीत्वास्थिरकः ॥*॥ न भवति किंचन क्वचित् किंचिदुपयुज्यत इत्यकिंचनं निष्प्रयोजनम्[8] । निपातनान्मुगागमः[9] । नास्य वा किंचनास्तीति । अकिंचनम् । अकिंचनः[10] ।

अकिंचनः सन् प्रभवः स संपदामकिंचना[11] ॥

---

१ विघसा थापि प्रकसा विकसा तथा । C.; °विघसो वापि° F.

२ एहि वाणिजेति यस्यां सा ॥ C.

३ आयाति गच्छति° B.

४ C. om. from एहिवाणिजा.

५ C. om. from एहिप्रघसा.

६ अपेहिप्रकसा ॥ दूरमिति यस्यां अपेहिविकसा इति° C.; D. F. om. तु.

७ पूर्वा सेला° A.; आहरवेलापूर्वा वेला° C.; °पूर्वा चेला वसना वनिता तथा° E.

८ °अकिंचननिष्प्र° F.

९ निपातनात्पुगागमः D. (? B.).

१० Thus A.; B. C. D. om. अकिंचनः; F. om. अकिंचनम्.

११ ? अकिंचनमकिंचनः° B. C.; see next note.

न किंचनं नास्य वा किंचनमस्तीति[1] विग्रहेण किंचनशब्दोऽनव्ययोऽप्यस्तीति चन्द्रदुर्गाभिप्रायो लक्ष्यते ॥ * ॥ निपत्य भूमौ पतिता रोहिणी लोहिनी रक्ता भवति या सा निपत्यरोहिणी ॥ * ॥ आहर चेलमिति यस्यां सा । आहरचेला[2] ॥ * ॥ एवम् आहरवसना ॥ * ॥ आहर वनितामिति यस्यां क्रियायां सा । आहरवनिता[3] ॥ * ॥ आहर विततं विस्तीर्णमिति यस्यां सा । आहरवितता[4] ॥ विततं जालमानायं इत्येके ॥ ११७ ॥

एहीडं पचलवणा प्रोहकपर्दा निकुच्यकर्णिश्च[5] ।
उद्धमचूडेहियवं भुक्त्वासुहितोद्धरावसृजे ॥ ११८ ॥

इडा स्त्री । यथा । महती इला । महेला ॥ एहि । आगच्छ । इडे स्तौति यस्मिन्कर्मणि तद् एहीडं विवाहादि कर्म । शास्त्राध्यायादिको वा ग्रन्थप्रविभागः ॥ अन्यपदार्थत्वेऽपि शब्दशक्तेर्नपुंसकत्वमेव ॥ * ॥ पच लवणमिति यस्यां क्रियायां सा पचलवणा ॥ * ॥ प्रोहापनय कपर्दं केशकलापं वराटकं वेति यस्यां सा प्रोहकपर्दा[6] ॥ * ॥ निकुच्य कर्णौ धावति । निकुच्यकर्णिः[7] ॥ * ॥ उद्धमोत्क्षिप चूडामिति यस्यां सा ।

---

१ सम्पदा अकिंचना । न किंचम नास्य वा किंचनास्तीति D.; सम्पदां । अकिंचना । न° A.; अकिंचना अकिंचनं नास्य वा° B.; संपदां । अकिंचनं न किंचनं° F.; C. om. from किंचन क्वचित् to न किंचनं नास्य वा.

२ आहार चेलमिति° आहारचेला A.; व for च C.

३ एवं आहरवसन्या आहर वनिचमिति °आहारवनिता A.

४ आहार विततं° आहारवनिता A.

५ एहिडं° E.; प्रोहिकप° A. B. C.; मोहि° D.; °कर्णिकस्य A.; निकुच्यर्णिश्च C.; कर्णिवश्च E.

६ प्रोह्यपनय° B. C.; मोहापनय° D.; कपर्दं° A. C.; कपर्द्दः D.; केसकलापं A.; केशकलापे D.; °प्रोह्विकपर्दा B. C.; मोहकपर्द्दा D.

७ निकुच्यवर्णौ° A.; निकुच्यकर्णौ धावर्णौ धावति° C.

उद्गमचूडा। अभिभवनं निर्भयता वा वर्तत इत्यर्थः ॥ * ॥ एहि यवेति यस्मिन्कर्मणि तद् एहियवम् ॥ अन्यस्तु। एहि यवैरिति यस्मिन्कर्मणीत्याह ॥ * ॥ भुङ्क्तासुहितः। यो यत्किंचिदशित्वा तृप्तो भवति स एवमुच्यते ॥ * ॥ उद्धर कोष्ठाद्धान्यमन्यद्वा[1]। अवसृज देहीति यस्यां सा। उद्धरावसृजा ॥ ११८ ॥

उच्चावचप्रोहकटोच्चनीच-
निश्चप्रचाः कृन्द्धिविचक्षणा च[2]।
विचप्रचा चाचपराचयुक्ता-
ऽकुतोभयाचोपचकादिशीकाः ॥ ११९ ॥

उच्चं च तदवचं च। उदक् चावाक् चेति वा। उच्चावचम्। यथा।

भिन्नेषु रत्नकिरणैः किरणेष्विवेन्दोर्[3]
उच्चावचैरुपगतेषु सहस्रसंख्याम् ॥

उच्चितं चावचितं च। उच्चावचमित्यन्ये[4] ॥ * ॥ प्रोह कटमिति यस्यां सा प्रोहकटा। प्रोहणं वीरणादेः कटादिभावाय विरचना[5] ॥ * ॥ उच्चैश्च नीचैश्च यत्तद् उच्चनीचम्। उच्चं च नीचं चेति वा ॥ * ॥ निश्चितं च प्रचितं च। निश्चप्रचम्[6]। निश्चितं च प्रचितं च यस्यां क्रियायां सा निश्चप्रचा ॥ निष्कुषितं च निस्त्वचं च। निश्चत्वचमिति केचित्[7] ॥ * ॥

---

१ उद्धकोष्ठाद्वा। B.; उद्धर कोष्ठान्। corr. D.; कोष्ठाद्वान्यद्वा C.

२ विचप्रवाचाच° F.; उच्चावच्च° A.; °कटोच्चनीच° B.; क्षद्विवि° C.

३ Śiś. 4, 46; इहेन्दोर् eds.

४ उचितं च अव° B. C. D.; उच्चावच्चमि° A.

५ प्रोहणं वारणादिः° C.; प्रोहश्रणं च पादैः कटादि° D.

६ B. om. from निश्चितं.

७ निस्तुचं च।° A.; °निश्चचचमिति B.; °च त्वचं च।° C.; निष्कुषितं निश्चं सूचमिति D.

छती वेष्टने । छन्द्वि विशिष्टं चचणमिति यस्यां सा छन्द्विविचचणा ॥ शाकटायनस्तु । छन्द्वि विचिणीहीति यस्यां सा छन्द्विविचिणा[1] । कर्णामविषया क्रिया । निपातनाद्धिलोपो विकरणस्य ह्रस्वत्वं चेत्याह ॥ * ॥ विक्रतं च प्रक्रतं च यस्यां क्रियायां सा विचप्रचा ॥ * ॥ आचितं च पराचितं च । आचपराचम् ॥ अवाक् च परस्ताच्च । आचपराचम्[2] ॥ * ॥ नास्ति कुतोऽपि कस्मादपि भयं यत्र । अकुतोभयम् ।

अकुतोभयसंचाराः षट् कर्माणि प्रकुर्वते[3] ॥

आचितं चोपचितं च । आचोपचम् ॥ आगच्छ चोपगच्छ च यस्मिन्कर्मणि तद् आचोपचमित्यन्ये ॥ * ॥ कां दिशं व्रजामीति । कांदिशीकः । गणपाठसामर्थ्याट्टीकण्प्रत्ययः[4] ॥ ११९ ॥

**उद्वपनिवपाथोद्धमविधमाहोपुरुषिकेहपञ्चम्यः ।**
**अहमहमिकायदृच्छोत्पचनिपचाः प्रोष्यपापीयान्[5]॥१२०॥**

उद्वप निवपेति यस्यां सा । उद्वपनिवपा ॥ * ॥ उद्धम विधमेति यस्यां सा । उद्धमविधमा ॥ * ॥ अहो पुरुषोऽहमित्यस्य भावः । आहोपुरुषिका[6] । मनोज्ञादित्वादकञ्[7] ॥ * ॥ इह पञ्चमीति यस्यां क्रियायां सा । इहपञ्चमी ॥ इहपञ्चमीशब्दसंपर्कात्प्रकरणमधिकारो वा । इहपञ्चमीत्यन्ये ॥ * ॥ अहं शक्तोऽहं शक्त इत्यस्ति यस्यां सा । अहमहमिका । स्वार्थि-

---

१ विचिणीहीति० छंद्विविचचणा A.; विक्षणीहीति० कंद्विविक्षणा D.; छंद्वि विचिचिणीहि० छंद्विविचचणा F.—Bö. and Gaṇaratnâv. have छन्तविचचणा; also Kâś. V. ed.; but MSS. I. O. 2440, Beng. As. Soc. छन्धिविचचणा. [छंत छिंद्वि हे विचचणेति यस्यामभिधीयते सा छंतविचचणा । Gaṇaratnâv.]

२ Gaṇaratnâv. explains both ways.

३ अकुतोभयं । सं० C.; कुर्वते A. D.

४ ०सामर्थ्यादीकक् D.; कांदिशाकः। ०आकण्प्र० C.; ०र्थ्यात् ढीकण्प्रत्ययः F.

५ ०निपचा प्रोच्यपापीयान् A.; प्रोष्यपापीन् C.

६ अहोपुरुषिका० A. B.; ऽहमित्यस्यां क्रियायां corr. D.

७ मनोज्ञादित्वादिति कश्चित् D.; not mentioned in the *manojñâdi* 409-10.

को मत्वर्थीयो वा काट्[१] ॥ अहं पूर्वम् अहं पूर्वं प्रवर्त इति विगृह्य तद्भावो[२]ऽहमहमिका। पृषोदरादित्वाद्द्वद्धभावादिरिति सुधाकरः[३] ॥ * ॥ या च्छ्राऽभिप्रायः[४]। यदृच्छा। स्वभावाद् यथेच्छमित्यर्थे वृत्तिः[५]। यथा। यदृच्छयासूयति यस्तपस्यते[६] ॥ * ॥ उत्पच निपचेति यस्यां क्रियायां सा। उत्पचनिपचा ॥ आख्यातमाख्यातेन सातत्य इति सातत्ये समासः। असातत्यार्थं एव पाठः[७] ॥ अन्ये तु। उत्पच। आख्यातोपसर्गसमुदायो नाख्यातग्रहणेन गृह्यते ॥ * ॥ पापं विद्यते यस्य स पापी।[८] बहूनां पापिनां मध्येऽतिशयेन पापी। पापीयान् ॥ प्रोष्य वियुक्तो भूत्वा पापीयान् विरूपकः। यथा।

राघवः प्रोष्यपापीयाञ्जहीहि तमकिंचनम्[९] ॥ १२० ॥

आख्यातेनाख्यातं सातत्येऽन्यक्रियापदस्यार्थे।
कर्तारं च ब्रूते हि कर्मणा बहुलमाभीक्ष्ण्ये ॥ १२१ ॥

आख्यातं तिङन्तमाख्यातेन तिङन्तेन सह समस्यते। अन्यस्य क्रियापदस्यार्थे। अश्नीत पिबतेति सततं वाचो भवन्ति यस्यां भृत्यजनाज्ञादानक्रियायां सा। अश्नीतपिबता। अत्रैषामाख्यातप्रतिरूप-

---

१ स्वार्थे को म° B. C.; मत्वर्थीयो पाठः A.; स्वार्थको मत्वर्थीयो (corr. ये) पाठः D.; वा पावापाठः B.; वा पाठः C. F. [काट् (क + आट्) = काप् Vop 4, 6]; cf. next page, n. ८.

२ °पूर्वप्रवर्त्तेते इति° तद्भागे A.; °अहं पूवर्त्ते इति° B.

३ Thus corr. D.; सुखाकरः MSS.; cf. p. ४१, note १७.

४ याकच्छा अभिप्रायः° A.; यादृक्षा अभि° C.; या ऋच्छा अभिप्रायः यदृक्षा अभिप्रायः ।° D.; यादृशी इच्छा ऽभिप्रायः F.

५ °इत्यर्थवृत्तिः A.; इत्यार्थे वृत्तिः C.

६ Kirât. 14, 21.

७ C. om. सातत्य इति; D. corr. इति सातत्ये सिद्धे असातत्यार्थं इह पाठः।

८ यस्या सा पापी A.; यस्य सा पापी। °पापीनां C.

९ Bhaṭṭik. 5, 91.

काणामव्ययानामन्यपदार्थे स्त्रीलिङ्गता । अर्शआदित्वाद्वाऽदन्तता[१] ॥ एवं खादतमोदता । गणपाठसामर्थ्यादतङ्[२] ॥ खादाचामायां को नाम कस्य न सहायः[३] ॥ पचतभृज्जतेत्यादि ॥ * ॥ ह्यन्तं क्रियापदं कर्मणा ह्यन्तस्यैवाप्येन बहुलं समस्यत आभीक्ष्ण्ये गम्यमाने । स च समासः कर्तारमाचष्टे ॥ जहि जोडं देवदत्त[४] यो वक्ताभीक्ष्णं सातत्येन ब्रवीति स वक्ता जहिजोडः[५] । एवम् उज्जहिजोडमित्यादि[६] ॥ पचौदनमिति बहुलवचनान्न भवति ॥ १२१ ॥

एहिरेयाहिराभिन्द्धिलवणोत्पत्यपाकलाः ।
स्यादहंपूर्विका प्रोहकर्दमाथोद्धरोत्सृजा ॥ १२२ ॥

एहि आगच्छ रे । याहि गच्छ रे । इति यस्यां क्रियायां सा । एहिरेयाहिरा । गणपाठादात्वम् ॥ * ॥ भिन्द्धि लवणमिति यस्यां सा भिन्द्धिलवणा ॥ * ॥ उत्पत्य । आकाशे भूत्वा । या पाकला पाण्डुर्भवति सा । उत्पत्यपाकला । अत्र परकालक्रियाया अभावे क्त्वाप्रत्ययोऽपि । अनेनैव सूत्रेणैवं पूर्वेष्वपि ॥ * ॥ अहं पूर्वम् अहं पूर्वमिति यस्यां सा[७] । अहंपूर्विका । काटौ[८] पूर्ववत् ।

माहंपूर्विकया हि मे विदधतां सिंहासनाध्यासनम्[९] ॥

प्रोहापनय कर्दममिति यस्यां सा प्रोहकर्दमा ॥ * ॥ उद्धर किमपि द्रव्यमुत्सृजेति यस्यां सा । उद्धरोत्सृजा ॥ १२२ ॥

---

१ अर्शत्वादि° A.; अर्थादिवद्वा° D.

२ °अतट् C.; अनङ् F.

३ खोदां वामायां° C.; खादावामायां का नाम° B.

४ जहि जौडं° B. and orig. D.; देवदत्तं । F. (? right); D. corr. देवदत्त इति.

५ जहिजौडः A. B. and orig. D.

६ उज्जहिजौड° A. B. and orig. D.

७ B. C. F. only once अहं पूर्वं.

८ काठौ A. D. F.; काटौ B. C.; cf. page १६२, note १.

९ चिदंधतां A.; सिंहासनाध्यासिनं D.

उत्पतनिपता श्यामा निषस्रपूर्वोन्मृजावमृजा[1]।
ज्ञेया त्वहंप्रथमिका प्रोह्यपदीहद्वितीये च ॥ १२३ ॥

उत्पत निपतेति यस्यां सा । उत्पतनिपता ॥ * ॥ निषस्रा सती श्यामा जाता । निषस्रश्यामा ॥ निषद्यश्यामेति[2] श्रीभोजः । अत्र विशेषणसमासे पूर्वपदानियमः स्यात्[3] ॥ * ॥ उन्मृड्ढि अवमृड्ढीति यस्यां क्रियायां सा । उन्मृजावमृजा । अत एव निपातनादनयोरिहैव[4] साधुत्वम् ॥ * ॥ अहं प्रथमो यस्यां सा । अहंप्रथमिका ॥ * ॥ प्रोह्य पादौ धावति । प्रोह्यपदि[5] ॥ * ॥ इह द्वितीयेति यस्यां क्रियायां सा । इहद्वितीया ॥ शाकटायनस्तु । अद्यपञ्चमी । अद्यद्वितीयेत्याह ॥ वामनप्रभृतिभिरयमिति वचनात्परमो मयूरव्यंसकः समासान्तरं[6] न भवतीत्युक्तम् ॥ भोजस्तु[7] न चानेन समास इति वचनादयमन्येन सह समस्यत एवेत्याह । मयूरव्यंसकप्रिय इति ॥

आकृतिगणोऽयम् । तेन शाकपार्थिवघण्टामाथच्छत्त्रभारविप्रभृतयो[8] वेदितव्याः ॥ १२३ ॥ इति मयूरव्यंसकादिः ॥

दधिपयसी मधुसर्पिःसर्पिर्मधुरामलक्ष्मणा ज्ञेयाः ।
आद्यवसाने श्रद्धामेधे ऋक्साम वाङ्मनसे ॥ १२४ ॥

न दधिपयआदीत्यादिना योगेन समाहारे प्राप्ते प्रतिषेधादितरेतरयोग एव भवति ॥ * ॥ दधिपयसी ॥ * ॥ मधुसर्पिषी ॥ * ॥ सर्पिर्म-

---

१ °पूर्वोत्सृजावसृजा C.
२ श्यामामिति C.
३ विशेषणसपूर्वपदानियम स्यात् A ; °पदो नि° C.
४ अनयोरिवेह C.; °एतयोरिहैव F.
५ प्रोह्यपदी D.
६ समासानंतरं A
७ श्रीभोजस्तु D.
८ °घंटामाघ° A. (? B.); °घंटाघच्छ° D.; °विप्रतयो B.; °भृतयोपि A.

ध्नुनी ॥ * ॥ रामलक्ष्मणौ ॥ * ॥ आद्यवसाने ॥ * ॥ श्रद्धामेधे ॥ * ॥ ऋक्सामे ॥ * ॥ वाङ्मनसे । यथा ।

अतीतः पन्थानं तव च महिमा वाङ्मनसयोर्
अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि[१] ॥

अस्मादेव गणपाठादेतयोः समासान्तः ॥ १२४ ॥

**मेधादीक्षाश्रुतश्रद्धाध्ययनेभ्यस्तपः[२] परम् ।**
**प्रवर्ग्योपसदौ स्कन्दविशाखौ हरिवासवौ ॥ १२५ ॥**

मेधातपसी ॥ * ॥ दीक्षातपसी ॥ * ॥ श्रुततपसी ॥ * ॥ श्रद्धातपसी ॥ * ॥ अध्ययनतपसी ॥ * ॥ शेषं स्पष्टम् ॥ १२५ ॥

**सूर्याचन्द्रमसौ सोमरुद्रौ नारदपर्वतौ ।**
**शुक्लकृष्णौ पितापुत्रौ ज्ञेयौ भीमार्जुनौ तथा ॥ १२६ ॥**

**मित्रावरुणौ मातापितरावथ कम्बलाश्वतरौ ।**
**सोलूखलमुसलाविह सपरिज्याकौशिकौ च गणे[३] ॥ १२७ ॥**

सहोलूखलमुसलाभ्यां वर्तेते सह परिज्याकौशिकाभ्यां च[४] । उलूखलमुसले ॥ परिज्याकौशिकौ ॥ १२७ ॥

**नरनारायणशिववैश्रवणा ब्रह्मप्रजापती चापि ।**
**अग्नीषोमाविध्माबर्हियाज्यानुवाक्याद्याः[५] ॥ १२८ ॥**

---

१ See the whole stanza, p. 4.

२ Thus F.; °श्रुताच्छ्रद्धाध्ययनाभ्यां तपः B. D. E.; °श्रुताश्रद्धाच्यवनाभ्यां° A.; °श्रुतश्रद्धा° यनाभ्यां तपः C.

३ शालूखलमुशला° A.; °सपरिजाकौ° E.; सपरज्या° B. C. F.; गणौ B.; काशिकाभ्यां च C.

४ परज्या° B. F.; सपरिज्या° A.; C. om. from सहोलूखल.

५ अग्निषोमा° C.; इध्मबर्हि° नुवाकाद्याः F.

एषोऽपि स्पष्टः[१]। आद्यशब्दः प्रकारे। तेन येषां लोक इतरेतरयोग[२] एव द्वन्द्वो दृश्यते तेषामिह ग्रहणं भवति। यथा चन्द्रार्काविति॥ १२८॥ इति दधिपयआदिः॥

गवाश्वाजाविकं कुब्जवामनं तु गवाविकम्।
दर्भशरं श्वचण्डालं स्त्रीकुमारं तृणोलपम्[३]॥ १२९॥

पूर्वपदेत्यादिना सूत्रेण गवाश्वादीनां समाहार एव द्वन्द्वो भवति॥ * ॥ गौश्च। अश्वश्च। गवाश्वम्॥ * ॥ अजा च। अविकश्च। अजाविकम्॥ अजश्च। अविका चेति वा[४]॥ * ॥ कुब्जश्च वामनश्च[५]। कुब्जवामनम्॥ अन्ये तु कुब्जाश्च स्त्रियो वामनाश्च स्त्रियः। अत एव वचनात्पुंभावे[६] कुब्जवामनमित्याहुः॥ * ॥ गौश्च। अविकश्च। गवाविकम्॥ * ॥ दर्भश्च शरश्च। दर्भशरम्॥ * ॥ श्वा च चण्डालश्च। श्वचण्डालम्[७]। शाश्वतिकवैराभावे समाहारः। चण्डालपरिगृहीतानामेव शुना सहैकत्रावस्थानम्[८]॥ * ॥ स्त्रियश्च कुमाराश्च। स्त्रीकुमारम्॥ अन्ये तु स्त्रियश्च कुमार्यश्च। उत्तरपदस्यात एव निपातनाद् ईकारनिवृत्तौ स्त्रीकुमारमित्याहुः॥ * ॥ तृणानि च। उलपाश्च। तृणोलपम्॥ १२९॥

---

१ एषो विस्पष्टः B. C.

२ A. om. from रेतरयोग to śloka 130; but (probably from a confusion of leaves) inserts here a passage from *kachchhâdi*: आंतरीपः। आजपादः(!)। द्वयं° cf. śl. 328 com.

३ दर्भशर श्वच° C.; °श्वचांडाल्लं° तृणोलुपं F.; A. om. this śloka and comment.

४ अजाश्वाविकाश्चेति वा D.

५ दासनं च D.

६ °पुंवद्भावे D. F

७ चांडालश्च श्वचांडालं F.; ॥ श्वा च चंडालं C.—Gaṇaratnâv. has श्वचांडालं; Bö., Kâs. V. श्वचण्डालं.

८ चांडालपरि° F.; शुनां सहै° B.; शूनां° C.

दासीदासाजैडकदासीमाणवकपुत्रपौत्राणि।
कुब्जकिरातोष्ट्रखरे मूत्रपुरीषं यकृन्मेदः[१] ॥ १३० ॥

दासी च दासश्च। दासीदासम् ॥ * ॥ अजस्य। अजा च वा। एडकस्य। अजैडकम् ॥ * ॥ दास्यश्च माणवकस्य। दासीमाणवकम्।

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः[२] ॥

स्वार्थिकश्च कः ॥ अन्ये दासीमाणवमित्येव पठन्ति[३] ॥ * ॥ पुत्रस्य पौत्रस्य। पुत्रपौत्रम् ॥ * ॥ कुब्जस्य किरातस्य। कुब्जकिरातम् ॥ कुब्जाश्च कैरातकाश्च। कुब्जकैरातकम्। किराता जनपदः। तत्र भवाः कैरातका इति शाकटायनः ॥ विश्रान्तन्यासस्तु किरात एव कैरातो म्लेच्छ इत्याह ॥ * ॥ उष्ट्रस्य खरस्य। उष्ट्रखरम् ॥ * ॥ मूत्रं च पुरीषं च। मूत्रपुरीषम् ॥ * ॥ यकृच्च मेदश्च। यकृन्मेदः ॥ १३० ॥

अर्जुनपुरुषं शाटीपट्टिकम्[४] उष्ट्रशशमूत्रशकृती च।
भागवतीभागवतं तृणकाष्ठकुटीकुटे चापि ॥ १३१ ॥

अर्जुनस्य पुरुषस्य। अर्जुनपुरुषम् ॥ अर्जुनपुरुष इति[५] शाकटायनः ॥ * ॥ शाटी च पट्टिका च। शाटीपट्टिकम्[६] ॥ शाटीप्रच्छद-

---

१ A. om. this śloka and comment.

२ Kârikâ to Pâṇ. iv. 1, 161.

३ दासीमाणवकमित्येव° D.

४ Thus D. E. (D. orig. °पक्किकं); °पिच्छिक° B.; पक्किक° C.; पत्यिक° F.; A. om. text and comm. to मूत्रं च शकृच्च.

५ ? अजुन B. C. F.; अर्ज्जनपुरुषमिति D.; अर्जुनशिरीषं Kâś. V. ii. 4, 11; °शिरीषं। °पुरुषं Bö.; अर्जुनस्य शिरीषं चार्जुनशिरीषम्। द्वावपि वृक्षविशेषवाचिनौ ॥ अर्जुनः प्रार्थः पुरुषो वासुदेवः अर्जुनपुरुषम्। यद्वा अर्जुनः सप्तच्छदः पुरुषः पुन्नागः। Gaṇaratnâv.

६ Thus D. corr. from orig. पक्किका° पक्किकं; पच्छिका च शाटीपच्छिकं B. and (छ) C.; पत्यिका च शाटीपत्यिकं F.; शाटीपिच्छकं Kâś. V. ii. 4, 11 ed. (°पट्टिकं MS. I. O. 2440; °प्रापकंद (!) MS. Beng. As. Soc.); शाटीपटीरं। शाटीप्रच्छदं। शाटीपट्टिकं Bö.; Gaṇaratnâv. has शाटीपट्टिकं & °प्रच्छदं.

मिति भोजः[1] ॥ * ॥ उष्ट्रस्य शशस्य । उष्ट्रशशम् ॥ * ॥ मूत्रं च शकृच्च । मूत्रशकृत् ॥ * ॥ भगवान्देवताऽस्याः । भगवत इयं वा । भागवती ॥ भागवती च भागवतस्य । भागवतीभागवतम् ॥ * ॥ तृणं च काष्ठं च । तृणकाष्ठम् ॥ * ॥ कुटी च कुटस्य । कुटीकुटम्[2] ॥ कश्चित् कुडी बाला । कुडो बालः । कुडी च कुडस्य । कुडीकुडमित्याह[3] ॥ १३१ ॥

मांसशोणितशब्दोऽपि दर्भपूतीकसंयुतः ।
बालवृद्धं बुधैर्ज्ञेयमुपाध्यायश्च याजकात्[4] ॥ १३२ ॥

मांसं च शोणितं च । मांसशोणितम् ॥ * ॥ दर्भस्य पूतीकस्य । दर्भपूतीकम् ॥ वामनस्तु दर्भपूतिकमित्याह[5] ॥ * ॥ बालस्य वृद्धस्य । बालवृद्धम् ॥ * ॥ याजकस्य । उपाध्यायस्य । याजकोपाध्यायम् ॥ * ॥

गवाश्वप्रभृतिषु यथोच्चारितरूपग्रहणादिह न भवति । गोऽश्वौ[6] । गोऽश्वम्[6] ॥ नियतश्चायं गणः ॥ १३२ ॥ इति गवाश्वादिः ॥

हस्ती महेला गणिका कुसूलं
कटोलगण्डोलकटोलकाश्च[7] ।
गण्डोलकाजौ च कपोतगण्डौ
कण्डोलकण्डोलकजालयुक्तौ[8] ॥ १३३ ॥

पादस्याहस्त्यादेर्लुगित्यनेन हस्त्यादेर्वर्जितत्वाल्लुक् समासान्तो न

---

१ श्रीभोजः D.

२ कुटीकुटी A. — कुटी कुंभदासी कुटः कुंभः । यद्वा कुटी पर्णशाला कुटो गृहम् । Gaṇaratnâv.

३ कुडो वलः । कुडा च कुडस्य कुडमित्याह । C.

४ वालवृद्धं तु वै ज्ञेयमु° A.

५ दर्भस्य पूलीकं च दर्भपूलीकम् । वामनस्तु दर्भपूतीकमित्याह । D. F.— °पूतिकं (पूतिका वनौषधिविशेषो या सोमवल्ली प्रतिनिधित्वेनोपादीयते) Gaṇaratnâv.

६ गौश्वाश्वस्य गोश्वं C.; गौश्वौ F.

७ कुशूलं° A. B. C.; कुशूलकटो° F.; कटोलकंडोलकटो° A.

८ च for च° कंडोलककंडयुक्तौ C.; कन्दोलकण्डोलक° D.

भवति ॥ * ॥ हस्तिन इव पादावस्य । असौ हस्तिपादः ॥ * ॥ महेलापादः ॥ * ॥ गणिकापादः ॥ * ॥ कुसूलपादः[1] ॥ * ॥ कटोलपादः ॥ * ॥ गण्डोलपादः ॥ * ॥ कटोलकपादः ॥ * ॥ गण्डोलकपादः ॥ * ॥ अजपादः ॥ * ॥ कपोतपादः ॥ * ॥ गण्डस्येव पादावस्य । गण्डपादः ॥ * ॥ कण्डोलमिव पादावस्य । कण्डोलपादः ॥ * ॥ कण्डोलक इव पादावस्य । कण्डोलकपादः[2] ॥ गण्डोलगण्डोलकशब्दावपि वामनः[3] ॥ * ॥ जालपादः ॥ १३३ ॥ इति हस्त्यादिः ॥

कुम्भस्थूणाशतविकलशीविष्णुगोधैकदासी-[4]
द्रोणीसूचीमुनिशुचिशकृत्कृष्णजालार्द्रनञ्वेः[5] ।
सूत्राष्टभ्यां कुणिगुणनिरः सूकरद्वैः षषश्व[6]
ड्यन्तं पादं सुविहितपदादेशमेनं विदन्तु ॥ १३४ ॥

कुम्भाविव पादावस्याः । कुम्भपदी ॥ * ॥ स्थूणापदी ॥ * ॥ शतं पादा यस्याः । शतपदी । खर्जूरकजन्तुः[7] ॥ * ॥ विगतौ पादौ यस्याः । विपदी ॥ * ॥ कलशीव[8] पादावस्याः । कलशीपदी[9] ॥ * ॥ विष्णोरिव पादावस्याः । विष्णुपदी ॥ * ॥ एवं गोधापदी ॥ * ॥ एकः पादो यस्याः । एकपदी ॥ केचिन्न पठन्ति ।[10] एकपादित्यपि हि स्त्रियां दृश्यते ॥ अन्ये

---

१ कुशूलपाद: A. B. C. F.

२ कंडोलकमिव° F.; om. D.

३ गंडोलगडोलक: । शब्दाव° A.; गंडोलगंडोलशब्दाव° B.— ? एव for अपि; Kâs. V. ed. has गण्डोल। गण्डोलक। [and कटोल for which MS. I. O. 2440 कुद्दाल (as Gaṇaratnâv.), MS. Beng. As. Soc. पटोल]. Besides the above three couples of words (also Bö.), Gaṇaratnâv. has कंटोल, कंटोलक.

४ कलसी° A. B. C.

५ सद्यत् for शद्यत् A. C. F

६ शूकर° A. B. C.; शूकराद्वि:° F.

७ ? °तनु: or तन्तु: A.; °तरु: B. C.; कर्ज्जुरकतनु: F.; खरकतनु: D.—शतपदी ओषधिविशेषो जंतुविशेषो वा। Gaṇaratnâv.

८ कलसीव MSS.

९ कलसी twice B. C. D.; once A. F.

१० D. corr. केचित्तु पठन्ति एकपदा इत्यपीह° D

तु व्यवस्थितत्वानुवृत्तेरिहैकस्मिञ्छब्दे[१] विकल्पं वर्णयन्ति ॥ * ॥ दासीपदी ॥ * ॥ द्रोणीपदी ॥ * ॥ सूचीपदी[२] ॥ * ॥ मुनिपदी ॥ * ॥ शुचौ पवित्रौ पादौ यस्याः । शुचिपदी[३] ॥ * ॥ शकृत्पादौ यस्याः । शकृत्पदी[४] ॥ * ॥ कृष्णौ पादौ यस्याः । कृष्णपदी ॥ * ॥ जालमिव पादौ यस्याः । जालपदी ॥ * ॥ आर्द्रौ पादौ यस्याः । आर्द्रपदी ॥ * ॥ अविद्यमानौ पादौ यस्याः । अपदी ॥ * ॥ त्रिपदी । यथा । त्रिपदीच्छेदिनामपि[५] ॥ * ॥ सूत्रमिव पादावस्याः । सूत्रपदी ॥ * ॥ अष्टौ पादा अस्याः । अष्टापदी[६] । संज्ञायामष्टन इत्यात्वे[७] ॥ * ॥ कुणी[८] पादावस्याः । कुणिपदी ॥ * ॥ गुणस्तन्तुः । तद्वत्पादावस्याः । गुणपदी ॥ * ॥ निर्गतौ पादावस्याः । निष्पदी ॥ * ॥ सूकरस्येव पादावस्याः । सूकरपदी[९] ॥ * ॥ द्वौ पादावस्याः । द्विपदी । छन्दोविशेषजातिः ॥ * ॥ षट् पादा यस्याः । षट्पदी ॥ * ॥ ङ्यन्त इति पाद इत्यनेन ङीप्रत्ययान्तं सुविहितपदादेशमिति कुम्भपद्यादिरित्यनेन पदादेशे कृते[१०] ग्यसुट्शिणिक्ये[११]ऽपदस्य पादः पदित्यनेन सुविहितः पदादेशो यस्य तमिति[१२] । उपमानसंख्यापूर्वपदस्येह पाठो नित्यङ्यर्थः[१३] ॥ कुम्भपद्यादिशब्दानां प्रवृत्तिनिमित्ताभावेऽपि रूढितः शतपुष्पादिशब्दवत्स्वाभि-

---

१ व्यवस्थितवानु° A.; व्यवस्थितविभाषानुवृत्तेरिह C.; व्यवस्थितस्यानु° D.

२ शूचीपदी A. D.; B. C. om. मुनिपदी.

३ शुचिः (word obliterated) पादौ° D.; शुचीपदी A.

४ ?Thus also Bö. and Kâs. V. ed.; सकृत्पादौ° B. C. F.; सकृत्पदी A. B. C. F., Gaṇaratnâv., MSS. Kâs. V.

५ Raghuv. 4, 48.

६ अष्टपदी अष्टापदी° F.

७ संज्ञायामष्टः B. F.; अष्ट इत्य° D.; °अष्टनः संज्ञायां C. as P. vi. 3, 125.

८ कुणीव C. D.

९ शूकर° twice A. F.; अचर° D.

१० सुविहितं पदा° C.; पादादेशे कृते A. D.

११ ? यसुट्° F.; °सिणिक्ये° A.; D. corrupt.

१२ पादादेशो° A.; यस्येतमिति C.

१३ नित्यं ङ्यर्थः C.; नित्यत्वार्थः D.

धेये प्रवृत्तिर्द्रष्टव्या[1]। यथा। त्रिपादः काष्ठमयोपकरणविशेषः। न हि तस्यापि त्रय एव पादाः किंतु पादचतुष्टयसद्भावेऽपि तादृग्व्यपदेशो यादृक्पादत्रये सति॥ आकृतिगणश्चायम्। तेन शितिपदी। अशीतिपदी। शाकपदी[2]। इत्यादयो द्रष्टव्याः॥ १३४॥ इति कुम्भपद्यादिः॥

शरद्विपाशौ हिमवत्कियत्सदो
यद्दृग्विदो द्यौर्विदनोमनस्त्यदः।
दिक्पथ्युपानच्चतुरस्तदाऽनडुज्
जरा जरोऽक्षि प्रतिसंपरानुतः[3]॥ १३५॥

शरदादिभ्योऽव्ययीभावादित्यनेन शरदादिभ्यष्टच्[4] समासान्तो भवति॥*॥ शरदः समीपम्। उपशरदम्॥*॥ विपाशो नद्याः समीपम्। उपविपाशम्[5]॥*॥ हिमवत आ। आहिमवतम्॥*॥ कियन्तं कियन्तं प्रति। प्रतिकियतम्[6]॥*॥ सदः सदः प्रति। प्रतिसदम्[7]॥*॥ यं यं प्रति। प्रतियदम्॥*॥ दृशं दृशं प्रति। प्रतिदृशम्॥*॥ विदं विदं प्रति। प्रतिविदम्॥*॥ द्यौरित्यनेन दिव्शब्दो द्योशब्दश्च संगृहीतः। दिवं दिवं प्रति। प्रतिदिवम्॥ द्यां द्यां प्रति। प्रतिद्यवम्॥*॥ विशं विशं प्रति। प्रतिविशम्॥*॥ अनसः समीपम्। उपानसम्॥*॥ मनो मनः प्रति। प्रतिमनसम्॥*॥ त्यं त्यं प्रति। प्रतित्य-

---

१ प्रवृत्तिनिवृत्ताभिवे° शब्दवत् त्वभि° B., शतपुष्पा हि° C.

२ ? सति आदिशब्दात् शितिपदी। आशीतिपदी आशाकपदी D.; सितिपदी B. C. F.; शाकयदी।° F.

३ A. om. from तिसंपरानुतः to विनीलबन्धना on ṣl. 136, but has a passage from ṣl. 334-5 (q.v.); cf. p १६६, n. २

४ शरदादिभ्यष्ट° B.; °भ्यश्च D.

५ सामीप्यं° C.; अपविपाशं D.

६ प्रतिकियंतं B. C. D.

७ ? प्रतिशरदं D.—सद् Bö., Kâṣ. V. MS. I. O. 2440 (om. ed., MS. Beng. As. Soc.); सदस् (सदसीत्यधिसदसम्) Gaṇaratnâv.

दम् ॥ * ॥ दिशं दिशं प्रति । प्रतिदिशम् । यथा । प्रतिदिशं क्रियते कलभैरवः[१] ॥ * ॥ पन्थानं पन्थानं प्रति । प्रतिपथम् । अनुपथम् ॥ ऋक्पूरब्धूःपथादित्यनेनैव[२] समासान्तस्य सिद्धत्वादस्य पाठो न संगतः प्रतिभाति परं वृद्धवैयाकरणमतानुरोधेन पठितः[३] ॥ * ॥ उपानहः समीपम् । उपोपानहम् ॥ * ॥ चतुर्णां समीपम् । उपचतुरम् ॥ * ॥ उपतदम् ॥ * ॥ अनड्वाहमनड्वाहं प्रति । प्रत्यनडुहम्[४] ॥ * ॥ जरा जर इति[५] जराशब्दोऽत्र पठ्यते । तस्य च स्थाने जरसादेशः । जरायाः समीपम् । उपजरसम् ॥ * ॥ अक्षिणि प्रति । प्रत्यक्षम् ॥ एवं समीपमक्ष्णः । समक्षम् ॥ परोक्षम् । भोजस्तु[६] परसमानार्थः परःशब्दोऽव्ययम् । अक्ष्णोः परम् । परोक्षम् । अव्ययेऽव्ययीभावः[७] । कथं प्रत्यक्षोऽर्थः[८] परोक्षः काल इत्यादेरव्ययीभावस्य सत्त्ववचनता ऽर्शआदित्वादतो भविष्यतीत्याह ॥[९] अन्वक्षम् ॥

आकृतिगणोऽयम् । तेन ह्रिरुक्[१०] । इत्यस्यानतिक्रमो यथाह्रिरुकमित्यादयो वेदितव्याः ॥ १३५ ॥ शरदादिः ॥

**उरः सर्पिर्मधूपानद्दधि शालिः पयः पुमान्[११] ।**
**अनड्वान्नौस्तथा लक्ष्मीर्नञ्पूर्वान्नित्यमर्थतः[१२] ॥ १३६ ॥**

---

१ Śiśup. 4, 60.

२ °पथामित्यनेनाच् समा° C.; cf. Pâṇ. v. 4, 74.

३ °मतानुरोधात् समासांतस्य सिद्धत्वादस्य पाठे न पठितः C.

४ प्रत्यनड्वाहं C.; प्रत्यनुडहं B.

५ जरा जरमिति D

६ श्रीभोजस्तु D.

७ अक्ष्णः परं परोक्षं । अत्ययेऽव्य° F.

८ परोक्षोर्थः D.

९ अर्शआदित्वादच् भविष्यतीत्याह F.; °त्वादचा (orig. °दता°) भविष्य° । अनूक्षं° corr. D.

१० ह्रिरुगित्यनतिक्रम्य यथाह्रिरुकम् Gaṇaratnâv.

११ शालि पयः° C. D. E.

१२ अनड्वा नौ° C.; A. om. this śloka and the comm. to विनीलबन्धना.

ऋन्नित्याडुरआदिभ्य[१] इत्यनेनोरःप्रभृतिभ्यः शब्देभ्यः कब् भवति ॥ * ॥ व्यूढोरस्कः ॥ * ॥ बहुसर्पिष्कः ॥ * ॥ प्रियमधुकः । भारविस्तु ।

प्रियमधुरसनानि षट्पदाली
मलिनयति स्म विनीलबन्धनानि[२] ॥

इति चिन्त्यम् । प्रथमं लीढमधवः पिबन्ति कटुभेषजम् ॥

इत्यादि च ॥ * ॥ अवमुक्तोपानत्कः ॥ * ॥ प्रियदधिकः ।

रचतु वः क्षिप्रकरः चोभितदधिभाण्डगलितदधिकस्य[३] ।

वामनवृत्तौ[४] प्रियदध्य इति चिन्त्यम् ॥ * ॥ संपन्नाः शालयो यस्य । संपन्नशालिकः ॥ * ॥ प्रियं पयो यस्य । प्रियपयस्कः ॥ प्रियपुंस्कः[५] ॥ प्रियानडुत्कः ॥ प्रियनौकः ॥ प्रियलक्ष्मीकः ॥ पयआदीनामेकवचनान्तानां पाठाद्वचनान्तरे विकल्पः । द्वे बहूनि वा पयांसि यस्य स द्विपयाः । द्विपयस्कः । बहुपयाः । बहुपयस्क इत्यादि । यथा ।

क्षीणपयस्युपेयुषि भिदां जलधरपटले[६] ॥

समुद्रमध्ये गतनौः प्लवमाना इवाम्भसि[७] ।

नात्र नावो विपत्तिमात्रविवक्षा किं तर्हि कृत्स्नानां नावां निवृत्तिः ।

अकृशमकृशलक्ष्मीश्चेतसा शंसितं सः[८] ।

अत्र बह्व्यो लक्ष्म्यः शोभा विवक्षिताः । केचिल्लक्ष्मीदरीशब्दौ प्रातिपदिकौ पठन्ति नित्याड इत्येव सिद्धे तुल्ययोगेऽपि कबर्थम्[९] । सल-

---

१ Cf. P. v. 4, 153 (ऋत् नित्याड्); ऋन्नित्यादुरआदिभ्यः C.; ऋन्नित्यादुर° F.; ऋान्नित्यादेरआदिभ्य D.

२ Kirât. 10, 26.

३ क्षिप्रकरचोभित° B. C. F.

४ °वृत्तः F.; °वृत्तिः B. C.; °दधिकस्य वृत्तौ D.

५ वरपुंस्को ग्रामः F.

६ Kirât. 5, 43; °पयस्कोपेमुषि° D.; पयस्कपेयु° C.

७ °गता नौः° C.; गतनौप्ल° A.; गतजौप्ल° E

८ Kirât. 5, 52.

९ कमर्थं A. C.; कथं। D.

क्ष्मीको विनाशितः । सदरीकः खातः । अत्र लक्ष्म्या सह पुरुषो विनाशितः[१]। दर्या सह पर्वतः खात इति तुल्ययोगः । लक्ष्मीपाठ ऋन्नित्याङोऽयं विधिर्न भवति[२] ॥ बहुतन्त्री । बहुतन्त्रीक इत्येके[३] ॥ * ॥ नञ्पूर्वादिति । न विद्यतेऽर्थो यस्य सोऽनर्थको । नीचव्यापारः श्लोको वा ॥ नञ्पूर्वादिति किम् । व्यर्थो व्यर्थकः ॥ सनञ्पूर्वात्क्षणादुदीचामिति[४] गणसूत्रमत्र वामनो मन्यते । सह चणेन वर्तते । सचणकः[५] । अविद्यमानः चणो यस्य सोऽचणकः[६]। प्राचां सचणः । अचणः[७] ॥१२६॥ इत्युरआदिः ॥

**ज्ञेयौ द्विदण्डिसंहतपुच्छी द्विमुसलिनिकुच्यकर्णि[८] च ।**
**आच्यपदिप्रोह्यपदी अन्तेवास्येकपदिसपदी[९] ॥ १३७ ॥**

द्विदण्डीत्यादयः समुदाया इच्समासान्ता[१०] निपात्यन्ते ॥ * ॥ द्वौ दण्डावस्मिन्प्रहरणे । द्विदण्डि प्रहरति ॥ * ॥ संहतानि पुच्छान्यस्मिन्सरणे[११] । संहतपुच्छि धावति ॥ * ॥ द्वे मुसले यत्र प्रहरणे । द्विमुसलि प्रहरति[१२] ॥ * ॥ निकुच्य कर्णौ धावति । निकुच्यकर्णि ॥ * ॥ आच्य

---

१ F. om. खातः; अत्र लक्ष्मीसहपुरुषा (orig. षो) C.

२ ऋन्नित्यादिः । अयं० विधेर्न० D.; ऋन्नित्याङोर्यविधेर्न० A.; cf. p. १७३, n. १.

३ B. D. om. बहुतन्त्री; बहुतंत्रीवदुत्तरमित्येके D.

४ सह नञ्पूर्वा० F.; not K.V.v.4,151.

५ सहचणिकः D.; सहचणकः B.; सचणिकः D.

६ अचणिकः A. D.

७ प्राचां सचणकः । प्राचां सचणः । अचणः A.; प्राचां सचणकः । अचणकः D.; प्रोवां सचणः । चण C.; प्रवा सचणकः । अचणः । F.

८ द्विदण्डिसहित० D.; द्विमुसल० B.; द्विमुशल० C.; विकुच्य० E.

९ आच्यपद्रो० B. C.; ०समानपदी C.—Gaṇaratnâv. has the same śl.

१० इत्समा० A. D. F.; इन्समा० B. C. cf. P. v. 4, 127.

११ अस्मिन्प्रहरणे गोपुच्छादिः D.

१२ मुशले० द्विमुशलि० C. D.; F. om. प्रहरति.

पादौ शेते। आद्यपदि शेते॥ अन्ये तु। आद्यौ पादावस्मिञ्छयने। अत एव वचनात् अन्नतेर्ण्यणि नलोपं प्रतिपन्ना ॥ * ॥ प्रोह्य प्रेर्य पादौ। प्रोह्यपदि हस्तिनं वाहयति॥ मतान्तरं प्राग्वदेदितव्यम्[1] ॥ * ॥ अन्ते वासोऽस्मिन्निति। अन्तेवासि तिष्ठति॥ अन्तेवासी गुरोरित्यन्य एव शब्दः। अन्ते वसति तच्छील इति णिनन्तः[2] ॥ * ॥ एकः पादोऽस्मिन्गमने। एकपदि॥ * ॥ समानौ पादावस्मिन्। सपदि गच्छति॥ १३७॥

अञ्जलिदन्तात्पाणेः कर्णाद्बाहोश्च हस्ततश्चापि[3]।
उभयोभध्वनिपूर्वादिज्विज्ञेयः परो गणतः[4] ॥ १३८॥

उभयोभशब्दपूर्वेभ्योऽञ्जल्यादिशब्देभ्य इच् परो वेदितव्यः[5] ॥ * ॥ उभावञ्जली[6] यत्र पाने। उभयाञ्जलि। उभाञ्जलि पिबति॥ * ॥ उभौ दन्तावस्मिन्खादने। उभयादन्ति। उभादन्ति खादति॥ * ॥ उभयापाणि। उभापाणि॥ * ॥ उभयाकर्णि। उभाकर्णि शृणोति ॥ * ॥ उभयाबाहु। उभाबाहु प्रहरन्ति। अत्र निपातनादिज्लोपः। प्रत्ययलोपलक्षणेनाव्ययीभावसंज्ञा। यदिह लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम्॥ * ॥ उभयाहस्ति। उभाहस्ति[7] ॥ उभौ हस्तिनौ यत्रसंग्रामादिविधाने तदुभयाहस्तीत्यजितदेवाचार्यः ॥ * ॥ क्रियाविशेषणत्वाच्चान्यत्र न भवति। द्वौ दण्डावस्यां शालायाम्। द्विदण्डा।

---

१ मतांतरे॰ C.; प्राग्वेदितव्यं D.; प्राग्वितिदितव्यं A.

२ एव। स शब्दो॰ B. C.; णिजंतः C.; cf. P. iii. 2, 78; iv. 3, 104 (णिनि).

३ हस्तिनश्चापि F.; cf. n. ७.

४ D. om. this śloka.

५ इन् वेदि॰ C.; शब्देभ्यः इभ्य[प]रो वेदि॰ D.

६ उभयोसंजलो A.

७ All MSS. om. उभयाहस्ति। उभाहस्ति।; probably accidentally omitted in the cod. archet.; for the way in which F. reconciles his text and comment, see note ३.—Gaṇaratnâv. reads हस्तिन् [उभौ हस्तिनौ यत्र संग्रामविधाने उभाहस्ति उभयाहस्ति वा संग्रामं विधत्ते].

द्विमुसला ॥ केचिद् द्वौ दण्डौ यस्मिन्संग्रामे । उभौ कर्णावस्य प्रासादस्य । उभाकर्णीत्यादौ क्रियाया अन्यत्राप्यन्यपदार्थे प्रतिपन्नाः । स्वद्विवचनं विनाप्युभशब्दस्य वृत्तौ प्रयोगो गणपाठात्[१] ॥ १३८ ॥ इति द्विदण्ड्यादिः ॥

प्रियाकान्तामनोज्ञास्वाकल्याणीभक्तिदुर्भगाः[२] ।
सचिवावामनाक्षान्ताचपलानिचितासमाः[३] ॥ १३९ ॥

सुभगा दुहिता बाल्या वामाथ तनया तथा[४] ।
कुक्कुटाण्डमृगक्षीरकाकशावादयो मताः[५] ॥ १४० ॥

पुंस्यनूङित्यादिना प्रियादिषूत्तरपदेषु पुंस्त्री[६] न भवति ॥ * ॥ कल्याणी प्रिया यस्य । कल्याणीप्रियः ॥ * ॥ दर्शनीयाकान्तः ॥ * ॥ भव्यामनोज्ञः ॥ * ॥ कल्याणीस्वः[७] ॥ * ॥ प्रियाकल्याणीकः ॥ * ॥ वाग्देवताभक्तिः ॥ कथं दृढभक्तिः । दृढं भक्तिरस्येति[८] नपुंसकमत्र पूर्वपदम् । भोजस्तु भक्तौ च कर्मसाधनायामित्यनेन सूत्रेण भवानीभक्तिरित्यादि भवति भावसाधनायां तु स्थिरभक्तिर्दृष्टभक्तिर्भवान्येत्यादि भवतीत्याह[९] ॥ * ॥ कल्याणीदुर्भगः ॥ * ॥ प्रियासचिवः ॥ * ॥ प्रिया-

१ । सुसिद्धिवचन विना० F.; विनार्जप उभ० A.; D. om. from स्वद्विवचनं.

२ मनोज्ञास्वा क० A.

३ सचव० B.; कांता for चान्ता B.C.; निचिताः समाः A.; विचिता० C.

४ वाल्यावामथ० A.; वाल्याधामनातनयास्तथा E.; वाल्यावामना[तनया suppl.]स्तथा D.; बाल्यावामास्व तनया० F.

५ कुंकुडाटांड० B.; काकसाब्राादयो० A.; काकाशा० C.

६ स्त्री B. C.; cf. P. vi. 3, 34.

७ कल्याणीमनोस्वः A.

८ दृढभक्तिरस्येति B.; कथं दृढभक्तिरस्येति D.

९ स्थिरभक्तिभवान्या इत्यादिना भ० A.; D. om. from भोजस्तु. स्थिरभक्ति occurs Vikramorv. v. 1; दृष्टभक्तिर्भवान्या Megh. v. 36.

वामनः ॥ * ॥ प्रियाचान्तः ॥ प्रियारचान्त इत्यपि कश्चित्[१] ॥ * ॥ प्रियाचपलः ॥ * ॥ प्रियानिचितः ॥ * ॥ दर्शनीयासमः ॥ १३९ ॥

कल्याणीसुभगः ॥ * ॥ कल्याणीदुहितृकः ॥ * ॥ कल्याणी बाल्या यस्य । कल्याणीबाल्यः ॥ भोजस्तु[२] कल्याणीबाल इत्याह ॥ * ॥ प्रियावामः ॥ * ॥ कल्याणीतनयः ॥

अस्वार्थे[३] इत्येव । कल्याणप्रिया । कल्याणमनोज्ञा । इत्यादि ॥ भद्रेश्वराचार्यस्तु ।

किंच स्वा दुर्भगा कान्ता रचान्ता निचिता समा ।
सचिवा चपला भक्तिर्बाल्येति स्वादयो दश ॥

इति स्वादौ वेत्यनेन[४] विकल्पेन पुंवद्भावं मन्यते ॥ * ॥ इति प्रियादिः ॥

कुक्कुट्यादयोऽण्डादिषु वेत्यनेन कुक्कुट्यादयः शब्दाः स्त्रीलिङ्गा अण्डादिषूत्तरपदेषु[५] पुंवद्वा भवन्ति ॥ * ॥ कुक्कुट्या अण्डम् । कुक्कुटाण्डम् । कुक्कुट्यण्डम् ॥ * ॥ मृगक्षीरम् । मृगीक्षीरम् ॥ * ॥ काकशावः । काकीशावः ॥ * ॥ आदिशब्दस्य व्यवस्थावाचित्वात् ॥ मयूराण्डम् । मयूर्यण्डम् ॥ काकाण्डम् । काक्यण्डम् ॥ मृगपदम् । मृगीपदम् ॥ मृगीव चपला । मृगचपला । मृगीचपला ॥ हंसगद्गदा । हंसीगद्गदा । इत्यादयो भवन्ति ॥ * ॥ अयं विकल्पो भोजदेवाभिप्रायेण[६] । शाकटायनस्तु नित्यमिच्छति ॥ १४० ॥ इति कुक्कुटाण्डादिः ॥

कोटरमिश्रकसिध्रकसारिकपुरगा गणे समाख्याताः[७] ।
अञ्जनभञ्जनकिंशुकलोहितखञ्जा नलः शाल्वः ॥ १४१ ॥

---

१ प्रियारचान्त° A.; क्वचित् B. C. F.
२ श्रीभोजस्तु D.
३ अन्वार्थे F.; अस्वार्थे C.
४ चेत्यनेन A. D.
५ °पदस्थेषु F.
६ D. om. from काकाण्डं to भोजदे-
७ गणे ख्याताः A.

संज्ञायां गिरिवनेऽञ्जनकोटरादेरित्यनेनैतेषां[1] शब्दानामग्दीर्घो भवात[2] ॥ * ॥ कोटराणां वनम् । कोटरावणम् ॥ * ॥ मिश्रकावणम् ॥ * ॥ सिध्रकावणम्[3] ॥ * ॥ सारिकावणम् ॥ * ॥ पुरगावणम् ॥ * ॥ इति कोटरादिः पञ्चको गणः ॥

अञ्जनेनोपलक्षितो गिरिः । अञ्जनागिरिः ॥ * ॥ भञ्जनस्य राज्ञो गिरिः । भञ्जनागिरिः ॥ शाकटायनस्तु भाञ्जनागिरिरित्याह[4] ॥ * ॥ किंशुकागिरिः[5] ॥ * ॥ लोहितवर्णो गिरिः । लोहितागिरिः ॥ * ॥ खञ्जस्य गिरिः । खञ्जागिरिः ॥ * ॥ नलस्य[6] गिरिः । नलागिरिः ॥ * ॥ शाल्वा नाम जनपदो राजानश्च[7] । तेषां गिरिः । शाल्वागिरिः[8] ॥ १४१ ॥

**किंशुलकशल्वपिङ्गलकुक्कुटयुक्तः[9] शराहिवंशकुशाः ।**
**ऋषिकपिहनुमुनिधूमा वादः पद्मं शुचिर्मृगो वेटः[10] ॥ १४२ ॥**

किंशुलको[11] राजा । तस्य गिरिः । किंशुलकागिरिः ॥ किंशुलकः शिलापुष्पमिति केचित् ॥ * ॥ शल्वानां गिरिः । शल्वागिरिः ॥ * ॥ पिङ्गलागिरिः ॥ * ॥ कुगिति[12] शब्दं कुर्वन्तोऽटन्तीति कुक्कुटाः[13] । तेषां गिरिः । कुक्कुटागिरिः ॥ * ॥ इत्यञ्जनादिः[14] ॥

---

१ अनेनैषां B. C. F.

२ शब्दानामं दीर्घो न भ° A.; शब्दानां मग्दी° C.; D. corr. शब्दानामंमस्य दी°; cf. P. vi. 3, 117.

३ मिश्रिकावर्ण । सिध्रिकावर्णं A.

४ भाजनागिरिरि° A.

५ किंसुकागिरिः B. C.

६ नड Yajñesvara (Gaṇaratnâvalî) and (*var. l.* नंध्र) Bö.; om. Kâs. V.

७ राजा च C.; राजा वा Yajñesv.—Kâs. V. ed. MSS. साल्वक for शाल्व.

८ शाल्वागिरिकः D.

९ किंसुलक° E.; °शुक्ल° C. (also com.).

१० पद्मश्च° C.; शुचि मृगो° B. C. E.

११ किंशुलुक Bö., Yajñ.; किंशुलक Kâs. V. ed. (°लु° MS. $\alpha$.; °सुलु° MS. $\beta$.)

१२ कुगिरिः । कुगिति C.; कुक्कुगिति F.

१३ शब्दंन्तोटंतीति° A.; शब्दकुर्वन्नटतीति कुक्कुटः D.

१४ = Pâṇ. किंशुलुकादि (किंशुल°).

शराद्यनजिरादिबह्वचो मताविल्यनेन[1] शरादीनामजिरादिवर्जितस्य बह्वचो मतौ संज्ञायां विषयेऽग्दीर्घो भवति ॥ * ॥ शरावती नाम नदी ॥ * ॥ अह्रीवती ॥ * ॥ वंशावती ॥ * ॥ कुशावती ॥ * ॥ ऋषीवती ॥ * ॥ कपीवती ॥ * ॥ हनूमान् ॥ वसन्तकाले हनुमानिवागतः । इत्यादौ दीर्घत्वं विनापि संज्ञा प्रतीयते शब्दशक्तिस्वाभाव्यात् ॥ हनुहनूशब्दावित्यन्ये[2] ॥ * ॥ मुनीवती[3] ॥ * ॥ धूमावती ॥ * ॥ वार्दावान्नाम पर्वतः[4] ॥ * ॥ पद्मावती ॥ * ॥ शुचीवती ॥ * ॥ मृगावती ॥ * ॥ वेटावान् पर्वतः ॥ * ॥ आकृतिगणोऽयम् । तेन भोगावती । वातावतीत्यादि ॥ १४२ ॥ इति शरादिः ॥

**अजिरस्थविरौ खदिरो मलयालंकारचक्रवाकाश्च ।**
**खपुरः शशाङ्कपुलिने हिरण्यकारण्डवकरीराः ॥ १४३ ॥**

अजिरवती ॥ * ॥ स्थविरवती ॥ * ॥ खदिरवती ॥ * ॥ मलयवती ॥ * ॥ अलंकारवती ॥ * ॥ चक्रवाकवती ॥ * ॥ खानि पृणन्ति । खपुराः पूगाः सन्त्यस्यामिति । खपुरवती ॥ * ॥ शशाङ्कवती ॥ * ॥ पुलिनवती ॥ * ॥ हिरण्यवती ॥ * ॥ कारण्डववती[5] ॥ * ॥ करीरवान् पर्वतः[6] ॥ * ॥

चातुरर्थिको मतुः[7] ॥ चत्वारोऽपि गणाः संज्ञायां वेदितव्याः । कोटराणां वनं कोटरवनम् । अञ्जनस्य गिरिरञ्जनगिरिः । शरवती तृणः ॥ १४३ ॥ इत्यजिरादिः ॥

---

१ Cf. Pâṇ. vi. 3, 119.

२ हनु हनू इति द्विरूपं शब्दद्वयमेकार्थमित्यन्ये Yajñ.; D. om. fr. वसन्तकाले.

३ The other works give also मणि.

४ F. adds वार्ह्मावती.

५ Bö., Yajñ. have हंस & कारण्डव; Kâs. V. ed., MSS. हंसकारण्डववती.

६ अजिरवती खदिरवती कारंडववती हंसवती पुलिनवती चक्रवाकवती एता अपि पुरीविशेषस्य नदीविशेषस्य वा संज्ञा एव । वर्द्धमानस्तु आजरस्थविरौ° इति पठित्वा etc. स्थविरवती etc. प्रत्युदाहरन् काशिकाद्यपेक्षयाऽधिकं सम्प्रकमुरीचकार ॥ Yajñ.

७ चातुर्थिको° A. D.

पृषोदराश्वत्थनखाः पलाश-
कपित्थदूणाशपिशाचदूढ्याः[१]।
विडौजसोलूकमृगौ[२] गभस्ति-
बृहस्पतिद्वापरकांदिशीकाः ॥ १४४ ॥

पृषोदरादीनि यथोपदिष्टमित्यनेन[३] पृषोदरादयः शब्दा अविहितलोपागमवर्णविकाराः[४] शिष्टैः प्रयुज्यमानाः साधवो भवन्ति ॥ * ॥ पृषत[५] उदरम्। पृषोदरम् ॥ पृषद् उदरे यस्य स पृषोदरो देवताविशेषः। पृषच्छब्दो घृतसंमिश्रदध्यादिहविष्यवृत्तिः। यद्वा। ह्रयमानपृषद्विधानसहचरितो ग्रन्थोऽप्यभेदोपचारात् पृषच्छब्दवाच्यः ॥ * ॥ अश्व इव तिष्ठति। अश्वत्थः। पिप्पलः ॥ * ॥ न खनतीति नखः ॥ * ॥ पलमश्नातीति[६] पलाशः ॥ * ॥ कपिरिव तिष्ठतीति कपित्थः। कपयस्तिष्ठन्त्यस्मिन्निति वा। कपित्थः। कपिरिव लम्बतेऽधस्य[७] पततीति कपित्थः ॥ * ॥ कृच्छ्रेण नाश्यते। निन्दितो वा नाश इति[८] दूणाशः। दुर उत्वम् उत्तरपदे टुत्वं च[९] ॥ * ॥ पिशितमशित्वा चन्दतीति पिशाचः ॥ * ॥ दुष्टु ध्यायतीति दूढ्यः ॥ * ॥ वेवेष्टीति विड् व्यापकम् ओजो यस्य। विडौजाः। पाकशासनः[१०] ॥ * ॥ ऊर्ध्वौ कर्णावस्येति। उलूकः[११] ॥ * ॥

---

१ पलास° E.

२ °सौलूखलकमृगौ° C.; दिवौकसोलूकलुको गभस्ति° D.

३ P. vi. 3, 109.

४ अविहितवर्णागमलोपविकाराः B. C. F.

५ पृषत् D.—पृषत् उदरं यस्य eds. Pâṇ., Kâś. v.; पृषतो हरिणस्योदरं पृषोदरम्। पृषत उदरमिवोदरं यस्येति वा विग्रहः। पृषच्छब्दो घृतमिश्रदध्यादिहविष्यवाची तदुदरे यस्य स पृषोदरो देवविशेष इति वर्द्धमानः। Yajñ.

६ मलयमश्नातीति A.

७ लवते यश्च A.; लंबतेथस्य B.; लंबते यश्च C. F.; लंबतेऽध च ग यततीº D.

८ वा नाशयति B. C. F.; वा इति D.

९ उत्तरपदादेष्टुत्वं च F. (P. vi. 3, 109, v. 6); D. corr. उत्तरपदेषु णत्वं च.

१० पाकशासनः प्रयोगः D.

११ A. B. C. D. add खं लातीति उलूखलं (अदूरवालं D.); for उलूखल see sl. 148.

मृदूकुर्वन्ति गच्छन्तो मृगास्तेन प्रकीर्तिताः ॥

गां बभस्ति दीपयतीति गभस्तिः ॥ * ॥ बृहतां पतिः । बृहस्पतिः । तकारस्य सकारे ॥ * ॥ द्वाभ्यां कृतत्रेताभ्यां परम् । द्वौ परौ मुख्यावत्रेत्युभयकोटिस्पृक्कात्[1] । द्वापरं युगं संशयश्च ॥ * ॥ कां दिशं व्रजामीति कांदिशीकः[2] ॥ १४४ ॥

पृषोद्वानबलीवर्ददूडाभवानमन्तराः[3] ।
परःसहस्रदूडाशषोढातस्करषोडशाः ॥ १४५ ॥

पृषत उद्वानं[4] शुल्कम् । पृषोद्वानम् ॥ उत्पूर्वाद्वातेष्टनप्रत्यये[5] । उद्वानमिति[6] शाकटायनः ॥ * ॥ बलं वर्धयतीति बलीवर्दः[7] ॥ * ॥ कृच्छ्रेण दभ्यते निन्दितो वा दाभः । दूडाभः । उत्वं टुत्वमनुनासिकलोपश्च ॥ पाणिनिभोजौ तु दूडभ इत्याहतुः[8] ॥ * ॥ वनानामन्तराणि । वनान्तराणि । वनान्तरेषु भवाः । वानमन्तरा देवाः ॥ * ॥ सहस्रात्परे । परःसहस्राः ॥ * ॥ कृच्छ्रेण दाश्यते । निन्दितो वा दाश इति दूडाशः[9] ॥ * ॥ षड्भिः प्रकारैः । षोढा । उत्वे टुत्वे च[10] ॥ * ॥ तत्करोतीति तस्करः ॥ * ॥ षट् च दश च । षोडश । षष उत्वे दस्य टुत्वे[11] ॥ १४५ ॥

---

१ °स्पृक्का A. B. C. D.; °मुख्यौ वा ऽत्रेत्यु° स्पृक् । वा द्वापरं° F.—From Kshîrasvâmin on A. K. 3, 4, 164.

२ कां दिशं यातीति कांदिशीको भयद्रुतः Yajñ.

३ पृषोनब° वातमंतराः C.; पृषोद्वानधबली° A.; पृषोद्यान° F.

४ Thus A. B. C. D.; पृषत उद्यानं F.—पृषत् उद्वानं (or पृषदु॰) पृषोद्वानं Kâs. V. ed. MSS.; पृषोत्थान Bö. and (= हरिणस्रोत्थानं) Yajñ.

५ D. corr. वातेर्यत्प्रत्यये.

६ उद्यानमिति B.; उद्यानं F.

७ वर्ह्यतीति° F.; बलीवर्जः C.

८ P. vi. 3, 109, V. 6; thus also Bö., Kâs. V., Yajñeṣv.

९ दाश्यते° दास° A. D. F.; दास्यते° दस° B.; दूडासः B. F.; C. om. from उत्वं टुत्व°.

१० ढत्वे च B. D.; उत्वे च । C.

११ उत्वे B. C. D.

अवटकुलटे प्रायश्चित्तं परःशतधूर्जटी
पुरुषमहिषावश्वत्थामा बिडालवलाहकौ
भ्रमरवडबासीमन्ताश्च श्मशानमनीषिते
मुसलकितवौ प्रायश्चित्तिः सृगालवनस्पती[1] ॥ १४६ ॥

अवागटन्त्यस्मिन्निति । अवटः ॥ * ॥ कुलान्यटतीति कुलटा ॥ * ॥ प्रायस्य पापस्य चित्तम् । प्रायश्चित्तम् । अतिचारशोधनम् आलोचनादि ॥ * ॥ शतात्परे । परःशताः ॥ भोजस्तु परशब्दसमानार्थं परःशब्दमाह ॥ * ॥ धूर्गङ्गा जटास्यस्य[2] । धूर्जटिः । महेश्वरः ॥ * ॥ पूः शरीरम् । तत्र शेते । पुरुषः[3] ॥ * ॥ मह्यां शेते । महिषः ॥ * ॥ अश्व इव तिष्ठति । अश्वत्थामा द्रोणपुत्रः । यथा ।

अश्वत्थामा हत इति किल व्याहृतं सत्यवाचा[4] ॥

बिलं दारयतीति बिडालः । ललोपो टुलं रस्य ललं च । यथा । बिभ्युर्बिडालेक्षणभीषणाभ्यः[5] ॥ * ॥ वारिणो वाहकः । वलाहको मेघः । यथा ममैव ।

मतिमतां मधुरं कवितामृतं
ददति मन्त्रिललाम वलाहके[6] ।
विदधती निखिलार्थविवेचनं[7]
जयति कल्पलता चिरदीधितिः ॥

भ्रमन् रौतीति भ्रमरः ॥ * ॥ अश्वस्थाम्ना[8] । वडवा । अशलोपे डक्य-

---

१ चमरवडवा॰ A. C.; ॰मुशल॰ A. B. C. D.; सृगाल A. B. C. D. E.

२ जटा यस्य C. F.—धुरिव व्यायता जटा यस्यासौ॰ Yajñ.

३ पुरं शरीरं॰ पुरुषो जीवात्मा नरो वा Yajñ.

४ Thus MSS.—अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा स्वैरं शेते गज इति किल व्याहृतं सत्यवाचा । Veṇîs. 3, 10 (Grill. śl. 64).

५ Śiśup. 3, 45.

६ दधति मन्त्रि॰ B.

७ निखिलार्थ वि॰ B. C.

८ अश्वस्य अश्वा A.; अश्वस्य C.

नुनासिकलोपश्च[1] ॥ * ॥ सीम्नोऽन्तः । सीमन्तः । केशविन्यासः ॥ * ॥ शवानां शयनम्[2]। श्मशानम् ॥ * ॥ मनस इष्टम् । मनीषितम् । यथा। मनीषितं द्यौरपि येन दुग्धा[3] ॥ यथा वा ममैव ।

दूरादपि रिपुलक्ष्म्यो मनीषितं यन्त्रयन्ति सावेगाः ।
अब्धिमिवेतरभूभृन्निरुद्धगतयोऽपि कूलिन्यः[4] ॥

मनस ईष्टे । मनीषी । णिनि मनसोऽन्त्याजादिलोपः । शकारस्य षकारः ॥ स्मृत्यर्थदयीशामित्यनेन[5] षष्ठी । इति शाकटायनः ॥ * ॥ मुह्नः स्वनं लातीति मुसलम्[6] ॥ * ॥ किं तवास्तीति कितवः ॥ * ॥ प्रायस्य चित्तिः । प्रायश्चित्तिः । अतिचारशोधनम् ॥ * ॥ असृज्या-लीयते । असृग्गिलति[7] । असृगाल्लेढीति वा । सृगालः ॥ * ॥ वनस्य पतिः । वनस्पतिः । अपुष्पो वृक्षो न्यग्रोधादिः । सर्वोऽपि हरितकायो[8] वनस्पतिरिति केचित् ॥ १४६ ॥

आशीविषपुरोडाशषड्ढानिर्ल्वयनीस्वराः[9]।
हेरम्बारग्वधावाढ्यषोडशाङ्गुलिमन्मथाः[10]॥ १४७ ॥

आस्यस्य विषमिति । आशीविषः । आशुविषयोर्वक्रोक्तिरीत्या आशु-शब्दस्य आशीभावः[11] ॥ आशिषि दंष्ट्रायां विषमस्येति वा । तथा च शाश्वतकोशे । दंष्ट्राशीरनिलाशिनाम् ॥ अजयेऽपि ।

---

१ असलोपि° A. D.; आलोपि° B. C.

२ शवानां शयनं C.—मृताः स्म शेरते ऽस्मिन्निति स्मशानं पितृवनम् Yajñ.

३ Raghuv. 5, 33.

४ रिपुलक्ष्म्या मनीषितं साचगाः ॥ अश्विमिवेतरभूवृत्तिरुद्ध° नलिन्यः C.; यं अयंति सावेगाः A. (?B. F.); अयमिवेतर° A.; D. om. fr. यथा वा ममैव

५ °दयेशामि° F.; cf. P. ii. 3, 52.

६ स्वानं° A. B. C. D.; मुशलं C. D.

७ असृगालाति F.

८ ? Thus MSS.; Prof. Roth suggests सर्वेऽपि हरीतक्यादयो, since with *harîtakî* begins the enumeration of the *mahâdruma*, as in the Madanavinoda.

९ °निर्व्वयनी° C.; निर्बूयनी B.; °षघ्रनिर्ल्लेयीनीश्वराः D.

१० °वाह्यषोडशादलि° A.; वधाबषोडशवलि° C.

११ A. B. om. from आशुविष°; C. from आस्यस्य.

आशीरिष्टस्याशंसायां दंष्ट्रायामनिलाशिनाम् ।
आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति[१] ॥

तस्यां विषमस्य[२] । आशीविषः । इत्येके ॥ * ॥ पुरो दाश्यत[३] इति पुरोडाशः । पिष्टपिण्डः । यथा ।

पुरोडाशभुजामिष्टमिष्टं कर्तुमलंतराम्[४] ॥

षड्भिः प्रकारैः । षड्ढा ॥ * ॥ नितरां लूयते स्वशरीराद्वहिः क्रियते शरीसृपैरिति[५] निर्ल्वयनी । भुजङ्गमुक्ता त्वक् ॥ * ॥ स्वयं राजन्त इति स्वराः ॥ * ॥ प्रत्यूहे रम्बते शब्दायते[६] । हेरम्बो गणपतिः ॥ * ॥ आराद् रोगान् हन्तीति । आरग्वधः ॥ * ॥ आध्यायन्ति जनास्तमिति । आढ्यः । घञर्थे कः ॥ * ॥ षड् दन्ता अस्य । षोडन् । षोडती ॥ * ॥ वाग्वा-दस्यापत्यम् । अत इञ् । वाड्वलिः[७] ॥ * ॥ यूनां मनो मथ्नातीति मन्मथः ॥ १४७ ॥

उलूखलोदूखलकुञ्जरा लुग्
मृणालजीमूतमयूरसिंहाः ।
शकन्धुकर्कन्धुदधित्थबृस्यो
महित्थपारापतमेखलाश्च ॥ १४८ ॥

ऊर्ध्वं खं बिलं वास्यास्तीति । उलूखलम् । उदूखलम्[८] । यच्च व्रीह्यादयः कुट्यन्ते ॥ ऊर्ध्वं खं लातीति वा[८] । उदूखलम् ॥ * ॥ कौ

१ आशी तालु॰ A. D.; तालुगंता॰ C.
२ यस्यां॰ C.; विषस्य A.
३ दाश्यत A. B. C. F.; दाश्यात D.
४ Şişup. 2, 106.
५ शरीरसृपैरिति A.; स्वर्यैरिति D.; क्रियते सर्पैरिति F.; ॰निर्ल्वयनी C.
६ रवते B. C. F.—प्रत्यूहे रम्बते शब्दायते हेरम्ब इति नैरुक्ताः Kshîr. A. K. 1, 1, 1, 34.
७ वागवलिः F.—वाड्वालि wrongly Kâş. V. ed. (not MSS.).
८ ऊर्ध्वं खं लाति आदत्ते इत्युलूखलम् । उत् ऊर्ध्वं स्खलति संचलतीति वा उलूखलम् । Yajñeşv. (om. उदूखल).

पृथिव्यां जीर्यतीति कुञ्जरः ॥ * ॥ लुच्यतेऽपनीयत इति लुग् नाम लोपः । यथा । प्रत्ययलुकां चानाम्[१] ॥ * ॥ मृदमालीयते । मृणालः ॥ * ॥ जीवनं जलं तस्य मूतः पुटबन्धः[२]। जीमूतः ॥ * ॥ मह्यां रौतीति मयूरः ॥ * ॥ हिनस्तीति सिंहः ॥ * ॥ शकस्यान्धुः । शकन्धुः ॥ * ॥ कर्कस्यान्धुः । कर्कन्धुः । बदरी ॥ * ॥ दध्नि तिष्ठतीति दधित्थः ॥ * ॥ ब्रुवन्तः सीदन्त्यस्यामिति[३]। वृसी । मुनीनामासनम् ॥ * ॥ मह्यां तिष्ठतीति महित्थः ॥ * ॥ पारे[४] पततीति पारापतः ॥ * ॥ मेहनस्य खस्य[५] माला । मेखला ॥ १४८ ॥

दिवः स्थाने दिवोऽचि स्याद् दिव् च दीर्घे पुनः परे।
उकारोकारयोरुच्च पश्चातोऽर्धादिके तलुक्[६] ॥ १४९ ॥

दिवः स्थाने दिवोऽचि स्यादिति । दिवाधीश्वरः । दिवाङ्गना ।[७] दिवौकसः ॥ * ॥ दीर्घेऽचि पुनर्न केवलं दिवः स्थाने दिवो भवति दिव् च । दिवीश्वरः । दिवेश्वरः ॥ दिवूढा । दिवोढा ॥ दिवूतिः । दिवोतिः ॥ * ॥ उकारोकारयोरुच्चेति । द्यूद्यानम् । दिवोद्यानम् । यथा ।

उद्यद्द्यूद्यानवाप्यां बहुलतमतमः पङ्कपूरं विदार्य[८] ॥

दिवोद्गतिः । द्यूद्गतिः ॥ द्यूढा । दिवूढा । दिवोढा । ऊकारे रूपत्रयम् ॥ * ॥ पश्चातोऽर्धादिके तलुक्[९] । पश्चाच्छब्दस्यार्धादावुत्तरपदेऽन्त्यतकारस्य लुग्भवति । पश्चार्धम् । पश्चिमार्धमित्यर्थः । यथा ।

---

१ Kâtantra iv. 1, 4.

२ जीवनस्य मूतः° Kâṣ. V.; जीवनं मुंचतीति जीवनस्य जलस्य मूत्तः पुटबंध इति वा Yajñ.

३ Thus also Kâṣ. V.; बृहंतोऽस्यां सीदंत्युपविशंतीति वृसी ऋषीणामासनं Yajñ.

४ पारं C.

५ °खलस्य A.; शिश्नस्य F.; om. C.

६ च लुक् । A. B.; C. om. this ṣloka.

७ D. adds दिवेहः, A. विदेहः.

८ Mayûra's Sûryaṣataka 79 ed. Vidyân.; °बहुलततमतः° ed. Haeberl.

९ च लुक् A. B. C.; णलुक् D.

पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्[१] ॥

पश्चानुपूर्वी । पश्चाभिमुखः । पश्चिमाभिमुख इत्यर्थः ॥

आदिग्रहणात् । कलिं विन्दति । कलविङ्कः ॥ छतकेन शलतीति छकलाशः[२] ॥ ऊरू अश्नुते । नारायणस्योरुप्रभवत्वात् । उर्वशी[३] । तथा च । ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री[४] ।

यथा । दधत्युरोजद्वयमुर्वशीतलं
भुवो गतेव स्वयमुर्वशी तलम् ।
बभौ मुखेनाप्रतिमेन काचन
श्रियाधिका तां प्रति मेनका च न[५] ॥

चीत्करोति खल्लं च भवति । चिखल्लः[६] ॥ द्वौ प्रवेशनिर्गमौ रातीति द्वारम् । इत्यादयो द्रष्टव्याः ॥ अत्र च ।

येषामुणादिशास्त्रेण व्युत्पत्तिर्न प्रकल्प्यते ।
द्वित्रादिपदसंपर्कात्सा तेषां स्यान्निरुक्तितः[७] ॥ १ ॥
समासशेषभूतं स्यान्निरुक्तपदसाधनम् ।
द्वित्रादिपदसंपर्काल्लोपागमविकारजम् ॥ २ ॥

उणादिशास्त्रे मयूरमहिषप्रभृतीनां व्युत्पादितानामपि पुनरत्र व्युत्पादनमनेकधापि संज्ञाशब्दानां व्युत्पत्तिर्भवतीति प्रदर्शनार्थम् ॥ १४९ ॥

इति पृषोदरादिः[८] ॥

---

१ Ṣâkunt. ṣl. 7.

२ शलातीति° D.; लसतीति° F.; छकलासः C.—छकं शिरोग्रीवं लासयति छकलासः । छकिलास इत्यपि पाठः । Kshîr. on A. K. 2, 5, 12. Prof. Aufrecht suggests छकेण लसति. Prof. Kielhorn has found the following note on छकलाश,—अत्र तकारलोपः शकारलकारयोस्तु विपर्ययः.

३ ऊरूमश्नुते° A.; °उर्वसी D.

४ Vikramorv. ṣl. 3.

५ Ṣiṣup. 9, 86.

६ तीत्करोति° B.; खिन्नं च° चिखन्नः D.; खलू च° चिखलूः C.

७ प्रकल्पते B. C.; निरुक्ततः A. B. C. D.

८ Vardham. includes in this *gaṇa* the शकन्ध्वादि Pâṇ. vi. 1, 94 v. 2; and the vârtts. to vi. 3, 109.

पारस्करो देशविशेषवर्ती
कारस्करो[1] राजतरौ गिरौ च ।
नद्यां रथस्पा प्रमितौ तु किष्कुः
प्रतिष्कशः[2] प्रष्ठसहायदूते ॥ १५० ॥

पारस्करादयः शब्दाः सषान्तपूर्वपदाः पारस्करादयो नाम्नीत्यनेन साधवो वेदितव्याः । देशविशेषादिष्वर्थेषु ॥ * ॥ पारं करोतीति पारस्करो देशः । पारस्करं नाम आनर्तेषु जनपदे नगरमित्येके । अन्यत्र पारकरः[3] ॥ * ॥ करं करोतीति करस्करः[4] । राजवृक्षो गिरिश्च ॥ * ॥ रथं पाति पिबतीति वा । रथस्पा नाम नदी । रथपाऽन्या ॥ * ॥ किं करोतीति । करोतेर्डुप्रत्यये किमो मकारस्य षादेशे च । किष्कुः । प्रमाणं हस्तो वितस्तिर्वा[5] ॥ * ॥ प्रतिकशतीति प्रतिष्कशः[6] । अग्रेसरः सहायो दूतो वा । प्रतिगन्तर्यर्थेऽपि कश्चिन्मन्यते ।

ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः[7] ॥

अतोऽन्यत्र । प्रतिगतः कशाम् । प्रतिकशोऽश्वः[8] ॥ १५० ॥

स्तः प्रस्कण्वहरिश्चन्द्रावृषावाश्चर्यमद्भुते ।
वर्चस्केऽवस्करो ज्ञेयो रथाङ्गे स्यादपस्करः ॥ १५१ ॥

प्रकृष्टः कण्वः । प्रस्कण्वः । ऋषिः ॥ * ॥ हरिश् चन्द्रोऽस्येति हरि-

---

१ कारस्करो A. B. C. F.

२ प्रतिस्कश:० B. C.; प्रतित्यसः A.; प्रतिष्कसः D.

३ आनर्त्तिषु० A.; जनपदेषु० F.; D. om. from पारस्करं to नदी.

४ ? कारं० कारस्करः B. C. F.—The other works omit करस्कर. Yajñ. has कारस्करो राजवृक्षो गिरिश्च. Cf. śl. 152.

५ वितस्थिर्वा C.; D. om. from हस्तो.

६ प्रतिकसतीति प्रतिस्कसः MSS.

७ प्रतिस्कसः A. D.; प्रतिस्कशः B.; also quoted Kāś. V. vi. 1, 152.

८ कसां प्रतिकसे श्वः A.; प्रतिकाशाश्वः C.; कसां प्रतिकसः । D.

अन्द्रो नाम ऋषिः । कश्चिद् राजन्यप्याह[1] ॥ * ॥ आचर्यत इति । आश्चर्यम् अद्भुतम् ॥ अन्यत्र । आचर्यं व्रतम् ॥ * ॥ अवकीर्यत इति । अवस्करः । वर्चस्कम् अन्नमलमित्यर्थः । अन्नमलविसर्जनदेशोऽपि[2] तत्संबन्धाद् अवस्करः ॥ अन्यो यः कश्चिदवकीर्यते सोऽवकरः[3] ॥ * ॥ अपकीर्यत इति । अपस्करो रथावयवः । अपकरो[4]ऽन्यः ॥ १५१ ॥

**कास्तीराजस्तुन्दास्कथानि नगरे गिरौ तु किष्किन्धः[5] ।**
**मस्करिमस्करकारस्करास्तु मुनिवेणुवृक्षेषु ॥ १५२ ॥**

अल्पं तीरम् । कास्तीरम् ॥ अजस्य तुन्दम् । अजस्तुन्दम्[6] ॥ आहृताः कथा अस्मिन्निति । आस्कथं नाम नगरम् ॥ अन्यत्र कातीरम् । अजतुन्दम् । आकथम्[7] ॥ * ॥ किं किं दधातीति किष्किन्धः पर्वतः[8] ॥ * ॥ माकरणशीलः । मस्करी परिव्राजकः । स ह्येवमाह । मा कृषत कर्माणि शान्तिर्वः श्रेयसीति[9] ॥ * ॥ माक्रियते प्रतिषिध्यतेऽनेनेति मस्करो दण्डः । येन हस्तिनः शमं नीयन्ते दम्यन्ते स वेणुर्मस्कर इत्यन्ये[10] ॥ * ॥ कारं करोतीति कारस्करः । वृक्षः ॥ १५२ ॥

**आस्पदं स्यात्प्रतिष्ठायां क्रियाभीक्ष्ण्येऽपरस्पराः ।**
**आयुधे किष्कुरुः प्रोक्तः स्यात् कुस्तुम्बुरुरौषधे[11] ॥ १५३ ॥**

---

१ राजन्यमप्याह C. D.

२ तथा अन्न॰ D.; अवान्नमलविसर्जनदंडो पि B. C.; ॰देवशो पि A.

३ F. om. from वर्चस्कं and has instead रोमलः । अन्यत्राऽवकरः ।

४ अपरो A.; अवकरो B.; अपकारो C.

५ कास्तीराजस्तुंदावुक्तौ नगरे॰ E.; कास्तीराज[स्तुंदावुक्तौ नगरे गिरौ तु suppl. a. m.]॰ D.

६ अजन्यभुदगजरि चढूं D.

७ D. om. from आहृताः cf. note ५; A. om. नगरं.

८ किष्किं दधतीति॰ D.

९ Kâs. V. vi. 1, 154.

१० शम नीयंते स॰ C.; समं नीयंते दम्यंते॰ A.; हस्तिना समनीयंते॰ मस्कर इ॰ D.

११ आयुकिष्कुभः॰ कुस्तुबुरु॰ A.; किष्कुरः॰ D. E.

पूजितं पदम्। आस्पदम्॥ अन्यत्र। आ ईषत् पदम्। आपदम्॥*॥ अपरे च परे च। अपरस्पराः सार्था व्रजन्ति। सातत्येन यान्तीत्यर्थः॥*॥ कस्य कुरुः। किष्कुरुः[१]। आयुधम्॥*॥ कुत्सितं तुम्बुरु[२]। कुस्तुम्बुरुः।[३] धान्यकम्। यथा कथंचिद्विग्रहः। कुस्तुम्बुरोः फलानि कुस्तुम्बुरूणि[४]॥ १५३॥

**कन्दरा पूश्च किष्किन्धा कृतान्नमथ शष्कुली[५]।**
**गोष्पदं स्यात्प्रमाणादौ विकिरो विष्किरः खगे[६]॥ १५४॥**

किं किं दधातीति किष्किन्धा। गुहा नगरी च॥*॥ शष्कुली। भक्ष्यविशेषः[७]॥*॥ गवां पदम्। गोष्पदम्। गोष्पदपूरं वृष्टो देवः। अत्र गोपदमन्यस्येयत्तां परिच्छेत्तुमुपादीयमानं प्रमाणं भवति[८]॥ आदिग्रहणात् सेवितासेवितपरिग्रहः। तत्र सेवितो गोष्पदो देशः[९]। यत्र गावः पद्यन्ते स गोभिः सेवितो ग्रामसमीपादिदेश उच्यते[१०]॥ असेविते। अगोष्पदेष्वरण्येषु विश्वासमुपजग्मिवान्[११]॥*॥ विकिरति चञ्च्वा विक्षिपतीति विकिरो विष्किरश्च पक्षी। उभयोरुपादानं विकल्पितसकारप्रतिपत्त्यर्थमिति॥ १५४॥ इति पारस्करादिः[१२]॥

---

१ किस्कुरु A.; D. corr. किष्कुरः.
२ तुंबुरुः B. D.; तुंबरुः C.; तुबरुः F.
३ कुस्तुंवरुः C.; कुस्तुबुरुः D.
४ कुस्तुंवर्त्ताणि A.; कुस्तुंरो फ॰ D.; कुस्तुंबरोः ॰कुस्तुंवराणि B.; कुस्तुंबरः ॰कुस्तुंबराणि C.; cf. P. vi. 1, 143.
५ कृतानमथ शस्कुली A.
६ गोःपदं B. C.; गोस्पदं॰ D.
७ शस्कुली॰ A.; लक्ष्यविशेषः C.; षष्कुली भक्षवि॰ D.
८ गोः पदम॰ B. C.; गोस्पदमित्यन्येयत्तां परिचेत्तुमुपादीयते तेन प्रमाणं॰ D.; cf. Mbh. on Pâṇ. iii. 4, 32.
९ गोः पदो॰ B. C.; गोस्पदो॰ D.; cf. P. vi. 1, 145.
१० ॰समीपादिदेश॰ A. B.
११ अगोपदेष्व॰ A.; अपास्पदेष्व॰ D.; ॰विश्वोरमुप॰ C.
१२ For this *gaṇa* cf. P. vi. 1, 143-157.

नभ्राणनागनपान्नमेरुनकुला नासत्यनक्रौ तथा
नाराचो नखनान्तरीयकयुतौ नक्षत्रनाकाविमौ ।
नारङ्गश्च नपुंसकेन कलितः स्यान्नाचिकेतस्तथा
नग्नो नास्तिकनापितावपि नभो ज्ञेयो नवेदा गणे ॥१५५॥

नभ्राडादिषु शब्देषु नभ्राडादिषु नञ् प्रकृत्येत्यनेन[1] नञ् प्रकृत्या तिष्ठति ॥ * ॥ न भ्राजत इति नभ्राट् । क्विबन्तः[2] ॥ * ॥ न अगः । नागः ॥ * ॥ न पातीति नपात् । शत्रन्तः ॥ * ॥ न मीयतेऽसाविति नमेरुः । गणा नमेरुप्रसवावतंसाः[3] ॥ * ॥ नास्य कुलमस्तीति नकुलः ॥ * ॥ सत्सु साधुः । सत्यः । न असत्यः । नासत्यः । न असत्याः । नासत्याः साधवः ॥ केचित्तु । न असतः साधून्[4] । नासत्यावश्विनीकुमारावित्याहुः ॥ * ॥ न क्रामति । नक्रः ॥ * ॥ न अरमञ्चति । नाराचः । यथा ममैव क्रियागुप्तके ।

उद्यन्तीव्रानङ्गनाराचविद्धा
स्वप्राणेभ्यो वल्लभं त्वामदृष्ट्वा ।
वेगादेषा चक्रवाकी वराकी[5]
तीरात्तीरे प्रातरेव प्रयाति ॥

नास्य खमस्तीति नखः । नखरो गन्धद्रव्यं च ॥ * ॥ अनन्तरेण[6] भवतीति नान्तरीयकम् ॥ * ॥ न क्षीयते न क्षरति वा । नक्षत्रम् । क्षत्वम् अन्यलोपो वा निपातनात् ॥ * ॥ नास्यस्मिन्नकं दुःखमिति

१ प्रकृत्य इत्य॰ A.; B. C. F. omit from नभ्राडादिषु नञ्.

२ न भ्राजत इति नभ्राज इति नभ्राट्॰ A.; क्विनंतः C.; क्विन्नंतः B. F.

३ Kumâras. 1, 55.

४ Thus (असतः MS. I. O. 2776) Kshîr. on A. K. 1, 1, 1, 47.—न असत्यः साध्वनु A.; D. om. from न असतः.

५ चक्रवाकीव वामा F.

६ न अनन्तरेण A. F.

नाकः ॥ न अविद्यमानो विरिञ्चो[1] यत्र वा ॥ * ॥ न अरं गच्छति स्वय-मिति[2] नारङ्गः ॥ * ॥ न स्त्री न पुमान् । नपुंसकः । अत एव निपातनात् स्त्रीपुंसयोः पुंसक आदेशः ॥ * ॥ न न चिकेत्ति । नाचिकेतो नाम राजा । अस्मादेव निपातनात् कि कित ज्ञाने[3] इत्यस्माच् श्नप्रत्ययो गुणश्च भवति ॥ * ॥ न विद्यन्ते ग्नाः स्त्रियश्छन्दांसि[4] वा यस्य । नग्नः ॥ * ॥ नास्तीति मतिरस्य[5] । नास्तिकः ॥ * ॥ न आप्यतेऽसाविति नापितः ॥ * ॥ न बभस्ति । नभः ॥ * ॥ न वेत्ति । नवेदाः । असुनि ॥

आकृतिगणत्वात् । न विद्यते भागोऽस्य । नभागः ॥ पद्भ्यां न गच्छति । पन्नगः ॥ न नन्दति वधूमिति ननान्दा ॥ तनुं न पातयति देहधर्मत्वात् । तनूनपात् । इत्यादयो द्रष्टव्याः ॥ अयं च गणश्चन्द्र-दुर्गाद्यभिप्रायेण[6] ॥ १५५ ॥ इति नभ्राडादिः ॥

पक्षज्योतिर्जनपदपत्नीकरमानबन्धुगन्धाः स्युः ।
देशो रात्रिः पिण्डो नाभिः कुक्षिस्तथा वर्णी ॥ १५६ ॥

समानस्य पक्षादिष्वित्यनेन समानस्य सभावो भवति[7] ॥ * ॥ पक्षस्य समानः । समानः पक्षोऽस्येति वा । सपक्षः ॥ * ॥ सज्योतिः ॥ * ॥ सजनपदः ॥ * ॥ समानः पतिरस्याः । सपत्नी ॥ * ॥ सकरः ॥ * ॥ समानं मानं यस्य । समानः ॥ * ॥ सबन्धुः ॥ * ॥

सागन्ध्यं दधदपि काममङ्गनानाम्[8] ॥ * ॥

---

१ न न विद्य° A. B. C.; विरिचो D.; विरिंतो A.; को विरंचिर् F.

२ Thus A. D.; स्त्रियमिति F.; स्त्रै-यमिति B.; स्त्रैर्यासति C.

३ A. B. C. om. कि; Dhât. 25, 20.

४ न विद्यंते अग्नाग्नियश्छंदांसि D.; न विद्यते अग्नाग्नियश्छंदांसि A.; अग्निय-श्छंदांसि B. C. F.

५ नास्तीति यस्य स C.; नास्ति पर-लोकमतिरस्य F.

६ गणो दुर्गचंद्राद्यभि° D.; गुणो चंद्रगुप्ताद्यभि° A.; गणश्चंद्रदुर्गाद्या-भि° C.—For *nabhrâḍâdi* cf. P. vi. 3, 75.

७ For this *gaṇa* cf. P. vi. 3, 84-5.

८ Śiśup. 8, 48.

सदेशः ॥ * ॥ सरात्रिः ॥ * ॥ सपिण्डः ॥ * ॥ सनाभिः ।

भ्रूयुग्मस्य सनाभिमन्मथधनुर्ज्योत्स्नास्मितस्याञ्चलः[1] ॥ * ॥

सकुक्षिः ॥ * ॥ सवेणी ॥ * ॥ कश्चिल्लोहितशब्दमप्यधीते । तीर्थशब्दस्तु न पठितो मतान्तरस्याभ्युपगतत्वात्[2] ॥ १५६ ॥ इति पचादिः ॥

**रूपं वर्णो नामस्थाने जातीयधर्मवचनानि ।**
**गोत्रं वयोऽपि लक्ष्यं चन्द्रादिमते तु रूपादौ ॥ १५७ ॥**

रूपादिषूत्तरपदेषु रूपादौ वेत्यनेन समानस्य सभावो वा भवति ॥ * ॥ समानं रूपं सरूपम् । समानं रूपं यस्य वा । सरूपः । समानरूपः ॥ * ॥ एवं सवर्णः । समानवर्णः ॥ * ॥ सनाम । सनामा ॥ * ॥ सस्थानम् । सस्थानः ॥ * ॥ समाना जातिरस्येति जातेरीय इतीयप्रत्यये । सजातीयः । समानजातीयः ॥ * ॥ सधर्मः । सधर्मा[3] । समानधर्मः । समानधर्मा । उत्पत्स्यतेऽस्ति[4] मम कोऽपि समानधर्मा

कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥

सवचनम् । सवचनः ॥ * ॥ सगोत्रम् । सगोत्रः ॥ * ॥ सवयः । सवयाः ॥ * ॥ आदिग्रहणाद् भोजादेः परिग्रहः । शाकटायनवामनाचार्यौ तु सभावं नित्यं सामान्येनाहतुः ॥ १५७ ॥ इति रूपादिः ॥

**सुषामदुःषामनिषेधदुष्टवो**
**दुःषंधिदुःषेधसुषेधसुष्टवः[5] ।**
**नौषेचिका दुन्दुभिषेचनान्तिषन्-**
**निःषामनिःषन्धिसुषन्ध्यपष्टवः[6] ॥ १५८ ॥**

१ °चलं D.; °स्मितांस्यांचलः A.

२ तादर्थशब्दस्तु° °भ्युपगत्वात् C.

३ A. C. D. om. समानजातीयः; A. D. om. सर्धमा.

४ Mâlatîm., ed. Bhand. 1, 6.—B. D. F. read तु for ऽस्ति; A. उत्पत्स्यते । तु or । स्त (these being alike in the MS.; ? copied from स्ति); C. omits the first pâda.

५ सुषामनिःषामनिषेध° B. C.

६ निषाम° A. B. C.; निर्षंधि° A.; °ष्पस्तवः D. E.; सुषंधिपष्टतः C.

सुषामादीनां प्राग्वत् ष इत्यनेन[१] सुषामादीनां सकारस्य षत्वं भवति ॥ * ॥ शोभनं साम प्रियवचनं यस्याः सा सुषाम्णी । यथा भट्टिकाव्ये[२] । सुषाम्णीं सर्वतेजःसु तन्वीं ज्योतिष्टमां शुभाम् ।
निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्वतीं वनम् ॥
शोभन साम । सुषाम ॥ शोभनं सामास्येति वा । सुषामा । ब्राह्मणः सौम्यो वा ॥ * ॥ दुष्टं साम । दुःषाम ॥ दुष्टं सामास्येति वा । दुःषामा ॥ * ॥ नितरां सेधः । निषेधः ॥ * ॥ दुष्ठु निन्दितम्[३] । सुञ्सूसास्तुस्तुभस्थासेनसेधतिसिचसञ्जस्वञ्जामित्यनेनैव[४] दुष्ठुशब्दस्य[३] षत्वे सिद्धे इह पाठः षत्वस्यानित्यत्वज्ञापनार्थः । तेन सुस्थितम् । दुःस्थितमिति सिद्धम् । यदा तु दुःशब्दो[५] निन्दायामनुपसर्गस्तदा विधानार्थम् ॥ * ॥ दुष्टः संधिः । दुःषंधिः ॥ दुष्टः संधिरस्येति वा । दुःषंधिः ॥ * ॥ निन्दितः सेधः । दुष्टः सेधोऽस्येति वा । दुःषेधः ॥ * ॥ शोभनः सेधः । शोभनः सेधोऽस्येति वा । सुषेधः ॥ * ॥ सुष्ठु शोभनम् ॥ * ॥ सिञ्चतीति सेचिका । नावः सेचिका । नौषेचिका काचित्स्त्री ॥ वामनस्तु । नावं स्यति । नौषा । नौषिकेत्याह[६] ॥ अपरे तु नौषेचनमिति टनान्तं पठन्ति[७] ॥ * ॥ षिच चरण इत्यस्य टनप्रत्यये । सेचनम् । दुन्दुभ्याः सेचनं[८] दुन्दुभिषेचनम् ॥ षिवु तन्तुसंताने । केट्ट षेट्ट[९] इत्यस्य वा टनप्रत्यये । सेवनम् ।

---

१ A. C. om. from सुषामादीनां.

२ Bhaṭṭ. 9, 85 (सुषाम्नीं. °म्नीं MSS.).

३ दुष्टं दुष्ट° A.

४ °सेचतिसिच° ष्वंजामि° B.; सुञुसृसासुचस्थासेनसंध° A.; सुञ्सूसासुतस्था° F.; °सास्तुभस्था° संजष्वंजष्वंजामि° C.; MSS. om. स्तु; cf. P. viii. 3, 65.

५ यथा तु शब्दो A.

६ नौसा नौसैव (om. B. C.) नौषिके° A. B. C.; नौसौषौव नौषिके° D.; नौसा । नौषिकेत्याह B. C.—? Some confusion; Kâs. V. viii. 3, 98 has only नौषेचनं (thus MS. *a*, with Bö., Yajñ.; नौषेवनं! ed.); नावः सेचनं नौषेचनम् । वर्द्धमानस्तु नौषेचिकां पपाठ । अन्ये पुनर्नावं स्यतीति नौषिका क्षेपणीदंड इत्याहुः । Yajñesv.

७ नौषचनमिति° A.; नौसेचनमिति° F.; ठन प्रसेचनं । C.

८ दुंदुभ्या सेचनं F.; om. B. C.

९ Cf. Pâṇ. Dhp. 14, 30-9.

दुन्दुभेः सेवनं[1] दुन्दुभिषेवणमिति शाकटायनः ॥ * ॥ अन्तिके सीदति। अन्तिषत्।[2] कादेर्वङ्गलमित्यनेन कलोपः ॥ * ॥ साम्नो निर्गतः। निर्गतं सामास्येति वा। निःषामा ॥ * ॥ निर्गतः संधिः। निर्गतः संधिरस्येति वा। निःषंधिः ॥ * ॥ शोभनः संधिः। शोभनः संधिरस्येति वा। सुषंधिः। यथा त्रिभुवनमाणिक्यचरिते।

सुवृत्तमप्युज्ज्वलवर्णरूपं[3] सुषंधिमूरूद्वयसर्गवन्धम्।
विधाय तस्याः स कविः पुराणो रुरोध वाचः प्रसरं कवीनाम् ॥

अपतिष्ठतीति। अपष्ठुरङ्कुशः[4] प्रतिकूलं च ॥ १५८ ॥

**परमेष्ठी निःषेधः सव्येष्ठाता मतश्च सव्येष्ठा।**
**सुषमा सुषीमदिविषत्प्रतिष्णिकागौरिषक्थाश्च[5] ॥ १५९ ॥**

परमे स्थाने तिष्ठतीति परमेष्ठी। पितामहः ॥ * ॥ निर्गतः सेधः। निर्गतः सेधोऽस्येति वा। निःषेधः ॥ * ॥ सव्ये स्थाने तिष्ठतीति सव्येष्ठाता। सारथिः ॥ * ॥ सव्ये तिष्ठतीति सव्येष्ठा। सव्यादेश्चोणादिरूढात्परेत्यनेन[6] ऋप्रत्ययः। कश्चिद् अकारान्तमपि दर्शयति ॥ * ॥ सुष्ठु समा। सुषमा। प्रकृष्टा कान्तिः ॥ * ॥ शोभना सीमा यस्य। सुषीमो नागः ॥ * ॥ दिवि सीदन्ति। दिविषदो देवाः। हलतः[7]

---

१ दुंदुभिः सेचनं C.; om. A.—Kāś. V. ed. has दुन्दुभिसेचनं (!), MS. *a* and Yajñ. °षेचनं; Bö. °षेवणं (*var. l.* °षेचनं).

२ शीदति° A.; । षे च कादे° C.

३ °उत्पलवर्णरूपं° D.; °वर्णसुषसुषंधिसुरूद्व° C.; A. om. from रिते। सुवृत्त° to śloka 369.

४ ? अपष्ठु रज्जुः C. F.; °रज्जः or रज्जुः B.; D. orig. अपस्पुरजि, corr. अपस्पुरपष्ठः; Prof. Aufrecht suggests अपष्ठुरगृज्जुः, Prof. Roth °अङ्कुः, Prof. Weber रज्जुः 'fishing-line;' cf. अपष्ठ to P. viii. 3, 97.

५ °गौरषत्काश्च B.; गोरषकथ्याश्च C.; गौरषकथश्च F.; गौरिषद्युश्च E.; A. om. text and comment.

६ ? प्राद्यादेश्चोणादि° B. C. F. and orig. D.; °रूढ्यान्य इत्यनेन C.; °रूढ्योन्य इत्य° B. F.; °रूढ्यात्परेत्य° orig. D. and corr. सव्यादेश्चोणादिः सव्यात्परेत्यनेन ष्ठात्प्रत्ययः; °ऋक्प्रत्ययः B.C.F.

७ हलः B.; हलंतात् C.; P. vi. 3, 9.

सप्तम्या इत्यनेन सप्तम्या अलुक् ॥ * ॥ प्रतिस्नान्त्यस्यामिति प्रतिष्णिका । द्रोणी[1] ॥ * ॥ गौर्याः सक्थीव सक्थ्यस्येति गौरिषक्थः[2] । ङ्याप्त्वे च ह्रस्वस्य[3] बहुलमित्यनेन ह्रस्वत्वे । कस्यचिदिदं नाम ॥

आकृतिगणोऽयम् । तेन जलाषाहम्[4] । भीरुष्ठानम् । अग्निष्टुत् । इत्यादयोऽपि भवन्ति ॥ १५९ ॥ इति सुषामादिः ॥

गिरेर्नदी नखो नद्धो नितम्बो वक्रतो नदी ।
नितम्बस्तूर्यमाणस्तु माषोनार्गयणावपि[5] ॥ १६० ॥

गिरिनद्यादीनामित्यनेन गिरिनद्यादीनामुत्तरपदनकारस्य णत्वं[6] वा भवति ॥ * ॥ गिरेर्नदी । गिरिनदी । गिरिणदी ॥ * ॥ एवं गिरिणखः । गिरिनखः ॥ * ॥ गिरिणा गिरौ वा नद्धः । गिरिणद्धः । गिरिनद्धः ॥ * ॥ गिरिनितम्बः । गिरिणितम्बः ॥ * ॥ वक्रनदी । वक्रणदी ॥ * ॥ वक्रो नितम्बो यस्याः । वक्रनितम्बा । वक्रणितम्बा[7] ॥ * ॥ तूर्यस्य मानमिव मानमस्य । तूर्यमाणः । तूर्यमानः ॥ * ॥ माषेणोनः । माषोणः । माषोनः ॥ * ॥ ऋचामयनम् । ऋगयनम् । ऋगयनस्य[8] बोद्धाऽध्येता वा । वेत्त्यधीत इत्यनेनाणि । अथवा । ऋगयनस्य व्याख्यानं तत्र भवो वा । ऋगयनेभ्योऽणित्यणि[9] । आर्गयणम् । आर्गयनम् ॥ * ॥ गिरिनद्यादयः प्रयोगतोऽनुसर्तव्याः ॥ १६० ॥ इति गिरिनद्यादिः ॥

---

१ द्रोणा D.

२ गौरषक्थः B. C. F. [कस्यचिन्मुनेः संज्ञैषा Yajñ.].

३ ? Cf. the same sûtra p. 61, l. 5; ङ्यादिह्रस्वस्य C.; ङ्याद्वेव ह्र० D.; ङ्याप्क्त च ह्र० F.; ङ्याद्भव ह्र० A.; cf. P. vi. 3, 63-4.

४ ? Thus the other works; जालाषाहं D.; जालाषोहं० B.; जलोषाहं० F.; जालाहं C.—जलानि सहते इति जलाषाहम् Yajñeṣv.

५ A. om. text and comment.

६ णीत्वं B. F. and orig. D.

७ Bö., Kâs. V. read चक्रनदी । चक्रनितम्बा; Yajñ. om. this *gaṇa*.

८ ऋगयणं ऋगयनस्य B.; ऋगयणं । ऋगयणस्य D.

९ Cf. P. iv. 3, 73.

क्षुभ्नातृप्‌ नन्दननर्तननृनमननिवासनृत्तानि[1]।
नन्दी निवेशनगरे गहनाग्नी सर्वनामनटौ[2]॥ १६१॥

क्षुभ्नादीनां शब्दानां नकारस्य न क्षुभ्नादेरित्यनेन णत्वं[3] न भवति ॥*॥ क्षुभ्नाति। क्षुभ्नीतः। क्षुभ्नन्ति। क्षुभ्नन्। क्षुभ्नानः। क्षुभ्नता। यथा भट्टिकाव्ये।

रोषभीममुखेनैवं क्षुभ्नतोक्तः प्लवंगमः[4]।
प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये॥

क्षुभ्नता कलुषीभवतेत्यर्थः ॥*॥ तृप्नोति। तृप्नुतः। तृप्नुवन्ति॥ तृप्नु। इत्यत एव गणपाठाच्छ्नुः ॥*॥ हरेर्नन्दनम्। हरिनन्दनम्। इन्द्रोद्यानम् ॥*॥ परितो नर्तनम्। परिनर्तनम्। नृत्तप्रयोगः[5] ॥*॥ नुर्नमनम्। नृनमनम्। नृनमनो नाम कश्चिद्यस्य नार्नमनिः पुत्रः। स्वरूपपदमेतत्॥ केचित्तु नॄन्नमयति। नृनम[6] इत्युदाहरन्ति ॥*॥ शराणां निवासः। शरनिवासो देशः ॥*॥ परितो नृत्तम्। परिनृत्तम्[7] ॥*॥ कुमारान्नन्दयतीत्येवंशीलः। कुमारनन्दी ॥*॥ शराणां निवेशः। शरनिवेशः। तूणीरः[8] ॥*॥ हरिनगरम् ॥*॥ परितो गहनम्। परिगहनम् ॥*॥ शबराणामग्निः। शबराग्निः॥ हरिः शक्रस्तस्याग्निः। हर्यग्निः। विद्युत् ॥*॥ सर्वेषां नाम। सर्वनाम ॥*॥ सूत्रप्रधानो नटः। सूत्रनटः[9]॥ परिनटो नाम कश्चिद्विप्रः॥ १६१॥

ज्ञेयौ निवेशनानूपौ नदनो नरवाहनः।
स्वर्भानुर्नदनद्यौ च क्षुभ्नादौ स्यान्नृतेर्यङि[10]॥ १६२॥

---

१ नन्दननर्तक° D.; °नृत्यानि F.
२ °नाटौ C.; A. om. text and comm.
३ क्षुभ्नादित्यनेन° B. C. F.; णीत्वं B.
४ Bh. ix. 109; मुखेनैव A. B. C. D.
५ D. corr. twice नर्तकं; कृतप्रयोगः D.
६ नृनमन C. and corr. D.
७ परितो नृत्यं परिनृत्यं F.
८ तूणीरं B. F.; तूणं D.
९ Cf. p. 201, l. 1.
१० A. om. text and comment.

शराणां निवेशनम् । शरनिवेशनम् । शरधिः ॥ * ॥ अनूपान्निष्क्रान्तः । निरनूपः ॥ दर्भानूपं नाम स्थानम् ॥ * ॥ भेर्या नदनमिव नदनं शब्दनमस्य । भेरीनदनो नाम कश्चित् ॥ * ॥ नरो वाहनमस्य । नरवाहनः । वाहणं[1] वाह्यादित्यनेन नरस्यावाह्यात्वं[2] नास्ति ॥ * ॥ प्राक्स्थाद्यन्तेऽपूनामित्यनेन[3] नप्राप्तिः । स्वर्भानुः । सैंहिकेयः । एयनग्न्यादेरित्यनेन णत्वप्राप्तिः[4] ॥ केचिद् अन्तःपूर्वपदात्संज्ञायामित्यनेन णत्वमिच्छन्ति[5] ॥ * ॥ चारवो नदा यस्मिन्ग्रामे नगरे वा स चारुनदः ॥ * ॥ सुराणां नदी । सुरनदी ॥ * ॥ नृतेर्नकारस्य यङि परे णत्वं[6] न भवति । नरीनृत्यते । नर्नर्त्ति । नरिनर्त्ति । नरीनर्त्ति । नर्नृतीति ॥ यङीति किम् । हरिरिव नृत्यतीति । हरिणर्ती नाम कश्चित् ॥

अग्न्यादिक्षुभ्नाद्योरेकत्वं प्रतिपन्नाः सामान्येन विशेषाभावात् ॥ आकृतिगणोऽयम् । तेन चतुर्हायनं कर्मेत्यादयो द्रष्टव्याः ॥ १६२ ॥ इति क्षुभ्नादिः ॥

इति

श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितस्वीयगणरत्नमहोदधिग्रन्थवृत्तौ समासप्रक्रियानिर्णयो नाम द्वितीयोऽध्यायः समाप्तः[7] ॥

---

१ वाहनं F.; P. viii. 4, 8 v. 2.
२ °णीत्वं B.; नरस्यवाह्य° C.
३ ? प्राक् प्वाद्यंते पूनामि° B.; प्राक् थाद्यंते यूनामि° C.; प्रावस्थाद्यंतेप्नामि° D.; प्राप्ताद्यंते यूनामि° F.; °नुप्राप्तिः B. C. F.; मप्राप्तिः (orig. मु°) D.
४ णीत्वप्राप्तिः B.
५ णीत्व° B.; cf. P. viii. 4, 3.
६ णीत्वं B.
७ गोविंदाचार्यशिष्य° D. E.; समासतत्प्रक्रियागणनिर्णयो° B. C. F.

अथ तृतीयोऽध्यायः ॥

ब्रह्मा कलापितैतलिशिलालिलाङ्गलिशिखण्डिजाजलिनः[१]।
सूकरसद्मा कुथुमी सुपर्वणा पीठसर्पी च[२] ॥ १९३ ॥

ब्रह्मादीनामित्यनेन ब्रह्मन्नित्येवमादीनामेवाणि परेऽन्त्याजादेर्लुग्भवति ॥ * ॥ ब्रह्मणोऽपत्यम् । ब्राह्मो नारदः ॥ ब्रह्मण इदम् । ब्राह्ममस्त्रम् । ब्राह्मो मन्त्रः । ब्राह्म्योषधिः ॥ शाकटायनादयस्तु जातावभिधेयायामनपत्य एवाण्यन्त्याजादेर्लुचमिच्छन्ति नापत्ये[३]। तेन ब्रह्मणोऽपत्यम् । ब्राह्मणः ॥ * ॥ कलापिना प्रोक्तमधीयानाः । कालापाः ॥ * ॥ तैतली । आचार्यः । तत्कृतो ग्रन्थोऽपि तच्छब्देनोच्यते । तमधीयते तैतलाः[४] ॥ * ॥ एवं लाङ्गलाः ॥ * ॥ जाजलाः ॥ * ॥ शिलालिन इमे । शैलालाः ॥ * ॥ एवं शैखण्डाः[५] ॥ * ॥ सौकरसद्माः[६] ॥ * ॥ कौथुमाः[७] ॥ * ॥ सौपर्वाः ॥ * ॥ पैठसर्पाः ॥

चशब्दस्यानुक्तसमुच्चयार्थत्वात् तेन साब्रह्मचाराः । दाण्डम् । चाक्रम् । इत्यादयो भवन्ति ॥ १९३ ॥ इति ब्रह्मादिः ॥

अनुशतिकपरस्त्रीसर्वलोकासिहत्याः
कुरुकतशतकुम्भागारवेणस्यहत्याः ।
अनुरहदनुहोडावस्यहेतीहलोकाव्
अभिगमपरलोकौ सर्वभूमिप्रयोगौ[८] ॥ १९४ ॥

---

१ A. om. śloka and comment.

२ सुकरपद्मा E.; सूकरपद्मी D.; कुतुमी D. E.; सूकरसद्माकुथुमा C.; सूकरसह्माकुंथुमी° F.

३ जावभिधेयाया अणप्रत्यय एवाणि अन्त्याजादेर्लुकमि° D.; P. vi. 4, 171.

४ Thus MSS.; तैतिलिन् । तैतिल P. vi. 4, 144 V. and Kâś. V.; cf. śl. 229 (तितिलस्य तैतिलस्तस्य तैतिलायनः).

५ शैषंडाः B.; शैषंडा C.

६ सौकरसद्माः C.; सौकरसह्माः F.; शौकरपद्माः D.

७ कौसुमाः D.

८ A. om. śloka and comment.

परस्य चानुशतिकादीनामित्यनेनानुशतिकादीनामेव शब्दानां परपदस्य पूर्वपदस्याचामादेरचः स्थानेऽणादौ ञ्णिति पर आरैज् भवति ॥ * ॥ शतेन क्रीतः । शतिकः । अनुगतः शतिकेन । अनुशतिकः । तस्येदम् । आनुशातिकम् ॥ * ॥ परस्य स्त्री । परस्त्री । तस्या अपत्यम् । पारस्त्रैणेयः ॥ * ॥ सर्वलोके विदितः । सार्वलौकिकः[1] । यथा भट्टिकाव्ये । भवन्तं कार्तवीर्यो यो हीनसंधिमचीकरत् ।

जिगाय तस्य हन्तारं स रामः सार्वलौकिकम्[2] ॥ * ॥

असिहत्यायां[3] भवम् । आसिहात्यम् ॥ * ॥ कुरुकतस्यापत्यम् । कौरुकात्यः ॥ * ॥ शतकुम्भो नाम पर्वतः । तत्र भवं शातकौम्भं सुवर्णम् ॥ केचिच्चादृष्टव्याकरणा लक्ष्यमेव केवलमनुसरन्तः शातकुम्भमित्याहुः । अत एव भोजः शतकुम्भस्य विकारः शातकौम्भमित्याह[4] ॥ * ॥ अगारवेणूनामिदम् । आगारवैणवम् ॥ वामनस्त्वङ्गारवेणोरपत्यम् आङ्गारवैणवमित्याह[5] ॥ अधेनुशब्दमपि केचित्पठन्ति[6] ॥ * ॥ अस्यहत्याशब्दोऽस्मिन्नस्तीति विमुक्तादित्वादण् । आस्यहात्यः ॥ भोजस्त्वस्यहत्यशब्दं[7] पठति । असिहत्य इत्यन्यः[8] ॥ * ॥ अनुरहतो[9]ऽपत्यम् ।

---

१ °विदितं °लौकिकं D.

२ Bhattik. v. 33.

३ Thus also Yajñ. Kâṣ., V. MS. $\beta$.; असिहत्य Bö., Kâṣ. V. ed., MS. $a$.; cf. note ८.

४ श्रीभोजः °शातकुंभमित्याह D.; शातकुंभस्य° शातकौंभमित्याह B. C. F.

५ Thus Kâṣ. V. ed., MS. $\beta$.; Bö. & (अङ्गारवेणुर्वंशजातिविशेषः । आङ्गारवैणवं पात्रविशेषः) Yajñesv.; अगार° Kâṣ. V. $a$.; °अगरवेणोर° आगरवैणव° D.; अगारधेनोर° आगारधैनव°. (°धेनव C.) B. C. F.

६ ? Thus B. C. F.; अघेणु° D.—केचित्तु अगारधेनुशब्दमत्राधीयाना अगारधेनोरपत्यमागारधैनवो वत्स इत्याहुः । Yajñ., probably right. He does not notice our author's reading.

७ श्रीभोज°D.; भोजस्त्वस्यहशब्दं F. Yajñ. has both; Bö., Kâṣ. V. ed. $a$. °हत्य, $\beta$. हत्या.

८ अभिहत्य° F.; om. D.; cf. n. ३.

९ Thus MSS. here and *bâhvâdi* ṣl. 204. The other works read अनुहरत्. Cf. आनुराहति *taulvaluâdi*, ṣl. 173.

आनुराहतिः ॥ * ॥ अनुहोडः शकटविशेषः । तेन चरति । आनुहोडिकः ॥ * ॥ अस्यहेतिः प्रहरणमस्य । आस्यहैतिकः । गणपाठसामर्थ्यात्पदसमुदायादपि ठण् विभक्तेश्चालुक्[१] ॥ अस्यहेलेति केचित्[२] ॥ * ॥ इहलोके भवम् । ऐहलौकिकम् ॥ अयं लोकः[३] । इहलोकः । प्रथमान्तादपि इप्रत्ययोऽस्मादेव गणपाठाद् व्यधिकरणसमासो वा[४] ॥ * ॥ अभिगममर्हति । आभिगामिकः[५] ॥ * ॥ परलोके भवम् । पारलौकिकम् ॥ * ॥ सर्वभूम्यां विदितः । सार्वभौमः ॥ * ॥ प्रयोगमर्हति प्रयोगे भवं वा । प्रायौगिकम्[६] । वामनस्तु संयोगं प्रायौगिकमित्याह[७] ॥ १६४ ॥

सुखशयनसर्वपुरुषावनुसंवत्सरयुतानुसंवरणम्[८] ।
सूचनडचतुर्विद्याकुरुपञ्चालाधिदेवाश्च ॥ १६५ ॥

सुखशयनं पृच्छन्ति । सौखशायनिकाः । यथा ।

भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन्[९] ॥

सर्वपुरुषाणामिदम् । सार्वपौरुषम् ॥ * ॥ अनुसंवत्सरं दीयते । आनुसांवत्सरिकम् ॥ कालात्कार्यं च भववदित्यतिदेशात् कथाकालाट्ठञिति ठञ्[१०] ॥ * ॥ अनुसंवरणेन दीयते । आनुसांवरणम्[११] । व्युष्टा-

---

१ °पि न । विभ° D.; °च लुक्° C.

२ ? Thus B. C. F.; D. om. from अस्यहेले°. Not mentioned by Yajñ. either.

३ अव्यलोक D.

४ इप्रत्यये °समासोऽभीष्टः । F.

५ °अर्हति° काः D.; आभिगामिकं C.

६ प्रायोगिकं D. F

७ ? सांयोगप्रायोगिक° B.; संयोगात्प्रायोगिक° D.; सांयोगप्रायौगिक° F.—Kâs. V. has सर्वभूमेर्निमित्तं (सर्वभूमेः a.) संयोग उत्पातो वा सार्वभौमः। प्रयोग । तत्र भवः प्रायौगिकः (प्रायोगिकः! ed.).

८ °संचरणं E. F.; °युताचसचरणं D.; °वरणी C.; A. om. śl. & comment.

९ Raghuv. 10, 14.

१० कालाकार्य° कथाकालाट्ठजिति ठञ् D.; कंथाकाला° F.; कंथाकालाट्ठञिति ठन् B

११ अनुसंचरणं दीयते आनुसांचरणं C. D. (also *var. r.* with Bö.); not mentioned in the gaṇa *vyushṭâdi* śl 364.

दिवादण् ॥ * ॥ सूत्रप्रधानो नडः । सूत्रनडः । तस्यापत्यं सौत्रनाडिः ॥ कश्चित् सूत्रनट[1] इत्याह ॥ * ॥ चतस्र एव विद्याः । चातुर्वैद्यम् ॥ * ॥ कुरवश्च पञ्चालाश्च तेषु भवः । कौरुपाञ्चालः । बहुत्व इत्यनेनाकञ् न भवति तत्र देशव्यक्तेर्विवक्षितत्वात् । अत्र तु देशसमुदायः ॥ * ॥ देवमधिकृत्य भवम् । आधिदैविकं दुःखम् ॥ १६५ ॥

बध्योगोदकशुद्धौ[2] पुष्करसत्संक्रमाधिभूताः स्युः ।
प्रतिभूरजातशत्रुः परिमण्डलराजपुरुषौ च ॥ १६६ ॥

बध्योगस्य[3] ऋषेरपत्यं विदादित्वादणि । बाध्योगः ॥ * ॥ उदकशुद्धस्यापत्यम् । औदकशौद्धिः ॥ * ॥ पुष्करसदोऽपत्यम् । पौष्करसादिः ॥ * ॥ संक्रममर्हन्ति । सांक्रामिकाः ।

तिलाश्चम्पकसंपर्कात्प्राप्नुवन्त्यधिवासताम् ।
रसो न भक्ष्यस्तद्भक्ष्यः सर्वे सांक्रामिका गुणाः[4] ॥

यथा वाऽनर्घ्यराघवे ।[5] कश्चित्सांक्रामिकोऽपि विशेषो नैसर्गिकमतिशेते ॥ * ॥ अधिभूते भवम् । आधिभौतिकं सुखम् ॥ * ॥ प्रतिभुवो भावः कर्म वा । प्रातिभाव्यम् ॥ * ॥ अजातशत्रोरियम् । आजातशात्रवी । यथा ।

उपेयिवांसि कर्तारः पुरमाजातशात्रवीम्[6] ॥ * ॥

परिमण्डलस्य भावः कर्म वा । पारिमाण्डल्यम् ॥ * ॥ राजपुरुषस्य भावः कर्म वा । राजपौरुष्यम् ॥ १६६ ॥

---

१ Thus D. F.; सूत्रनेट B. C.; cf. p. 196, l. 18.

२ सुद्धौ E.; A. om. sl. & comment.

३ उं शंभुं गच्छत्यभियाति उगः कंदर्पः । वध्यो निग्राह्य उगो येन स वध्योगो नामर्षिः Yajñ.

४ Kâm. Nît. 5, 7; Bö. Spr. 2562 (°चम्पकसंश्लेषात्°); रसो नुभक्ष° D.

५ D. omit from यथा. — Anargh., Calc. Ș. 1782, p. 36 (क्वचित्सां° ed.).

६ Śiș. 2, 114 (पुरीमाजात° ed.).

एषोऽपि स्यात्सर्ववेदः सहण्यो
द्वारस्वःश्वोव्यल्कसस्वस्तयः स्वः ।
स्वग्रामश्वस्वादुमृद्द्वारपालाः
श्वादंष्ट्रा स्वाध्याययुक्तः स्वरश्च[1] ॥ १६७ ॥

एषोऽपीति न केवलं प्रतिभूपरिमण्डलराजपुरुषशब्दा ष्यङन्ता एवात्र गणे द्रष्टव्याः । सर्ववेदशब्दोऽपीति । सहण्य इति ष्यटा ण्येन च[2] सह वर्तत इत्यर्थः ॥ सर्ववेदा एव । सार्ववेद्यम् ॥ ष्य इति किम् । प्रातिभवम् । पारिमण्डलम् । राजपुरुषायणिः । सार्ववेदिकम्[3] ॥ * ॥ आकृतिगणश्चायम् । तेन वैतुलौक्यं[4] मानैषादिरित्यादयो भवन्ति[5] ॥ * ॥ इत्यनुशतिकादिः ॥

द्वार इति द्वारादेरित्यनेन द्वारादीनां शब्दानां यकारवकाराभ्यामुत्तरस्याचामादेरचः[6] स्थान आरैज् न भवति[7] । तयोस्तु य्वोष्टैज् भवति[8] ॥ * ॥ द्वारे नियुक्तः । दौवारिकः ॥ * ॥ स्वर्भवः । सौवः ॥ * ॥ श्वो भवम् । शौवस्तिकम् ॥ * ॥ व्यल्कसेऽत्यन्ताधमभक्ष्ये[9] भवः । वैयल्कसो व्याधिः[10] । यद्वा । व्यल्कसो नाम देशो ग्रामादिर्वा[11] ॥ * ॥ स्वस्तीत्याह । सौवस्तिकः ॥ * ॥ स्वस्येदम् । सौवम् ॥ * ॥ स्वग्रामे भवः ।

---

१ A. om. text and comment.

२ ष्यञा ण्येन A. D.; D. corr. ण्येन वा; C. om. सर्ववेदशब्दो to सर्ववेदा एव and ष्य इति किं.

३ राजपुरुषायंटिः D.; सार्ववैदिकं C. D.; सार्ववैदिकः F.

४ Thus C. F.; वैतुलोक्यं B.; वैनुलोक्यमाजिषादि० D. [? वैतलौक्यम् or वैणुलौक्यम्].

५ Cf. śl. 312 comm. where ऊर्ध्वदम and ऊर्ध्वदेह are mentioned as being referred to this *gaṇa* by some.

६ यकारककाराभ्या० B.; पकारककारा० C.; ०भ्यां मुखस्याचामादेरचः D.

७ आरैष्ठ भवति B.; स्थाने रैष्ट भ० C.; आरैश्न भवति D.; F. om. न.

८ वोष्ठोच् भ० C.; स्थाण्णैनृभिवति B.

९ अंत्यंता० B.; ०भचे D.; ०लक्ष्ये C.; अत्यंताऽधमभक्ष्ये F.

१० व्याधः F.

११ वैयल्कासो० ग्रामादिश्च D.

सौवग्रामिकः ॥ * ॥ शुनो विकारः । शौवनं मांसम् । शौवः[1] संकोचः ॥ * ॥ स्वादुम्रद इदम्[2] । सौवादुम्रदम् । कच्छादिदर्शनादण् ॥ स्वाद्वी चासौ मृच्च सास्मिन्देशेऽस्तीति । सौवाद्मृदो देशः ॥ पाणिन्यादयस्तु सौवादुम्रदवमित्याहुः ॥ * ॥ द्वारपालस्यापत्यम् । दौवारपालिः ॥ केचिद् द्वारपालशब्दं रेवत्यादिष्वधीयाना दौवारपालिक[3] इत्युदाहरन्ति ॥ * ॥ श्वादंष्ट्रायां भवः । शौवादंष्ट्रो मणिः । शुनो दन्तादाविति[4] दीर्घत्वम् ॥ * ॥ स्वाध्यायेन चरति । सौवाध्यायिकः ॥ * ॥ स्वरमधिकृत्य कृतो ग्रन्थः । सौवरः ॥ * ॥ द्वारपालादीनामुपादानं सुखार्थम् । यतो द्वारादेः केवलस्य तदादेश्च परिग्रहः[5] ॥ आकृतिगणोऽयम् । तेन स्फ्यो यज्ञायुधं तेन कृतः । स्फैयकृतो नामर्षिः । स्फ्यकृदित्यपि संगृहीतः[6] ॥ १६७ ॥ इति द्वारादिः ॥

स्वागतस्वध्वरव्यङ्गा व्यवहारो व्यडस्तथा[7] ।
व्यायामस्वपतिस्वङ्गस्वजनाश्चात्र कीर्तिताः ॥ १६८ ॥

पदान्तयोः स्वागतादेश्चैच्[8] इत्यनेन स्वागतादिशब्दानां टैजागमो न भवति[9] ॥ * ॥ स्वागतमित्याह । स्वागतिकः ॥ * ॥ शोभनो

---

१ शुन इदं शौवनम्० । शुनो विकारो मांसं सौवम् Kâs. V.; शुन इदं शौवनं पुच्छं शौवनः संकोचः । Yajñ.

२ स्वादुमुदु इदं C.; not in *kachchhâdi* sl. 327-8.—The other works have स्वादुमृदु; Yajñesv. also mentions Vardhamâna's reading.

३ दौवारपालक B.

४ दंतावादाविति B. C. F.; cf. Kâs. V. vi. 3, 137.

५ तदादेशस्य C.; परिग्रहात् D.

६ स्फो० स्फाकृतो० स्फाकृद्० B. C.; स्फ्यकृतो नाम० F.; D. om. from आकृतिगणो.—Bö. has both readings; Yajñ., Kâs. V. only स्फ्यकृत.

७ स्वागतः स्वध्वरो व्यंगव्यवहारौ [रो C.] B. C. F.; A. om. text and comm.

८ स्वागतोर्द्वेयष्टौच C.; स्वागतादेर्द्वष्टैच् F.; स्वागतादेर्घष्टौर्जित्य० D.

९ जागमो D.; शब्दानां मैजागताशब्दानां मैजागमो० C.

ऽध्वरः स्वध्वरः। स्वध्वरेण चरति। स्वाध्वरिकः ॥ * ॥ व्यक्तान्यङ्गानि[१] यस्यासौ व्यङ्गः। व्यङ्गस्यापत्यं व्याङ्गिः ॥ * ॥ व्यवहारेण चरति। व्यावहारिकः ॥ * ॥ व्यडो नामर्षिः। तस्यापत्यं व्याडिः ॥ * ॥ व्यायामः प्रयोजनमस्य। व्यायामिकः ॥ * ॥ स्वपतौ साधुः। स्वापतेयः ॥ * ॥ स्वङ्गस्यापत्यं स्वाङ्गिः ॥ * ॥ स्वजनात्प्रयोजनमस्य[२]। स्वाजनिकः ॥ * ॥ येषां टैजागमो न दृश्यते तेऽत्र द्रष्टव्याः[३] ॥ १६८ ॥ इति स्वागतादिः ॥

पैलौदञ्ची राहवी रावणिश्च
दैवस्थानी राणिराहक्षिती च[४]।
औदभृज्जिः[५] सात्यकिश्चौदमेघिः
सात्यंकामिः पैङ्गलोदायनिश्च[६] ॥ १६९ ॥

पैलाद्यविप्रतौल्वल्यादिरित्यनेन[७] पैलादेर्विहितस्यापत्यप्रत्ययस्य लुग्भवति[८] ॥ * ॥ पीलाया अपत्यं पैलः। पीलामण्डूकाद्देत्यण्[९]। पैलस्यापत्यमिति द्व्यचोऽण इति फिञ् तस्य लुक्[१०]। पैलः पिता। पैलः पुत्रः ॥ * ॥ उदञ्चो[११]ऽपत्यम्। बाह्वादित्वादिञ्। औदञ्चिः पिता। औदञ्चिः पुत्रः[१२] ॥ * ॥ राहोरपत्यम्। राहविः पिता। राहविः पुत्रः ॥ * ॥ रवणस्यापत्यम्। रावणिः पिता। रावणिः पुत्रः ॥ * ॥

---

१ विगतान्यंगानि D.

२ स्वजनाः प्रयोजन॰ F.

३ येषां टैत्वागमो॰ F.; D. om. from स्वपतौ साधुः.

४ पैलौदवी॰ B. C.; वाहवी D.

५ Note the metrical irregularity in the second syllable; ? औदभ्रज्जिः.

६ पैंगलौदायनिश्च B. C.; A. om. text and comment.

७ पैलाद्यचि॰ F.; ॰तौल्वल्यादेरि॰ D.

८ ॰पत्यस्यालुग्भवति D.

९ पीलामांडूका॰ B. C. D.; cf. P. iv. 1, 118-9.

१० पिञ्॰ B. C.; लुक् D.; cf. P. iv. 1, 156.

११ उदचो D.; उदवो C.: *bâhvâdi* sl. 204.

१२ C. twice औदविः; औदकि D.

देवस्थानस्यापत्यम्। दैवस्थानिः पिता। दैवस्थानिः पुत्रः ॥ * ॥ रण-स्यापत्यम्। राणिः पिता। राणिः पुत्रः ॥ * ॥ रहेण चितो[1] हिंसितो रहचितः। तस्यापत्यम्। राहचितिः पिता। राहचितिः पुत्रः ॥ * ॥ उदके मज्जतीति मूलविभुजादित्वात्के[2]। उदमज्जः। तस्यापत्यम् औदमज्जिः पिता। औदमज्जिः पुत्रः ॥ * ॥ सत्य एव सत्यकः। तस्यापत्यं सात्यकिः पिता। सात्यकिः पुत्रः ॥ * ॥ उदमेघस्यापत्यम्। औदमेघिः पिता। औदमेघिः पुत्रः ॥ * ॥ सत्ये कामोऽस्य। सत्यंकामः। अत एव निपातनान्मुक्। सत्यमिति निपातो वा शपथपर्यायः[3]। तस्यापत्यं सात्यंकामिः पिता। सात्यंकामिः पुत्रः ॥ * ॥ पिङ्गलोदायनस्यापत्यं[4] पैङ्गलोदायनिः पिता। पैङ्गलोदायनिः पुत्रः[5] ॥ शाकटायनस्तु पैङ्गलोदयनिरित्याह[6] ॥ १६९ ॥

**शालङ्क्यौदकशुङ्गी भौलिङ्ग्यौदव्रजी तथौदन्यिः[7]।**
**औद्राहमानियुक्तौदमज्जिरपि चौज्जिहानिः स्यात्[8] ॥१७०॥**

शलङ्कोरपत्यम्[9]। शालङ्किः पिता। शालङ्किः पुत्रः ॥ * ॥ उदकशुङ्गस्यापत्यम्। औदकशुङ्गिः पिता। औदकशुङ्गिः पुत्रः ॥ औदशुङ्गिरिति भोजः[10] ॥ * ॥ भूलिङ्गस्यापत्यम्[11]। भौलिङ्गिः पिता।

---

१ रहचितो° B. C.; रहे चितो° F.

२ Not in that *gaṇa*, ṣl. 460.

३ सयथपर्याय: D. and om. to सात्यंकामिः पुत्रः.

४ पिंगलोदायिनस्या° B.; पिंगलोदायिः तस्याऽपत्यं F.; पिंगलोदायनः तस्यापत्यं° D.; om. C.

५ पैंगलोदायिनिः twice B.

६ ? पैंगलोदायनि° C.; D. corr. पैंगलोदयोगिरि°; Bö. reads पैङ्गलोदायनि.

७ ताद्योदन्यिः C.; तसौदन्यिः D.; अथौदन्यिः F.

८ युतौ औद° B.; युतैदमज्जि° corr. D.; अपि वोज्जिहानिः° E.; A. om. text and comment.

९ शलंकेरपत्यं C.; शलकोर° D.; शालंकोर° F.

१० Thus also Bö., Yajñ., Kâṣ. V. MSS. (औदवुङ्गि ed.); औदसुङ्गिरिति श्रीभोजः D. [cf. औदकशौङ्गि ṣl. 166].

११ भुलिंगस्य° MSS. and Yajñ. see ṣl. 50 comm.

भौलिङ्गिः पुत्रः ॥ * ॥ उदव्रजस्यापत्यम् । औदव्रजिः पिता । औदव्रजिः पुत्रः ॥ * ॥ उदन्यस्यापत्यम् । औदन्यिः पिता । औदन्यिः पुत्रः ॥ तिकादिषु पठ्यमानस्याप्यस्यात[1] एव पाठात् फिञ्[2] विज्ञायते तेन रूपद्वयम् । औदन्यिः । औदन्यायनिः ॥ * ॥ उद्गाहमानस्यापत्यम् । औद्गाहमानिः पिता । औद्गाहमानिः पुत्रः ॥ * ॥ उदमज्जस्यापत्यम् । औदमज्जिः पिता । औदमज्जिः पुत्रः ॥ * ॥ उज्जिहानस्यापत्यम्[3] । औज्जिहानिः पिता । औज्जिहानिः पुत्रः ॥ कश्चिद् औज्जहानिरिति[4] मन्यते ॥ * ॥ एभ्य इञन्तेभ्यः फकः[5] लुक् ॥ १७० ॥ इति पैलादिः ॥

तौल्वलिवैरकिधारणिपौष्पि[6]
बैल्वकिबान्धकिरावणिवैङ्कि[7] ।
आसुरिनैमिषिनैवकियुक्तं[8]
दैवतिवार्कलिवैहतिभिश्च[9] ॥ १७१ ॥

तौल्वल्यादेः पर्युदासादपत्यस्यापत्यादित्यनेन प्राप्ता लुङ्न भवति ॥ * ॥ तुल्वलो नामर्षिः । तस्यापत्यं तौल्वलिः । तदपत्यं तौल्वलायनः ॥ तैल्वलिरित्यन्यः[10] ॥ * ॥ वीरकस्यापत्यम् । वैरकिः पिता । वैरकायणः पुत्रः[11] ॥ वैणकिरिति शाकटायनः ॥ * ॥ धरणस्यापत्यम् ।

---

१ See sl. 230; विकारादिषु पच्यमानस्यापत्यं C. and omits thence to उज्जिहानस्यापत्यं.

२ इञिपि B.; इञपि F.; दञपि D.

३ See note १.

४ ? और्जहानिरिति B. C.

५ पाप B.; °भ्य आ पापे C.; एण D.; °भ्य एभ्य लुक् । F.; cf. P. ii. 4, 60; iv. 1, 101.

६ °चैरकि° C.; °धारकिपौष्पि F.

७ बोधकिरावणिचैकि C.; °वैकि F.

८ नैचकियुक्तं B. C. F.

९ वार्कलि° B.; वैहविभिश्च D.; A. om. text and comment.

१० तिल्वलिरित्य° F.; om. D.—? तौल्वलिरित्यन्यः ।

११ चिरकाक° चैरकिः °चिरकायणः ?—The other works have चैरकि.

धार्रणिः पिता। धारणायनः[१] पुत्रः ॥ * ॥ पुष्पो नाम कश्चित् तस्यापत्यम्। पौष्पिः पिता। पौष्पायणः[२] पुत्रः ॥ * ॥ बिल्वकस्यापत्यम्। बैल्वकिः पिता। बैल्वकायनः पुत्रः ॥ * ॥ बन्धकस्यापत्यम्। बान्धकिः पिता। बान्धकायनः पुत्रः ॥ * ॥ रवणस्यापत्यम्। रावणिः पिता। रावणायनः पुत्रः। शाकटायनस्तु रावणिरित्याह ॥ * ॥ विङ्कस्यापत्यम्। वैङ्किः पिता। वैङ्कायनः पुत्रः[३] ॥ * ॥ न सुरोऽसुरः। तस्यापत्यम्। आसुरिः पिता। आसुरायणः पुत्रः ॥ * ॥ निमिषस्यापत्यम्। नैमिषिः पिता। नैमिषायणः पुत्रः ॥ नैमिशिरिति शाकटायनः ॥ * ॥ निवकस्यापत्यम्। नैवकिः पिता। नैवकायनः[४] पुत्रः ॥ * ॥ दैवतस्यापत्यम्। दैवतिः पिता। दैवतायनः पुत्रः ॥ दैवोतिरिति[५] शाकटायनः ॥ * ॥ वृकलाया अपत्यम्। वार्कलिः पिता। वार्कलायनः पुत्रः[६] ॥

दोधकं छन्दः। भौ तु भगौ गिति दोधकमेतत् ॥ १७१ ॥

**पौष्करसादिवैकर्ण्याहिंसिकारेणुपालयः[७]।**
**आसिबन्धकिवैशीतिदैवयज्ञ्यासिनासयः[८] ॥ १७२ ॥**

पुष्करसदोऽपत्यम्। पौष्करसादिः पिता। पौष्करसादायनः पुत्रः ॥ * ॥ विभूषितौ कर्णौ यस्य। विकर्णः। तस्यापत्यम्। वैकर्णिः पिता। वैकर्णायनः पुत्रः ॥ * ॥ न विद्यते हिंसाऽस्य। अहिंसः। तस्या-

---

१ धारणायनिः B. C.

२ पौष्पायनः MSS.

३ °विक्कस्यापत्यं वैक्किः° वैक्कायनः° F.; Kâs. V. ii. 4, 61 वैकि ed., वैंकि MS. *a*, Yajñ.; वैङ्कि (*var. l.* वैकि) Bö.

४ निचकस्य° नैचकिः° नैच° B.C.F.; नैवकि (*var. l.* नैवति) Bö., नैवकि Yajñ.; wanting in Kâs. V.

५ Thus MSS.? दैवतिः (पुत्रः) इति शाकटायनः।

६ None of the MSS. explain वैहति. Yajñ. has विहतस्य वैहतिर्वैहतायनः।

७ पुष्करसादि° B. C. F.

८ वैसीति° B. C.; वैकर्णा° दैवयज्ञ्यासिनासयः D.; A. omits text and comment.

पत्यम् । आहिंसिः पिता । आहिंसायनः पुत्रः ॥ * ॥ करेणुं पालयतीति करेणुपालः । तस्यापत्यम् । कारेणुपालिः पिता । कारेणुपालायनः पुत्रः ॥ * ॥ असिना युक्तो बन्धः । असिबन्धः । असिबन्ध एवासिबन्धकः । तस्यापत्यम् । आसिबन्धकिः पिता । आसिबन्धकायनः पुत्रः[1] ॥ अस्यतीति । असः । तस्यापत्यम् । आसिः पिता । आसायनः पुत्रः ॥ बध्यते स्म । बद्धः । बद्ध एव बद्धकः । तस्यापत्यम् । बाद्धकिः पिता । बाद्धकायनः पुत्र[2] इति शाकटायनः ॥ * ॥ विशीतस्यापत्यम् । वैशीतिः पिता । वैशीतायनः पुत्रः ॥ * ॥ देवानां यज्ञो देवयज्ञः । तस्यापत्यम् । दैवयज्ञिः पिता । दैवयज्ञायनः पुत्रः ॥ * ॥ असिरिव नासाऽस्येति । असिनासः । तस्यापत्यम् । आसिनासिः पिता । आसिनासायनः पुत्रः ॥ १७२ ॥

दालीपिरानुतिश्च प्रादोहन्यानुराहती चापि[3] ।
चाफट्टकिनैमिश्रिप्राडाहतिदैवमतयोऽपि[4] ॥ १७३ ॥

दिलीपस्यापत्यम् । दालीपिः पिता । दालीपायनः पुत्रः । निपातनादात्वम्[5] ॥ अपरे दलीप इति प्रकृत्यन्तरमाहुः । चन्द्रादयस्तु दैलीपिरित्याहुः[6] ॥ * ॥ आनुतिः पिता । आनुतायनः[7] पुत्रः ॥ * ॥ प्रदोहनस्यापत्यम् । प्रादोहनिः पिता । प्रादोहनायनः पुत्रः ॥ * ॥

---

१ असिबंधपचासिबंधकस्य° C.; असिबंध एवासिबधः° आसिबांधकिः° आसिबांधायनः° D.; B. om. from कारेणुपालिः to असः तस्यापत्यं.

२ बद्ध एवद्धकः° वाधकिः °वाधकायनः D.

३ °आतुति °आतुराहती° C.; °नुरोहती चापि E.

४ वफट्टकि° दैवमतयोपि C.; °नैमि° F.; नैमिश्री° D.; A. om. text and comment.

५ निपातनादीत्वं D. and omits अपरे° प्रकृत्यन्तरमाहुः ।

६ Thus also Bö., Yajñ., Kâś.V.; अपरे दलीपा इति° F., om. from चन्द्रादयः.

७ आतुतिः °आतुतायनः C.

अनुरहतोऽपत्यम्। आनुराहतिः[१] पिता। आनुराहतायनः पुत्रः॥*॥ चफट्टकशब्दोऽनुकरणम्। तदुच्चारणात्पुरुषोऽपि चफट्टकः। तस्यापत्यम्। चाफट्टकिः पिता। चाफट्टकायनः पुत्रः[२]॥ कुर्वादावस्य क्षत्रियस्य ग्रहणम्। इह तु ब्राह्मणवाचिनस्तेनेञ् सिद्धः[३]॥*॥ निम्नेन मिश्रो निमिश्रः। तस्यापत्यम्। नैमिश्रिः पिता। नैमिश्रायणः पुत्रः॥*॥ पृच्छत्याहन्ति च। प्राडाहतः[४]। तस्यापत्यम्। प्राडाहतिः पिता। प्राडाहतायनः पुत्रः॥ प्राटाहतिरित्यपि वामनः[५]॥*॥ देवमतस्यापत्यम्। दैवमतिः पिता। दैवमतायनः पुत्रः॥ १७३॥ इति तौल्वल्यादिः॥

प्रज्ञश्रोत्रपिशाचचोरमरुतो रक्षश्चरित्रोशिजः
प्रत्यक्षासुरशत्रुसंतपनसत्साधारणानुष्टुभः।
चण्डालाशनिगोरजेतृजगतीसत्वद्विताद्वेवताश्[६]
चक्षुर्व्याकृतबन्धुयोधमधवो विद्यामनोजुह्वतः॥ १७४॥

प्रज्ञादेरणित्यनेन प्रज्ञादेः शब्दगणादण् वा भवति स्वार्थे[७]॥*॥ प्रज्ञ एव प्राज्ञः। प्राज्ञी स्त्री॥ प्रज्ञाज्योत्स्नेत्यादिना णप्रत्यये[८] सिद्धम्।

---

१ Kâṣ. V. ii. 4, 61 आनुहारति (!) ed., °राहति MSS.; Bö., Yajñ. आनुराहति (Bö. *var. l.* आनुहारति), and besides आनुरोहति.

२ Thus also Bö., Yajñ. (? चाफल्कि Kâṣ. V. ed.); वफडक° वफडक° वाफडकिः° वाफडकायनः° C.

३ B. C. om. from कुर्वादावस्य.

४ ? Thus D.; प्राडाहतिः B. C. F.

५ ? प्राढाहति° B.; प्राडाहति° C.; om. D.—Bö., Yajñ. have only प्राडाहति; Kâṣ. V. ed. प्रावाहणि (प्राणाहति MS. *a.* and *var. l.* ed.; om. MS. *β.*; Prof. Kielhorn's MS., perhaps right, प्राडाहनि).

६ शश्वद् for सत्वद् F.; A. om. text and comment.

७ प्रज्ञादिशब्दगणात्° D.

८ प्रज्ञायोत्स्ने° B. C.; °ज्योत्स्नेत्यादिनाणप्रत्यये D.; ऽणप्रत्यये F.; cf. P. 5. 2, 101 प्रज्ञाश्रद्धार्चाभ्यो णः।

प्राज्ञः। प्राज्ञी तु न सिध्यति। णप्रत्यये हि प्राज्ञा स्यात्। अर्थभेदश्च। तथा च। वृद्धा पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती[1] ॥ * ॥ श्रोत्रमेव श्रौत्रम्। तं कूजत्क्रौञ्चसंहृष्यच्चाक्षुषश्रौत्रमानसः[2] ॥ वामनाद्यास्तु श्रोत्रं शरीरं चेदित्यर्थनियममाहुः[3] ॥ * ॥ पिशाच एव पैशाचः ॥ * ॥ एवं चौरः ॥ * ॥ मारुतो देवो वायुश्च[4] ॥ * ॥ राक्षसः ॥ * ॥ चरित्रमेव चारित्रम् ॥ * ॥ उशिक् कान्तः। स एव। औशिजः[5]। यथा। चीर्णसांतपनैर्वैद्यवेदतैजौक्तैर्वृतम्[6]।

कार्ष्णाजिनौशिजैर्विप्रैः प्रात्यक्षमिव दैवतम्[7] ॥

प्रत्यक्षा एव प्रात्यक्षाः। पदार्थाः[8] ॥ * ॥ असुर एव। आसुरः ॥ * ॥ शत्रुरेव शात्रवः ॥ * ॥ संतपनमेव सांतपनम् ॥ * ॥ सन्नेव सान्तः। अण्प्रत्ययसंनियोगेन निपातनान्नुगागमः[9] ॥ * ॥ साधारणी साधारणा वा भूमिः ॥ * ॥ अनुष्टुबेव। आनुष्टुभम् ॥ केचिद् आनुष्टुभादीनां[10] छन्दोनाम्नां पुंलिङ्गतामाहुः ॥ * ॥ चण्डम् उग्रकर्म अलति[11] पर्याप्नोति। चण्डालः। स एव चाण्डालः। तथा च।

चण्डालप्लवमातङ्गदिवाकीर्त्तिजनंगमाः।
निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः[12] ॥

---

१ Am. K. 2, 6, 1, 12.

२ Thus D. F.; कूजात्क्रौंचं संहृष्यञ्चाक्षुष° B. C.; चाक्षुषं श्रौत्र° B.; चाक्षुषं श्रोत्र° C.

३ °इत्यर्थः नियम° B. C.; Kâs. V. v. 4, 38.

४ मारुता देवा वायुश्च B. C.

५ उशिकः कांतः° B. C.; उष्णिक्° औष्णिजः D.

६ ? °वैद्यवेदातेजौंह्रभैर्वृतं B.; °वैद्यं वेदांतेजौंह्रतिर्नृतं C.; वैद्यवेदातेजौह्र-तैर्वृतं F.; °संतापवैवैद्यवेदेतैजौंद्धतैर्वृतं D.

७ कार्ष्णाज्जिनौ° D.; °जिनौसिजै° B. C. D.; °जिनौशिकैर्विप्रैः° F.; प्रत्यक्ष° D.

८ प्रत्यक्षी एव प्रत्यक्षाः° C.; D. om. एव प्रात्यक्षाः.

९ अणुप्रत्यय° नुगागमः B. C.

१० अनुष्टुभादीनां MSS.

११ चंडमुग्रं कर्म आलति F.

१२ पुक्कसाः B. D.; बुक्कसाः C.; पुष्कसाः F.; the verse is Am. K. 2, 10, 20.

अशनिरेव । आशनः । वज्रम् ॥ * ॥ गोर एव गौरः । सितः पीतो ऽरुणश्च वर्णः ॥ * ॥ जेत्रेव[1] । जैत्रं धनुः । जैत्री शरश्रेणिः[1] ॥ * ॥ जगत्येव जागतम् ॥ * ॥ सत्वानेव सात्वतः[2] । चन्द्रस्तु सत्वन्निति नान्तं कृततलोपं[3] पठन् सत्वानेव सात्वन इत्याह ॥ * ॥ द्वयोर्भावो द्विता । द्वितैव द्वैतम् । यथा ।

निदानं निर्द्वैतं प्रियजनसदृचं व्यवसितिः[4] ॥

देवतैव दैवतम् ॥ * ॥ चक्षुरेव चाक्षुषम् ॥ * ॥ व्याकृतमेव वैयाकृतम् ॥ * ॥ बन्धुरेव बान्धवः । स्त्रियामणन्तस्यासामर्थ्यान्न वृत्तिः[5] । शुद्धप्रकृतिस्तु वर्तत एव । यथा । बन्धुरियं ब्राह्मणी[6] । एवं सर्वत्र ॥ * ॥ योध एव यौधः ॥ * ॥ मधुरेव माधवः ॥ * ॥ विद्यैव वैद्यम्[7] । नपुंसकत्वमेव ॥ कश्चिद् विद्यासंबन्धात्पुरुषोऽपि विद्या । स एव वैद्य इत्याह ॥ * ॥ मन एव मानसम् ॥ * ॥ जुकृदेव जौकृतः ॥ १७४ ॥

**निगमवणिजौ गन्धर्वश्चाग्रहायणषोडतौ**
**प्रकृतविदतौ कुङ् रक्षोघ्नो विघातचिकीर्षितौ[8] ।**
**ततवसुकराग्नीध्रं विश्वानरो वरिवस्कृतो[9]**
**ऽनुषुकविकृते विद्वानुष्णिक् चरश्च कुतूहलम्[10] ॥ १७५ ॥**

नितरां गम्यन्ते पदार्था अनेनेति निगमः । निगम एव नैगमः । नयः ॥ * ॥ वणिगेव वाणिजः । वाणिजी स्त्री ।

---

१ जेतैव° शरश्रेणी F.

२ शश्वदेव शाश्वतः F.

३ सत्विति तांतं° F.; कृत्वा तलोपं C.

४ °जनसुहृत्कृव्यवसितिः D.; °सदृचव्य° F.; °सदृक्कृव्यवसितिः B. C.

५ °अणंतस्य सामर्थ्यान्न° D.; न प्रवृत्तिः F.

६ वर्तमान एव यथा° D.; ब्राह्माणी C. D.

७ विद्यं B.

८ प्रकृतविद्दितौ E. and a. m. D.; प्रकृतविदकुंच रचो° C.

९ वरिवष्कृतो B. C. D. F.

१० नूषूकवि° C.; वरश्च° F.; A. om. text and comment.

यस्यैते व्याधवार्कैण्यसंकुले वित्तवत्तमाः ।
राचावपि महारण्ये वञ्चं वञ्चन्ति वाणिजाः[१] ॥

गन्तव्यं गच्छन्तीत्यर्थः ॥ * ॥ गन्धर्व एव गान्धर्वः ॥ * ॥ अग्रहायण एव । आग्रहायणः । मार्गशीर्षः ॥ * ॥ षोडन्नेव षौडतः ॥ * ॥ प्रकृतमेव प्राकृतम् ॥ * ॥ विदन्नेव वैदतः । विद्वान् ॥ * ॥ क्रुङ्केव[२] क्रौञ्चः ॥ * ॥ रक्षांसि हन्तीति रक्षोघ्नः । रक्षोघ्न एव राक्षोघ्नः ॥ * ॥ विहननं[३] विघातः । विघात एव वैघातः ॥ * ॥ चिकीर्षितमेव चैकीर्षितम् । चिकीर्षन्नेव चैकीर्षत इति भोजः[४] ॥

इष्टषौडतमैधावसाधुसाधारणद्वये[५] ।
लङ्केश्वर्यौधा ये चास्मै हितास्चैकीर्षितक्रियाः[६] ॥

तनोति कुलम् । ततः । तत एव तातः । जनकः ॥ * ॥ वसुरेव वासवः । सुरपतिः ॥ * ॥ कर एव कारः । राजदेयो भागः ॥ * ॥ अग्निमिन्द्धे । अग्नीत् । तस्य शरणम् आग्नीध्रम् । ततोऽणि प्रत्यये । आग्नीध्री शाला । आग्नीध्रा वा शाला[७] ॥ * ॥ विश्वानर एव वैश्वानरः ॥ * ॥ वरिवस्कृत एव वारिवस्कृतः[८] ॥ * ॥ अनुषुवतीत्यनुषूः । तं कायतीत्यनुषुकः । केऽण्वेति ह्रस्वत्वे[९] । अनुषुक एव । आनुषुकः ॥ * ॥ विकृतमेव वैकृतम् । विकृतिरेव वैकृतमिति नन्दी ॥

---

१ यास्यैते° महारण्ये वंचंति वा° C.; चंवं वचंति° B.; °रण्ये छवठंचंति° F.

२ वैदतः विद्वान् । कुंचेव C.

३ विहनं B. and orig. D.

४ चैकीर्षं इति° B. C. F.; चैकीषत इति श्रीभोजः D.

५ °मेधाव° D. F.; साध्यारण° D.

६ यौधायैवास्मै° F.; यौधायैवास्मै हितास्चैकीर्षिती क्रिया D.; चास्मि° C.

७ आग्नींध्रं° आग्नींधी° आग्नींध्रा° B. F.; आग्नींध्रा° आग्नीध्रा° C.

८ वरिवष्कृत° वारिवष्कृतः MSS.; Vâj. S. 16, 19.

९ ? के अण्वा इति° D.; के ण्घे इति° B. C.; के ण इति ह्रस्वः F. [? P. vii. 4, 13]; cf. vârtt. P. v. 4, 36, where eds. and ed. Kâș. V. read आनुषूक (MS. $\beta$. आनुषुक, $a$. आनुसूपक).

पच्छो वैयाकृतैः सूक्तैर्जागतानुष्टुभौष्णिहैः[१]।
राक्षसासुरपैशाचवैकृतानां निवर्तकम्[२]॥

विद्वानेव वैदुषः ॥*॥ उष्णिगेव। औष्णिहम् ॥*॥ चर एव चारः[३]॥*॥ कुतूहलमेव कौतूहलम् ॥ १७५॥

नन्दामात्यडहालसंप्रतिवजाः कर्षापणत्रिष्टुभौ
गायत्रीरवणोपचेयककुदेकाग्र्याटरूषास्तथा[४]।
संनाय्याग्रयणौ विधेयकुतुकागारद्विदत्पङ्क्तयः[५]
सत्वन्तुप्रतिभावियातसहसा वार्ता विदन्तोऽपि च॥१७६॥

नन्दति वृद्धिं यातीति नन्दा। नन्दैव नान्दी[६]॥*॥ अमात्य एव। आमात्यः ॥*॥ डहाल एव डाहालः ॥*॥ संप्रत्येव सांप्रतम् ॥*॥ वजतीति वजः। स एव वाजः ॥*॥ कर्षापण एव कार्षापणः ॥*॥ त्रिष्टुबेव त्रैष्टुभम् ॥*॥ गायत्र्येव गायत्रम्। छन्दसां पूर्वम्[७] ॥*॥ रवण एव रावणः ॥*॥ उपचेय एव। औपचेयः[८] ॥*॥ ककुदमेव काकुदम्। शब्दशक्तिस्वाभाव्यात्स्वार्थिकाण्प्रत्ययान्तस्यापि काकुदशब्दस्यार्थभेदो द्रष्टव्यः ॥*॥ एकमग्र्यं पुरोगतं ध्येयमस्य[९]। एकाग्र्यः। स एव। ऐकाग्र्यः। अनन्यवृत्तिः ॥*॥ अटन् रूषतीति[१०]। अटरूषः। स एव। आटरूषः सिंहास्यः। यथा।

---

१ प्रच्छो वैया० D.; पच्छी चैयाकृतैः रूक्तैः जा० C.; यच्च वैयाकृतैः० भोष्णिहैः F.

२ निवर्तकः D.—Yajñ. makes this *kârikâ* end thus: ०वैकृतानि भवन्ति नो॥

३ वर एव वारः F.

४ उपवेय MSS.; ०अथरूथास्तथा E.

५ ०द्विदः पंक्तयः F.; A. om. text and comment.

६ नंदः। नंद एव० B. C. F.; नंदा एव० D.; नांदः F.

७ पूर्वे D.

८ उपवेय एव औपवेयः C. D.

९ धेयमस्य B. C.

१० अटतो रूषतीति F.

वासकः सिंहपर्णी च वृषो वासाथ सिंहका[१]।
आटरूषः सिंहमुखी भिषङ्मातृाटरूषकः[२]॥

संनाय्यमेव सांनाय्यम् ॥ * ॥ अग्रयण एव[३]। आग्रयणः ॥ चन्द्रस्तु। अग्रेऽयनस्य। अग्रयणम्[४]। राजदन्तादित्वात्प्राङ्निपाते शकन्ध्वादित्वादकारलोपे च। अग्रयणमेव आग्रयणमित्याह ॥ आग्रायणीत्यन्यः[५]॥ * ॥ विधेय एव वैधेयो मूर्खः[६]॥ विधाया भोजनस्यापत्यमिव वैधेय इत्यन्ये[७] ॥ * ॥ कुतुकमेव कौतुकम् ॥ * ॥ अगारमेव। आगारम् ॥ * ॥ द्वौ दन्तावस्य। द्विदन्। वयसि दन्तस्य दतृ[८]। दत्रादेशे। द्विदन्नेव द्वैदतो[९] बालः ॥ * ॥ पङ्क्तिरेव पाङ्क्तम्[१०] ॥ * ॥ सत्वन्तुरेव सात्वन्तवः[११] ॥ * ॥ प्रतिभैव प्रातिभम्।

प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः[१२]।
गूढसूचितरहस्यसहास्यः[१३] सुभ्रुवां प्रववृते परिहासः ॥

वियात एव वैयातः। धृष्टः ॥ * ॥ सहसैव साहसम्। अविचारकृतं कर्म ॥ अन्यस्तु। साहसं तु दमो दण्डः[१४]। सहसि बले भवं साहसमित्याह ॥ * ॥ वार्त्तैव वार्त्तम्। यथा।

---

१ वासिकः MSS.; सिंहपणा व दृषो वसो वा॰ C.; दृषा वासा च॰ B.; वासोथ॰ D.; वृषावसोऽथ सिंहिका F.

२ आडरूपः॰ C.; सिंहमुषी॰ D.; भिषग्मातटरूषः। B. C.

३ अग्रयणमेव D.; आग्रयण एव C.

४ आग्रयणं C.; अग्रायणं F.—Eds. Pâṇ., Kâs. V. v. 4, 36 vârtt. read आग्रायण.

५ आग्रयणमेवेति श्रीभोजः। D.

६ विधेयमेव वै D. [om. धेयो मूर्खः].

७ विधेयं भोजनं तस्यापत्यं मिव॰ C.; D. om. विधाया; इवे वैधेयमित्य॰ D.

८ Pâṇ. v. 4, 141.

९ द्वैदंतो F.

१० पांक्तः F.; पक्तिरेव पाक्ती D.

११ सत्वतुरेव सात्वतवः D.

१२ Śiśup. 10, 12; चक्रवाकरचना॰ B. C.

१३ ॰सहासः MSS.; see same passage on śl. 179.

१४ B. C. om. from अन्यस्तु [Am. K. ii. 8, 1, 21]; F. om. from साहसं.

हरिराकुमारमखिलाभिधानवित्
स्वजनस्य वार्त्तमयमन्वयुङ्क्त सः[1] ॥ * ॥

विगता दन्ता अस्य । विदन्तः । विदन्त एव वैदन्तः । बालादिः ॥ १७६ ॥

वयश्चतुष्प्राश्यदशार्हयुक्तः
परिप्लवः पुष्पकसंयुतश्च ।
कृष्णः कुरङ्गेऽनिमिषे[2] विसारी
स्यादौषधं भेषज एव कामम्[3] ॥ १७७ ॥

वय एव वायसः । काकः । वयःशब्दः सामान्येन पक्षिवाच्यपि विशेषे वर्तते शब्दशक्तिस्वाभाव्यात् ॥ एवं वसुशब्दोऽपि द्रष्टव्यः ॥ * ॥ प्राश्नन्ति प्राश्नुवते वा तदिति प्राश्यम् । चतुर्भिः प्राश्यं चतुष्प्राश्यम्[4] । तदेव चातुष्प्राश्यम् ॥ * ॥ दश नामान्यर्हति । दशार्हः । स एव दाशार्हः । केशवः ॥ * ॥ परिप्लवते । परिप्लवः । स एव पारिप्लवः । चञ्चलः ॥ * ॥ पुष्पप्रकृतिः[5] । पुष्पकम् । पौष्पकम् । कुसुमाञ्जनम्[6] ॥ * ॥ कृष्ण एव कार्ष्णः । कुरङ्गः । अन्यो गवादिः कृष्णः ॥ * ॥ वैसारिणः । मत्स्यः । अन्यो विसारी[7] । देवदत्तादिः ॥ * ॥ ओषधिरेव । औषधम् । त्रिफलादि । अन्यत्रौषधयः क्षेत्ररूढाः शङ्खपुष्पीप्रभृतयः ॥ * ॥ आकृतिगणस्त्वायम् । तेनान्येऽपि प्रयोगा द्रष्टव्याः[8] ॥ १७७ ॥ इति प्रज्ञादिः ॥

---

१ Śiśup. 13, 68.

२ कुरंगेनिमिषे B. C. D. E.

३ °औषधेर्भेषज° D.; औषधेर्भेषज° E.; A. om. text and comment.

४ C. om. चतुर्भिः प्राश्यं.

५ पुष्पप्रतिकृतिः F.; C. om. चञ्चलः.

६ स एव पौष्पकं° C.; तदेव पौष्पकं कुसुमं F.

७ वैशारिणो° विशारी D.

८ D. om. from आकृतिगण°.

अनन्तसोमेतिहसर्ववेदाः
सुखैकभावौ मणिकान्यभावौ।
समीपसेनावसथद्विभावा
मालोपमाभेषजसर्वविद्याः[1] ॥ १७८ ॥

ष्योऽनन्तादेरित्यनेनानन्तादेः[2] शब्दगणात्स्वार्थे ष्यप्रत्ययो भवति ॥ * ॥ न अन्तोऽनन्तः। अनन्त एव। आनन्त्यम् ॥ न विद्यतेऽन्तो यस्य। अनन्तः कालः। अनन्ता पृथ्वी। अनन्तं व्योम। आनन्त्यः काल इत्यादि ॥ * ॥ सोम एव सौम्यः। यथा।

तेनाथ नाथदुरुदाहरणातपेन
सौम्यापि नाम परुषत्वमपि प्रपन्ना[3]।
जज्वाल तीक्ष्णविशदा सहसोद्गिरन्ती
वागर्चिषस्तपनकान्तशिलेव सीता[4] ॥

सौम्यम्। सोम इवाह्लादकत्वात् सोम्य[5] इत्यपि शाखादेराकृतिगणत्वात। यथा।

अपेतयुद्धाभिनिवेशसौम्यो
हरिर्हरिप्रस्थमथ प्रतस्थे[6] ॥ * ॥

इति हेत्येव। ऐतिह्यम्। इति हेति निपातसमुदाय उपदेशपारंपर्ये वर्तते। इति ह स्मोपाध्यायः कथयति। इति ह वटे यक्षः प्रतिवसति ॥ * ॥ सर्ववेदा एव सार्ववैद्यम् ॥ * ॥ सुखमेव सौख्यम् ॥ * ॥ एको भावो

---

१ सुषैकखैकभावौ॰ B.; सुखैककभावौ॰ D.; A. om. text and comment.
२ ष्यानंतादेरित्यनेनानंतादिः C.
३ नेनाथ नावदु॰ नाम पदमूध्वमभिप्रपन्ना D.; दुरुदाहरणांतप॰ C.
४ जिह्मायतीक्ष्ण॰ गिरती॰ D.; शीता D. F.; जह्वालतीक्ष्णविशदाः सहासोद्गिरंता वाग॰ C. — According to Prof. Aufrecht this stanza occurs twice in the Sarasvatîkanṭhâbharaṇa.
५ सौम्य D. F.; *śâkhâdi*, śl. 190.
६ Śiś. 3, 1; अभि for अथ D.

यस्य । एकभावः । एकस्य वा भावः । एकभावः । स एव । ऐकभाव्यम् ॥ * ॥ मणिप्रकारो मणिकः । मणिक एव माणिक्यम् । रत्नविशेषः ॥ * ॥ अन्यो भावो यस्यासावन्यभावः । अन्यस्य वा भावोऽन्यभावः । अन्यभाव एव । आन्यभाव्यम् । यथा । आन्यभाव्यं तु कालशब्दव्यवायात्[१] ॥ * ॥ समीपमेव सामीप्यम् ॥ * ॥ सहेनेन वर्तते । सेना । सेनैव सैन्यम् ॥ * ॥ एत्य वसन्त्यस्मिन्निति । आवसथो गृहम्[२] । आवसथ एव । आवसथ्यम् ॥ * ॥ द्वयोर्भावो द्विभावः । द्विभाव एव द्वैभाव्यम् ॥ * ॥ मालेव माल्यम् । स्रक् ॥ * ॥ उपमैव । औपम्यम् ॥ * ॥ भिषज इदम् । भेषजम्[३] । यद्वा भिषज्यतीति भेषजः[४] । करणस्यापि कर्तृत्वे पचाद्यचि यलोपे च निपातनादेत्[५] । भेषजमेव भैषज्यम् ॥ * ॥ सर्वविद्या एव सार्वविद्यम्[६] । यथा ।

सार्ववैद्यविदयाहृत चातुर्-
वैद्यवैद्य इव तं विरहार्तम्[७] ॥ १७८ ॥

**सर्वलोकचतुर्विद्याचतुराश्रमषड्गुणाः ।**
**भावशब्दस्वरा विद्यालोककालास्त्रितः परे[८] ॥ १७९ ॥**

सर्वलोका एव सार्वलौक्यम्[९] ॥ * ॥ चतस्र एव विद्याः । चातुर्वैद्यम् ।

---

१ Vârttika, Kielhorn's Mbh. p. 18.

२ एत्यवसत्यस्मिन्नित्य° C.; समभ्येतवसंत्य° D.; F. om. एत्य; अवसथो गृहं C. F.; °अवसथ एव F.

३ भैषज्यं F.

४ भिषजः B. C. F.

५ कर्तृत्वमेवाचि यलोपे वा निपातनादेञ् D.; निपातनादेते C.; [पचाद्यच् P. iii. 1, 134].

६ ?सर्ववेदा एव° B.; सार्वविद्यं F.—सर्वे वेदाः सर्ववेदाः° । तानधीते सर्ववेदः° । स एव सार्ववैद्यः ॥ सर्वविद्या अधीते सर्वविद्यः । स एव सार्वविद्यः ॥ Yajñesv.; सर्वविद्या is not mentioned among the *anuşatikâdi* şl. 164-7, but cf. चतुर्विद्या şl. 165 and next şloka.

७ सर्ववैद्यविद्यो B. C.; सर्ववैद्यविदुषो° F.; धृतचातुर्वैद्य इव C. D.

८ A. om. text and comment.

९ सर्वे लोका° B.; सार्वलौक्यं C.

अथवा। चत्वार एव वेदाः। चातुर्वैद्यम्। उभयत्राप्यनुशतिकादिदर्शनादुभयपदादावैच्[1] ॥ * ॥ चत्वार एवाश्रमा ब्रह्मचारिगृहस्थवानप्रस्थयतिलक्षणाः। चातुराश्रम्यम् ॥ * ॥ षड् गुणा एव सन्धिविग्रहयानासनद्वैधीभावसंश्रयलक्षणाः। षाड्गुण्यम्। यथा।

अषडक्षीणषाड्गुण्यमन्त्री मकरकेतनः[2] ॥ * ॥

त्रयो भावाः। त्रयाणां वा भावाः। त्रिभावाः। त्रिभावा एव त्रैभाव्यम् ॥ * ॥ त्रय एव शब्दाः। त्रैशब्द्यम्[3] ॥ तथा हि। पञ्चसु कपालेषु संस्कृत इत्येकः। पञ्चकपाल इत्यपरः। पञ्चकपाल्यां संस्कृतस्तृतीयः[4]। पाञ्चकपालमित्यवधानान्नास्ति[5] चतुर्थः शब्द इति ॥ * ॥ त्रय एव स्वरा उदात्तानुदात्तस्वरितलक्षणाः। त्रैस्वर्यम् ॥ * ॥ तिस्र एव विद्या आन्वीक्षिकीत्रयीवार्त्तालक्षणाः। त्रैविद्यम् ॥ द्विविद्य इत्यप्यन्यः[6] ॥ कश्चित् तिस्र एव विद्याः। त्रय एव वेदा इति वा। त्रैविद्यमित्याह[7] ॥ * ॥ त्रय एव लोकाः। त्रैलोक्यम् ॥ * ॥ त्रय एव काला वर्तमानभूतभविष्यल्लक्षणाः। त्रैकाल्यम् ॥ त्रित इति त्रिशब्दादित्यर्थः ॥ १७९ ॥

**हासप्रधानकवयः समानसंनिधितदर्थसमयुक्ताः।**
**अथ चतुरो वर्णयुगौ शीलं शकटाङ्गजः प्राह[8] ॥ १८० ॥**

हास एव हास्यम्। यथा।

गूढसूचितरहस्यसहास्यः सुभ्रुवां प्रवव्रते परिहासः[9] ॥

---

१ Cf. *anuṣatikâdi*, ṣl. 165.—चतुरो वेदानधीते चतुर्वेदः स एव चातुर्वैद्यः०। चतुर्विदस्येति पाठांतरम्। तत्रापि चतस्रो विद्या अधीते चतुर्विद्यः०। चतुर्विद्य एव चातुर्वैद्यः ॥ Yajñ.

२ Anarghyarâgh. 3, 6.

३ त्रैशाब्द्यं D.

४ B. C. om. from पचकपाल्यां.

५ पंचकपालमित्य० B. C.; ०अवधानान्न नास्ति C.

६ द्वैविद्यमित्यन्यः F.

७ त्रैवैद्यमि० B. and corr. C.

८ प्रधानं कवयः० B. C.; वरार्णयुगौ० E.; A. om. text and comment.

९ See same passage, ṣl. 176.

प्रधानमेव प्राधान्यम् ॥ * ॥ कविरेव काव्यः । दैत्यगुरुः । कुर्वादिभ्यो ण्ये सति काव्य इति च[१] ॥ * ॥ समानरेव सामान्यम् ॥ * ॥ संनिधिरेव सांनिध्यम् ॥ * ॥ सोऽर्थोऽस्येति तदर्थः । तदर्थ एव ताऽर्थ्यम् । तच्छब्देन प्रकृत्यर्थो निर्दिश्यते ॥ * ॥ सममेव साम्यम् ॥ * ॥ चत्वार एव वर्णाः । चातुर्वर्ण्यम् । विप्रक्षत्रियविट्शूद्राः ॥ * ॥ चातुर्युग्यम् ॥ * ॥ शाकटायनस्तु षण्प्रत्ययमानयञ्शीलमेव शैलीयमाचार्यस्येत्याह[२] ॥ * ॥ जिनेन्द्रबुद्धिरनन्तरशब्दमप्यत्राधीते[३] । तथा च तेन । अनृष्यानन्तर्ये विदादिभ्योऽञित्यत्र[४] न ह्ययं भावे ष्यञ् विहितः किं तर्हि स्वार्थ एव चातुर्वर्ण्यवदिति दर्शितम्[५] ॥ * ॥ आकृतिगणश्चायम् । तेनान्येऽपि वेदितव्याः ॥ १८० ॥ इत्यनन्तादिः[६] ॥

**आदिमध्यमुखान्ताग्रप्रमाणपार्श्वयत्तदः ।**
**सर्वविश्वोभयैकान्यवक्षःपूर्वेदमः स्वरः[७] ॥ १८१ ॥**

आद्यादेरित्यनेनाद्यादिभ्यः संभवद्विभक्त्यन्तेभ्यो यथासंभवं तसप्रत्ययो भवति ॥ * ॥ आदौ । आदितः ॥ * ॥ मध्ये मध्याद्वा । मध्यतः ॥ * ॥ एवं मुखे । मुखतः ॥ * ॥ अन्ततः ॥ * ॥ अग्रतः ॥ * ॥ प्रमाणेन प्रमाणाद्वा । प्रमाणतः ॥ * ॥ पार्श्वेन । पार्श्वतोऽर्कं निषेवेत[८] ॥ * ॥ येन यस्मिन्वा । यतः ॥ * ॥ एवं ततः ॥ सर्वतः ॥ विश्वतः ॥ उभयतः ॥

---

१ Cf. *kurvâdi*, şl. 209.

२ The other works do not give शील.

३ भवतरश॰ D.; अनंतरं श॰ C.—Bö. and Yajñ. also give अनन्तर in this gaṇa.

४ Pâṇ. iv. 1, 104.

५ इत्यत्र न ह्येवं भावे॰ D.; ॰दर्शनं C. F.; इत्यनंत्यं यभावेष्य विहितः C.; C. F. om. किं तर्हि.

६ This gaṇa corresponds to the gaṇa चतुर्वर्णादि P. v. 1, 124, v. 1.

७ स्वराः E.; A. om. text and comm.

८ पार्श्वे पार्श्वतो वा॰ F.; निषेवते C. D. F.

एकतः ॥ अन्यतः ॥ वत्सः ॥ पूर्वतः ॥*॥ इतः । यथा । प्रयुक्तमप्यस्त्रमितो वृथा स्यात्[1] ॥*॥ स्वरेण । स्वरतः ॥*॥

आकृतिगणश्चायम् । तेन वर्णतः । शब्दतः । अर्थतः । अभिधानत इत्यादयो द्रष्टव्याः ॥ का पुनरत्र संभवन्ती विभक्तिः । तथा हि । याप्ये पाशवित्यत्र प्रयुक्तम्[2]। शरीरतः कृशः । शरीरेण कृश इत्ययं तत्रार्थः। तेन तृतीयान्तादनेन तसिः । तथा दुष्टः शब्दः स्वरतो वर्णतो[3] वेत्यस्य विवरणे भर्तृहरिः[4]। आद्यादित्वात्तसिः स्वरवर्णाभ्यां दुष्ट इति तत्रापि तृतीयान्तादेव । एवंभूतविषयमेवैतल्लक्षणमिष्ठ्युपसंख्यानानां[5] नियतविषयत्वात् । न च सर्वविषयोऽयमिति स्मृतिरस्ति नापि सर्वविषयत्वे प्राक्सूत्रप्रपञ्चस्यानेकलक्षणस्यापादानादिग्रहणस्य च[6] फलमस्ति सुबन्तात्तसित्युच्यमाने सर्वस्य संग्रहात्[7]। तस्मादाद्यादिभ्य इत्येतस्य सामान्यलक्षणत्वासंभवाद् यावदुदाहृतमिह शास्त्रे प्रमाणतयोपगतैः शिष्टैस्तावानेव विषयो नापरः । एवं च य एते तर्कग्रन्थेषु हेतुपञ्चम्यर्थे किंसर्वनामबहुभ्योऽन्यत्र[8] तसन्ताः प्रयोगाः । तेषु यत्रापादानपञ्चमी संभवति तत्र साधुत्वम् । येषु तु न संभवति ते कालदृष्टा[9] एवापशब्दाः। न च तत्राद्भुतं बाहुल्येन तर्कग्रन्थेषु शब्दानां लक्षणविकलानामेव दर्शनात् । यस्त्वयं वेदविदामलंकारभूतो वेदाङ्गत्वात्प्रमाणितशब्दशास्त्रः सर्वज्ञंमन्य[10] उपमीयते तेन कथमेतत्प्रयुक्तम् । न हि स्मरणतो यत्प्राक्

---

[1] Raghuv. 2, 34.

[2] जाते पाशप॰ B. C.; जात्ये पाशप इत्यत्र भाष्ये प्रयुक्तं D.—Cf. Mbh. on P. v. 3, 47: अथ वैयाकरणः शरीरेण [Kâṣmîr MS. acc. to Prof. Kielhorn, शरीतः, i.e. शरीरतः] कृशः.

[3] दुष्टः शब्दतो वर्णतो वेत्य॰ C.; दुष्टशब्दा स्वरतो॰ (corr. दुष्टाः श॰) D.

[4] नृहरिः D.

[5] ॰लक्षणमित्युप॰ C. F.

[6] ॰अनेकलक्षणस्याच C.; ॰लक्षणस्यायानादिग्रहणस्य च D.

[7] सर्वसंग्रहात् C.

[8] अन्ये च F.

[9] साधुत्वात्तेषु तु॰ कालदृष्टा C.

[10] सर्वज्ञमन्य C.; सर्वमन्य (corr. मान्य) D.

तत्प्रत्यक्षमितीरितं वचनं[1] राजकीयं वा वैदिकं वापि विद्यत इति तत्र हि दिग्योगलक्षणा दिक्शब्द इत्यनेनोपपदविभक्तिः पञ्चमी केन तस्यास्तसिः स्यात्। अन्ये तु हेतुपञ्चम्यन्तादपि तसमिच्छन्ति। यथा। प्रमाणाद्धेतोः। प्रमाणतः। तथा च सार्वविभक्तिकस्तसिरिति तार्किकाः शतशो व्यवहरन्ति[2] ॥ १८१ ॥ इत्याद्यादिः ॥

स्थूलश्चञ्चत्पत्रमूलाणुमाषाश्
चञ्चश्चित्रं गन्धहस्तेषुचूर्णाः[3]।
पानं वर्णो मूलमुद्राधपादाः
पिष्टः शूलं पल्लवः सूत्रपत्रे[4] ॥ १८२ ॥

स्थूलादेरित्यनेन स्थूलादिभ्यः शब्देभ्यः प्रकारवत्यर्थे को भवति। जातीयरोऽपवादः ॥ * ॥ स्थूलत्वविशेषयुक्तः पटः। स्थूलकः। तत्र स्थूलसदृशः स्थूलकः। स्थूलसामान्यस्य वायं भेदः स्थूलकः ॥ * ॥ चञ्चतीति चञ्चन्। चञ्चत्प्रकारः। चञ्चत्कः। चञ्चता गत्वरेण सदृशः[5]। चञ्चत्कः ॥ बृहता सदृशः[6]। बृहत्कः। मणिर्मण्डूकः खद्योतो वा। खद्योतस्तावदुन्मेषनिमेषाभ्यां चञ्चन्निवेत्युपमीयते। मण्डूकोऽपि श्वासप्रबन्धेन गत्वर इति[7] मणिः स्पन्दमानप्रभत्वात्तथोत्प्रेक्ष्यते[8]। तथाल्पोऽपि प्रविकाशिप्रभत्वान्महानिव य उपलक्ष्यते तत्र मणौ बृहत्कशब्दो लोके प्रयुज्यते। तदाह।

---

१ यत्तत्प्राक्प्रत्यक्ष° F.; °तं च वचनं C.; इतीदृशं। वचनं D.
२ शतसो व्याहरंति D.
३ स्थूलं चंचत्प° चंचश्चित्रं° D. E.; चंचंश्चित्रं F.; °वर्णाः। E.
४ C. om. पानं वर्णो; मूलमुद्रार्द्धयादाः° E.; शूला D. E.; पल्लवसूत्रपत्रं C.; A. om. text and comment.
५ चंचतां गत्वरेण सदृशः C.; D. corrupt.
६ See next page, note ३.
७ मस्तकोपिश्वासप्रबंधेन° C.; सत्वर इति D.
८ संदमानप्रभवत्वात्° B. C.: °तथोत्प्रेचते B. C. D.

चञ्चत्प्रकारश्चञ्चत्को बृहत्क इति चापरे।
मणिमण्डूकखद्योतास्तादृश्येन प्रचचते॥
तत्रोन्मेषनिमेषाभ्यां[1] खद्योत उपमीयते।
श्वासप्रबन्धैर्मण्डूकः स्पन्दमानप्रभो मणिः॥
प्रविकाशिप्रभो[2]ऽन्योऽपि महान्य उपलभ्यते।
बृहत्क इति तत्रैव मणौ शब्दः प्रयुज्यते[3]॥ * ॥

पत्रमूले प्रकारो[4]ऽस्य। पत्रमूलकः॥ * ॥ अणुः प्रकारो[5]ऽस्य। अणुकः पटः। द्व्यणुकादिः पदार्थो गवाक्षाद्यन्तरप्रविष्टरविकिरणप्रकाशितो[6] रेणुर्वेत्यन्यः॥ * ॥ सुवर्णस्य षोडशांशो माषः। स प्रकारोऽस्य। माषकम्। हिरण्यम्॥ भोजस्तु। अणोर्माषेषु। माषात्परिमाण इति सूत्रद्वये। अणुका माषाः[7]। माषकः सुवर्णपरिमाणमित्याह॥ * ॥ चञ्चतीति चञ्चः। चञ्चः प्रकारोऽस्य चञ्चकः[8]॥ * ॥ चित्रप्रकारः[9]। चित्रकः। द्वीपी॥ * ॥ गन्धप्रधानः[10] पाषाणो गन्धः। गन्धः प्रकारोऽस्य। गन्धकः[11]॥ * ॥ हस्तप्रकारः। हस्तकः। पताकत्रिपताकादि-

---

१ प्रचक्ष्यते तत्रोन्मेषनिमे॰ B.

२ प्रविकाशप्रभो C.; प्रतिभासिप्रभो D.

३ बृहता सदृशः। बृहत्कः॰ is perhaps an interpolation; cf. śl. 184.—चंचतीति चंचन् गत्वरः। चंचत्प्रकारोऽस्य चंचत्को मंडूकः खद्योतो मणिर्वा। मंडूकस्तावत् श्वासप्रतिबंधेन स्रवमानो गत्वर इवेत्युपमीयते। खद्योतोऽपि उन्मेषनिमेषाभ्यां चंचन्निव भवपि। मणिस्तु स्पंदमानप्रभत्वात्तथोत्प्रेक्ष्यते॥ बृहता सदृशो बृहत्कः। अन्योऽपि प्रविकाशिप्रभत्वाद् यो महानिवोपलक्ष्यते तत्र मणौ बृहत्कशब्दो लोके प्रयुज्यते। तथा चोक्तं गणरत्नमहोदधौ। follow the three *kārikās* चंचत्प्रकारश्चंचत्को॰ Yajñ.

४ पत्रमूलप्रकारो B.

५ अणुप्रकारो B. C.

६ ॰प्रविष्टं वि॰ C.; प्रविस्तरवि॰ D.

७ श्रीभोजस्तु अणोर्भाविषु माषात्॰ D.; भोजस्तु श्रावणमाषेषु माषात्परि॰ C.; अणोर्माषे माषा॰ B.

८ चंचप्रकारो स्य॰ B. C.; इति चंचन् प्रकारोऽस्य चंचत्कः F.

९ चित्रः प्रकारोऽस्य F.

१० गंधप्रकारः B. C.

११ गंधप्रकारो स्य॰ C.; गंधप्रकारो गंधकः D.

नृत्ताभिनयविषयप्रसिद्धः[1] ॥ * ॥ इषुप्रकारः । इषुकः । बाणविशेषः । इषुप्रकारोऽस्याः । इषुका । गोलिका ॥ * ॥ चूर्णप्रकारः । चूर्णकः । तालीशादिस्ताम्बूलाङ्गं वा[2] ॥ * ॥ पानप्रकारः । पानकम् । द्राक्षाशर्करादिनिर्मापितम्[3] ॥ * ॥ वर्णप्रकारः । वर्णिका । गैरिकादिः[4] । परीक्षार्थं सुवर्णादिमात्रा वा ॥ * ॥ मूलप्रकारः । मूलकः । शाकविशेषः ॥ स्त्रीत्वविवक्षायां मूलिका । शङ्खपुष्पादिः ॥ * ॥ मुद्राप्रकारः । मुद्रिका । अङ्गुल्याभरणम् ॥ * ॥ अर्धप्रकारः । अर्धिका ॥ * ॥ पादप्रकारः । पादिका ॥ * ॥ पिष्टप्रकारः । पिष्टिका । माषादिद्विदलधान्यचूर्णः ॥ * ॥ शूलप्रकारः । शूलिका ॥ * ॥ पल्लवप्रकारः । पल्लविका । चणकादिपत्त्रं संस्कारयोग्यं भक्ष्यम् ॥ * ॥ सूत्रप्रकारः । सूत्रिका ॥ * ॥ पत्त्रप्रकारः । पत्त्रकम् । तमालपत्त्रमेव । लिखितलघुभूर्जखण्डवाचि[5] तु ह्रस्वान्यविवक्षायां कप्रत्यये सिद्धम् ॥ यथासंभवं सर्वत्र प्रकारे विवक्षिते शब्दशक्तिस्वाभाव्यात्स्त्रीत्वमेव ॥ १८२ ॥

हरितध्रुववाट्येक्षुमठमण्डपसंकलाः[6] ।
वाट्यकालावदातास्तु[7] सुरायामुदितास्त्रयः ॥ १८३ ॥

हरितप्रकारः । हरितकम् । अश्वादीनां यवादिघासः ॥ * ॥ ध्रुवप्रकारः । ध्रुवकः । तिथ्यादिगणनेऽविचलितोऽङ्कसंघातः[8] ॥ * ॥ वा-

---

१ पताका क्षिप° C.; पताकक्षिप्ण-कादिवृत्ता° D.; विषयः प्रसिद्धः D.

२ तालीसादि° B. C.; ताम्बूलांगहा B.; तांस्त्रलांगं वा D.; F. om. from इषुप्रकारोऽस्या..

३ °शर्करादिभिर्निर्मितं F.

४ गिरिकादिः B.

५ लिखितं लघु भूरिअखंडवाचि F —पत्त्रप्रकारः पत्त्रकस् तमालपत्त्रं लिखितभूर्जपत्त्रखंडं वा ॥ Yajñ.

६ °वाह्येक्षु° D.; वाघेक्षु° C. E.

७ वाद्याकाल° C. E.; वाघा° D.; cf. n. ७, p. २२४; A. om. text and comm.

८ इत्यादिगणने°ऽकसंघातः C. F.

ष्यप्रकारः । वाष्यकः[१] । अवदातात् सुरायां[२] वाष्यकालाभ्यां[३] सामान्येन कप्रत्यय इति यन्मतं तदपि[४] स्वीकृतम् ॥ * ॥ इक्षुप्रकारः । इक्षुकः[५] ॥ * ॥ मठप्रकारः । मठिका । नानादेशागतानां द्रव्यरक्षास्थानम् ॥ * ॥ मण्डपप्रकारः । मण्डपिका । शुल्कादायगृहीतस्थानम्[६] ॥ * ॥ संकलाप्रकारः । संकलिका ॥ * ॥ वाटशब्देन विशिष्टं भाजनमुच्यते । तत्र साधुः । वाट्या । तत्प्रकारवती । वाट्या सुरा भाजनपतिता वर्णोत्कर्षवती । वाटिका[७] ॥ एवं कालिकावदातिकार्थौ[८] ज्ञेयः ॥ १८३ ॥

तिलकालधान्यकालास्तिलमणिपुण्ड्रं बृहन्महच्चन्द्राः[९] ।
एरण्डमधु कुमार्योः पुत्रश्वशुरौ[९] च संज्ञायाम् ॥ १८४ ॥

तिलकालयोः प्रकारः । तिलकालकः ॥ * ॥ धान्यप्रकारः । धान्यकम् ॥ * ॥ कालप्रकारः । कालकः ॥ * ॥ तिलप्रकारः । तिलकः ॥ * ॥

---

१ वाघ° वाघकः C. D.

२ ? अवदातसु° D.; अवदातत् सु° B.; अवदातान् सु° C.; अवदातः सु° F.

३ ? वाष्याकालाभ्यां B.; वाघाका° C. D.—Bö., Yajñ., Kâṣ. V. ed. have पाद्यकालावदात(ाः) सुरायां; Kâṣ. V. MS. *a.* वाद्याका°, om. *β.*; Vardh. seems to admit the two readings वाष्यकालावदाताः and वाष्याका° cf. n. ७.

४ मन्मतं° B. C.; यद्युतंदपि D.

५ इक्षुक एरंडः Yajñ.

६ शुल्काद्दायगृहितृस्थानं F.; ञ्शुल्कादयगृ° D.

७ पादार्थमुदकं पाद्यं तत्प्रकारा पाद्यिका सुरा । यथा प्रियातिथिः सत्काराय पाद्यं प्रदीयते तथा कदाचित्केनचित्सुरापि । ततः सा पाद्यसदृशी पाद्यिकाशब्देन व्यपदिश्यते ॥ गणरत्नमहोदधौ तु वाष्यकालाऽवदातास्तु सुरायामुचितास्त्वय इति पठित्वा वाटशब्देन विशिष्टं भाजनमुच्यते । तत्र साधुर्वाट्यो द्रवद्रव्यविशेषः । तत्प्रकारा वाट्यिका सुरा भाजनपातिनी वर्णोत्कर्षवतीत्युक्तम् । Yajñeṣv.; cf. note ७, preceding page.

८ कालः श्यामलः प्रकारोऽस्या इति कालिका । अवदातो धवलः प्रकारोऽस्या इत्यवदातिका सुरैव । Yajñ.

९ °पुंड्रवृह° F.

मणिप्रकारः मणिकः। मणिः प्रकारोऽस्येति[1] मणिकः। मणिरिव यो रत्नभूतः प्रधानं मनोज्ञश्च स मणिक इत्यन्ये ॥ * ॥ पुण्ड्रकः। इक्षुविशेषः[2] ॥ * ॥ बृहत्कः। ग्राम्यसमाजे श्रेष्ठः ॥ * ॥ महत्कः[3] ॥ * ॥ चन्द्रकः ॥ * ॥ एरण्डकः। इक्षुविशेषः ॥ * ॥ मधुकः[4] ॥ * ॥ कुमारीपुत्रकः ॥ कुमारीश्वशुरकः ॥ यथा[5]।

प्रतिवसति कुमारीपुत्रका वा कुमारी-
श्वशुरकसदृशो वा ग्राम्यदेशे समृद्धिः[6]।
मणिकमधुकभासं पुण्ड्रकैरण्डकेक्षु-
स्तबकितककुभस्तां[7] तद्भवोऽस्मै शशंसुः ॥

कुमारीपुत्रः प्रकारोऽस्य। कुमारीपुत्रकः। यथा कुमारीपुत्रः कश्चित्सभायां प्रविशँल्लज्जते तथान्योऽपि य एवंविधः स कुमारीपुत्रकः ॥ कुमारीश्वशुरः प्रकारोऽस्य। कुमारीश्वशुरकः। यस्य पुत्रः कुमार्या सह दृष्टः स कुमारीश्वशुरः। यथा पुत्रदोषेण स लज्जते तथान्योऽपि लज्जमानः कुमारीश्वशुरक इत्यन्यो व्याचष्टे[8] ॥ * ॥

---

१ मणिप्रकारो स्येति B. C.

२ पुंड्रक इक्षु° F.; on बृहत्क s. p. 222, note 3.

३ इत्यपि महत्कः B. C.

४ यत्तु एरंडमधुकुमार्याः पुत्रः श्वशुरस्य संज्ञायामिति पठित्वा वर्द्धमानेनोक्तम्। एरंडक इक्षुविशेषः। मधुकं नालिकेरासवम्। संज्ञायामिति गणसूत्रं तस्यायमर्थः। स्वप्रकृत्यर्थस्य etc. as above to कुंभिका स्तंभोपधानी इत्यादि° Yajñ.

५ D. om. यथा, cf. next note.

६ यान्यदेशे सवृद्धिः B. C. F.; ग्रम्यदेशे° D.—This stanza, apparently taken from some grammatical poem, is also found in the text MS. E.

७ °भाषां पुंडकैरंडकेचू सचकितक° E.; °भासः पुंड्रकै° F.; मधुकः मणिकः भासः पुंड्रकैरंडकेक्षुः स च किलः ककुभस्ताः D.

८ कुमारीश्वशुरकः। यस्य पुत्रः कुमार्या संगतः स यथा शिष्टसभां प्रवेष्टुं लज्जते तथा यो लज्जमानः स एवं व्यपदिश्यते। Yajñ.—Kâś. V. ed. has कुमार। श्वशुरक, MS. *a.* कुमारीश्वशुरक.

संज्ञायामिति गणसूत्रम् । तस्यार्थः । स्वप्रकृत्यर्थस्य प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः संज्ञारूपतयाऽर्थान्तरे वर्तते तस्यानेन कप्रत्ययः । फलम् आमलकादि । फलकं तु काष्ठादिमयम् ॥ शूद्रशब्दो जातौ प्रसिद्धः । शूद्रको नाम वीरः ॥ संतानः समानजातीयप्रवाहः[1] । संतानकः सुरतरुः ॥ कुब्जं वक्रं काष्ठादिवस्तु । कुब्जकस्तरुविशेषः ॥ कुरवः कुत्सितो ध्वनिः । कुरवकस्तरुविशेषः[2] ॥ कदम्बस्तरुः । कदम्बकं संघातः ॥ भ्रमरः षट्पदः । भ्रमरकः क्रीडोपकरणम् ॥ करभः क्रमेलकः । करभको धनुष्कोटिर्गृहैकदेशो वा कटकुड्यलक्षणः[3] ॥ नेत्रम् अक्षि । नेत्रकं मन्थानाकर्षकम्[4] ॥ कणो माषादिधान्यव्यक्तिरूपः । कणको लोहोपकरणम् ॥ दण्डो यष्टिः । दण्डकश्छन्दोविशेषः कृशमार्गो वा[5] ॥ जम्बुस्तरुविशेषः[6] । जम्बुकः शृगालः ॥ स्त्रीत्वमपि केषांचित् । कुम्भो घटो मानविशेषो वा । कुम्भिका स्तम्भाधानी ॥ नौरब्धा । नौकाऽवितारका ॥ ये तु कप्रत्ययमासाद्य स्वार्थत्यागेन जात्यन्तरे किंचिदाकारसाम्याद् यवाद्यास्तेषां प्रतिच्छन्देऽनर्चादेरिति[7] कप्रत्ययो न पुनरनेन यवको व्रीहिः[8] । न यवप्रकार एव जात्यन्तरत्वात् । एवमन्यत् । गोमूत्रम्[8] । तद्वर्णमाच्छादनं[9] गोमूत्रिका ॥ अन्या

१ संतानं समानजीय° D.

२ कुरुवक° B. C.; कुरवक° F.; °कः ग्रहविशेषः D.

३ कटकुद्य° D.; कृतकुड्य° C.; कटस्तु कुड्य° B.; । कटः कुड्यलक्षणः कटको वलयं । F.; om. Yajñ., cf. last page, n. ४.

४ मन्थान्याकर्षका D.

५ दंडकः । पद्यविशेषः । तनुभागो वा D.

६ जंबूस्तरु° F.; जंबु तरु° D.

७ प्रतिच्छंदे न अर्थादेरिति B. C.; cf. next śloka.

८ Bö., Yajñ., Kâś. V. include यव (व्रीहिषु), गोमूत्र (आच्छादने), सुरा (अहौ), also कृष्ण (तिलेषु), जीर्ण (शालिषु) in this *gaṇa* [सुराप्रकारः सुरावर्णोऽहिः सुराकः ॥ गोमूत्रिका गोमूत्रवर्णा शाटी । etc. Yajñ.].

९ गोमूत्रवद्वर्ण° D.

सुरा। अन्यस्तद्वर्णः सुराको हि ॥ * ॥ प्रकारः सादृश्यमिति ब्रह्मसंमतम्। सामान्यस्य भेदको विशेषः प्रकार इत्यन्येषामभिनिवेशः। यदाह।

सादृश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते।
भेदेऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यते ॥

आकृतिगणोऽयम्[1] ॥ १८४ ॥ इति स्थूलादिः ॥

**अर्चासु पूजनार्थासु चित्रकर्मनटध्वजे।**
**चञ्चाखरकुटीदासीवध्रिका नरि काश्यपः[2] ॥ १८५ ॥**

प्रतिच्छन्देऽनर्चादेरित्यत्रार्चादेर्वर्जनात् को न भवति ॥ * ॥ अर्चासु। शिवाकारः। शिवः। अर्हन्[3]। स्कन्दः। आदित्यः ॥ * ॥ चित्रकर्मणि। दुर्योधनः। भीमः ॥ * ॥ नटे। रामः ॥ * ॥ ध्वजे। गरुडः ॥ * ॥ मनुष्येऽभिधेये। चैत्रे सस्यरक्षणार्थं[4] तृणमयः पुरुषश्चञ्चा। चञ्चेव चञ्चा मनुष्यः ॥ खरकुटी नापितमुण्डनशाला। खरकुटीव खरकुटी ॥ दासीव दासी ॥ वध्रिका चर्ममयी वरत्रा। वध्रिकेव वध्रिका ॥ मुख्यवल्लिङ्गसंख्ये इति[5] वचनात् पुंलिङ्गेऽप्यर्थे स्त्रीलिङ्गतैव ॥ * ॥ काश्यप इव काश्यपः ॥ १८५ ॥

**देवराजाजशङ्कुभ्यः करिसिन्धुशतात् पथः।**
**सिद्धोष्ट्राभ्यां गतिग्रीवे वामाद्रज्जुः स्थलात्पथः[6] ॥ १८६ ॥**

---

१ D. om. from प्रकारः सादृश्यमिति.

२ °वर्द्धिका F.; चारिकाश्यपः D.; काश्यपः B.; A. om. text and comment. —On this *gaṇa* cf. Pâṇ. v. 3, 96 ff. Yajñ. defends the *gaṇa* देवपथादि by the side of Pâṇ. v. 3, 99, and adds: तदुक्तमभियुक्तैः। अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ लोपः कनो देवपथादिष्विति ॥

३ शिव अर्हत् D.; अर्हं B. C.

४ चैत्रशस्य° D.

५ मुख्यावल्लिंग° C.; °संख्येति D. and corr. युक्तवत् लिंग°.

६ गतिग्रीवा E.; वामा रज्जुः C.; वामरज्जः D. E.; A. om. text & comm.

देवानां पन्थाः । देवपथः । स यादृशः सद्गुणोपेतस्तरुनिकरच्छायाकलितः समतलः सजलो[1] निरुपद्रवश्च तादृशोऽन्योऽपि देवपथः ॥ * ॥ एवं राजपथः[2] ॥ * ॥ अजपथः ॥ * ॥ शङ्कुपथः[3] ॥ * ॥ करिपथः ॥ * ॥ सिन्धुः समुद्रो नदी वा । तत्पन्था इव । सिन्धुपथः[4] ॥ * ॥ शतं पन्थानो यत्र । शतपथः । तत्तुल्यः शतपथः ॥ * ॥ सिद्धानां गतिः । सिद्धगतिः । तत्तुल्यः सिद्धगतिः ॥ * ॥ उष्ट्रस्य ग्रीवा । उष्ट्रग्रीवा । तत्तुल्य उष्ट्रग्रीवा ॥ * ॥ वामा कुटिला[5] रज्जुः । वामरज्जुः । तत्तुल्यो वामरज्जुः[6] ॥ * ॥ स्थलरूपः पन्थाः स्थलपथः । तत्तुल्यः स्थलपथः ॥ * ॥ इह पठितानामप्यन्यैः शाब्दिकैर्हस्तपुष्पमत्स्यशब्दानां[7] न युक्तः पाठः । तथा हि । हस्ताकारकाष्ठलोहाद्युपकरणं हस्तकः[8] ॥ पुष्पको विमानं भाजनं वा पुष्पकम् ॥ मत्स्याकारश्चर्मचीवरादिच्छेदो मत्स्यकः ॥ भोजोऽपि न हस्तदण्डपुष्पादिभ्य इत्यनेन कप्रत्ययस्थितिमाह[9] ॥ * ॥ आकृतिगणश्चायम् । तेनेन्द्रप्रभृतयो द्रष्टव्याः ॥ १८६ ॥ इत्यर्चादिः । अन्येषां तु मते देवपथादिः ॥

---

१ °च्छायकलितः° सजलो ।

२ राजपथसदृशस्य सद्व्यवहारादेः संज्ञा राजपथः । Yajñ.

३ शंकुसहितः संकटः पंथाः शंकुपथस्तत्सदृशस्य दुराचारादेः संज्ञा शंकुपथः । Yajñ. Besides the compounds here given Yajñ. includes रथपथ, हंसपथ, and वारिपथ.

४ समुद्रो नद्यो वा सिंधुपथः B. C.; D. om. from शङ्कुपथः.

५ B. C. D. om. कुटिला.

६ तत्सदृशस्य खलादेः संज्ञा वामरज्जुः Yajñ.

७ हस्त इव हस्तः ॥ एवमिन्द्रः ॥ पुष्पं पुष्पतुल्या प्रतिमा ॥ दंड इव दंडः ॥ मत्स्य इव मत्स्यः । कुंडसिद्ध्यादिग्रंथेषु कुंडनिर्माणक्रियायां मत्स्याकारा रेखाः पतंति ता मत्स्यपदेन व्यवह्रियंते ॥ Yajñ.

८ °उपकरणहस्तकः D.

९ Bhaṭṭa Yajñeśv. quotes and criticises the passage from इह पठितानां.

यावाभिन्नतराविवत्समणयो लान्द्रप्रवालौ वट-
ज्ञाताज्ञातपटा घटो वहुतरः स्तम्बोऽथ पूलः पुटः[1]।
पीतप्रष्ठकुटाश्च नित्यवयसी सत्वद्दशार्हाविमौ
भिक्षुस्तब्धपिटास्थिपुण्यबधिरा दोलाभृतौ जानु च[2]॥१८७॥

यावादेरित्यनेन यावादेः शब्दगणात्स्वार्थे कप्रत्ययो भवति वा ॥ * ॥ यवानां विकारो यावः। याव एव यावकः।

गोमूत्रयावकाहारोदश्विकोज्झानुकद्विजे[3]।
क्ष्मापतिः चौणिमाणिक्ये स वसिष्ठाश्रमेऽगमत् ॥

अलक्तक इत्यन्यः[4] ॥ * ॥ अतिशयेनाभिन्नम् अभिन्नतरम्। अभिन्नतरमेव। अभिन्नतरकम्। यथा।

अभिन्नतरके नाकाद्दानकेभ्यः पराङ्मुखे[5]।
ज्ञातके सर्वलोकानामज्ञातकविकर्मणि ॥ * ॥

अविरेव। अविकः। यथा।

लूनकाविकलोमोत्थाञ्श्रेयस्कान्कन्दुकान् करे[6]।
कुचान्हृदि वहन्तीभिः[7] स कुमारीभिराकुले ॥ * ॥

वत्स एव वत्सकः ॥ * ॥ मणिरेव मणिकः ॥ * ॥ लान्द्रमेव लान्द्रकम्।

---

१ °मनयो° पटा पटो D.; लाद्र° घटाघटौ° C.

२ पीतः° B., om. C.; प्रष्ट for प्रष्ठ MSS.; भिक्षुस्तंब्र° D.; पटास्थि° B. C. F.; A. om. text and comment.

३ °द्विजः F.; °द्विजो D.

४ अलक्त इत्यम्यः D.; इत्यनः C.—याव एव यावकः। स्तोकपक्वा यवा यावकशब्देन व्यवह्रियंते। अलक्तकरसो यावक इत्यन्ये। Yajñ.

५ अभिन्नतरकमेके ना° D.

६ लूनकाविकलामोचात् श्रे° D.; °कंडुकान्करे B. C. D.

७ कुचाद्वदिवहतीभि C.; कुवात दिव तीभिः D.; Yajñ. as above.

विरसं जलम् ॥ * ॥ प्रवालमेव प्रवालकम् । विद्रुमः पल्लवश्च ॥ * ॥ वटमेव वटकम् । भक्ष्यविशेषः ॥ * ॥ ज्ञात एव । ज्ञातकः ॥ * ॥ अज्ञात एव । अज्ञातकः ॥ * ॥ पट एव पटकः[१] ॥ * ॥ घट एव घटकः ॥ * ॥ बहुतर एव बहुतरकः । अभिन्नतरबहुतरशब्दौ तरबन्तावुपलक्षणम् । तेन सुकरतरोपपन्नतरादयो[२] द्रष्टव्याः ॥ * ॥ स्तम्ब एव स्तम्बकः । शाल्यादिकलापः[३] ॥ * ॥ पूल एव पूलकः । तृणसंघातः ॥ * ॥ पुट एव पुटकः । पत्त्रनिर्मितः[४] ॥ * ॥ पीत एव पीतकः । पटादिः ।

वृते वियातकैणानुग्रहणाणुकबुद्धिभिः[५] ।
तनुकापीतकब्रह्मसूत्रै राजर्षिसूनुभिः ॥ * ॥

प्रष्ठ एव प्रष्ठकः[६] ॥ * ॥ कुट एव कुटकः । घटः ॥ * ॥ नित्यमेव नित्यकम् ॥ * ॥ वय एव वयस्कः । प्रज्ञाद्यणि वायसश्च ॥ * ॥ सत्वानेव सत्वकः ॥ दशार्ह एव दशार्हकः ॥ सात्वतो[७] दाशार्हश्च ॥ * ॥ भिक्षुरेव भिक्षुकः ॥ * ॥ स्तब्ध एव स्तब्धकः ।

शीतके वोष्णके वर्तौ समाधिः स्तब्धके रहः[८] ।
महो बृहतिकाच्छिन्नैश्छन्नोपान्ते महर्षिभिः[९] ॥ * ॥

पिटो वंशदलादिमयं[१०] भाण्डम् । स एव पिटकः ॥ * ॥ अस्थ्येव । अस्थिकम् । पञ्चमधातुः ॥ * ॥ पुण्यमेव पुण्यकम् ॥ * ॥ बधिर एव बधिरकः

---

१ C. om. from पट.

२ सुकर° D.; सुकरतरोदयो B.

३ Yajñ. adds पृषोदरादित्वादनुस्वारलोपे स्तबकोऽपि स एव

४ °निमितः B. F.; पतिर्मितः C.

५ तथा हि कवयः प्रयुंजते । वृते° Yajñesv.—वियातकैणीतुग्र° B.; °कैणातुक्य° C.; वते° कैणीलुकुग्र° D.; वैयातकैशीतुकग्रहणाऽनुक° F.

६ प्रष्ठ एव प्रष्ठकः । MSS.; wanting in the other works

७ सात्वंतो C.; शात्वतो D.

८ सीतके° B.; सीतको वासवे वर्तौ समा° C

९ वृहतिकाच्छन्नैः (°च्छन्नै D.) छन्नो° D. F.

१० वंशहलादिमयं F.

॥ * ॥ दोलैव दोलकः ॥ * ॥ भृत एव भृतकः । कर्मकरः ॥ * ॥ जान्वेव जानुकम् ॥ १८७ ॥

दानस्नातौ कुत्सितवेदसमाप्त्योरणुर्मतो निपुणे।
लूनवियातौ च पशौ शीतोष्णमृतावनौरसे पुत्रः[1] ॥ १८८ ॥

अनौरस इति कृत्रिम इत्यर्थः ॥ * ॥ कुत्सितं दानम् । दानकम् । दानमन्यत् ॥ * ॥ स्नात एव स्नातकः । वेदं व्रतानि वा समाप्य यो वर्तते[2] स एवमुच्यते । यत्स्मृतिः ।

गुरवे तु वरं दत्त्वा स्नायाद्वा[3] तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥

केचित् पुण्यस्नातं वेदसमाप्ताविति पठन्ति । तत्तु न हृदयहारि ॥ * ॥ अणुको निपुणः । अन्यत्र । अणुर्व्रीहिः ॥ * ॥ लूनकः पशुः ॥ वियातकः पशुः । विहानात्पशावित्यन्यः ॥ अन्यत्र लूनो यवः । वियातो बटुः[4] ॥ * ॥ शीतकः । उष्णक ऋतुः ॥ अन्यत्र शीतो वायुः । उष्णः स्पर्शः ॥ * ॥ कृत्रिमः पुत्रः । पुत्रकः । पुत्र एवान्यः ॥ १८८ ॥

आच्छादने च बृहती शून्यं रिक्ते तनुश्च सूत्रे स्यात्।
क्रीडनकं च कुमार्याः संज्ञाशब्दस्तथेयश्च[5] ॥ १८९ ॥

बृहतिका । आच्छादनविशेषः । नित्यं कः । अन्यत्र बृहती । ओषधिश्छन्दश्च ॥ * ॥ शून्यकम् । रिक्तम् । अन्यत्र शुने हितम् ।

---

१ लूनतियातौ° E.; ऋतावानौरसे° C.; अनौरसपुत्रः D. E.

२ समावर्तते Yajñeṣv.

३ Yâjñav. i. 51 (स्नायीत तद° ed.); धनं दद्यात्स्नायाद्वा B. C.; अरदे लुध्यं दत्वा स्नायाद्वा D.; Yajñeṣv. quotes the sloka as above.

४ लूनकः पशुः। विहालात्प° वयः D.

५ आच्छादनेऽथ D. E.; °शब्दस्य श्रेयस्य C.; A. om. text and comment.

शून्यम् ॥ * ॥ तनु सूत्रम् । तनुकम् । अन्यत्र तनुर्वत्सः ॥ * ॥ कन्दुकः । भ्रमरकः । गिरिकः । शृङ्गकम् । देवदत्तकः[१] ॥ * ॥

गुणनमेव गुणनिका । यथा ।

हेतुः परिचयस्थैर्ये वक्तुर्गुणनिकैव सा[२] ॥

तथेयस्वेति । ईयस्प्रत्ययान्तः शब्दः कप्रत्ययभाक् । श्रेयानेव श्रेयस्कः । ज्यायानेव ज्यायस्कः । भूयानेव भूयस्कः । श्रेय एव श्रेयस्कम् । भूयस्कम् । ज्यायस्कमित्यादि ॥ * ॥

आकृतिगणोऽयम् । तेन पिष्टातकादयो[३] द्रष्टव्याः ॥ १८९ ॥

इति यावादिः ॥

शाखा स्कन्दमुखाग्राणि शरणं चरणोरसी ।
जघनं शृङ्गमेघाभ्रद्रुशिरःस्कन्धमेव च[४] ॥ १९० ॥

शाखाशर्करादिभ्यां याणावित्यनेन शाखादेः शर्करादेश्चेवार्थे या णौ[५] भवतः ॥ * ॥ पुरुषस्कन्धस्य वृक्षस्कन्धस्य वा तिर्यक्प्रसृतमङ्गं शाखेत्युच्यते । यथा शाखा पार्श्वायता तथा कुलस्य यः पार्श्वायतोऽङ्गभूतः स शाखेव शाख्यः ॥ अन्ये तु । शाखायास्तुल्यः शाख्यः । यथा शाखा वृक्षस्य शोभाकरी तथा कुलस्य शोभाकरः पुरुषः शाख्य इति तुल्यत्वमाहुः ॥ * ॥ स्कन्दः स्वामी । तत्तुल्यः स्कन्द्यः[६] ॥ * ॥ मुखमिव मुख्यः । यथा मुखं हस्तपादादिभ्योऽवयवेभ्यः[७] प्रथममवलोक्यते तथा

---

१ क्रीडोपकरणवाचकानि° यथा शालभंज्येव शालभंजिका । एवं° गिरिकम्° Yajñ.

२ Şişup. 2, 75.

३ तेन पिष्टातकादयो प्यत्र द्रष्टव्या इति वर्द्धमानसूरिराह । पिष्टातः सुगंधिचूर्णं स एव पिष्टातकः । Yajñesv.

४ A. om. text and comment.

५ पानावित्यनेन शाखादेः° D.; °श्च इवार्थे याणौ C.

६ स्कंद इव यः शत्रुशोषकः स स्कंद्यः Yajñ.

७ मुख्यं हस्त° D.; ऽवयेभ्यः C.

ऽन्यो ऽप्येवमुच्यते ॥ कश्चिन्मुख्यं नालिकेरमित्याह ॥ * ॥ अग्रमिव । अग्र्यः । प्रधानभूतः ॥ * ॥ शीर्यते भयमस्मादिति शरणम्[1] । आर्तत्राणम् । तत्तुल्यः शरण्यः । परित्राता ॥ * ॥ चरणाविव चरण्यः । यथा चरणौ शरीरस्य प्रकर्षकौ तद्वत् कुलस्य प्रकर्षक एवमुच्यते ॥ * ॥ उर इव । उरस्यः । यः कार्येषूपगतेषु सत्त्व उरः प्रयच्छति[2] स एवमुच्यते ॥ * ॥ जघनमिव निकृष्टो यः स जघन्यः ॥ * ॥ शृङ्गमिव यः सर्वस्याप्युपरिवर्ती स शृङ्ग्यः ॥ * ॥ मेघ इव यः संतापापनेता[3] स मेघ्यः ॥ * ॥ अभ्रमिव य आच्छादकः सोऽभ्र्यः ॥ * ॥ द्रुरिव द्रव्यम् अयं राजपुत्रः । यथा द्रुमः फलपुष्पपल्लवादिभिरर्थिनः कृतार्थयति स हि भवनमर्हतीति भव्यो भवत्यात्मवानिति द्रव्यमुच्यते[4] । क्रिया हि द्रव्यं विनयति[5] नाद्रव्यमिति । पुरुषार्थसाधकत्वाद्धिरण्यादिकमपि द्रव्यम् ।

निर्द्रव्यो ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते[6] तेजसः ।
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते[7] ॥

शकटाङ्गजस्तु द्रुणस्तुल्यं द्रव्यं द्रुशब्दं नपुंसकमाह ॥ * ॥ शिर इव शीर्षण्यः । प्रधानभूतः । शिरसः शीर्षन्नणादावित्यनेन[8] शीर्षन्नादेशः ॥ * ॥ स्कन्ध इव यो बलस्याश्रयः स स्कन्ध्यः ॥ १९० ॥ इति शाखादिः ॥

---

१ °इति शरणं गृहं तद्भयापहारकः शरण्यः Yajñ.

२ सत्वर उरः° F.; ससर्व उरःप्रभृति C.—उर इवोरस्यःकार्यनिर्वाहकः। Yajñ.

३ संतापापनोदनेन सुखयति F.; यः संय। तापापिनता D.

४ कृतार्थयति तथा स इत्यर्थः। भवमर्हति भव्यः।° F.—यथा द्रुमः फलपुष्पपल्लवादिभिः स्वाश्रितान्कृतार्थयति एवमर्थिनः स्वसंपदा कृतार्थयन्नात्मवान् पुरुषो द्रव्यमित्युच्यते। Yajñ., who rejects द्रु because of P. v. 3, 104.

५ नयति D.; Kshîrasv. quotes the line क्रिया° on A. K. 3, 4, 24, 156; cf. P. v. 3, 104.

६ प्रभ्रस्यते° B. C. F.

७ Mṛchchh. p. 8; Böhtl. Spr. 2781.

८ शीर्षन्नाणादा° F.; शीर्षण्यादाधित्यनेन D.

शर्करा लोमगोपुच्छगोलोमानि कपालिका[१]।
नराची शतपत्रं च पुण्डरीककपाटिके[२]॥ १९१॥

शर्करेव। शार्करं दधि मधुरत्वात्। शार्करी मृत्तिका कठिनत्वात्॥ शर्कराशब्द इक्षुविकारे सिकतास्वपि वर्तते ॥ * ॥ लोमेव कोमलस्पर्शत्वात्। लौमनं वस्त्रम् ॥ * ॥ गोपुच्छमिव। गौपुच्छो दण्डः ॥ * ॥ गोलोमेव गौलोमनम्। ब्रह्मादीनामित्यनेन नियमितत्वादन्त्याजादिलोपाभावः[३]॥ भोजेन गौलोममित्युदाहृतम्[४]। तत्तु न संगच्छते। नलोपस्य नियमेन[५] व्यावर्तितत्वात्॥ * ॥ कुत्सितम् अज्ञातं वा कपालम्। कपालिका। कपालिकेव। कापालिकं कंसादिपात्रम् ॥ * ॥ नरानञ्चति। नराची। तत्तुल्यं नाराचम् ॥ * ॥ शतपत्रमिव शातपत्रम् ॥ * ॥ ॥ * ॥ पुण्डरीकमिव पौण्डरीकम् ॥ * ॥ ह्रस्वः कपाटः कपाटिका। कपाटिकेव कापाटिकम् ॥ वामनः कपिष्ठिकेत्याह[६]। कंवाष्ठिकेति[७] शकटाङ्गजः ॥ * ॥

आकृतिगणोऽयम्। तेन सिकतानकुलादयो[८] ज्ञातव्याः ॥ १९१ ॥

इति शर्करादिः ॥

---

१ शर्करशार्करौ लोमगोलोमानि° C.; गोलामानि° B.; गौलोमानि कपलिका D.

२ °शातपत्रं° C.; शपत्रं° कापाटिके D.; A. om. text and comment.

३ °अंत्याजातिलोपाभावः D.; cf. on ṣl. 163; P. vi. 4, 167; 171.

४ श्रीभोजेन° D.; गोलोममित्यु° F. —गोलोमेव गोलोमनम् अणि अन्निति प्रकृतिभावाट्टिलोपो न। Yajñ.

५ तत्तु संगच्छते नेत्यापभ्रनियमेन D.

६ कपिष्टकेत्याह B. C.; कपिष्ठिके° D. a. m.—MSS. Kâṣ. V. v. 3, 107 have कपिष्ठिका (ed. पिष्ठिका, but s. *var. l.*); कनिष्ठिका (*var. l.* कपिष्ठिका) Bö.; कनिष्ठिका Yajñ.

७ ? वाष्ठिकेति F.; कंवाष्ठिकेति D. a. m.

८ Bö., Yajñ., Kâṣ. V. have both सिकता and नकुल (नकुला ed. Kâṣ. V., not MS. *a.*).

अङ्गुली रुरुहरी कपिबभ्रू
कर्कमण्डरतरोमुनयश्च ।
शष्कुली कुलिशलोहितगोणी-
वल्गुमण्डलखला भरुजश्च[1] ॥ १९२ ॥

अङ्गुल्यादेष्ठणित्यनेनाङ्गुल्यादिगणादिवार्थे[2] ठण् भवति। वामनस्य तु तदादेष्ठगिति[3] सूत्रम् ॥ * ॥ अङ्गुलिरिव दीर्घायते। आङ्गुलिकः[4]। आङ्गुलिकी मणिशलाका ॥ * ॥ रुरुरिव रौरुकः[5] ॥ * ॥ हरिरिव हारिकः ॥ * ॥ कपिरिव कापिकः ॥ * ॥ बभ्रुरिव बाभ्रुकः[6] ॥ * ॥ कर्क इव। कार्किको गौर्गवयो वा। कार्किकं यशः[7]। यथा ममैव सिद्धराजवर्णने।

प्रत्युप्तमुक्ताफलपद्मराग-
प्रस्पर्धिभिस्तोषितविश्वलोकैः।
यशोऽनुरागैस्तव सिद्धनाथ
चक्रे जगत्कार्किकलौहितीकम् ॥

पक्षे कर्कलोहितशब्दयोष्ठीकणपि। कर्कलोहिताट्टीकण् वेति[8] शकटाङ्गजमतं स्वीकृतम् ॥ * ॥ मण्डर इव माण्डरिकः ॥ * ॥ तर इव तार-

---

१ कुलीश° D. E.; वल्गु° D.; A. om. text and comment.

२ अंगुल्यादिषु णित्यनेन° C.; अंगुल्यादेष्ठनित्य° D.

३ ? तदादेष्ठणिति B. F.; तदादिष्ठेणिति C.; तद्दादेष्वणिति D.—Cf. Pâṇ. v. 3, 108; but here Vâmana's own grammar (see the comm. on śl. 2 above) is evidently referred to.

४ दीर्घायतं आंगुलिकं। F.

५ रौरविकः F.—Yajñeṣvara reads रुरु (रौरुकः); Bö. रुह; om. Kâṣ. V. ed. (but भरु MS. $\beta$.; तनु MS. $a$.).

६ बाभ्रविकः F.

७ B. C. F. om. कार्किको गौर्गवयो वा; D. om. from कार्किकं यशः to the end of the quoted stanza.—The other works omit कर्क.

८ F. twice टीकण्; C. ढाकण°; Pâṇ. v. 3, 110 ईकक्.

सिकः[१] ॥ * ॥ मुनिरिव मौनिकः ॥ * ॥ शष्कुलीव शाष्कुलिकः ॥ * ॥ कुलिशमिव कौलिशिकः ॥ * ॥ लोहितमिव । लौहितिकः स्फटिकः[२] । स्वयमलोहित[३] उपाश्रयवशात्तथावभासते ॥ * ॥ गोणीव गौणिकः[४] ॥ * ॥ वल्गुरिव वाल्गुकः[५] ॥ * ॥ मण्डलमिव माण्डलिकः ॥ * ॥ खल इव खालिकः ॥ * ॥ भरुज इव भारुजिकः । विद्वान् ॥ * ॥

आकृतिगणोऽयम् । तेन । उदश्विद्भरुमण्ड्वादयो[६] द्रष्टव्याः ॥ १८२ ॥ इत्यङ्गुल्यादिः ॥

**विनयविशेषसमूहाः समयात्ययसंप्रदानसंगतयः ।**
**व्यवहारसमुत्कर्षाकस्मादनुगादिसंग्रामाः[७] ॥ १९३ ॥**

विनयादेरित्यनेन विनयादेः शब्दगणाट्ठण् भवति स्वार्थे[८] ॥ * ॥ विनय एव वैनयिकः ॥ * ॥ विशेष एव वैशेषिकः ॥ * ॥ समूह एव सामूहिकः ॥ * ॥ समय एव सामयिकः ॥ * ॥ एवम् आत्ययिकः ॥ * ॥ सांप्रदानिकः ॥ * ॥ सांगतिकः ॥ संगतमेव[९] सांगतिकम् । सांगतिक आलापः । सांगतिकी व्यवस्थेति वामनः ॥ * ॥ व्यावहारिकः ॥ * ॥ सामुत्कर्षिकः ॥ * ॥ आकस्मिकः ॥ * ॥ आनुगादिकः ॥ * ॥ सांग्रामिकः[१०] ॥ १८३ ॥

---

१ उरस् for तरस् Yajñ. (औरसिक), Bö., Kâś. V. ed. (MSS. तरस्, तरस्).

२ लोहित इव लौहितिकः° D.; स्फाटिकः C.

३ स्वयमेव लोहित B.

४ गोणी Bö., Kâś. V.; रोणी (रौणिकः) Yajñ.

५ वाल्गविकः F.; वल्गुरिव वाल्गुकः D.

६ ? °भरुमंड्वादयो C.; तरुमं [दा suppl.] दयो D.—Of these words the other works include only उदश्वित् (औदश्वित्क); for भरु cf. MS. Kâś. V. last page, note ५.

७ A. om. text and comment.

८ °गणात् अण्° स्वार्थे विनयवान् C., cf. n. 8; P. v. 4, 34 ठक्.

९ Thus D.; सांगतमेव B.F.(om. C.).

१० C. om. from विनय एव वैनयिकः; D. om. from सांगतिक आलापः.

सपदातिसमाचाराः समायमुक्ताकथंचिदुपचाराः।
निर्मितह्रस्वादेशो बुधैरुपायध्वनिः कथितः[१] ॥ १९४ ॥

पदातिरेव पादातिकः ॥ * ॥ समाचार एव सामाचारिकः ॥ * ॥ समाय एव सामायिकः[२] ॥ * ॥ मुच्यते ऽशुक्तिभिः। मुक्ता। मुक्तैव मौक्तिकम् ॥ * ॥ कथंचिदेव कार्थंचित्कम् ॥ * ॥ उपचार एव। औपचारिकः ॥ * ॥ उपाय एव। औपयिकम्[३] ॥ * ॥

स वैनयिकवान्सामयिकस्यात्ययिकं त्यजन्।
तमौपयिकवान्सेनां[४] निवेश्य बहिराविशत् ॥ १ ॥
स सामूहिकमुत्सृज्य मुनिसांगतिकाय यान्।
पिप्रिये पादयोः पृथ्व्याः पतिः प्रेम्णेव पीडितः[५] ॥ २ ॥
अनौपचारिकैः सामाचारिकव्यावहारिकैः।
यान्ति वैशेषिकैः सामुत्कर्षिकं सत्सु साधवः[६] ॥ ३ ॥
कार्थंचित्केन कतिचित्सो ऽनुमेने तु संचरान्।
नृवीरो वीरसेनादीन्मनोमुत्सांप्रदानिकान् ॥ ४ ॥
अथाकस्मिकमाहानुगादिको[७] वाचिकस्य तम्।

---

१ A. C. D. om. this śloka; A. om. the whole of the comment, C. to मुनिसांगतिकाय यान्; D. to ऽनुमेने तु संचरान्.

२ For समाय Yajñ., Kâś. V., Bö. have समयाचार (but Bö. gives समाय as *var. lect.*); cf. also the *kârikâ* quoted by Yajñ., note ६ below.

३ औपायिकं B.

४ तमौपयिकवत्सेनां F.

५ प्रेम्णेव° F

६ Yajñ. gives the following two *kârikâs*: अत्र केचिदुदाहियंते। सामयाचारिकैरौपयिकैर्द्राक्सांप्रदानिकैः। नश्यंति पाप्मनां सामूहिका आत्ययिका अपि ॥ अनौपचारिकैः सामाचारिकैर्व्यावहारिकैः। यान्ति वैशेषिकैः सामुत्कर्षिकं सत्सु साधवः ॥ एवमन्ये ऽप्युदाहार्याः ॥

७ अथाकस्मिन्महानुमादिको° C.; D. om. from दिको वा° to द्रष्टव्या·

आकृतिगणोऽयम् । तेन त्रिवर्णप्रभृतयो[1] द्रष्टव्याः ॥ १८४ ॥ इति विनयादिः ॥

**काकतालं च खल्वाटबिल्वे चान्धकवर्तकम्[2]।**
**अर्धाच्च जरती श्येनात्कपोतो घुणतोऽक्षरम्[3] ॥ १९५ ॥**

काकताल इत्येवंप्रकारेभ्यः शब्देभ्यः काकतालीयादय इत्यनेनेवार्थे छप्रत्ययो[4] निपात्यते ॥ * ॥ काकस्य तालं च काकतालमिति द्वन्द्वे लक्षणया पततः[5] काकस्य निपतता तालेन क्रियमाणः संयोग उच्यते । तत्तुल्यः काकतालीयः[6] ॥ * ॥ खल्वाटबिल्वयोरिव खल्वाटबिल्वीयः । यथा खल्वाटः पर्यटन्नतर्कितं[7] श्रीफलतरोरधस्तादागतो[8] दैववशाच्च बिल्वमुपरि पतितं तद्वदन्योऽप्युभयवस्तुसंयोग एवमुच्यते ॥ * ॥ अन्धकस्य वर्तका च । अन्धकवर्तकम् । अन्धकस्य वर्तकाया उपर्यतर्कितः पादन्यास उच्यते । तत्तुल्यम् अन्धकवर्तकीयम्[9] ॥ * ॥ अर्धज-

---

१ The other works do not give त्रिवर्ण; they also omit the words अनुगादिन् । पदाति । मुक्ता । संग्राम given above.

२ ॰वर्त्तिकं । F.

३ श्येनाकपोतो॰ C. D. E.; A. om. text and comment.

४ ? ठप्रत्ययो D.: ढप्रत्ययो F.; cf. P. v. 3, 106.

५ पातत: C.; पक्तत: काकस्य भिपतोलोन चित्री॰ D.

६ काकतालीयम् । अजाकृपाणीयम् । अन्धकवर्त्तकीयम् ॥ अतर्कितोपनतं चित्रीकरणमुच्यते । तत्कथम् । काकस्यागमनं यादृच्छिकं तालस्य पतनं च । तेन तालेन पतता काकस्य वधः कृतः । एवमेव देवदत्तस्य तत्रागमनं दस्यूनां चोपनिपातः । तैश्च तस्य वधः कृतः । तत्र यो देवदत्तस्य दस्यूनां च समागमः स काकतालसमागमसदृश इत्येक उपमार्थः । यश्च देवदत्तस्य वधः स काकतालवधसदृश इति द्वितीय उपमार्थः । तत्र प्रथमः समासार्थः । द्वितीये प्रत्ययः ।॰ Káṣ. V. v. 3, 106.

७ पटः अतर्कितं C.; D. corrupt.

८ अधस्ताद्वापातो D.

९ वर्त्तिका च । अंधकवर्त्तिकं॰ वर्त्तिकाया॰ अंधकवर्त्तिकीयं F.: उपर्यन्तः पादन्यास॰ D.

रतीशब्दोऽर्धजरतीकामने[1] वर्तते । तदिव यत्तद् अर्धजरतीयं कार्यम्[2] । यथा स्त्री न तरुणी स्रस्तस्तनत्वात् कृष्णकेशत्वान्न जरती वक्तुं शक्यते तद्वत्सिद्धासिद्धं प्रयोजनम् ॥ * ॥ श्येनकपोतयोरिव श्येनकपोतीयो दुर्योगः । यथा कपोतोऽतर्कितमागतेन[3] श्येनेन गृहीतस्तथाकस्मिको यो दुर्योगः स एवमुच्यते ॥ * ॥ घुणोत्किरणात्कथंचिन्निष्पन्नमक्षरम्[4] । घुणाक्षरम् । तदिव यदकुशलेन दैवान्निष्पद्यते तद् घुणाक्षरीयम्[5] ॥ १९५ ॥

**पुरुषः शरतो ज्ञेयो गोमयात्पायसं मतम् ।**
**कृपाणः स्यादजातश्च शर्करोन्मज्जनं तथा[6] ॥ १९६ ॥**

शरश्च क्षिप्तः प्राकाराच्च पुरुष उत्थितः स तेन हतः[7] । तत्तुल्यं शरपुरुषीयम् ॥ * ॥ गोमयपायसयोरिव गोमयपायसीयम्[8] ॥ * ॥ यथाऽजया भूमिं खनन्त्यात्मवधाय कृपाणो दर्शितस्तत्तुल्यं वृत्तं केनचिदात्मविनाशाय कृतम् । अजाकृपाणीयम् ॥ * ॥ शर्करा च क्षिप्ता[9] पुरुषस्य चोन्मज्जनं तत्तुल्यं शर्करोन्मज्जनीयम् ॥ * ॥

आकृतिगणश्चायम् । तेन तिन्दुकज्योतिषीयमित्यादयो[10] द्रष्टव्याः ॥ १९६ ॥ इति काकतालादिः[11] ॥

---

१ ऽर्द्धजरतीयकामने C.

२ यत्तदर्धजरतीयं । यद्वा । अर्धजरतीवार्धजरतीयं कार्यं D. F.

३ कपोततर्कित° C.; कपोते तर्कितमागतेन D.

४ घुनारणात् क° D.

५ यदकुशले दै° C.; निष्पाद्यते° F.; यदकुले दैवाद्यन्निष्पद्यते तद् घुनाक्षरीयं D.

६ शर्करो मज्जनं° D. E.; A. om. text and comment.

७ तेनेह C. and om. to दर्शितस्.

८ शरपुरुषीयं । यथा भूमिं खन° D.

९ D. om. च; शर्करावक्षिप्त। B. C.

१० तिङ्कक° B. F.; तिन्ङ्कक° C.; तिंदुकाज्योतिषिकीयमित्यादयो D.

११ Yajñesv., Bö. om. this gaṇa; for Kâṣ. V. see last page, note ६, where MS. β. adds शक्काराज्र्जनीयं (*i.e.* शर्करोन्मज्जनीयं?) to the three words given by ed. and MS. *a*.

पर्श्वसुरभरतरक्षोबल्हीकवयःपिशाचवसुमरुतः ।
सत्वदुशीनरकर्षापणास्त्रिगर्ताशनिदशार्हाः[1] ॥ १९७ ॥

पर्श्वभ्योऽण् शस्त्रजीविसंघादित्यनेन पर्श्वादेर्गणादस्त्रियां स्वार्थेऽण् भवति ॥ * ॥ पर्शोरपत्यं पार्शवः शस्त्रजीविसंघः । पार्शवौ । पर्शवः ॥ * ॥ आसुरः । आसुरौ । असुराः ॥ * ॥ भारतः । भारतौ । भरताः ॥ भोजस्तु भार्तः । भार्तौ । भर्ता[2] इत्याह । यथा ।

पार्शवाशनवाल्हीकपिशाचासुरराक्षसान् ।
शिष्याः सभार्तत्रैगर्तान्सकार्षापणवायसान् ॥

राक्षसः । राक्षसौ । रक्षसः[3] । रक्षांसीत्यन्यः ॥ * ॥ बाल्हीकः । बाल्हीकौ । बल्हीकाः[4] ॥ बल्हिक इत्यन्यः ॥ * ॥ वायसः । वायसौ । वयसः[5] ॥ * ॥ पैशाचः । पैशाचौ । पिशाचाः ॥ * ॥ एवं मारुतः ॥ * ॥ सात्वतः ॥ * ॥ औशीनरः[6] ॥ * ॥ कार्षापणः[7] ॥ * ॥ त्रैगर्तः ॥ * ॥ आशनः ॥ * ॥ दाशार्हः[8] ॥

अस्त्रियामिति किम् । पर्शूः स्त्री[9] । ऊङ्युतोऽरज्ज्वादेश्चेत्यूङ्[10] । रक्षाः ॥ शस्त्रजीविसंघादिति किम् । असुरः[11] ॥ १९७ ॥ इति पर्श्वादिः ॥

---

१ A. om text and comment.

२ आसुराः ॥° भारताः । श्रीभोज° भार्ता D.

३ ? रक्षसाः B. C. F.; राक्षसाः D.

४ वल्हीकः C.; वाल्हीकाः D.—The other works have बाल्हीक.

५ वायसः B.; वायसाः D.

६ शात्वतः औसीनरः D.; औषीनरः C.

७ The other works have कार्षापण.

८ Yajñ. has दाशार्ह; Bö., Kâś. V. दशार्ह.

९ पर्श्वः स्त्रीः B. C. F.; पर्शू स्त्री D.

१० ऊङ्पूतो° B.; ऊङ्यूनो रह्वादेश्चेति ऊङ् F.; ऊङपूतो° चेति कुट D.; अट्पूतो° चेति ऋङ् C.; see P. iv. 1, 66; 177 vârtt.

११ आसुरः B. C.

दामनिबैन्दवितुलभाः शार्चुंतपिसार्वसेनिकाकन्दि[1]।
सावित्रीपुत्रौडविमौञ्जायनकाकदन्तकयः[2] ॥ १९८ ॥

दामन्भ्यश्च इत्यनेनैभ्य आयुधजीविसंघवाचिभ्यश्छो भवति ॥ * ॥ दामनयः शस्त्रजीविसंघः। दामनीयः। दामनीयौ। दामनयः ॥ * ॥ बैन्दवीयः। बैन्दवीयौ। बैन्दवयः ॥ * ॥ तुलया भान्तीति[3] तुलभाः शस्त्रजीविसंघः। पृषोदरादिः। तुलभीयः[4] ॥ * ॥ शार्चुंतपीयः[5] ॥ * ॥ सार्वसेनीयः ॥ * ॥ काकन्दीयः। काकन्दकिरिति भोजः[6] ॥ * ॥ सावित्रीपुत्रीयः ॥ * ॥ औडवीयः ॥ * ॥ मौञ्जायनीयः[7] ॥ * ॥ काकदन्तकीयः[8] ॥ १९८ ॥

औलपिराच्युतदन्तिः[9] शाकुन्तकिराविदन्तिरौदङ्किः[10]।
ज्ञेयश्च बैजवापिर्बिन्दुश्चाचाच्युतन्तिश्च[11] ॥ १९९ ॥

औलपीयः ॥ * ॥ आच्युतदन्तीयः[12] ॥ * ॥ शाकुन्तकीयः ॥ * ॥ आ-

---

१ सार्वसेनिकाकंदी F.

२ मौजायन C. D. E.; काकवंचकयः B. C. F. and D. a. m.; A. om. text and comment.

३ भातीति C. D.; not given in the (*ākṛitigaṇa*) *prishodarādi* ṣl. 144-9.

४ तौलभीयः F.

५ Bö., Yajñ. have शार्चुतपि; Kâṣ. V. ed. & MSS. शर्चुंतपि.

६ B. C. om. काकन्दीयः.—काकन्दि Bö., Yajñ.; om. Kâṣ. V. ed. MSS.; Hem. has both words,

७ मौजायनीयः D.; मौजायः C.

८ काकवंचकीयः B. C. F.; काकरंवकीयः D.—काकदन्तकि Bö., Yajñ., and Kâṣ. V. MS. *a*. [ed. काकदन्ति। काकरन्ति]; काकुंदकि। कुकंदकि। Hem.; काकदंतकिस्थाने काकवंचकीति केचित्पठंति Yajñ.

९ °अच्युतदंतिः C. F.; cf. note १२.

१० साकुंतकि° D.; आविंदति° E. and corr. C.; °दंतिरोदंकिः F.; औदकिः C. D. (against metre).

११ चेयस्च° D.; चाचाचयुतंतिस्च E.; A. om. text and comment.

१२ अच्युतदंतीयः B. C.—Bö., Yajñ. have आच्युतन्ति। आच्युतदन्ति (Bö. *var, ll.* अच्युतन्ति, अच्युतदन्ति); Hem. only अच्युतन्ति (also *var. l.* Kâṣ. V. ed.; MS. *a*. आच्यतन्ति).

विदग्धीय:[१] ॥ * ॥ औदङ्कीय:[२] । औदकिरित्यन्य: ॥ * ॥ वैजवापीय: ॥ * ॥ बिन्दव: प्रक्षजीविसंघ: । बिन्दवीय: । बिन्दवीयौ[३] । बिन्दव: ॥ * ॥ अच्युतोऽन्तो यस्यासौ । अच्युतन्त: । पृषोदरादित्वात्पररूपे । आच्युतन्तीय:[४] ॥ * ॥ मौञ्जायनशब्दो नडादिफणन्त:[५] । तुलभबिन्दुशब्दावप्रत्ययान्तौ । शेषास्त्विञन्ता:[६] ॥ १९९ ॥

आप्तगुप्तस्त्रिगर्तेषु[७] कौण्डोपरथजानकी[८] ।
दाण्डकिर्जालमानिश्च षष्ठ: स्यात्क्रौष्टुकिस्तथा[९] ॥ २०० ॥

आह्मगुप्तीय: । ब्रह्मगुप्त[१०] इति वामन: ॥ * ॥ कौण्डोपरथीय: ॥ कुण्डोऽतीक्ष्ण[११] उपरथ: समीपवर्ती रथो यस्य स कुण्डोपरथ: । तस्यापत्यं शिवाद्यणि । कौण्ठोपरथ[१२] इति शाकटायन: ॥ * ॥ जानकीय: ॥ * ॥ दाण्डकीय: ॥ * ॥ जालमानीय: ॥ * ॥ क्रौष्टुकीय: ॥ * ॥ एषां प्रथमद्वितीयौ शिवाद्यणन्तौ । अन्ये त्विञन्ता:[६] ॥ त्रिगर्तेष्विति किम् । कौण्डोपरथ्य: । कौण्डोपरथ्यौ[१३] ॥ २०० ॥ इति दामन्यादि: ॥

---

१ आविंद्तीय: C.—आकिद्ग्धि Bö., Yajñ.; आकिद्ग्धी Kâṣ.V.ed.om.MSS.

२ औदकीय:° D.—Bö., Yajñ. have both औदकि and औदङ्कि; Kâṣ. V. v. 3, 116 MSS. औदकि: (ed. wanting, but *var. l.* औतकी!).

३ बैंदवीय: । बैन्दवीयौ C. F.

४ अच्युतंतीय: D.; cf. last page, note १२.

५ °पर्णात: B.; °यणांत: F.; नडायणांतस् C.; D. corr. फगंत (P. iv. 1, 99); *naḍâdi*, ṣl. 232.

६ त्विजंता: F.

७ ब्रह्मगुप्तस्त्रिगर्त्तेषु F.

८ कुंडोप° F.; कौंड्यापरथ° E.

९ दांडवि° D.; डांडकि° F.; क्रोष्टुकि° B. F.; A. om. text and comm.

१० आह्मगुप्त MSS.; but ब्रह्मगुप्त Kâṣ. V. v. 3, 116 ed. & MSS.; Hem. includes both ब्रह्मगुप्त & ब्राह्मगुप्त in this *gaṇa*; om. Bö., Yajñ.

११ कुंडोऽभीक्ष्ण C.; कुंडोऽभीक्ष्ण: D.

१२ कुंडोपरथ: कौंडोपरथ C. D.—कौण्डोपरथ Kâṣ. V.; कौण्ठोपरथ । कौण्डोपरथ । कौण्ठोरथ Hem.; om. Bö., Yajñ.

१३ किं । कौंडापरथौ । C.; कौंडोपरथ्य: । कौंडापरथ्यौ B.

कम्बोजो जवनश्चोलो मुरलः केरलः शकः ।
खसो जर्तो व्युपापेभ्यो धारयश्च[1] मतो बुधैः ॥ २०१ ॥

कम्बोजादेः लुगित्यनेन कम्बोजादेर्गणाद्राष्ट्राख्यात् क्षत्रियवाचिनस्तस्यापत्यं राजा वेत्यर्थे जातस्याञादेः लुग्भवति[2] ॥ * ॥ कम्बोजस्यापत्यं राजा वा । कम्बोजः ॥ * ॥ एवं जवनः[3] ॥ * ॥ चोलः ॥ * ॥ मुरलः ॥ * ॥ केरलः ॥ * ॥ शकः ॥ * ॥ खसः ॥ * ॥ जर्तः ॥ * ॥ चोलशकखसजर्तानां द्व्यचां पुरुद्व्यन्मगधेत्यादिना[4] कृतस्याणः लुक् शेषेभ्यस्त्वञः[5] । चोलकेरलनाथं तमापतन्तं विलोक्य सः ।
शकं मशकवन्मेने कम्बोजमजवन्नृपः ॥
भयोत्सृष्टविभूषाणां तेन केरलयोषिताम् ।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः[6] ॥
विधारयः । उपधारयः । आधारयः । अपधारयः[7] ॥ २०१ । इति कम्बोजादिः ॥

भर्गः करूषसुस्थालकश्मीराः[8] केकयोरसौ[9] ।
त्रिगर्तशाल्वकौरव्या भरतोशीनरौ क्वचित्[10] ॥ २०२ ॥

---

१ व्युपापाभ्यः° D. E.; धारयश्च all MSS. and Hem. (शकादि vi. 1, 120). A. om. text and comment.—Yajñ. has the *gaṇa* thus: कंबोजश्चोलयवनौ मुरलः केरलः शकः । खसो जर्तो व्युपापेभ्यो राधयश्च (!) मतो बुधैरिति कंबोजादिसंग्रहपद्यं गणरत्नमहोदधौ पठ्यते ॥° cf. note ७.

२ C. twice लुक्; अग्भवति D.

३ यवन Bö., Yajñ., Kâṣ. V., Hem.

४ चोलशकशब्दोषोर्द्व्यचोः पुरुद्व्यगवेत्या° D.; पुरुषद्व्य° C.; पुरुद्व्यद्व्यग° B.; cf. p. 77, l. 13.

५ लुक्° C.; शुकः शे° D.; शेषेभ्यस्त्वन्यञः B.

६ *Raghuv. 4, 54.*

७ Thus all MSS. and Hem.! om. Bö., Kâṣ. V.—Cf. *gaṇa* ब्राह्मणादि ṣl. 395-404 where विराधय etc. as Yajñ. here (cf. n. १).

८ °सुस्थलकस्मीराः° D.; करूषसुस्थालं कश्मीरः B. C. E. F.

९ कैकयोरसै । B. C. F.

१० भरतोसीनरौ° D.; A. om. text and comment.

अतोऽप्राच्यभर्गादेरित्यनेन[१] प्राच्यभर्गादिवर्जिताद्राष्ट्राख्याद्राजवाचिनः स्त्रियामतः लुग्[२] भवति ॥ शूरसेनस्यापत्यं शूरसेनानां वा राज्ञी। शूरसेनी। उशीनरी[३] ॥ * ॥

भर्गादिभ्यः ॥ भार्गी ॥ * ॥ कारूषी। करूश[४] इत्यन्यः ॥ * ॥ सौस्थाली। सुस्थल इति भोजः[५] ॥ * ॥ कश्मलमीरयत्यपनयतीति कश्मीरः। ततोऽञ्। काश्मीरी[६]। यथा।

काश्मीरीकुचकुम्भविभ्रमकरः शीतांशुरभ्युद्गतः[७] ॥ * ॥

केकयस्यापत्यं केकयानां वा राज्ञी। मित्रयुप्रलयकेकयस्येय् यादेस्त्विति[८]। आरैजियादेरिति[९] च। कैकेयी।

तं कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति।
कैकेयीशङ्कयेवाह पलितच्छद्मना जरा[१०] ॥ * ॥

उरसस्यापत्यम्। औरसी। उरस् इत्यन्यः[११] ॥ * ॥ त्रिगर्तस्यापत्यं त्रिगर्तानां वा राज्ञी। त्रैगर्ती ॥ * ॥ शाल्वस्यापत्यं शाल्वानां वा राज्ञी।

---

१ अणो॰ D.; cf. p. 77, l. 14.

२ लुक् C.; ॰अणः श्रुक् D.

३ सूरसेना (सू॰ throughout) उसीनवा D.

४ ? कारूषी। करूश B. C.; कारुषी। कारुश F.; कारूषी। D. (om. करूश इत्यन्यः).—Kâs. V. iv. 1, 178: करूष ed., कुरूश MS. *a.*; करूश Bö., Yajñ.; करूष। करूश। Hem.

५ सौस्थाली स्वस्थल इति॰ C.; सौस्थली। सुस्थ इति श्रीभोजः D.—The other works have सुस्थाल.

६ कश्यलमीरयति॰ कश्मीर॰ कासीरी D.

७ यथा कारमीकुंभविभ्रमधरः॰ D.; ॰अभ्युदतः C. D.

८ केकयस्येत्यादिस्त्विति C.; केकयस्येयादे॰ D.; ॰य्यादिस्त्विति F.—Cf. Pâṇ. vii. 3, 2.

९ आरैचियादेस्त्विति आरिविपादेरियिव C.; आरैचेयादेरिपि च D.; आरैचियादेरियि च B. F.

१० Raghuv. 12, 2.

११ उरसीत्यन्यः C.; उरसोऽपत्यमौरसी। (om. उरस॰) D.—उरस् Yajñ. and (*var. l.* उरश) Bö.; उरश Hem., Kâs. V. ed., MS. (*var. l.* ed. उरस).

ह्याच्चादणि नेञ्प्रत्यये शाल्वाद्भिः स[1] उच्यते। शाल्वी ॥*॥ कौरवी[2]। कौरव्यशब्दः क्षत्रियसमानवचनोऽस्ति तस्मादञ् क्वचिदिति शाकटायनेन ॥*॥ भरतोशीनरशब्दावुत्सादिषु पठ्येते[3]। तयोरिहोपादानात्तत्यण्यणपवादे चेत्यस्मिन्नुत्साद्यञं बाधित्वाऽञेव[4] भवतीति ज्ञाप्यते। तेन भरतानां राजानो भरताः। उशीनराणाम् उशीनरा इति राज्ञि लुक् सिद्धा। उत्साद्यञि त्वगोत्रत्वान्न स्यात्[5] ॥ स्त्रीणां राज्येऽनधिकाराद्राजनि प्रत्ययो न भवतीति भोजः ॥ २०२ ॥ इति भर्गादिः ॥

**बाहुः स्यात्खरनादिपुष्करसदौ प्राकारमर्द्दार्जुनौ**
**जङ्घाशृङ्खलतोदिबिन्दुशिरसः संकर्षणोदश्वितौ।**
**चूडा रामसुधामलोमवृकलाजीगर्तकृष्णानडुद्**
**विज्ञेयाश्च वचाकुसप्तजलडाः साम्बोपवाकू पणी[6] ॥ २०३ ॥**

अह्वाक्वादेरिञित्यनेन[7] बाहुशब्दप्रभृतिभ्यस्तस्यापत्यमित्यर्थे इञ् भवति ॥*॥ बाधते परबलमिति बाहुर्नाम कश्चिदाद्यपुरुषः[8]। तस्यापत्यं बाहविः ॥*॥ खरवन्नदतीति खरनादी[9]। तस्यापत्यं खारना-

---

१ ह्लत्वादणि° शाल्वाद्भिस B.; ह्य-चोदणि° C.; ह्यम्त्वादणि° शाल्वाशाद्भिस D.; °णिने अत्वायशाल्वाद्भिस F.; cf. Pâṇ. iv. 1, 170-3.—Hem. reads सल्व; the other works साल्व.

२ कौरव्यी Yajñeśv.

३ Cf. śl. 254.

४ सत्यणपवादे चेत्यस्मिन्नुद्यं बाधित्वाद्ययेव °यत्रैव F.; बाधित्वाद्यञेव B. C.; D. om. from भरतोशीनर° to चेत्यस्मिन्; नत्यादष्टावाधित्वारेव D.

५ उत्साद्यमित्वं गोचत्वंन्न स्यात C.; D. corrupt.

६ °लाजागर्त्तकृष्णा° C. F.; °अनडुक्वहा सुः सवाकुसप्तजलप्रः डाः° D.; ववाकुसप्त° C. (B.?); सांबोपवाकू° F.; °चाकुः पणी E.; A. om. text and comm.

७ अह्वात् बाह्वा° C.; वाह्वादिभ्य इत्य° D.; P. iv. 1, 95-6.

८ °कश्चिद्राजा Yajñeśv.

९ खरनादीस B.; खरंवमस्योणदतीत्येवंशील: खरनादी D.

दिर्नृपः ॥ * ॥ पौष्करसादिर्मुनिः ॥ * ॥ प्राकारं मर्दयतीति[१] प्राकारमर्दी । तस्यापत्यं प्राकारमर्दिर्नृपः ॥ * ॥ अर्जुनस्य । आर्जुनिः ॥ * ॥ जह्नायाः । जाह्निर्नृपः ॥ * ॥ शृङ्खलानि तुदति मोचयतीति शृङ्खलतोदी नृपः । तस्य शार्ङ्खलतोदिः । शृङ्खलनोदीति[२] भोजः ॥ * ॥ बिन्दोः । बैन्दविर्ऋषिः ॥ * ॥ शिरस्शब्दस्तदन्तः केवलस्यापत्यप्रत्ययासंभवात्[३] । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । यथा कादम्बर्याम्[४] । श्रूयते हि । पुरा किल स्थूलशिरा नाम महातपा मुनिरखिलत्रिभुवनललामभूतामप्सरसं रम्भाभिधानां शशाप ॥ तस्यापत्यं स्थौलशीर्षिः ॥ * ॥ संकर्षणस्य सांकर्षणिर्नृपः[५] । संकर्षणस्यादन्तत्वादिञि सिद्धे पाठः[६] । शिवाद्यृषिवृष्णिकुर्वन्धकादिति[७] विशेषवचसा प्राप्तस्याणो बाधनार्थः । एवमदन्तेषु सर्वेष्वपि द्रष्टव्यम् ॥ * ॥ उदश्वितः । औदश्वितिर्ऋषिः ॥ * ॥ चूडेव चूडा काचित् । तस्याश्चौडिर्मुनिः ॥ * ॥ रामस्य । रामिः ॥ * ॥ सुधाम्नः[८] । सौधामिर्मुनिः ॥ * ॥ लोमन्शब्दस्तदन्तः । औडुलोमिः ।[९] शारलोमिः ॥ * ॥ वृकलायाः । वार्कलिः ॥ * ॥ अजीगर्तस्य । आजीगर्तिः[१०] ॥ एत ऋषयः ॥ * ॥ कृष्णस्य कार्ष्णिः । यथा ।

कार्ष्णिः प्रत्यग्रहीदेकः सरस्वानिव निम्नगाः[११] ॥ * ॥

---

१ प्राकारमर्दयतीति C. D.

२ ? Thus F.; शृङ्खलतोदीति B.; तस्य शार्खलतोदीति C.; शृखलतोदो नृपः । तस्य शांखलतोहिः । शृखलातोदीति श्रीभोजः D.—Kâś. V. iv. 1, 96 शृङ्खालतोदिन् ed., शृंखलातोदिन् MS. *a.*; शृङ्खालतोदिन् Bö., Yajñ.; शृंखलनोदिन् Hem.

३ केवलस्यापत्यतया । सं° B.; केवलं तस्याप्रत्ययासं° C.

४ Ed. Calc. 1849, p. 71, 24.

५ C. F. om. from संकर्षणस्य.

६ इनि° B. C.; cf. P. iv. 1, 95.

७ *Cf.* Pâṇ. iv. 1, 112-114.

८ Om. by others; (सुधावत् śl. 205).

९ औडलोमिः C. D.; C. om. शारलोमिः.

१० अजागर्तस्य° F., om. C.; अजागर्तिः C. F.

११ Śiśup. 19, 10.

अनडुहः। आनडुहिर्व्वृषिः॥ * ॥ वचाकोः। वाचाकविः[1] ॥ * ॥ सम्मनाम्। साम्निः॥ * ॥ जलडायाः। जालडिः॥ * ॥ सहाम्बया वर्तते। साम्बः। तस्यापत्यं साम्बिः॥ * ॥ उपवाकोः। औपवाकविः[2] ॥ * ॥ पणिनः। पाणिनिः॥ एत ऋषयः[3] ॥ २०३ ॥

दुर्मिचानुरहत्सुनामकृकलोदङ्कासुरा मूषिका
पञ्चोदञ्चुकुनामसत्यकगदाः[4] स्युः क्षेमधृत्वी[5] सखा।
प्रद्युम्नधुवकानिवाकुलहकासंसेविमध्यंदिना[6]
वल्मीकस्तृणबिन्दुशूरधुवका उद्दालकाष्टारणाः॥ २०४ ॥

दुर्मिचायाः। दौर्मिचिः[7] ॥ * ॥ अनुरहतः। आनुराहतिः[8] ॥ * ॥ सुनाम्नः। सौनामिः। सुदामन्नित्यन्यः[9] ॥ * ॥ कृकलायाः[10]। कार्कलिः॥ * ॥ उदङ्कस्य। औदङ्किः॥ * ॥ असुरस्य। आसुरिः॥ * ॥ मूषिकेव मूषिका। तस्या मौषिकिः॥ एत ऋषयः॥ * ॥ पञ्चानाम्। पाञ्चिः॥ * ॥ उदञ्चोऽपत्यम् औदञ्चिः। गणपाठान्नलोपाभावः। अर्थो वात्र गम्यते[11] ॥ अपर उदञ्चिति धातुमात्रं निर्दिशन्ति। तन्मते

---

1 ? वचाकोर्वावाकविः C. (? B.); not in Bö., Yajñ., Hem., Kâṣ. V. (ed. विवाकु read मिवाकु; *var. l.* अवाकु); cf. वटाकु ṣl. 206.—Profs. Aufrecht and Weber suggest that this may be an old corruption for वचक्नोः। वाचक्नविः॥

2 उपवाकोरौपचाकविः B.; उपकोरौपवाकविः D. (cf. निवाकु ṣl. 204).—Yajñ. has उपवाकु; Bö., Hem. उपचाकु; om. Kâṣ. V.

3 F. om. एत ऋषयः.

4 पंचादंचिकुभामसत्यक॰ D.

5 ? Thus B.; क्षेमधृत्वा C.; क्षेमवृत्वी D.; क्षेमधन्वी E. F.; see note 3, next page.

6 निचाकुलहका॰ B.; निकवाकु॰ D.; A. om. text and comment.

7 दौर्मिचिः शुचियः Yajñ.

8 अनुहरत्॰ Bö., Yajñ., Kâṣ. V. ed. (अभ्यहत् MS. *a.*); अनुरहत् Hem., *cf.* ṣl. 164 and 173.

9 Om. D.—सुदामन् Hem.; om. by others.

10 Thus also Hem.; om. by the other works (? कृशला Bö., Yajñ.).

11 Cf. Pâṇ. vi. 4, 30 (= Hem. अञ्चोऽनर्चायाम्).—D. om. from उदञ्चो to धातुरूपात्प्रत्यय

प्रातिपदिकाद्धातुरूपात्प्रत्ययः। यथा। उदीचोऽपत्यम् औदीचिः॥ केचिद् उदञ्चित्यत्रोकारमुच्चारणार्थं न मन्यन्ते। तन्मत औदञ्चिः[1] ॥*॥ कुनाम्नः। कौनामिर्नृपः॥*॥ सत्यकस्य[2]। सात्यकिर्नृपः॥*॥ गदस्य। गादिर्नृपः॥*॥ क्षेमधृत्विनः। क्षैमधृत्विः[3]॥*॥ सख्युः। साखिः॥*॥ प्रद्युम्नस्य। प्राद्युम्निः॥*॥ भ्रुवकायाः। भ्रौवकिः॥*॥ निवाकोः। नैवाकविः[4]॥*॥ लहकायाः। लाहकिः। लगहेत्यन्यः[5]॥ एत ऋषयः॥*॥ संसेविनः[6]। सांसेविर्ऋषिः॥*॥ मध्यंदिनस्यर्षेः। माध्यंदिनिः॥*॥ वल्मीकस्यर्षेः। वाल्मीकिः। यथा।

इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम्[7]॥*॥

तृणबिन्दोर्मुनेः। तार्णबिन्दविः॥*॥ शूरस्य यदुविशेषस्य। शौरिः॥*॥ ध्रुवकायाः। ध्रौवकिर्नृपः॥*॥ उद्दालकस्यर्षेः। औद्दालकिः॥*॥ अष्टानाम्। आष्टिः॥*॥ अरुणस्यर्षेः। आरुणिः॥ २०४॥

शर्मा देवाग्निमद्रेन्द्राद्[8] उपबिन्दुसुधावतौ।
अजधेनुर्बलाका स्यादुपबाहुयुधिष्ठिरौ[9]॥ २०५॥

---

१ Hem. has both उदंच् and उदंचु; Bö., Kâṣ. V. उदञ्चु.

२ Thus also Yajñ., Hem.; सत्वक (सात्वकि) Bö.; सत्वक ed. Kâṣ. V. (om. MS.).—सात्यकिः। वृष्णिवंश्यः Yajñ.

३ ? Thus B. C.; क्षेमधन्विनः। क्षैमधन्विः F.; क्षेमधृचिनः। क्षेमधृचिनः चैवध्य।― D.—Cf. *gahâdi* (ṣl. 320) where MSS. क्षेमधृत्विन् or °वृत्तिन्; and *raivatikâdi* (ṣl 356), where क्षैमवृत्तिः—Bö., Kâṣ. V. क्षेमवृद्धिन् (MS. *a.* °वृत्ति); Yajñ. क्षेमवृद्धि; Hem. क्षेमधत्विन् (*var. l.* MS. धृतिन्).

४ निचाकोर्नैचाकविः B.; cf. last p. n. ३.—निचाकु Hem., निवाकु others.

५ ? लहगेत्यन्यः F.—लगहा Hem.; the others have neither; for लहका cf. *yadâdi*, ṣl. 62.

६ संवेशिन् Hem., om. others.

७ Raghuv. 15, 69.

८ शर्माद्देवाग्निमंद्रेन्द्राद् E.; शर्मदेवाग्निमंद्रेंद्राद् F.; °माहिंद्राद् B. C.

९ °धेनु बला° B. C. E.; D. om. from शर्मा° to स्याद्; A. om. text and comment.

दैवशर्मिः। आग्निशर्मिः। माद्रशर्मिः[1]। ऐन्द्रशर्मिः ॥ * ॥ औपबिन्दविः ॥ * ॥ सौधावतिः। स्वधावदित्यन्यः[2] ॥ * ॥ आजधेनविः। शकटाङ्गजस्वजादिभ्यो धेनोर्ब्राह्मणाद्वेति सूत्रद्वयमाह[3] ॥ * ॥ बालाकिः ॥ * ॥ औपबाहविः ॥ एत ऋषयः ॥ * ॥ यौधिष्ठिरिः ॥ २०५ ॥

**उत्तानपादकश्यपविदाः सुमित्राथ नगरतो मर्दी।**
**माषशराविच्छगलावटाकुभगलाशिवाकवो गलडा[4] ॥ २०६ ॥**

उत्तानपादस्यर्षेः। औत्तानपादिः। ध्रुवः।

औत्तानपादे भद्रं ते तपसा परितोषितः ॥

इत्यपि दृश्यते[5] ॥ * ॥ कश्यपस्यर्षेः। काश्यपिः[6]। गरुडाग्रजः ॥ काश्यप इत्यन्ये ॥ * ॥ विदस्यर्षेः। वैदिः ॥ * ॥ शोभनानि मित्राणि यस्याः। सुमित्रा। तस्याः सौमित्रिः। लक्ष्मणः। यथा।

सौमित्रिणा तदनु संसृजसे मुहूर्तम्[7] ॥ * ॥

नगरमर्दिनः। नागरमर्दिर्नृपः ॥ * ॥ माषशराविण ऋषेः। माषशराविः[8] ॥ * ॥ छगलायाः। छागलिर्ऋषिः ॥ * ॥ वटाकोर्ऋषेः। वाटा-

---

1 मांद्रशर्म्मिः F.; माहेंद्रशर्मिः B. C.—Hem. has मद्रशर्मन्; the others भद्रशर्मन् (cf. Burnell, Vaṃṣabr. p. 11).

2 ? Thus B. C.; सूधावदित्यन्यः F.; om. D.—Bö. has सुधावत् (*var. l.* सुधावत); Hem. सुधावन् and स्वधावन्; Kâṣ. V. only *var. l.* सुधावन्; om. Yajñ.

3 आजादिभ्यो धेनो ब्रा° C.; D. om. from शकटाङ्गज°.

4 माषसरावि° MSS.; चटाकु B. D.; सिवाकवो गलडा D.; लगडा C.; A. om. text and comment.

5 D. om. from औत्तानपाद.

6 कस्यपस्य° C.; कस्य ऋषेः B.; कास्यपिः B. D.—Om. by other works.

7 पदा सौ° संसृजते° D.; °संसजे° F.; ? cf. Ragh. 13, 73 °संससृजे स चैनं.

8 माषशिारविण (°शिरि°?) °माषसाराविः B.; माषसरावीण° माषसारविः D.; माषशाराविः C.—Bö., MS. Kâṣ. V. have माष। शराविन्; ed. Kâṣ. V. शराविन् (*var. l.* माष); Yajñ. माघ। शराविन्; Hem. माषशिरोविन् (शिाराविन्).

कविः[1]। वाटाकुरित्यन्ये[2] ॥ * ॥ भगलाया अपत्यम्। भागलिर्ऋषिः ॥ * ॥ शिवाकोर्ऋषेः। शैवाकविः ॥ * ॥ गलडायाः। गालडिः[3] ॥ २०६ ॥

डत्वे षाडिः षषो भूयःसंभूयोऽम्भोऽमितौजसाम्।
सलोप उदकस्योदः कृताकारः शलङ्कु च[4] ॥ २०७ ॥

षषाम्। षाडिः ॥ * ॥ भूयसः संभूयसोऽम्भसोऽमितौजस उदकस्य शलङ्कोश्च ऋषेः। भौयिः। सांभूयिः। आम्भिः। आमितौजिः। औदिः। शालङ्किः ॥ भूयःशब्दो भोजमतेन। केचिदत्रोदकभूयस्संभूयसिति सामान्येन पठन्ति। तन्मत औदकिः। भौयसिः। सांभूयसिरिति भवति ॥ अत्र गोत्रादिभूता अगोत्रादिभूताश्च प्रत्येतव्याः साधारणेनोपादानात् ॥

आकृतिगणोऽयम्। तेन नृनामन्अमित्राप्रभृतयो द्रष्टव्याः[5] ॥ २०७ ॥ इति बाह्वादिः ॥

व्यासः सुधातृवरुटौ[6] निषादचण्डालबिम्बयुक्तौ च।

व्यासादीनामकञ्चेत्यनेन व्यासादेः शब्दगणादिञ् भवति। तत्संनियोगे चाकञादेशः[7] ॥ * ॥ व्यासस्यापत्यम्। वैयासकिः ॥ * ॥ एवं सौधातकिः ॥ * ॥ वारुटकिः[8] ॥ * ॥ नैषादकिः[9] ॥ * ॥ चाण्डालकिः ॥ * ॥

---

१ ऋषेश्वाटाकविः B. D.; वटाकोर्वाटाकविः ऋषिः F.

२ Thus C.; चाटाकुरित्यन्ये B. F.; om. D.—Hem. has चटाकु & चाटाकु; Bö., Kâṣ. V. वटाकु; om. Yajñ.

३ गडलायाः गुडलिः D.; not in the other works.

४ A. om. text and comment.

५ तृनामन्° C.; D. om. from भोजमतेन.

६ ? Thus B. C. F. (Hem.); °वरुठनि° E.; वरन्नौ निखाद° D.; cf. n. ८.—A. om. text and comment.

७ तत्संन्नियोगे वा° C.; °योगेन कञा° D.; वाकञा° F.

८ ? Thus B. C. F. and Hem.; वारुडकिः D., Pâṇ. iv. 1, 97, Mbh.; Kâṣ. V. ed. (MS. *a.* वरूढ, वारूढकि). Cf. ṣl. 348, where D. also वरट, E. वरुठ.

९ नैखादकिः D.

वैल्वकिः ॥ * ॥ व्याससुधान्वोरणोऽपवादः[१]। कारलक्षणस्येश्च विधेयः शेषाणामिञस्त्वेव[२] ॥ केचिदत्र व्याघ्रकर्माराग्निशर्मणोऽपि पठन्ति। वैयाघ्रकिः। कार्मारकिः[३]। आग्निशर्मकिः। यथा।

यद्वन्न वैयासकिवैल्वकी वा[४] सौधातकिं चेह परिस्पृशन्ति।
चाण्डालकिर्वारुटकिश्च[५] नैषादकिश्च तद्वद्दुरितानि मा वः॥

इति व्यासादिः॥

कुरुशूर्पणायबृहतीकाराः[६] कारो वडभ्याश्च[७] ॥ २०८ ॥

कुर्वादिभ्य इत्यनेन कुर्वादेः शब्दगणाड् ण्यप्रत्ययो भवति ॥ * ॥ कुरोर्ब्राह्मणस्यापत्यम्। कौरव्यः। यथा।

कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलम्॥

तिकादित्वात्फिञपि[८]। कौरवायणिः॥ उत्सादेश्चाञित्यञ् पुनराभ्यां[९] बाधितोऽपत्ये न भवति॥ कौरव्यशब्दस्य क्षत्रियवचनस्य तिकादिपाठात्। कौरव्यायणिः॥ * ॥ शौर्पणाय्यो[१०] मुनिः॥ * ॥ बार्हतीकार्यः॥ * ॥ वाडभीकार्यः[११] ॥ २०८ ॥

---

१ ऊणोपवादः B.; उणोपवादः C.

२ °लक्षणस्येश्च° शेषस्यास्त्वेवा। D.; लक्षणस्येञ् वि° F.; लक्षणस्येवं -- (lacuna to सन्धिलेखो in sl. 213) C.

३ कर्मारकिः F.; D. om. from केचिदत्र.

४ वैयासकिः चैव कीवा B.; वैयासकिरैव कीवा D.

५ वारुडकिश्च D., cf. last page n. ८.

६ °सूर्पणाय° D. (Hem.); सूर्पणाय B.; सूपणाय F.

७ वडव्याश्च B.; A. C. om. text and comment.

८ °पिञपि B. D.; s. कुरु and कौरव्य in *tikâdi*, sl. 229-30.

९ उत्सादेश्चञिलताभ्यां D.; cf. P. iv. 1, 86; *utsâdi*, sl. 254.

१० सोर्पणायो° B.; सौपणाय्यो F.; कौरव्याणि -- र्प्यणाय्यो D.

११ वाडवीकार्यः B. F.; वाडनीकार्यः F.—Hem. has वलभीकार; the others as above.

ज्ञेया वाच्यरथकारगर्गरमुराः[1] कैशोरिचप्पट्टकौ
सत्यंकारचफट्टकौ[2] च हृदिकः कापिञ्जलादिः कविः ।
दामोष्णीषिकुटार्द्रवृक्षविमतिश्यापचहन्तेरकाम्[3]
तक्षा शुभ्रशकन्धुशङ्कुपितृमच्छाकीनपिण्डीपुराः[4] ॥ २०९ ॥

वाचः । वाच्यः ॥ * ॥ रथकारस्य । राथकार्यः ॥ त्रैवर्णिकेभ्यः किंचिन्न्यूना रथकारजातिः[5] । तद्वचनोऽयं गृह्यते । यस्तु कारुवाची तस्मादिञपि[6] ॥ * ॥ गर्गरस्य । गार्गर्यः ॥ * ॥ मुरस्य राज्ञः । मौर्यः[7] ॥ * ॥ किशोरस्यापत्यं कैशोरिः । तस्यापत्यं युवा । कैशोर्यः ॥ भोजस्तु किशोरस्य कैशोर्यो राजेत्याह ॥ * ॥ चप्पट्टकस्यर्षेः । चाप्पट्टक्यः[8] ॥ * ॥ सत्यंकारस्य । सात्यंकार्यः ॥ * ॥ चफट्टकस्य नृपस्य । चाफट्टक्यः[9] ॥ * ॥ हार्दिक्यः । मुञ्च हार्दिक्य शङ्काम् ॥ वृष्णिलक्षणेऽणि ॥ * ॥ कापिञ्जलादेरपत्यं गुर्वायत्तम्[10] । कापिञ्जलाद्यः । वेदकृदृषिः ॥ * ॥ काव्यः । शुक्रः ॥ * ॥ दामोष्णीषेरपत्यं[11] युवा । दामोष्णीष्यो मुनिः ॥ * ॥ कुटस्य । कौट्यः ॥ * ॥ आर्द्रवृक्षस्य । आर्द्रवृक्ष्यो मुनिः ॥ * ॥ विमतेः । वैमत्यः ॥ मतिरित्यन्यः । मतिमदित्यप्यन्यः[12] ॥ * ॥ श्यापुच्यः ।

१ °गार्गर° E.; °भुराः D.; सुराः F.

२ कैशोरिचाफट्टकौ° चयट्टकौ E.

३ °कुट्टा° B.; कुटार्द्रवृक्ष° E.; कुटार्द्रावृक्ष° D.

४ A. C. om. text and comment.

५ Kâș. V. iv. 1, 151.

६ तस्मादपि अञ् F.; D. om. अपि.--Cf. P. iv. 1, 153.

७ सुरस्य° सौर्यः F.; सुरस्य रा° मौर्यः D.

८ चप्पट्टक्यः B.; not in other works.

९ चपट्टस्य° चापट्टक्यः D.—चफट्टक Hem.; om. others.

१० गुर्वापित्तं D.; गुर्वन्तेयन्तं B.—Yajñ. reads कपिंजलादिन्; Bö., Hem., Kâș. V. कापिञ्जलादि.

११ Yajñ. has दामोष्णीषिन्; Bö., Hem., Kâș. V. as above.

१२ D. om. from मतिरित्यन्यः.—Kâș. V. मति ed.; विमति MS. *a*.; विमति Yajñ.; विमति (*var. l.* मति) Bö.; मति and विमति Hem.

श्यावपुत्र इति भोजः ॥ * ॥ हन्तुः । हात्यः ॥ हन्त्रिय[1] इति वामनः । हनस् तिप्रत्यये हन्तिरित्यन्यः[2] ॥ * ॥ एरकायाः । ऐरक्यः ॥ एडकेत्यन्यः[3] ॥ * ॥ तक्ष्णः । ताक्षण्यः[4] । पाठसामर्थ्यात्कारुलक्षणमिञं बाधते । शिवादिपाठाच्च । ताक्ष्णः[5] ॥ * ॥ शुभ्रस्य । शौभ्र्यो राजा । शुभ्रादित्वाड्ढगपि समानविषयत्वात् ॥ * ॥ शकन्धोः । शाकन्धव्यः । शाकंभूरित्यन्यः[6] ॥ * ॥ शाङ्कव्यः । बहुषु शाङ्कव्याः । शाङ्कव्या स्त्री । गर्गादिपाठात्पौत्रादौ यञ् । शाङ्कव्यः । बहुषु लुक् । शङ्कवः । स्त्रियां शाङ्कव्यायनी[7] ॥ * ॥ पितृमतः । पैतृमत्यः ॥ पितृमन्तुरित्यन्यः । तन्मते पैतृमन्तव्यः[8] ॥ * ॥ शाकिनः । शाक्यः ॥ * ॥ इनस्य । ऐन्यः ॥ * ॥ पिण्ड्याः । पैण्ड्यः ॥ * ॥ पुरस्य । पौर्यः ॥ २०७ ॥

शाकः शलाकागणकारदभ्राः[9]
पीलाभ्रवैवाकविभर्तृमूढाः[10] ॥
शालीनकर्त्रैजनितान्तवृक्षा-[11]
ऽजमारकश्यावरथाश्च वेनः[12] ॥ २१० ॥

शाकं शाकमिति य आह स शाकः । तस्य शाक्यः ॥ * ॥ शला-

१ ?हन्त्रिय D.—हंत, हंति, हंतृ Hem.; हर्तृ Kâṣ. V. ed. MS.; Bö., Yajñ. (? cf P. vii. 4, 27).

२ हनस्त्रिप्र° B.; °हतिरि° D.

३ एरका Bö., Yajñ.; एरक Kâs. V.; एड्का Hem.

४ ताक्ष्ण्यः F. (thus also wrongly ed. Kâṣ. V. iv. 1, 153).

५ Cf. ṣl. 213.

६ शाकंधुरि° F.; om. D.—Hem. has शकंधु and शाकंभु; the others शकन्धु.

७ Cf. ṣl. 247; 60.

८ D. om. from पितृमन्तुर्.—Hem. has both forms; the others पितृमत् only.

९ पैलावैवाक° E.; पीलावधे° D.; पेलाभ्र° B.; ऐलाभ्र° F.

१० °दर्भा E.; cf. next page, n. २.

११ कर्त्रैज्यनितान्तवृक्षा E.; कर्त्रैक-नि° D.

१२ श्यावरथेहवेनाः B. F.; वेणः D.; A. C. om. text and comment.

कायाः । श्यालाक्यः ॥ * ॥ गणकारस्य । गाणकार्यः ॥ गणकारिरित्यन्यः[१] ॥ * ॥ दार्भ्यो नृपः । दर्भ इति वामनः[२] ॥ * ॥ पीलायाः[३] ॥ पैल्यः ॥ * ॥ आम्ब्यः ॥ * ॥ विवाकोरपत्यं वैवाकविः । तस्यापत्यं युवा । वैवाकव्यः ॥ वैवाभविरित्यन्यः[४] ॥ * ॥ भार्च्यः ॥ * ॥ मौद्ध्यः ॥ * ॥ शालीन्यः ॥ * ॥ कार्च्यः ॥ * ॥ ऐज्यः[५] ॥ * ॥ नैतान्तवृच्यः ॥ * ॥ आजमारक्यः । अजमार इत्यन्यः[६] ॥ * ॥ श्यावरथ्यः[७] ॥ * ॥ वैन्यः[८] ॥ एते राजानः ॥ वामनादयस्तु छन्दसि वैन्यो भाषायां तु वैनिरित्याहुः[९] ॥ २१० ॥

वानुजिः कर्णकारश्च केशिनीपथिकारिणौ ।
श्याप्रथो[१०] वान्तवृक्षश्च श्यावनायश्च मञ्जुषः[११] ॥ २११ ॥

वनोर्जातः[१२] । वनुजः । तस्यापत्यं वानुजिः । तस्यापत्यं युवा । वानुज्यः ॥ वातकिरिति[१३] भोजः ॥ * ॥ कार्णकार्यः । कार्णकारिरित्यन्यः[१४] । राजा ॥ * ॥ केशिन्याः । कैशिन्यः ॥ ङ्यन्तपाठसामर्थ्यादेव स्त्रीत्वानिवृत्तिः । स्त्रीत्वनिवृत्तौ हि नोऽनङ्गो व्ये शित्यणादावित्यनेन

१ गणकारि Bö., Kâṣ. V. ed. (MS. *a.* °कार); गणकारिन् Yajñ.; गाणकारि Hem.

२ दर्भ Kâṣ. V., Bö.; दभ्र Yajñ.; दभ्र orig. MS. Hem., corr. दर्भ.

३ ? पैलायाः F.; पेलायाः B.; cf. ṣl. 169 (where पीलायाः पैलः).

४ ? नैवाभरिरित्यन्यः D.—Hem. has only वैराजकि; the others neither.

५ ऐक्यः D.—एजि Bö., Yajñ.; om. Hem., K. V.

६ आजामार D. F.—Kâṣ. V. ed., Hem. have अजमारक, MS. *a.* and Bö. अजमार; Yâjñ. अजभार.

७ B. F. add ऐह्यः.

८ वैण्यः D.

९ वैण्यो° वैनिरि° D.

१० ? श्याप्रथ्यो E.; श्याप्रथ्यो B.

११ वातृवृक्ष° मञ्जुषः D.; श्यावनायस्य° F.; A. C. om. text and comment.

१२ वनौ जातो F.

१३ वातकि Bö., Yajñ.; धानुजि MS. Hem.; om. Kâṣ. V.; °श्रीभोजः D.

१४ Om. D.—कर्णकार Hem.; not given by the others.

न लोपः[1] स्यात् ॥ * ॥ पाथिकार्यः । पथिकार[2] इति भोजः ॥ * ॥ श्याप्रथ्यः । श्यावप्रथ[3] इति कश्चित् ॥ * ॥ वान्तवृच्य्यः ॥ * ॥ श्यावनाय्यः[4] ॥ * ॥ माङ्गूष्यो राजा । मङ्गूष[5] इत्यन्यः ॥ * ॥ कविविमतिपीलाशला-कैरकाकेशिनीप्रभृतीनां ढणि[6] प्राप्ते । वृद्धिकाट्ठिणिलक्षणे ऽणि[7] । अन्येषां लिञि प्राप्ते ण्यविधिः ॥

आकृतिगणो ऽयम् । तेन । अविमारकषडाकैन्द्रजालिकूटप्रभृतयो[8] द्रष्टव्याः ॥ २११ ॥ इति कुर्वादिः ॥

शिवः प्रोष्ठश्चण्डो जटिलकवतण्डौ बधिरकः[9]
पिटाकस्तृक्षाकः पिटकपरिलौ प्रोष्ठिकमुनी[10] ।
ककुत्स्थः खञ्जारस्तृणमसुरकर्णौ जलहृदो
विरूपाक्षः पिष्टः कहयवडबाभूमिककुभाः[11] ॥ २१२ ॥

शिवाद्यृषिवृष्णिकुर्वन्धकादित्यनेनापत्यमात्रे ऽण् भवति ॥ * ॥ शिवस्यापत्यम् । शैवः ॥ * ॥ एवं प्रौष्ठः ॥ * ॥ चाण्डः ॥ * ॥ जाटिलकः ।

---

१ नोनद्धोश्चेशित्यणाः॰ F.; नोनद्धो-श्चेश॰ B.; नोनद्धोश्चेशित्यणादावित्यनेन लोपः D.; cf. P. vi. 4, 144-5; 167 ff.; see same sûtra under sl. 257.

२ Thus Bö., Yajñ.; पथिकारिन् ed. Kâs. V.; Hem. has both words.

३ ? श्याप्रथ B.; श्याप्रत्यय D.; शाप्रथ F.—Hem. has श्याप्रथ, श्यावप्रथ and श्यापत्र (besides श्यापुत्र, cf. sl. 209); not in the other works.

४ वीतवृच्युः॰ D.; शावनाय्यः B. F.

५ मांगूष F.—Hem. orig. मंडूष, corr. मंजूष; the others मङ्गूष (Kâs. V. MS. *a.* मंडूष).

६ कविमति॰ ढणि D.; टणि F.

७ D. om. fr. वृद्धिका; ॰वृद्धि प्राप्ते D.

८ ? अविमारषडा॰ B.; अवमारकषडाकैंद्रजालिककूट॰ F.; अधिमाकरषडाककूप्रभृतयो D.—Of these words Bö., Yajñ. only इन्द्रलाजी; Kâs. V. ed. इन्द्रजालि (MS. *a.* ॰जाल); Hem. has अविमारक (cf. अजमारक sl. 210), खदाका and ऐन्द्रजालि.

९ शिवः प्रासंडो जटिलाक॰ D.; ॰प्रोष्टसंडो॰ F.

१० ॰प्रौष्टिकमुनी F.

११ ककुस्थः॰ B. E.; A. C. om. text and comment.

जटिलिकेति भोजः[१] ॥ * ॥ वातण्डः ॥ * ॥ बाधिरकः । बधिरिकेति भोजः[२] ॥ * ॥ पैटाकः ॥ * ॥ तार्चाकः ॥ * ॥ पैटकः ॥ * ॥ पारिलः ॥ * ॥ प्रौष्ठिकः ॥ * ॥ मौनः ॥ * ॥ ककुदि[३] तिष्ठति । ककुत्स्थः । तस्य काकुत्स्थः ॥ * ॥ खाञ्जारः । खञ्जेर इति भोजः[४] ॥ * ॥ तार्णः । नडादिपाठात् तार्णायनः[५] ॥ * ॥ मासुरकर्णः[६] ॥ * ॥ जलह्रद इव जलह्रदः । तस्य जालह्रदः । संस्कृते द्विर्वचनाभावे संयोगपरोऽपि न गुरुः । यथा । स्पृष्टं त्वजेत्यपह्रियः खलु कीर्तयन्ति[७] ॥ * ॥ वैरूपाक्षः ॥ * ॥ पैष्टः ॥ * ॥ काह्रयः । कह्रय इत्यन्यः[८] ॥ * ॥ वडवेव वडवा । तस्या वाडवः । विदिद्युते वाडवजातवेदसः[९] ॥ * ॥ भौमः । माङ्गलः ॥ * ॥ काकुभः ॥ २१२ ॥

गङ्गाकुञ्चाकोकिलायस्कलह्या[१०]
दुह्यः पर्णः कर्णमञ्जीरकौ च ।
रेखस्तक्षा वर्तनाक्षः कहोडः
संधिर्लेखो भूरिजम्भोर्णनाभाः[११] ॥ २१३ ॥

---

१ आटलिकः । जटलिकेति° B.; जटिलकेति° F.; श्रीभोजः D.—Bö., Yajñ. have जटिलिका; Kâs. V. ed. जटिलिक (MS. *a.* जटिलक); Hem. जटिल.

२ बाधिरिकः° B.; बधिरकेति° F.; वाधिरिकेति श्रीभोजः D.—Bö., Yajñ. Kâs. V. ed. have बधिरिका (MS. *a.* बधिरक); Hem. बधिरक.

३ ककुदे B. D.

४ श्रीभोजः D.—The other works have खञ्जार.

५ Cf. śl. 233.

६ Bö., Yajñ. मसुरकर्ण; Kâs. V. ed. मसूरकर्ण; Hem. both.—Bö., Yajñ., K. V. have मयूरकर्ण besides (cf. *kârikâ* on śl. 216).

७ यथा । भवेत्यपह्रियः खलु कीर्तयंति । D.

८ Thus B.; कह्रय इत्यन्यः F.; om. D. (A. C.)—Bö. has कहय and कह्रय; Yajñ. कहय and कुलूय (कुह्रय । इति केचित्); Hem., Kâs. V. MS. *a.*, ed. *var. lect.* कह्रय (cf. कह्रष śl. 217).

९ The MSS. write वडवा, वाडव; but cf. śl. 146 com.

१० गंगाकुंचा° D. E.; कौकिला° D.

११ वर्त्तनाख्यः B.; A. om. text and comment; C. om. to संधिर्लेखो (see p. 251, note 2).

गाङ्गः । शुभ्रादिषु तिकादिषु च पाठात्[१] । गाङ्गेयः । गाङ्गायनिः ॥ * ॥ क्रौञ्चः ॥ * ॥ कौकिलः । यथा ।

स कौकिलश्यामवनेन कूजत्क्रौञ्चेन सिप्रोपतटेन गच्छन्[२] ॥

यास्कः ॥ * ॥ लाह्यः ॥ * ॥ द्रौह्यः ॥ * ॥ पार्णः ॥ * ॥ कार्णः ॥ * ॥ माञ्जीरकः । मजिरक[३] इत्यन्यः ॥ * ॥ रैखः ॥ * ॥ ताक्ष्णः[४] । कुर्वादित्वात् ताक्ष्ण्यः ॥ * ॥ वार्तनाक्षः ॥ अन्यस्तु वर्तनस्यासौ ऋचस्य । वार्तनर्च[५] इत्याह ॥ * ॥ काहोडः ॥ * ॥ सांधः ॥ * ॥ लैखः ॥ * ॥ भौरः ॥ * ॥ जाम्भः । जम्ब इत्यन्ये[६] ॥ * ॥ और्णनाभः ॥ २१३ ॥

दण्डो रोधः कोहितैलासपत्न्य[७]

आर्यश्वेतापर्षिकागोपिकाः[८] स्युः ।

खञ्जालश्चालेखनो ब्रह्मगुप्तश्

चायःस्थूणः[९] स्यान्नभागो विपाट् च[१०] ॥ २१४ ॥

दाण्डः ॥ * ॥ रौधः ॥ * ॥ कौहितः ॥ * ॥ ऐलः ॥ * ॥ सापत्नः ॥ * ॥

---

१ Cf. sl. 219, 229.

२ कूजत्क्रौं° B.; °कूजः क्रौवेन° C.; °श्यामवेननक्तजक्रौचेन श्रिप्रोपतटेन गच्छता D.

३ मंजरीक C.; मजिरक D.; मंजीरक F.—Bö., Yajñ. have मञ्जीरक and मजिरक [मंजरीक (मांजरीक) इत्यन्ये Yajñ.]; Hem. मंजिरक; Kâs. V. ed. मञ्जीरक, MS. *a*. मजिरक.

४ ताक्षः B. C. F.; ताक्षुः D.; cf. P. iv. 1, 153 vârtt.; vi. 4, 135.—कुर्वादि cf. page 253, line 3.

५ वार्त्तनस्यासौ° D. F.; वार्त्तनाक्ष D.—Hem. has वर्तन । ऋच । वर्तनर्च ।; the other works वर्तनाक्ष; Yajñ. also: वर्त्तनस्यासौ ऋचस्य वर्त्तनर्चस्तस्य वार्त्तनर्च इति कश्चित्.

६ D. om. fr. जम्ब.—Hem. has जंब; the others जम्भ (Kâs. V. ed. *var. l.* अण्ड).

७ कोहितैलासपत्न्य B. F.; °पत्न्यरार्यश्वेता° C.

८ अर्यश्वेता° C. D., cf. next page, n. १; °पार्षिका° E., cf. next page n. २.

९ °लेखनब्रह्मगुप्तावाय:° D. C. E. F.

१० °नभोगो° D.; विपश्च C.—A. om. text and comm.

आर्यश्वेतः[१] ॥ * ॥ पार्षिकः[२] ॥ * ॥ गौपिकः ॥ * ॥ खाञ्जालः ॥ * ॥ आलेखनः[३] ॥ सुलेखन इति भोजः ॥ * ॥ ब्राह्मगुप्तः । वामनस्तु नास्य पाठमङ्गीकुरुते[४] ॥ * ॥ आयःस्थूणः ॥ * ॥ नाभागः । नाभाक[५] इत्यन्यः ॥ * ॥ वैपाशः । कुञ्जादिपाठाद् वैपाशायन्यः[६] ॥ २१४ ॥

भलन्दनानभिम्लानतृणकर्णकलापिनः ।
जरत्कारू:[७] सुपिष्टश्च कुठारश्च खदूरकः[८] ॥ २१५ ॥

भालन्दनः । भलन्द इत्यन्यः[९] । कलन्दन इति भोजः[१०] ॥ * ॥ आनभिम्लानः ॥ * ॥ तार्णकर्णः ॥ * ॥ कालापः ॥ * ॥ जारत्कारवः ॥ जरत्कारुशब्दादत एव ज्ञापकात् स्त्रियामूङ् । यस्तु मुनिवचनस्तत्पतीवचनस्य जरत्कारुशब्दस्तस्मादौत्सर्गिकोऽण्[११] ॥ * ॥ सौपिष्टः ॥ * ॥ कौठारः[१२] । कुथामियर्ति कुथार इत्यन्यः ॥ * ॥ खादूरकः[१३] ॥ २१५ ॥

विश्रवणरवणखञ्जनकुपिञ्जलपृथोत्क्षिपापुरोहितिकाः[१४] ॥
कुरूपाण्डुहस्तिपादा वृष्णिकखर्जूरकर्णौ[१५] च ॥ २१६ ॥

---

१ Bö. has अर्यश्वेत (*var. l.* आर्यश्वेत); Yajñ., Hem., Kâś. V. आर्यश्वेत.

२ Bö. has पार्षिका; Yajñ. पर्षिकः and पर्षिका (!); om. Kâś. V., Hem.; cf. पार्ष्णिक śl. 217.

३ Bö., Kâś. V., Hem. read आलेखन; Yajñ. अलेखनस्य आलेखनः.

४ Not in Bö., Yajñ., Hem. either.

५ नभाक Bö., Hem., Kâś. V. नाभाकस्य नाभाकः । नाभाग इत्यन्ये Yajñ.

६ Cf. śl. 245.

७ जरत्कारु Bö., Y., K.V.; °रू Hem.

८ Thus also Bö., Yajñ., Hem.; खटूरक F.; खडरक Kâś. V. ed., खडुरक MS. *a.*; cf. खदूर śl. 220.—A. om. text and comment.

९ भालंद इत्यन्यः C. F.

१० ?भलंदन इति श्रीभोजः D.—Hem. has भलंद & भलंदन; the others only भलन्दन (MS. *a.* Kâś. V. कवंधन । हलंदन).

११ जरत्कारुशब्द° D.; cf. note ७, and M. Bhâr. 1, 1056.

१२ कौठिरः B.; कैथारः D.; कौवरः C.—Hem. has कुथार, the others कुठार.

१३ खादूरकः F.; खादूडुरकः D.; cf. note ८.

१४ पृथोत्क्षिपा° B. D. E.; पुरोहितकाः C.

१५ °खर्जुरकर्णौ (against the metre) E. (& Bö.); A. om. text and comment.

वैश्रवणः ॥ रावणः ।

रावणावग्रहक्लान्तमिति वागमृतेन सः[१] ॥

विश्रवसोऽपत्यं वाक्यमेव । विश्रवणरवणाभ्यां तु नित्यं वृत्तिविषयाभ्यां प्रत्ययः[२] । अन्ये तु णश्च विश्रवसो विश्लोपश्च[३] वेत्यनेन सूत्रेण वैश्रवणरावणशब्दौ साधयन्ति ॥ * ॥ खाञ्जनः ॥ * ॥ कौपिञ्जलः ॥ * ॥ पार्थः ।

पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे[४] ॥

औत्क्षिपः[५] ॥ * ॥ पौरोहितिकः । रौहितिकेति भोजः[६] ॥ * ॥ कौरवः ॥ कुर्वादिपाठाड् ण्यः । कौरव्यः ॥ क्षत्रियवचनात्तु कुरुकोसलेत्यादिना ण्यः[७] । तस्य बहुषु लुक् । कुरवः ॥ * ॥ पाण्डवः । पाण्डवा यस्य दासाः ॥ शुभ्रादिपाठात् पाण्डवेयः ॥ अत्र कुरवो जनपदस्तस्य राजा पाण्डुः[८] । यस्तु राष्ट्राख्यस्ततः पाण्डोर्ड्यणि[९] । पाण्ड्यः । बहुषु लुक्[१०] । पाण्डवः ।

तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ।

इति तु चिन्त्यम्[११] ॥ * ॥ हस्तिपादस्य । हास्तिपदः । अत एव गणपाठात्पादस्याणि पद्भावः ॥

कौपिञ्जलः पिञ्जलवाजिनां तं तं हस्तिना हास्तिपदः प्रपेदे[१२] ।
स आत्मगुप्तो भुजवीर्यगुप्तं रथेन कौण्डोपरथोऽन्वयासीत्[१३] ॥

---

१ Raghuv. 10, 49.

२ ॰ऽपत्यं वास्कमेव॰ भुनित्यंवृ॑विष॰ D.; ॰वृत्तिः विष॰ B.

३ विसूलुक् च F.; त्रिविसलोपश्च D.

४ Kirât. 3, 25.

५ उत्क्षिपा Kâṣ. V. ed.; उत्क्षेप MS. *a.*, Bö.; उत्क्षिप Yajñ.; ? उच्चया Hem.

६ श्रीभोजः D.—रौहितिक Kâṣ. V. ed. (MS. *a.* रौहितका); पुरोहितिका and सुरोहितिका (besides सुरोहिका) Bö., Yajñ.; om. Hem.

७ ॰कौशलेत्या॰ C.; कोशले॰ D.; cf. Pâṇ. iv. 1, 171-2.

८ D. om. from शुभ्रादि॰.

९ पांडोर्व्यटि D.—Cf. P. iv. 1, 168 vârtt.; Kâṣ. V. iv. 1, 171.

१० श्रुका D.; लुक् C.

११ C. om., चिन्त्यं, D. om. from तस्यामेव.—Ragh. iv. 49.

१२ B. D. om. कौपिञ्जलः; कौपिंजलवाजि॰ हास्तिना॰ C.

१३ ॰गुप्तो रथेन॰ F.; ॰गुप्तरथेन कौडो॰ D.; कौंडोपरथालयासीत् C.

वृष्णिरेव वृष्णिकः । तस्य वार्ष्णिकः ॥ * ॥ खार्जूरकर्णः[1] ।

खार्जूरकर्णेन धृतातपत्रो मायूरकर्णोद्धुतचामरौघः[2] ।
सापत्नयुग्मानुगतोऽध्ययोध्यं स रावणारातिरिवाबभासे[3] ॥२१६॥

उरलः कहूषकोहडहेहयगोपालिकाश्च गोफिलकः[4] ।
परिषककुण्डोपरथौ त्रिवणादेशे[5] सति त्रिवेणी च ॥२१७॥

औरलः ॥ * ॥ काहूषः ॥ * ॥ कौहडः[6] ।

तमन्वयुः खाञ्जनमाञ्जरीकसौपिष्टसौलेखनतार्णपार्णाः[7] ।
काहोडजालह्रदवार्तनाचचैरह्रदप्रौष्ठिकतार्णकर्णाः[8] ॥

हैहयः ॥ * ॥ गौपालिकः ॥ * ॥

काहूषपैष्टौरलयास्कलाह्यद्रौह्यानभिम्लानकभौरमौनाः[9] ।
तार्चाकगौपालिकगौपिकार्यश्वेतादयस्तं परितः प्रसस्रुः[10] ॥

गौफिलकः[11] ॥ * ॥ पारिषकः[12] ॥ * ॥ कौण्डोपरथः ॥ * ॥ त्रिवेणी नदी तस्याः । त्रैवणः[13] ॥ * ॥ २१७ ॥

---

१ खार्ज्जूरकर्णः । D.; cf. p. 258, n. 15.

२ मासूरकर्णाद्भुतवाप्ररौघः D.; माद्रारकर्णोद्भुत° F.—On मयूरकर्ण (मसुरकर्ण) cf. p. 256, n. 6.—The *kārikās* do not always tally with Vardh.'s text.

३ °युग्मा न गतो° B. C.; वभास्ते D.; °वभाषे C.; °वभास्थे B.

४ °कोहनहेहय° E.; कोडडहेहय° B.; कहोडाहेहय° D.; गोफलिकः F.

५ त्रिविणादेशे B. D. E. F.; त्रिविण्यादेशे° C.; A. om. text and comment.

६ काहोडः D. [cf. śl. 213; Yajñ. has कोहडस्य कौहोडः (!) । कहोडस्य काहोडः ।].

७ ? स तन्वयुः खंजन° पार्णाः B. C.; सोपिष्ट° D.; °तार्णकर्णाः F.

८ कौहोडजालंह्रद° चैरह्रदं° C.; पौष्टिक° B. C. F.

९ °सौरमौनाः F.; °कारोमौनाः C.; °कारोरमौनाः B.

१० ताचीकः गौपालिकः । गौविल° पदितः प्रतस्तुः D.

११ Om. MSS.—Kāś. V. ed. has गोफिलिक (*var. l.* गोभिलिक); गोफिल & गोहिल Hem.; om. Bö., Yajñ.

१२ परिषिक Hem.; K. V. ed., MSS.; om. Bö., Yajñ.; cf. पर्षिका p. 258, n. 2.

१३ त्रैविणः B. C.; त्रैवेणः F.; त्रैवणेः D.; cf. n. ५.

उत्कारुक्षीरहृदौ[१] सुरोहिकाकपिलिकर्ष्टिषेणाः स्युः ।

औत्कारवः । उत्कारुशब्दस्यात एव पाठादुञ् भवति[२] ॥*॥ चैरहृदः ॥*॥ सुष्ठु रोहति । सुरोहिका । तस्याः सौरोहिकः ॥*॥ कापिलिकः ॥*॥ आर्ष्टिषेणः । सेनान्तण्यवाधनार्थो[३]ऽस्य पाठः ॥*॥ केषांचिद् अत इञि प्राप्ते[४] केषांचिद् द्व्यच इतो ढणि च[५] प्राप्ते पाठः ॥

एते शिवादयोऽण्प्रत्ययान्ता ऋषिवाचकाः काकुत्स्थादयस्तु राजवाचकाः प्रतीता एव । कौञ्जादीनां लर्थो व्याख्यात एव ॥*॥ आकृतिगणोऽयम् । तेन सिलिन्दप्रभृतयो[६] द्रष्टव्याः ॥*॥ इति शिवादिः ॥

शुभ्रशलाकाशुकविशदेवतरा गन्धपिङ्गलाशकुनी[७] ॥ २१८ ॥

द्व्यचश्शुभ्राभ्यिस्य ढणित्यनेन[८] शुभ्रादेर्गणाड्ढण् भवति ॥*॥ शुभ्रस्यापत्यम् । शौभ्रेयः ॥*॥ शालाकेयः ॥*॥ शौकेयः ॥*॥ वैशेयः ॥*॥ दैवतरेयः ॥*॥ गान्धपिङ्गलेयः । नदीनाम्न्यणि[९] ॥*॥ शाकुनेयः ॥ २१८ ॥

---

१ उत्कार° E.; उत्कारु° F.; A. om. text and comm.

२ उत्कारु° पाठाद्भवति C.; ञ्भवति B. C.

३ सेनांगबाध° C.; सेनांतरभावाध° B.; सेनांतरन्यबा° F.; सेनीत्तण्यवाध° D.; cf. Pâṇ. iv. 1, 152.

४ इति प्राप्ते B. C.; इञि प्राप्ते D.

५ केषांचित्तघड इतो° F.; केषांचिद्धिद्रइतो दणि च D.; घङ् इतो° B.; इतो णि च C.; cf. P. iv. 1, 122 (f. inst. भूरि, संधि śl. 213).

६ शिलिंदप्रभृतयो D.—Hem. has शिलिंद; Yajñ. आकृतिगणोऽयम् । तेन° सिंदलस्य सैंदल इत्यादि द्रष्टव्यम्.

७ °विशादेवतरा° C.; A. om. text and comment.

८ ?द्व्यज्शुभ्रा° B. C. F.; द्व्योन्शुभ्रादिस्य द्वणित्यनेन D.; cf. Pâṇ. iv. 1, 121-3.

९ Cf. Pâṇ. iv. 1, 113.—Kâś. V. ed. has गुद्धपिङ्गला, MS. *a.* गडुपिंगला; the others as above.

कर्षो विष्टपुरः शकंधिविधवाशालूकगोधाम्बिका१
लेखाभ्रूविकसाजबस्तिशकलाशोकाश्वबीजाश्मनः२।
गङ्गा पाण्डवभारताजिरदिशः३ शुक्रोग्रविग्रेतरा-
ऽणीवालीढसुदन्तभाणशतलाः कर्पूरकद्रू तुदः४ ॥२१९॥

कार्षेयः ॥ * ॥ वैष्टपुरेयः । विष्टपर इत्यन्यः५ ॥ * ॥ शाकंधेयः ॥ * ॥ वैधवेयः । क्षुद्राभ्यो वा ण्ऐर इति६ पक्षे णेरप्रत्ययबाधनार्थः ॥ * ॥ शालूकेयः७ ॥ * ॥ गौधेयः ॥ गोधाया ढ्रगपि८ । गौधेरः ॥ आरगुदीचामित्यारगपि९ । गौधारः ॥ अर्थव्यवस्था तु लोकतः१० । तेन योऽहिना गोधायां जन्यते स गौधेरो गौधारश्च११ भवति । वामनस्तु द्वयमपि न मन्यते । कारणं न विद्मः ॥ * ॥ आम्बिकेयः । मानुषीनाम्न्यणि१२ ॥ * ॥ लैखाभ्रेयः१३ ॥ * ॥ वैकसेयः१४ ॥ चतुष्पाज्जातिवाचिनी कृकासेति भोजः१५ । किमपि कसतीति किकसेत्यन्यः१६ ॥ मानुषीनाम्न्यणि ॥ * ॥

---

१ कर्षवि° D. E.; कर्षू वि° B. F.; कर्षिवि° C.; विष्टपुरं D. E. F.; शकंधु° सकंधि E.; शालूकिमोदांबि° B.

२ लेखाभ्रः विकशा° शोकार्श्ववीजाः श्म च D.; °विकशाजबस्ति° F.; °शोकाश्व बी° C.

३ पांडवा° विशः B.; °दिशाः F.

४ °सतलाः° E.; शवलाः B. C.; कंद्रुतुदः C.; °वंद्रुतुदः F.; A. om. text and comm.

५ D. om. from विष्टपुर.—Hem. has both forms; Yajñ. also विष्टपर इति केचित्पेठुः; Bö. विष्टपुर (*var. l.* विष्ट। पुर).

६ Cf. P. iv. 1, 131 (ढ्रक्).

७ शालीकेयः B. C.

८ डरोपि D.; ढ्रगपि F.; P. iv. 1, 129.

९ Cf. Pâṇ. iv. 1, 130.

१० अर्थव्यवस्थमुलोकेः D.

११ गोधेरो गोधारश्च B. C.

१२ Cf. Pâṇ. iv. 1, 113.

१३ लेखाभ्रेयः B. C. F.—Yajñ. forms लेखाभ्रवेयः; cf. however P. vi. 4, 147; also p. 58, note 15.

१४ वैकशेयः B. C. D. F.

१५ ? कृकसेति° B. C.; श्रीभोजः D.

१६ कशतीति किंकशेत्यन्यः D.—Bö. has विकास (*var. l.* विकंसा); Yajñ. विकसा & विकास; Hem. विवशा & किकशा; Kâṣ. V. ed. कृकसा (for which MS. *a.* विकसा). Cf. also कृकलास ṣl. 221.

आजवस्तेयः । गृष्ट्यादिपाठाड्ढञपि[1] ॥ * ॥ शकलस्य । शाकलेयः[2] ॥ * ॥ आशोकेयः । मानुषीनाम्न्यणि ॥ * ॥ आश्वेयः ॥ बैजेयः ॥ बीजाश्व इत्यन्यः[3] ॥ * ॥ आश्मेयः ॥ अश्वादिपाठाद् आश्मायनः ॥ * ॥ गाङ्गेयः ॥ * ॥ पाण्डवेयः । भोजस्तु पाण्डुशब्दाड्ढकि । अकद्रुपाण्ड्वोर्ढे उलोप[4] इत्युकारलोपाभावं मन्यते । अत्र वामनमतानुसारेण पाण्डवशब्दः पठितः ॥ * ॥ भरतस्यापत्यम् उत्साद्यञि । भारतः । तस्यापत्यं युवा । भारतेयः ॥ भरत इति भोजः[5] ॥ * ॥ आजिरेयः ॥ * ॥ दैश्वेयः ॥ * ॥ शौक्रेयः ॥ * ॥ औग्रेयः ॥ * ॥ वैग्रेयः ॥ * ॥ इतरस्य । इतराया वा । ऐतरेयः ॥ * ॥ आणीवेयः । आणीविरित्यपरः[6] ॥ * ॥ आलोढेयः ॥ * ॥ औदन्तेयः ॥ * ॥ भाणेयः ॥ * ॥ शातलेयः । शवल इत्यपरन्यः[7] ॥ * ॥ कार्पूरेयः ॥ * ॥ कद्रुर्नाम दिव्या गौः । तस्याः काद्रवेयः ॥ यस्तु संज्ञायामूङन्तः कद्रूशब्दस्तस्य ढण् अस्त्येव[8] ॥ * ॥ तौदेयः ॥ २१९ ॥

कुबेरिकान्यतरविमातृबन्धकी-
कुमारिकाः परिधिमृकण्डुविश्रयः ।
किशोरिकाजरतिखदूररोहिणी-
कुठारिकास्त्वतिथिसुदक्षवादनाः[9] ॥ २२० ॥

---

१ See sloka 226.

२ सकलस्य° B.; om. C.; साकलेयः B. C. F.; कलेयः D.—शकल Bö.; शकला Yajñ.; Hem. doubtful; Kâs. V. wrongly ककल (*var. l.* & MS. *a.* शकल).

३ बैजाश्वेये इत्यन्य । D.—Hem. बीज । अश्व । बीजाश्व ।; Yajñ. also बीज । अश्व । बीजाश्वस्य बैजाश्वेय इत्यन्ये.

४ °पांडोर्ढोर्लोप B.; °पांडोटेर्लोपो E.; (श्रीभोज°) अकडुपांडोर्ढोर्लोपे D.; अकद्रूपांडोर्ढे लोपः F.—Cf. P. vi. 4, 147; Vop. 7, 6.

५ Bö. has भारत (*var. l.* भरत); Yajñ., Hem. भारत; Kâs. V. भरत.

६ आणावेयः आणावि° C.; D. om. from आणीवि°.—Hem. has आणीवि; the others अणीव.

७ शावलेयः । शवल° B. C.; इत्यन्यः C.; D. om. from शवल°.—Bö. has शतल (*var. l.* खातल); Yajñ. शतल; Hem. शतल and शवल; Kâs. V. ed. *var. l.* शबल.

८ Viz. by Pâṇ. iv. 1, 120-1.

९ A. om. text and comment.

कौबेरिकेयः। मानुषीनाम्न्यणि ॥ * ॥ आन्यतरेयः ॥ * ॥ विरुद्धाया मातुः। वैमात्रेयः। असोदर्यो भ्राता ॥ * ॥ बान्धकेयः। बान्धकिनेय इत्यपि[१]। क्षुद्राभ्यो वा णेर इति णेरप्रत्यये ॥ * ॥ कौमारिकेयः। मानुषीनाम्न्यणि[२] ॥ * ॥ पारिधेयः ॥ * ॥ मार्कण्डेयः। मृकण्डुरित्यपि[३] वामनः। कथं मार्कण्डः। मृकण्ड इति प्रकृत्यन्तरम्। तेन[४] ऋष्यण् भविष्यति ॥ * ॥ वैश्रेयः। गृष्ट्यादिपाठाड्ढञपि[५] ॥ * ॥ कैशोरिकेयः। मानुषीनाम्न्यणि ॥ * ॥ जरतिनः। जारतेयः[६] ॥ * ॥ खादूरेयः[७] ॥ * ॥ रौहिणेयः। रोहिणी मानुषी गौरपि ॥ * ॥ कौठारिकेयः। मानुषीनाम्न्यणि ॥ * ॥ आतिथेयः ॥ * ॥ सौदत्तेयः ॥ * ॥ वादनेयः ॥ २२० ॥

बलीवर्दिशतद्वारशलाकाभ्रूशलाथलाः[८]।
अकशायोऽनुदृष्टिश्च कृकलासप्रवाहणौ[१०] ॥ २२१ ॥

बालीवर्देयः[११] ॥ * ॥ शातद्वारेयः ॥ * ॥ शालाकाभ्रेयः ॥ * ॥ शा-

---

१ Yajñ. has only: बंधकी स्वैरिणी तस्या अपत्यं बांधकिनेयः ॥

२ C. D. om. from आन्यतरेयः.

३ मृकंडु° C. D. F.; मुकंडु° B.—Bö., Hem. मृकण्डु & सृकण्डु; Yajñ. मृकंड & सृकंडु, Kâş. V. ed. मृकण्डु *var. ll.* सृकण्डु & मृकण्डु, MS. *a.* सृकंडु। मृकंडू.

४ कथं मार्कंडेः। मृकंड इत्यपि प्रकृत्यतरं तत D.

५ Cf. şl. 226.—विश्चि Bö., Pâṇ. eds.; विश्रि Yâjñ.; om. Hem.

६ ? जरनिः। लारतेयः D.—जरतिन् Kâş. V., Bö.; जरति Yajñ. (जरतिर्जरठा तस्या आरतेयः); om. Hem.

७ खादूरेयः F.; खाड्गरेय D.—खडूर Bö., Hem.; खदूर Yajñ.; खदूर Kâş. V. ed., खद्वर MS. *a.*—Cf. खदूरक şl. 215; page 258, note 8.

८ बलीवर्द्दशत° F.; °शलाभ्रूशलाथलाः D.; शलाकाभ्रशलाष्पलाः C.; °शलाघलाः F.

९ Thus D. E. & Bö., Yajñ.; अकशापो B. F. & Kâş. V. ed. (अकशाक MS. *a.*); आकाशापो C.; अकस्रप Hem.

१० A. om. text and comment. Yajñ. has the same stanza.

११ Kâş. V. has बलिवर्दिन्; Bö., Yajñ. as above; om. Hem.

लाघलेयः[१] ॥ * ॥ आकशापेयः[२] ॥ * ॥ आनुदृष्टेयः ॥ * ॥ कार्कला-सेयः[३]। एष चतुष्पाज्जातिः ॥ * ॥ ग्रात्राह्वणेयः ॥ २२१ ॥

जीवभारमरुक्मिण्यौ वायुदत्तसुवक्षसौ ।
मृदुमृदौ सुदामा च वासिष्ठे श्यामलक्ष्मणौ[४] ॥ २२२ ॥

जैवेयः ॥ * ॥ भरमस्यापत्यं भारमः । तदपत्यं युवा भारमेयः । भरम इति भोजः[५] ॥ * ॥ रुक्मो वर्णः । सोऽस्या अस्तीति रुक्मिणी । तस्या रौक्मिणेयः[६] । मानुषीनाम्न्यणि ॥ * ॥ वायुदत्तेयः ॥ * ॥ सौवक्षसेयः ॥ * ॥ मार्दवेयः । उढ[७] इत्यनेनोलोपे ॥ * ॥ मार्द्रेयः ॥ * ॥ सौदामेयः ॥ * ॥ श्यामेयः । लाक्ष्मणेयः । वासिष्ठश्चेत् ॥ अन्यच श्यामायनः । अश्वादिपाठात् । श्यामिरिति वामनः[८] । लाक्ष्मणिः[९] ॥ २२२ ॥

गोदन्तकुशाम्बानिधिमकष्टुजिह्वाशिनः[१०] खडोन्मत्ताः[११] ।
श्वब्रह्मकृतशताहरयमष्टवष्टिकसुनामधर्मिण्यः[१२] ॥ २२३ ॥

---

१ शालाघलेयः C.; शालाघलेयः F.—शलाघल Bö., Yajñ.; शालाघल Hem.; शालाचल (!) Kâś. V. ed., शालस्थल MS. *a*.

२ आकशापेयः B. C. F.; p. 264, n. 9.

३ कार्क्कलाशेयः D.; काकालासेयः C.

४ A. om. text and comment.

५ ओभोजः C. D.—Bö., Yajñ. have only भरम; Hem., K.V. ed. only भारम.

६ सोऽस्यास्तीति° MSS.; रुक्मणी° D.; रौक्मणेयः C.

७ ऊढ F.; ? ओढें cf. P. vi. 4, 146-7; p. 263, n. 4.

८ ? Kâś. V. has श्याम in the *aśvâdi*, iv. 1, 110; cf. śl. 239.

९ ? Thus also Yajñ.; लाक्ष्मणिः D. (Hem., Kâś. V.); लाक्ष्मणः B. C. F.

१० कुशावानिधिः°D.; कुशांबामिध° C.; जिह्वासिनः D. E.

११ खडोन्मंताश्च E.; खडोन्मडोन्मक्षश्वखरोन्मत्ता च D.

१२ D. E. om. श्व (च preceding); शुखब्रह्म° C.; श्वन्ब्रह्म° B. F.; °शाताहर° E.; शतोहर° F. (copied from शाता हर?); cf. n. 5, next page; यमष्टटिक° B. C. F.; यमष्टुष्टिक D.; यवष्टिक E.; cf. n. 6, next page.

गौदन्तेयः ॥ * ॥ कौशाम्बेयः ॥ * ॥ आनिधेयः[1] ॥ * ॥ माकष्टेयः ॥ * ॥ जैह्माशिनेयः[2]। दाण्डिनायनेत्यादिनाऽन्याजादिलुगभावः ॥ * ॥ खाडोन्मत्तेयः। एषा नदी ॥ खर इवोन्मत्ता खरोन्मत्तेत्यभयनन्दी[3] ॥ * ॥ शौवेयः[4] ॥ * ॥ ब्राह्मकृतेयः ॥ * ॥ शाताहरेयः[5] ॥ * ॥ यामष्टेयः। मघष्टुरित्यन्यः[6] ॥ * ॥ टैकेयः ॥ * ॥ सुनाम्नः। सौनामेयः। बाह्वादित्वात् सौनामिः[7] ॥ * ॥ धार्मिणेयः। मानुषीनाम्न्यणि ॥ २२३ ॥

**कुषीतकविकर्णौ च काश्यपे परिकीर्तितौ[8]।**

कौषीतकेयः। वैकर्णेयः। काश्यपश्चेत् ॥ अन्यत्र कौषीतकिः। वैकर्णिः ॥ * ॥ एते प्रायेणर्षिवाचकाः। बह्वनामिञि प्राप्ते केषांचिदणि ढञि च प्राप्ते पाठः ॥

आकृतिगणोऽयम्। तेन कुदन्तानुदन्तशतकृतप्रभृतयो[9] द्रष्टव्याः ॥ * ॥ इति शुभ्रादिः ॥

**कल्याणी सुभगा मध्या ज्येष्ठानुदृष्टिबन्धकी[10] ॥ २२४ ॥**

---

१ आमिधेयः C. D.—This word is not given by the other works.

२ जैह्मासिनेयः D.; cf. P. vi. 4, 174.

३ ०अभयनंदी B.; ०उभयनंदी F.; उभनंदी D.—Bö., Hem., Kâś. V. have खडोन्मत्ता, Yajñ. खडोन्मत्तः.

४ शौखेयः C.

५ शातोहरेयः F.; शाताहारेयः D.—Bö., Yajñ. शाताहर (as E.; cf. note 12, preceding page); Kâś. V. ed., MS. शतावर; Hem. शताहार.

६ Thus F.; मथष्टुरित्यन्यः B.; यमष्टुरित्यन्यः C.; om. D.—Kâś. V. ed. has मघष्टु & *var. l.* यमष्ट; Bö. पवष्टुरिक; Yajñ. यवष्टुरिक; Hem. मखंडु, मघुडु (? मथुडु), and (for मकष्टु above) मकघु (? ०घु); also मचक्र.

७ Cf. śl. 204.

८ कुशीतकाविकर्णौ० B.; all MSS. read कुशीतक, कौशी० etc.; A. om. text and comment.

९ ?कुंदत्तान्वदंत० B.; कुंदंतीतुदंत० C.; सुदन्तानुदशतकृत० D.—Of these Hem. has कुदंत; Yajñ. says: आकृतिगणोयं तेन कुदंतिशतचतप्रभृतयोऽत्र द्रष्टव्या इति वर्द्धमानः.

१० जेष्ठा० D.; ज्येष्ठानुबंधकी तथा। C.; A. om. text and comment.

कल्याण्यादेर्ङिन् चेत्यनेनैतस्मादपत्ये ढण् तद्योगे ङिनादेशश्च[१] ॥ * ॥ कल्याण्या अपत्यम् । काल्याणिनेयः ॥ * ॥ सौभागिनेयः[२] ॥ * ॥ माध्यिनेयः ॥ * ॥ ज्यैष्ठिनेयः[३] ॥

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितम् ।
को नग्नमुषितप्रख्यं बक्तु मन्येत राघवम्[४] ॥

भरतस्य राममित्यर्थः ॥ * ॥ आनुदृष्टिनेयः ॥ * ॥ बान्धकिनेयः ॥ २२४ ॥

**मध्यमा च परस्त्री च प्रोक्ताऽनुसृष्टिदुर्भगे[५] ॥**
**बलीवर्दी[६] कनिष्ठा च जारस्त्री जरती तथा ॥ २२५ ॥**

माध्यमिनेयः ॥ * ॥ परस्य स्त्री । परस्त्री । तस्याः पारस्त्रैणेयः । यथा । पारस्त्रैणेयपुत्रव्ययशिथिलशुचं शक्रमाराधयाव[७] ॥ यदा तु परा चासौ स्त्री च । परस्त्री । तस्याः कर्मधारये परस्त्रियाः परशुश्चेत्यनेन पारशव[८] इति भवति ॥ अन्ये तूभयथापि पारस्त्रैणेय इति मन्यन्ते ॥ * ॥ आनुसृष्टिनेयः ॥ * ॥ दौर्भागिनेयः[२] ॥

कृते सौभागिनेयस्य भरतस्य विवासितौ ।
पित्रा दौर्भागिनेयौ यौ पश्यतं चेष्टितं तयोः[९] ॥ * ॥

बलीवर्द्याः । बालीवर्दिनेयः[१०] ॥ * ॥ कानिष्ठिनेयः ॥ * ॥ जारस्त्रै-

---

१ ०ङिश्चेत्यनेन० ङिनादेशश्च C.D.F. (Pâṇ. इनङ्).

२ Thus all MSS.; Yajñ. makes सौभगिनेयः (of दुर्भगा the metron. is not given), cf. however Pâṇ. vii. 3, 119.

३ माध्यनेयः० B.; जेष्ठिनेयः B. D.

४ Bhaṭṭik. 5, 84.

५ प्रोक्तानुसृष्टि दुर्भगा B. C. E. F.

६ बलिवर्द्दी F.—बलिवर्दिन् (-ब-लिवर्दिकनिष्ठ०) Yajñ.; बलीवर्दी Bö.; बलीवर्दी Hem.; वलवती Kâś. V. a.—A. om. text and comment.

७ ०आराधयावः D. F.

८ पार्शव D.; cf. विदादि (हरितादि) P. iv. 1, 104; śl. 238.

९ Bhaṭṭ. 4, 35.—च for यौ B. C. D.; पश्यतश्च० B. C. F.; पश्यता वेष्टितं० D.

१० बालिवर्द्दिनेयः C. and Yajñ.

णेयः ॥ * ॥ जारतिनेयः[१] ॥ * ॥ कल्याण्यादीनां शुभ्राद्यन्तत्वाड्ढणि[२] सिद्धे ङिनर्थं[२] वचनं शेषयोरुभयार्थम् ॥ २२५ ॥ इति कल्याण्यादिः ॥

गृष्टिर्हृष्टिस्तथा विश्रिर्वालिकुद्री[३] च मित्रयुः ।
हल्या युक्तोऽजबस्तिश्च गृष्ट्यादौ विदुषां मतः[३] ॥२२६॥

गृष्ट्यादेर्ढञित्यनेनास्माड्ढञ् ॥ * ॥ गृष्टेरपत्यम् । गार्ष्टेयः । अस्य चतुष्पात्त्वाड्ढञि सिद्धे[४] लक्षणया मनुष्यादिवृत्तेर्ग्रहणम् ॥ * ॥ हार्ष्टेयः[५] ॥ * ॥ वैश्रेयः ॥ * ॥ वालेयः ॥ * ॥ कौद्रेयः ॥ * ॥ मित्रयुप्रलयकेकयस्येय् यादेरित्यनेनारैचि यादेरियच्[६] । मैत्रेयः ॥ * ॥ हलेः । हालेयः ॥ * ॥ आजबस्तेयः[७] ॥ * ॥

विश्र्यजबस्तिभ्यां शुभ्रादित्वाड्ढणपि ॥ गार्ष्टेयस्यापत्यं पूज्यमित्यादिविवक्षायामत इञिति[८] विहितस्येञो ञिण्णार्थेभ्योऽणिञोरिति[९] ञित्त्वाड्ढञः परस्येञः श्लुग्भवति । तेन गार्ष्टेयः पिता । गार्ष्टेयः पुत्र[१०] इत्यादिः । ढणः परस्य लिञः श्रुतिरेव । शौभ्रेयः पिता । शौभ्रेयिः पुत्रः ॥ २२६ ॥ इति गृष्ट्यादिः ॥

रेवती कुक्कुटाक्षश्च ग्राहः कर्णवृकादिकः ।
मणिद्वाराश्वतः पाली स्याद्[११] वृकाद्बन्धुवञ्चिनौ ॥२२७॥

रेवत्यादेष्ठणित्यनेनास्माट्ठण् ॥ * ॥ रेवत्या अपत्यम् । रैवतिकः

---

१ जारमिनेयः C.; जारस्तिनेयः D. —Yajñ. has जगती, जागतिनेय; K.V. *a.* जनकी; the others जरती.

२ ड्याङंतत्वात्° B.; ड्याड्यंतत्वात्° F.; °ड्यंतत्वाड्ढणि C.; ङिनर्थं C. F.

३ ? Thus (वालि) B.C.D.F. & Hem.; वालि° E.; बलि Bö., Yajñ., Kâs. V.—A. om. text and comment.

४ Cf. Pâṇ. iv. 1, 135.

५ Yajñ. reads हृषि (हार्षेय).

६ Cf. Pân. vii. 3, 2.

७ आजवस्त्येयः B. (व F.; Yajñ., Kaumudîm.; व Bö., Kâs. V., Hem.).

८ युवामित्यादि° C.; °इञि B.C.F. —P. iv. 1, 95.

९ ऽणिनोरिति B. C. F.—Cf. P. ii. 4, 58.

१० गार्ष्येयः पिता गार्ष्टेयिः पुत्र B.C.F.

११ °वंचितौ F.—A. om. text and comment.

॥ * ॥ कौक्कुटाक्षिकः[१]। ढञिञोरपवादः ॥ * ॥ ग्राहः कर्णवृकादिक इति कर्णवृकावादी यस्य स कर्णवृकादिकः[२]। कार्णग्राहिकः। वार्कग्राहिकः ॥ दाण्डग्राहिक इत्यन्ये ॥ * ॥ माणिपालिकः ॥ दौवारपालिकः ॥ आश्वपालिकः ॥ ढणो[३]ऽपवादः ॥ * ॥ वार्कबन्धुकः[४] ॥ वार्कवञ्चिकः ॥ च्छ्यणि प्राप्ते ॥ २२७ ॥ इति रेवत्यादिः ॥

वाकिनः काकलङ्कं च गाधेश्चर्मिवर्मिणौ ।
तथा कृतनलोपे स्तः कार्कट्यश्च निगद्यते[५] ॥ २२८ ॥

वाकिनादेरित्यनेनास्मात् फिञ्[६] भवति वा। कग् यथाप्राप्तं च[७] ॥ * ॥ वाकिनस्यापत्यम्। वाकिनकायनिः। वाकिनिः ॥ * ॥ काककायनिः। काकिः ॥ * ॥ लाङ्काकायनिः। लाङ्केयः ॥ लाङ्ककायनिर्लाङ्किरिति भोजः[८] ॥ * ॥ गाधेरकायणिः। गाधेरिः ॥ गारेट इति भोजः[९] ॥ * ॥ चर्मिणश्चर्मिणा वा। चार्मिकायणिः। चार्मिणः ॥ वार्मिकायणिः। वार्मिणः ॥ पक्षे चार्मः। वार्म इति भोजः ॥ * ॥ कार्कट्यकायनिः। कार्कट्यिः[१०] ॥ २२८ ॥ इति वाकिनादिः ॥

---

१ Yajñ. has ककुदाक्षस्य कौकुदाक्षिकः (!); Bö. ककुदाक्ष (*var. l.* ककुट्टाक्ष!); Kaumudîm. and Kâṣ. V. ed. कुक्कुटाक्ष and *var. l.* ककुदाक्ष; MS. *a.* and Hem. कुक्कुटाक्ष.

२ F. adds एवंभूतो ग्राहशब्दः।

३ टणो B. C.; दणो D. (ढण् = Pâṇ. ढक् iv. 1, 120-1).

४ Yajñ. forms वार्कबंधविकः; om. Hem.

५ कार्कघस्य° D. E.; कार्कयस्य° C.; A. om. text and comment.

६ पिञ् B. D.; इञ् C.

७ यथाप्रोक्तं° B. C.; D. om. कग् (Pâṇ. कुग्).

८ लाककायनिः °श्रीभोजः D.—Yajñ. makes लाङ्काकायनिः; Hem. says: लंका। लांकाकायनि ॥ लंकशब्दं केचिदिच्छंति। तन्मते लांककायनिः ॥

९ ? गारेठि इति° B.; गारेटिरिति° C.; गाढेर° F.; गाटेठ दात श्रामाजः D.—Bö., Yajñ. have गौधेर; Kâṣ. V. ed. गारेध; MS. *a.* गोरेध; Hem. गारेट.

१० काक्कघकायनि। वार्कघिः D.; कार्कज्यिः B.; F. om. कार्कव्यिः.—Bö. has कार्कष; Yajñ. कर्किष; Kâṣ. V. ed. कार्कव्य (MS. *a.* कार्ष्यका); Hem. कार्क्य (कर्कटस्यापत्यं).

तिको यमुन्दौरससैन्धवौरसाः
संज्ञा शिखा देवरथोऽथ शल्यका[१]।
शुभः सुयामा कुरुशीतलोमका[२]
गङ्गा वरेण्यः कितवश्च तैतलः ॥ २२९ ॥

तिकादेरित्यनेनैतस्मात् फिञ् भवति ॥ * ॥ तिकस्यापत्यम् । तैकायनिः ॥ * ॥ यामुन्दायनिः ॥ * ॥ उरसस्य क्षत्रियस्यापत्यम् औरसः । तस्य । औरसायनिः ॥ * ॥ सैन्धवायनिः ॥ * ॥ औरसायनिः । उर इति भोजः[३] ॥ * ॥ सांज्ञायनिः[४] ॥ * ॥ शैखायनिः[५] ॥ * ॥ दैवरथायनिः । देवर[६] इत्यन्यः ॥ * ॥ शाल्यकायनिः[७] ॥ * ॥ शौभायनिः । शुभेत्यन्यः[८] ॥ * ॥ सुयाम्नः । सौयामायनिः[९] ॥ * ॥ कौरवायणिः ॥ * ॥ शैतायनिः । भैतायनिरित्यपि[१०] ॥ * ॥ लौमकायनिः[११] ॥ * ॥ गाङ्गा-

---

१ सिखा° E.; °रथो प श° F.; MSS. apparently शल्यका, cf. note ७.

२ कुभसीतलोमगा E.; शुकः °सीतलोमवा D.—A. om. text and comm.

३ और इति° F., om. D.—Bö. has उरस् (*var. l.* उरश) & औरस (*var. l.* औरश); Hem. उरश, औरश & उरस्; Kâṣ. V. ed. उरस् (om. *a.*); औरस (औरश MS. *a.*) & *var. l.* रस; Yajñ. उरस् & रस.—Cf. also उरसा (?) in ṣl. 231.

४ संज्ञायनिः B. (also Yajñ.); सांचायनिः D.

५ शैषायनिः B.; शौखायनिः D.

६ Thus also Kâṣ. V. MS. *a.* (ed. देवरथ); दैवरथ F.; Hem. देवर। देवरथ। दैवर। दैवरथ।

७ शाल्पकायनिः (?) B. D.; शालकायनिः F.—Hem. has शल्यका (or °ल्प°); om. the others (for खल्यका s. next ṣl.).

८ शुभत्यन्यः D.—Hem. has शुभ and शुभा; the other works only शुभ.

९ Cf. सुपामन् ṣl. 231.—Bö., Yajñ., Hem. have only सुपामन्; Kâṣ. V. ed. सुयामन् and *var. l.* सुपामन्; MS. *a.* सुयामा & सुयामन्.

१० कौरवायणिः। नैतायनिः। भैतायनिः D.; B. C. om. भैतायनिरित्यपि.—Hem. (and Kâṣ. V. ed. *var. l.*) भीत only; the other works have neither word.

११ लौमिकायनिः D.

यनिः। क्षत्रियवृत्तिर्गङ्ग इत्यन्ये[1] ॥ * ॥ वारेण्यायनिः ॥ * ॥ कैतवायनिः ॥ * ॥ तितलस्यापत्यं तैतलः। तस्य तैतलायनिः[2] ॥ २२९ ॥

ग्राम्यामित्रोदन्यकौरव्यरूप्या
बालानीलौ[3] वह्यकाखल्वके च[4]।
शाट्यो यज्ञश्चन्द्रमा लङ्कवश्च
दक्षश्चोखा रूक्षगोकक्ष्यबन्धाः[5] ॥ २३० ॥

ग्राम्यायणिः ॥ * ॥ आमित्रायणिः ॥ * ॥ औदन्यायनिः[6] ॥ * ॥ कौरव्यस्य क्षत्रियस्य। कौरव्यायणिः ॥ ब्राह्मणवाचिनस्त्विञेव तस्मुचि च। कौरव्यः पुत्रः ॥ * ॥ रौप्यायणिः[7] ॥ * ॥ बालायनिः ॥ बाल इति भोजः।[8] बालशिख इत्यन्यः ॥ * ॥ नैलायनिः ॥ * ॥ वाह्यकायनिः[9] ॥ * ॥ खाल्वकायनिः[10]। खल्वेत्यन्यः ॥ * ॥ शटस्यापत्यं शाट्यः। तस्य शाट्यायनिः ॥ * ॥ याज्ञायनिः ॥ * ॥ चान्द्रमसायनिः ॥ * ॥ लाङ्कवायनिः। लाङ्कटम् अणन्तमित्यन्यः[11] ॥ * ॥ दाक्षायणिः ॥ * ॥ औ-

---

१ गंगा। गंग। Hem.; D. om. from क्षत्रिय°.

२ ? Thus B. F.; तितिल° तैतिल° तैतिलायनिः B. F.; तितल° तैतिल° तैतिलायनिः C.—तैतल Bö., Hem.; तैतिल Kâṣ. V. ed. (तैतल MS. *a.*); तितिलस्य तैतिलस्तस्य तैतिलायनिः Yajñ. —? Cf. ṣl. 163 तैतलिन्.

३ °रूपा° F.; वालानीलौ MSS.

४ वाह्यका° D. E.; खल्पका च E., cf. note १०.

५ दक्षाश्चाखा° E.; दक्षश्चोषारूक्ष-गोकक्ष° B. C. F.; रूष्यगोक° D. E.; A. om. text and comment.

६ उदन्य Kâṣ. V., Hem.; उदञ्च Bö., Yajñ.

७ रूप्य also Bö., Hem.; Kâṣ. V. ed. (MS. *a.* कृष्य); रूथ Yajñ., cf. रूच.

८ इति च भोजः B. F.; चाल इति श्रीभोजः (om. बालशिख इत्यन्यः) D.—बाल। शिखा। बालशिखा। Hem.

९ All works read वह्यका (not वा°).

१० साल्वकायनिः F.—खल्यका Yajñ. & (*var. l.* खल्या) Bö.; खल्वका & खल्व Hem.; खल्व Kâṣ. V. ed.; खल्पका (as E.) MS. *a.*

११ लांकावायनिः° C.; °लाकटमण्° F.—Hem. has लंकव; om. the others.

खायनिः[1] ॥ * ॥ रौचायणिः[2] ॥ * ॥ गौकच्चायणिः[3] ॥ * ॥ बन्धा-याः । बान्धायनिः ॥ बिम्ब इत्यन्यः[4] ॥ २३१ ॥

ध्वजवदुतथ्यारथ्याः[5] सुपामधैवरवसूरसारद्वाः[6] ।
भौरिकिभौलिकिजाजलचैटयताश्चापि[7] सैकयतः ॥ २३१ ॥

ध्वाजवतायनिः । ध्वाजवत इत्यपरन्यः[8] ॥ * ॥ औतथ्यायनिः ॥ * ॥ आरथ्यायनिः[9] ॥ * ॥ सुपाम्नः । सौपामायनिः ॥ * ॥ धैवरायणिः ॥ * ॥ वासवायनिः ॥ * ॥ औरसायनिः ॥ * ॥ आरद्वायनिः[10] ॥ * ॥ भूरिकस्यापत्यं भौरिकिः । तस्य भौरिकायणिः ॥ * ॥ भौलिकायनिः[11] ॥ * ॥ जाजलिनोऽपत्यं जाजलः । तदपत्यं जाजलायनिः[12] ॥ * ॥ चैटयतायनिः ॥ * ॥ सैकयतायनिः[13] ॥ * ॥

---

१ औषायणिः B. C. F.; उखा Hem.; wanting in the other works.

२ ? रौष्यायणिः B. D.—Kâṣ. V. ed. *var. l.* ऋष्य (MS. *a.* वृष्य, and रूष्य for रूप्य cf. note ७, last page); om. Bö., *Yajñ., Hem. (cf.* रूप्य *same note).*

३ गौकत्तायणिः F.

४ वंधीयाद्वांधायनिः। (om. बिम्ब°) D.; इत्यन्ये F.—Hem. has बंधा & बिंबा, the others neither [Kâṣ. V. ed. has *var. ll.* बन्धु & आबन्धका].

५ °उततथ्योरथ्याः D. F.; °उतव्यारथ्याः E.

६ सुयाभवीवर° D.; सुयामधीवरवासवोरसारद्वाः F.; °धैरव° B.; वैवरवसूरसारद्वाः E.; °सूरद्वाः B.; °सूरसारद्वाः C.

७ °जाजलि° B. C. F.—A. om. text and comment.

८ ध्वाजवातायनिः B. C. F.; ध्राजवत इत्यन्यः D.; इति पृथगन्यः B. C.—Kâṣ. V. ed. has ध्वाजवत (*var. l.* ध्वजवद्) MS. *a.* ध्वाजयत; Bö., Yajñ. वाजवत; Hem. ध्वाजवत & ध्वाजवत् (!).

९ ? औरथ्यायनिः D. F.; om. B.—आरथ्य Hem.; wanting in the other works; cf. आरड्ड (आरद्ध) next note.

१० ? आरद्धायनिः MSS.—आरद्ध Bö. Yajñ., Kâṣ. V. ed. (MS. *a.* आरड्ड); Bö., *var. l.* आरटव; Hem. अरद्ध । अरद्धा । आरद्ध । आरद्धा । (or °ड्ड° for °द्ध°).—*Cf.* ṣl. 83 notes.

११ Yajñ. has: भुलिकस्यापत्यं भौलिकिस्तस्य भौलिकायनिः.

१२ Hem. & *var. l.* Kâṣ. V. ed. जाजल, MS. *a.* जाजलि; om. Bö., Yâjñ.

१३ शैकयतायनिः B.; शैकतायनिः F.; सैकयनिः D.—Bö., Yajñ. have शैकयत; Kâṣ. V., Hem. शैकयत; but cf. ṣlokas 37 and 267.

अदन्तानामिञि हलन्तानामणि यञिअन्तानां फणि[1]। आदन्तानां ढणि[2] च प्राप्ते वचनम्॥ एते प्रायेणर्षिवाचकाः॥*॥ आकृतिगणोऽयम्। तेन चैजयतचौपयतशैलालप्रभृतयो द्रष्टव्याः[3]॥ २३१॥ इति तिकादिः॥

नडश्चरो बको मुञ्ज[4] उपको लमको नरः।
दासमित्रेतिकप्राणा द्वीपकिंकरकातराः॥ २३२॥

नडाद्धरितादीन्यञन्तात् फणित्यनेन[5] नडादेर्गणात्पौत्रादावपत्ये फण्[6] भवति॥*॥ नडस्यापत्यं पौत्रादिः। नाडायनः॥*॥ चारायणः॥*॥ बाकायनः॥*॥ मौञ्जायनः॥*॥ औपकायनः॥*॥ लामकायनः॥*॥ नारायणः॥*॥ दासायनः॥ मैत्रायणः॥ दासा मित्राण्यस्य। दासमित्रः। तस्य दासमित्रायण इत्यन्यः[7]॥*॥ ऐतिकायनः॥*॥ प्राणायनः॥*॥ उपचाराद् द्वीपस्थो मुनिर्द्वीपः। तस्य द्वैपायनः॥ द्वीपे जातो भवो वा। तदपत्यतया विवक्षित इत्येके। द्वीपेत्येवंनामा स्त्रीत्यन्ये[8]॥*॥ कैंकरायणः॥*॥ कातरायणः॥२३२॥

---

१ पणि B. C. K.; यञि F. (P. iv. 1, 101 फक्).

२ डणि B.; टणि C. (P. iv. 1, 120 ढक्).

३ चैजयतचौपवौपपतवौपपतशैलाल B.; चैबववौययतशौ‾लप्र॰ D.—Bö., Yajñ., Kâṣ. V. ed. have चौपयत। चैतयत (MS. *a*. चैजयत).

४ युंज E.; चरो पको मुंज C.—A. om. text and comment.

५ ? नडात् हरि॰ B. C. F.; नडान् हरितादीन्यञ्यडस्तत्पणि॰ K.; यञ् यडसूत्पणि (*i.e.* यञस्तत्पणि) B. C.; ॰दीन्यञ् यद्रसूत्पनेन F.; पणित्य॰ D.; cf. P. iv. 1, 99-101.

६ पण् or यण् MSS. [फक् Pâṇ.].

७ दासायनः। मैत्रायणः। दासा मित्राणि यस्य स दासमित्रस्तस्य गोत्रापत्यं दासमित्रायण इति केचित् Yajñ.

८ Hem. has both द्वीप and द्वीपा.

चटकखरपशोणा लङ्कसंकृत्यनाट्या[1]
मितसुमतदुर्गब्रह्मदत्ताजलोहाः ।
तृणबदरकुमारस्तम्बचित्राग्यकाश्याश्
चमसिशकटदण्डिन्निन्धजालंधराश्च[2] ॥ २३३ ॥

चाटकायनः । चटकेत्यन्यः[3] ॥ * ॥ खारपायणः ॥ * ॥ शौणायनः[4] ॥ * ॥ लाङ्कायनः ॥ * ॥ सांकृत्यायनः । सुकृत्य इति भोजः[5] ॥ * ॥ नटस्यापत्यं नाट्यः । तस्य नाट्यायनः[6] ॥ * ॥ मैमतायनः । मित इत्यन्ये[7] ॥ * ॥ सौमतायनः ॥ * ॥ दौर्गायणः ॥ * ॥ ब्राह्मदत्तायनः ॥ * ॥ आजायनः ॥ * ॥ लौहायनः । अलोह इत्यन्यः[8] ॥ * ॥ तार्णायनः ॥ * ॥ बादरायणः ॥ * ॥ कौमारायणः ॥ * ॥ स्ताम्बायनः[9] ॥ * ॥ चैत्रायणः ॥ * ॥ आग्रायणः ॥ * ॥ काश्यायनः[10] ॥ * ॥ चमसिनः । चामसायनः ॥ * ॥ शकटमिव भारक्षमः[11] । तस्य शाकटायनः ॥ * ॥ दण्डिनः । दाण्डिनायनः ॥ * ॥ इन्धस्य । ऐन्धायनः ॥ * ॥ जालंधरायणः ॥ जनंधर इति भोजः । जलंधर इत्यन्यः[12] ॥ २२२ ॥

१ °संकृत्यनाट्या B. C. K.; °शांकृत्यनाट्यामितसुत° D.

२ दंडि त्विंध° D.; काश्याश्च° जालंधराश्च B.C.K.; A. om. text & comm.

३ चाटकेत्यन्य: B. C. K.

४ शौकायनः D.

५ सांस्कृत्यायनः । सुकृत इति° F.; श्रीभोजः D.—? शांकृत्य or संस्कृत्य; Bö., Hem., Kâṣ. V. ed. have सुकृत्य (MS. *a.* शस्त्रकृत्); om. Yajñ.

६ नाटस्याऽपत्यं° F.; नावस्य° नाव्य° नाव्यायनः B. C. K.—? नाव्य *var. l.* Kâṣ. V. ed.; also MS. *a.* (besides भाव्य & वाव्य); Hem. twice नाव्य; om. Bö., Y.

७ सैवतायनः । (om. मित°) D.—Hem. has both; the others om. मित.

८ अलोहशब्दं केचित्पठंति तन्मते आलोहायनः Yajñ.; Bö., Hem., Kâṣ. V. both; Hem. also आलोह.

९ Hem. has both स्तंब & स्तंभ; the others स्तम्भ; स्तांबायन इत्यन्ये । Yajñ.

१० कास्थायनः B. C. K.

११ F. adds शाकटः (!).

१२ ?जलं-र इति श्रीभोजः ॥ D.; जालंधर इति भोजः । जालंधर इत्यन्यः F.; जानंधरायणः । जानंधर इति भोजः । जालंधर इत्यन्यः B. C. K.—Hem. has जनंधर and जलंधर; Yajñ. जालंधर (comm. जालंधरायणः । जानंधरायण इति भोजः); Bö. जलंधर; om. Kâṣ. V. ed. MS. *a.*

कामुकोदुम्बरौ सायकः किंकलस्
त्यास्मको[१] बालिशः पिङ्गरः पिङ्गलः।
हंसकः कातलः काथलः काश्यपो
दण्डपाश्वाध्वराः शिंशपाहस्तिनौ[२] ॥ २३४ ॥

कामुकायनः। कामक इत्यन्यः[३] ॥ * ॥ औदुम्बरायणः। राष्ट्राख्यराजवृत्तौ[४] त्वौदुम्बरिरिति स्यात् ॥ * ॥ सायकायनः ॥ * ॥ कैंकलायनः ॥ * ॥ त्यास्मकायनः[५] ॥ * ॥ बालिशायनः ॥ * ॥ पैङ्गरायणः ॥ * ॥ पैङ्गलायनः ॥ * ॥ हांसकायनः ॥ * ॥ कातलायनः ॥ * ॥ काथलायनः[६] ॥ * ॥ काश्यपायनः ॥ * ॥ दाण्डपायनः। दण्डम इत्यन्यः[७] ॥ * ॥ आश्वायणः[८] ॥ * ॥ आध्वरायणः ॥ * ॥ शांशपायनः[९] ॥ * ॥ हास्तिनायनः ॥ * ॥

कीर्तितैषा चतूरेफिका स्रग्विणीति वृत्तम् ॥ २२४ ॥

लिगुर्युगंधरामित्रौ[१०] ब्राह्मणस्थिरकाम्बलाः।
अग्निशर्मैत्तिशामुष्यपञ्चालाः सप्तलस्तिकः[११] ॥ २३५ ॥

---

१ ? Thus K.; त्यात्मको° B.; त्यास्माको C.; त्यत्यको E.; त्यस्मको F.; किंकलस्मको D.

२ दंडपश्वाध्वर: B. K.; दंदपाश्वाध्वरा: E.; शंशपा° B. C. K.; शिंशिया° E.; शिंशया° D.; A. om. text & com.

३ D. om. from कामक.—Hem. has कामक; the others कामुक (कामकायन इति केचित् Yajñ.).

४ राष्ट्राख्या राज° C.; राष्ट्राख्यं रा° F.; °राजान्यत: D.

५ Om. by the other works.

६ Thus also Hem., Yajñ.; om. Bö., Kâś. V.; Hem. om. कातल.

७ D. om. दण्डम°.—Hem. has both words; Bö., Kâś. V. om. दण्डम; दंडं पातीति दंडपस्तस्य दांडपायनः। दंडमशब्दं केचित्पठंति Yajñ.

८ अश्व Bö.; अश्व Yajñ.; om. Hem., Kâś. V.

९ All MSS. & Y. make शैंशपायनः; but cf. comm. on śl. 286; P. vii. 3, 1.

१० लिंगु° C. D. F.; युगधरा° D.

११ °शर्मैतिसामुष्य° B. D. E.; A. om. text and comm.

लैगवायनः[1] ॥ * ॥ यौगंधरायणः ॥ * ॥ आमित्रायणः ॥ * ॥ ब्राह्मणायनः ॥ * ॥ स्वैरकायणः ॥ * ॥ आश्वलायनः ॥ * ॥ आग्निशर्मायणः । अग्निशर्मन् वृषगण इति वामनः[2] ॥ * ॥ ऐतिशायनः[3] ॥ * ॥ आमुष्यायणः । गणपाठात् षष्ठ्यलुक् ॥ * ॥ पञ्चालो ब्राह्मणगोत्रवाची[4] । तस्य पाञ्चालायनः ॥ क्षत्रियवाचिनस्तु पाञ्चालः[5] ॥ * ॥ साम्रलायनः । सलल इत्यन्यः[6] ॥ * ॥ तैकायनः ॥ २३५ ॥

**ऋग्जनवृषगणकाव्याः[7] केकरसुमनःशणाश्च वाजव्यः[8] । क्रोष्टृशलङ्कू लोपे ब्राह्मणवाशिष्ठयोश्च कृष्णरणौ[9] ॥ २३६ ॥**

आर्गायणः[10] ॥ ऋगिन्ध इत्यन्यः । ऋग इत्यपरे[11] ॥ * ॥ जानायनः[12] ॥ * ॥ वार्षगणायनः ॥ * ॥ काव्यायनः[13] ॥ * ॥ कैकरायणः[14] ॥ * ॥

---

१ लैंगवायनः C. F.—All the other works have लिगु.

२ Yajñ. has वृषगणे ऋषिगणे वर्तमानोऽग्निशर्मन्शब्दो नडादौ बोध्यः । अग्निशर्मण ऋषेर्गोत्रापत्यम् आग्निशर्मायण इति वृत्तिमतम् । गणरत्नमहोदधौ तु वृषगणशब्दो नडादिरिति स्थितं तदनुरोधाद्वृषगण इति प्रथमांतं बोध्यम् ॥

३ ऐतिसायनः D.

४ ब्राह्मणो गोत्र॰ C.; पंचालो गोत्रवाची ब्राह्मणः Yajñ.

५ पंचालः B. C. K.; याचावाल D.

६ शाम्रलावनः (om. सलल॰) D.; साम्रलायनस्तु सम्रल इत्यन्यः C.—Hem. has both words; Bö., Kâṣ. V. सम्रल; Yajñ. स्वम्रल (स्वाम्रलायनः).

७ ॰काव्याः॰ E.; कास्याः B. C. K.; काश्याः F.

८ ॰सणाश्च॰ B. C. F. K.; शाणाश्च॰ D.; सनाश्च वाजस्यः E.

९ क्रोष्टुशलकू॰ D.; ॰वासिष्ठ॰ B.C. F. K. (cf. śl. 25); A. om. text and comm.

१० आर्गायन(!) B.C.F.K.; आर्चायन D.—ऋग्विदाध्यापकः कश्चिदाचार्योऽप्युपचारादृक् तस्य गोत्रापत्यम् आर्चायनः । आर्गायण इति तु वर्द्धमानः । तत्र पदसंज्ञा मृग्या ॥ Yajñ.

११ D. om. fr. ऋगिन्ध; Hem. has all three words; the other only ऋच् (ऋक्).

१२ Hem. has जन; Kâṣ.V. ed. जत् (!), MS. *a.* जंत; om. Bö., Yajñ.

१३ काश्यायनः B. C. F. K. (śl. 233).—Bö., Yajñ., Kâṣ. V. ed. काश्य and काव्य (MS. *a.* काश्य । कात्य । काप्य । काव्य; Bö. *var. l.* काव्य); Hem. only काश्य.

१४ कैंकरायणः C.; केकरायणः F.—Not given in the other works, exc. Hem.

सौमनसायनः ॥ * ॥ शाणायनः[1] ॥ * ॥ वाजव्यायनः[2] ॥ * ॥ क्रोष्टृश-लङ्कू लोप इत्यन्यवर्णस्येति शेषः । क्रौष्टायनः । शालङ्कायनः ॥ * ॥ कार्ष्णायनो ब्राह्मणः । कार्ष्णिरन्यः ॥ * ॥ राणायनो वाशिष्ठः । राणिरन्यः ॥ * ॥ अस्योदाहरणानि ।

नाडायनि व्रीड जडेह मा भूश्चारायणि स्मारय चारुचक्षुः ।
विलोक्य बाकायनि[3] मुञ्जकुञ्जान्मौञ्जायनी मालवराजमेति[4] ॥१॥
किमैतिशायन्यसि[5] नीरसा त्वं सख्यैतिकायन्यतिकौतुकं मे ।
लब्ध्वौपकायन्युपयाम लामकायन्ययं लोकललाम भूपः ॥ २ ॥
स्राक्याग्नलायन्युपसर्प[6] शालङ्कायन्यलं कालविलम्बनेन ।
प्रतीक्षते त्वां पथि लैगवायन्येह्याग्निशर्मायणि शर्मणे नः[7] ॥ ३ ॥
उत्तिष्ठ काश्यायनि[8] काश्यपायन्यागच्छ काव्यायनि को विलम्बः ।
वलाश्वलायन्यनु कातलायन्याः[9] कातरायण्यतिकातरासि ॥ ४ ॥
वीक्षस्व तैकायनि शंसकोऽयं शाणायनि क्वायुधबाणशाणः[10] ।
प्राणायनि प्राणसमस्त्रिलोक्यास्त्रिलोकनारायणभूमिपालः ॥ ५ ॥

---

१ साणायनः B. C. F. K.—Hem. also सण; wanting in the other works.

२ Bö., Kâṣ. V. ed. वाजप्य (cf. वाजम्य E. (in text); Hem., K. V. MS. *a.* वाजव्य; om. Yajñ.

३ काव्यायनि° B. C. F. K. (cf. *kâr.* 4); विलोक° राज एति F.

४ °राज एति F.; मुंजकुर्जानधौंजायनी यलव° D.

५ °ऐतिसायिन्यसि D.—Yajñ. has only one *kârikâ :* आक्षतिगणोयमिति वर्द्धमानः । दिङ्मात्रमुदाह्रियते । नाडायनो व्रीड जडां स्वपत्नीं चारायणीं चित्रकथां ब्रवीति । किमैतिशायन्यसि नीरसा त्वं सख्यैतिकायन्यतिकौतुकं मे ॥

६ आक्° B. C. F.; आं साग्न° D.; अपसर्प° C.

७ लैगवायने ह्याग्नि° B. C. K.; लैंगवायन्येह्या° F.; शर्मणे न B. C. D.

८ कास्यायनि काश्यपा° B. C. K.

९ वलास्वलायन्यनु° D.; वलाश्वयन्यप्यलु° C.; चलाश्वलायन्युलु° F.

१० सकको यं साणायनी° साणः D.; शाणायनी° B. C. K.; कायुध° C.

मैत्रायणाग्रायणबादरायणाश्रायणाजायनजामयो वः[१]।
भुवेऽकरोद्दारुवने यदीशः[२] कर्ता तदङ्घ्रायमिहावनीशः ॥ ६ ॥
दास्यस्मि दासायनकिंकरेव त्वां कैंकरायण्यभिराधयिष्ये[३]।
स्यां कैंकलायन्यनुयायिनी ते मार्चायनीव व्रज मां विहाय[४] ॥ ७ ॥
जालंधरामित्रपरास्य[५] दृष्टेर्वाजव्यपाञ्चालपरास्य भूपः।
सौहृत्यकौमारपरास्य[६] भूयाद्दायन्य एषोऽद्य रसायनं वः ॥ ८ ॥
द्वैपायनीतो भव सायकायन्युपेहि दौर्गायणि देहि मार्गम्।
त्वरस्व चैत्रायणि चाटकायन्यौदुम्बरायण्ययमेति भोजः ॥ ९ ॥
क शाकटायन्यटसि स्तनाभ्याम्[७] ऊर्णोषि तार्णायनि किं दृशो नः।
लौहायनीमाक्रय शत्रुधाम्नि स्ताम्बायनि स्थास्यति तन्नितम्बः ॥ १० ॥
ऐ कार्ष्णिकार्ष्णायनिराणिराणायनादयो विप्रनृपर्षयस्तान्[८]।
मा ब्राह्मणायन्यवहेलयेहामुष्यायणे[९] राजनि विन्दमाने ॥ ११ ॥
किं ब्राह्मदत्तायनि जोषमास्से किं मैमतायन्यमितं[१०] ब्रवीषि।
किं सौमतायन्यलमुन्मनास्त्वं किं स्थैरकायण्यनवस्थितासि[११] ॥ १२ ॥

---

१ °जायननामयो नः B.; बादरायणाजायन्नजामायनि कः प्रणावः C.; K. om. श्रायणा; वादरायणाग्राय° D.; बादरायणा आश्रा° F.

२ क्रुवे° तदध्वाय° D.; दारु च ते यदीशः F.

३ दासास्मि ह्रसायन° °त्वा D.; किंकरे च C.; कैकराय° C. D.

४ कैकलाय° मा विहाय C.; कैंकलायिन्य° B.K.; कैकलान्य° मार्ज्ञायनीयनुजमा वि° D.; कैकलायिन्यनुयायिना° F.; cf. also note ६.

५ ? जातत्वरामित्र° B.D.E.F. (? जानधर°); प्रजात्वरां° C.

६ सांहृत्य° F. (as in the text, but cf. p. 260, n. 2; and आर्चायनी for आर्कायणी *kâr.* 7).

७ किं संनाभ्यां D.; स्वनाभ्यां B.

८ °रारायना° B. C. K.; राणायन्यादयो° F.; D. corrupt.

९ °अवहेल° D.

१० पोषमास्से° B. C. K.; °जोषमासु °अमतं D.

११ स्थैरिकायण्य° B. C. F. K.

दृश्या किमाचामति चामसायन्यध्येति किं वार्षगणायनीत्थम्[1]।
किमाध्वरायण्यनुबध्य बुद्ध्या न कामुकायन्यवबुध्यतेऽस्मान् ॥ १३ ॥
मा हांसकायन्यनुधाव हंसान् मा शांशपायन्युपशिंशपे[2] स्थाः।
मा पैङ्गरायण्यनु पैङ्गलायन्युपेहि दृष्टो नृपतिर्व्रजामः ॥ १४ ॥
क्रौष्टायनि ग्रावघनोऽयमध्वा शोणे न शौणायनि तेऽङ्घ्रिकोणः[3]।
यौगंधरायण्यपथेन मा गाः किं बालिशायन्यसि बालिशेव ॥ १५ ॥
मा हास्तिनायन्यपहस्तयास्मान् मा दाण्डिनायन्यतिपण्डिता भूः।
मा दाण्डपायन्यवमुञ्च धैर्यं धिक्कारपायण्यतिनिस्त्रपासि ॥ १६ ॥

आकृतिगणोऽयम्। तेन च्छागप्रभृतयो ज्ञेयाः[4] ॥ २३६ ॥ इति नडादिः ॥

हरितगविष्ठिरमठराः[5] किंदासो मित्रयुः सृदाकुश्च।
वह्यस्कप्रतिबोधौ निषादशबरौ पृदाकुश्च[6] ॥ २३७ ॥

अन्नन्ताद्धरितादेः फण्[7]। अञ् विदादिपाठात्[8]। अत उभयमपि दृश्यते ॥ * ॥ हारितः। हारितौ। हरिताः। तदपत्यं प्रशस्तं हारितायनः ॥ * ॥ एवं गाविष्ठिरः। गाविष्ठिरायणः[9] ॥ * ॥ माठरः। कश्चिद् गोपवनादिपाठं मन्यमानो माठरा इत्याह। माठरायणः[10] ॥ * ॥ कैंदासः। कैंदासायनः ॥ * ॥ मित्रयुर्मुनिः। तदपत्यं मैत्रेयः।

१ दृश्यां किमाचामसि चा॰ F.; ॰नी त्वं D.

२ शैंशपायन्युप॰ MSS.

३ तेंद्रिकोणः B.; ते न्हिकोणः C.; ते ह्रिकोणः D.; तेऽद्रिकोणः F.

४ D. om. from आकृतिगणो. Several words are not exemplified in the *kārikās*.

५ ॰यतराः॰ D.

६ वत्यस्क॰ B.; वग्रस्क॰ सवरौ॰ E.; A. om. text and comment.

७ पण् B. D. K.; ॰हरितादेर्यञ्॰ C. F.

८ अंच विदादि॰ B. K.; अत्र वि॰ F.

९ गाविष्ठरः गाविष्ठरायणः B. C.

१० मतिरः। कश्चिद्॰ मातरा इत्याह। मा–रायणः D.

मैत्रेयायणः[१]। वामनमतेनास्य पाठः ॥ * ॥ सार्दाकवः । सार्दाकवायनः[२] ॥ * ॥ वाह्यस्कः । वाह्यस्कायनः ॥ वस्यस्क[३] इत्यन्यः ॥ * ॥ प्रातिबोधः । प्रातिबोधायनः ॥ * ॥ नैषादः । नैषादायनः ॥ अपत्यमात्रे नैषादकिः ॥ * ॥ शावरः । शावरायणः ॥ * ॥ पार्दाकवः । पार्दाकवायनः ॥ शकटाङ्गजस्त्वत्र सृदाकुपृदाकू न मन्यते[४] ॥ २३७ ॥

बध्योगविष्णुवृद्धौ रथीतररथन्तरार्कलूषाः स्युः ।
दुहिता ननान्दृपुत्रौ गविष्ठिलो भूस्त्रियौ पुनः परतः[५] ॥२३८॥

बाध्योगः । बाध्योगायनः[६] ॥ * ॥ वैष्णुवृद्धः । वैष्णुवृद्धायनः ॥ वृष्णिवृद्धिरित्यन्ये[७] ॥ * ॥ राथीतरः । राथीतरायणः ॥ * ॥ राथन्तरः । राथन्तरायणः ॥ * ॥ आर्कलूषः । आर्कलूषायणः[८] ॥ अर्कलुष[९] इत्यन्यः । अकलुष[१०] इति कश्चित् ॥ * ॥ एते गविष्ठिलशब्दस्य क्षुभ्नादिहरितादिफण्भाजो नान्ये शकटाङ्गजप्रभृतिमतेन[११] ॥ * ॥ दौ-

१ मैत्रायणः F.—? not Kâs. V. iv. 1, 104, nor Bö., Yajñ., Hem.

२ Thus all MSS.—For सृदाकु and पृदाकु Bö. has मृडाकु । सृपाकु; Yajñ. मृडाकु । पृडाकु; ed. Kâṣ. V. om. both; मृडक । सृपाक MS. *a*.—मृदाकु । पृदाकु । केचिदेतौ हरितादेः प्राक् (in *vidâdi*) पठंति । तन्मते हरितादेरिञ इत्यायनण् न भवति ॥ Hem. [cf. सार्द्रागव Bö.—R.]

३ ? वाह्यास्क B. C.; वश्चस्क D.—Bö., Yajñ., ed. Kâṣ. V. give only वह्यस्क; Hem. only वस्यस्क.

४ D. om. from शकटाङ्गज°—On पृदाकु see note २.

५ °अर्कलूखा स्युः° C.; गविष्ठिरो° D.; A. om. text and comment.

६ Thus C. D. F. K.; वाध्व्योगः वाध्वोगायनः B.—? बाध्यौग° cf. śl. 166.—Kâṣ. V. ed. has वध्योष (MS. *a*. वव्योग); Yajñ. वध्योगस्य वाध्योगः वाध्योगायनः; Bö. बध्योग; Hem. वध्योग.

७ इत्यन्यः C.; D. om. from वृष्णि°.—Hem. has both; Bö. reads विष्णु । वृद्ध ।

८ आर्कलूखः । आर्कलूखायनः B. C.

९ आर्कलुष D.; अर्क्कलुश्र इ° F.; अर्कलश्विति B. C.; अर्कलूश्, corr. °श K.; cf. śl. 281.

१० अर्क्कलुष F.—Hem. only अर्कलुश; the others अर्कलूष (Bö. *var. l.* अर्कजूष).

११ शकटांगजवामनमतेन F.; शकटांगज[कामनभोज suppl.]प्रभृतिमतेन K.

हित्रः । दुहितरः । दौहित्रायणः ॥ * ॥ नानान्द्रः । ननान्दरः । नानान्द्रायणः ॥ * ॥ पौत्रः । पुत्राः । पौत्रायणः ॥ * ॥ गाविष्ठिलः । गविष्ठिलाः । गाविष्ठिलायनः ॥ * ॥ पौनर्भवः । पुनर्भ्वः । पौनर्भवायणः ॥ * ॥ परा चासौ स्त्री च । परस्त्री । तदस्या विदादित्वादञि तत्संनियोगेन । परस्त्रियाः परशुश्चेत्यनेन परशादेशे च । पारशवः । बहुषु परस्त्रियः । तदपत्यं युवा पारशवायनः ॥ * ॥ चन्द्राचार्येण यञञोर्बहुष्वस्त्रियामित्यत्र[1] सूत्रेऽपत्यमात्र इत्येव बाह्या उत्सा[2] इत्युदाहृतम् । रत्नमतिना तु हरितादयो गणसमाप्तिं यावदिति व्याख्यातम् । तन्मतानुसारिणा मयाप्येते किल निबद्धाः ॥ २३८ ॥ इति हरितादिः ॥

अश्वग्रीवाचपलसुमनोग्रीष्मधूम्राः पवित्रा[3]
धर्म्यौ बैल्यार्जुनगिरिवनाः[4] क्षान्तकाणौ विशालः ।
गोमी वाग्मिप्रहृतकितवाश्वक्रामोदपादाः[5]
खर्जूरार्कस्वनशिवविदाः श्यामगोलाङ्ककाशाः[6] ॥२३९॥

अश्वविदकुञ्जगर्गादिभ्यो ञ्फाञ्फञ्यञ[7] इत्यनेन चतुर्भ्यो गणेभ्यः पौत्रादावर्थे चत्वारः प्रत्ययाः क्रमेण भवन्ति ॥ * ॥ अश्वस्यापत्यं पौत्रादिः । आश्वायनः । आश्वायनाः ॥ विदादित्वादञपि[8] । आश्वः ॥ * ॥

---

१ ?यञिञोर्ब° F.; यञिञो ब° B. C. D. K.; but cf. P. ii. 4, 64 (where औत्सः । औत्साः, because अगोत्रे); ? P. iv. 1, 85 vārtt. 4; 86.

२ ?वाह्या उत्सा F.K.; वाह्य उत्साह B.; वाह्यं उत्सा C.; वहूया उत्सा D.

३ Thus B. C. D. E.; पवित्रो F. (the other works have पवित्र).

४ धार्म्यौ E.; धाम्यौ B. C. F. K.; वैण्यार्जुन° D. E.

५ °वाग्मी प्र° MSS.; °प्रहृतकित° E.

६ खर्जूरार्कश्वन° B. F. K.; °सिव° E.; खर्ज्जूरार्काश्वानशिव° C.; A. om. text and comment.

७ ञ्याञ्यञ्यञ B. C. F.; ञ्याञ्यञ K.; ञ्पाञ्पञङ D.

८ °इञपि B. C. K.; विदादिञयि D.; not in *vidâdi*, 243-4 (cf. अश्वावतान, page २८८, note २).

ग्रैवायणः ॥ * ॥ चापलायनः ॥ * ॥ सौमनसायनः ॥ * ॥ यश्मायणः । अस्योत्सादौ पाठोऽनन्तरार्थो[1]ऽनपत्यार्थस्य ॥ एवमुत्सशब्दोऽपि ॥ * ॥ धौम्रायणः[2] ॥ * ॥ पाविचायणः ॥ * ॥ धार्म्यायणः[3] । धार्य्येत्यन्यः ॥ * ॥ बिलीनां[4] क्षत्रियाणामपत्यं पौत्रादिः कुरुकोसलेत्यादिना ण्यचि । बैल्यः[5] । तदपत्यं युवा । बैल्यायनः[6] ॥ * ॥ आर्जुनायनः । अस्य बाह्वादावनन्तरार्थः पाठः[7] ॥ * ॥ गैरायणः । गिरिचपल इत्यपरे[8] ॥ * ॥ वानायनः । वत इत्यप्यन्यः[9] ॥ * ॥ चान्तायनः ॥ * ॥ काणायनः ॥ * ॥ वैशालायनः ॥ * ॥ गोमिनः । गौमायनः ॥ * ॥ वाग्मिनः । वाग्मायनः ॥ * ॥ प्राहृतायनः ॥ * ॥ कैतवायनः ॥ * ॥ चाक्रायणः ॥ * ॥ रामोदायनः ॥ * ॥ पादायनः ॥ * ॥ खार्जूरायणः । खर्जूल इत्यन्यः[10] ॥ * ॥ आर्कायणः । अर्कस्वनेत्यन्ये ॥ स्वानायनः[11] ॥ * ॥ शैवायनः ॥ * ॥ वैदायनः ॥ * ॥ श्यामायनः ॥ * ॥ गौलाङ्कायनः ॥ अपरे गोल । अङ्क । इति च्छिन्दन्ति[12] ॥ * ॥ काशायनः । आकाश इति चन्द्रः ॥ २३९ ॥

---

१ अनन्तरापत्यार्थो Yajñ.

२ Besides धूम्र, the other works have also धूम which is also given in *kârikâ* 7 on ṣl. 242.

३ धाम्यायनः B. C. F. K.; D. om. धार्य्येत्यन्यः.—धर्म्य Bö., Yajñ.; धर्म्य & धाय्या Hem.; धर्म ed. Kâṣ. V. (धाय्य MS. *a.*).

४ विल्वीनां D.

५ ण्यः ।° F.; D. om. from कुरु.

६ Bö., Yajñ. have बैल्व; Hem., Kâṣ. V. ed. बैल्य.

७ Cf. ṣloka 203.

८ गौरायणः° B. D. K.; D. om. from गिरि.

९ C. om. from बिलीनां क्षत्रिया°; D. from वत.—Hem. has both words, the others neither.

१० F. om. from खर्जूल°.—Bö. has खर्जूर (*v. l.* खजूर); Yajñ. खर्जूर; Kâṣ. V. खर्जूर & खर्जूल; Hem. खर्जूर, खर्जूल & खर्जुल (Bö., Yajñ. have also खज्जार).

११ ? अर्कश्वनेत्यन्ये । श्वानायनः B. K.; अर्कश्वनपत्ये आश्वानायनः C.; F. om. अर्कस्वनेत्यन्ये.—Hem. has अर्क । स्वन । अर्कस्वन ।; the others स्वर (Kâṣ. V. MS. *a.* स्वत).

१२ गोलाऽक° B.; गोलः कं अंक° C.; D. om. from अपरे.—Bö., Yajñ. have गोलाङ्क; Kâṣ. V. ed. गोलाङ्क्य, MS. *a.* गोपाल; Hem. गोल । आङ्क । गोलाङ्क ।.

विश्वानरः पिङ्गलशूद्रकोत्सा-
तवस्फुटा धन्यगदश्नविष्ठाः ।
जनाश्मवीक्ष्याः[१] खदिरो नमार्हे-
पिञ्जूरबस्ताः[२] सनखः पविन्दा[३] ॥ २४० ॥

वैश्वानरायणः । विश्वतर इति कश्चित्[४] ॥ * ॥ पैङ्गलायनः ॥ * ॥ शौद्रकायणः ॥ * ॥ औत्सायनः ॥ आतवायनः ॥ उत्सातवेति भोजः[५] ॥ * ॥ स्फौटायनः[६] ॥ * ॥ धान्यायनः ॥ * ॥ गादायनः[७] ॥ * ॥ अविष्ठायाः[८] । आविष्ठायनः ॥ * ॥ जानायनः । अस्य नडादित्वात्फणि[९] । अस्मिन्नत्र् च यूनि विशेषः[१०] ॥ * ॥ आश्मायनः ॥ * ॥ वैक्ष्यायणः[११] ॥ * ॥ खादिरायणः ॥ * ॥ नामायनः ॥ * ॥ आर्हायणः ॥ * ॥ पैञ्जूरायणः[१२] ॥ * ॥ बास्तायनः ॥ * ॥ सानखायनः[१३] ॥ * ॥ पविन्दायाः[१४] । पाविन्दायनः ॥ २४० ॥

---

१ ॰वीष्याः (or वीष्याः) C. F. K.

२ ॰वास्ता B. (व MSS.; ब Yajñ.)

३ पविंदः B.C.K.; पविंदाः E.; पविदा । D.; cf. note १४.—A. om. text and comment.

४ विशूतर इति॰ C.; om. D.—Hem. has both; the others विश्वानर only.

५ उत्स्वातवेति श्रीभोजः D.—Hem. has all three.

६ On the स्फोटायन P. vi. 1, 123, Yajñ. remarks: स्फोटोऽयनं यस्येत्यर्थे स्फोटायनः शब्दान्तरम्.

७ वादायनः D. (not in text); Bö., Yajñ. have likewise वद (cf. वन, वत, p. २८२, n. ९); Hem. गद om. Kâṣ. V.

८ Thus also Hem., Kâṣ. V.; अविष्ठ Bö., Yajñ. doubtful.

९ फणि B. C. D. K.

१० अस्मिन् एञि भिविशेषः D.; अस्मिनञ च॰ B. K.; अस्मिन् यञ॰ F.

११ वैष्यायणः (or ष्य) B. C. F. K.; तैक्ष्यायणः D.—Hem. has वीक्ष; Kâṣ. V. ed. वीक्ष्य; om. MS. *a*., Bö., Yajñ.

१२ पैजूरायणः B.; पैंजरायणः D.—Bö. has पिजूल; Yajñ. पिञ्जूल; Hem., Kâṣ. V. ed. पिञ्जूर; om. MS. *a*.

१३ मानखायनः C.—सनख Hem.; the other works om. this word.

१४ Thus Hem., Kâṣ. V. ed.; पविन्द Bö., Yajñ.

**रोहिणभण्डितभडिलाः[१] शुनभण्डिलदासकानडुह्यं[२] च ।**
**पुटकुटकुलखडभडिताः[३]प्राहृतचुपकितविशंपदुर्मनसः[४]॥२४१॥**

रौहिणायनः ॥ * ॥ भाण्डितायनः ॥ * ॥ भाडिलायनः[५] ॥ * ॥ शौनायनः[६] ॥ * ॥ भाण्डिलायनः ॥ * ॥ दासकायनः[७] । चुपदासक इत्यन्यः[८] ॥ * ॥ अनडुहोऽपत्यं पौत्रादिः । आनडुह्यम् । तदपत्यं युवा । आनडुह्यायनः ॥ स्त्रियामत इञि । आनडुहीत्यन्यः[९] ॥ * ॥ पौटायनः ॥ * ॥ कौटायनः ॥ * ॥ कौलायनः[१०] ॥ * ॥ खाडायनः ॥ * ॥ भाडितायनः ॥ * ॥ प्राहृतायनः[११] ॥ * ॥ चौपायनः ॥ * ॥ कैतायनः । खिव इत्यप्यन्यः[१२] ॥ * ॥ विविधं शं सुखं पातीति विशंपः । तस्य[१३] वैशंपायनः ॥ * ॥ दौर्मनसायनः ॥ २४१ ॥

**जडलतशङ्खप्राच्या ध्वनवहमन्दा भवेन्नरे जातः ।**
**अथ भर्गस्त्रैगर्ते स्यादात्रेये शपो भरद्वाजः[१४] ॥ २४२ ॥**

---

१ सुनमंडितभविताः E.; सुन ह्णिण डित विताः D.; °भलिताः B. F. K.; °ललिताः C.; cf. note ५.

२ शुनिभंडिल° B.C.F.K.; सुनभंडित°E.; सुनभडिल°D.; °दाशका°B.C.K.

३ पुटकाकुट° C.; पुटकुडकुल° B.; °षडभडिताः B. K.

४ प्रहृतचुप° E.; प्राहृ ॥ नुप° D.; किव for कित B. C. K.; किच F.; A. om. text and comment.

५ ?भालितायनः B.F.K.; लालितायनः C.; भावितायनः D.—The other works and *kârikâ* 14 have भडिल (besides भण्डिल, भडित, and भण्डित).

६ ? Hem. has शुन; the others omit this word (Kâṣ.V. ed. *var. ll.* सूनु, शुव?).

७ दाशकायनः C. K.

८ D. om. from चुप.—Hem. apparently चुपदासक; the others चुप (Kâṣ. V. ed. has चुम्प) । दासक.

९ आनडुहो न्यः C.; आनडुही अन्यः K.—अनडुह्येति गर्गादियञंताज्जोत्रे फञ्जोऽसंभवेन सामर्थ्याद्यून्ययम् । अनडुहो युवापत्यमानडुह्यायनः । Yajñ.

१० कौडायनः D.

११ ? प्राहृतायनः D.; cf. प्रहृत sl. 239.—Bö., Yajñ. have प्रहृत and प्रहत; Hem. only प्राहृत; Kâṣ. V. only प्रहृत.

१२ कैचायनः । खिव° F.; कैवायनः B. C.; D. om. from खिव.—Hem. has किव, खिव, & खिय; the others कित.

१३ D. om. from विविधं.

१४ A. om. text and comment.

जाडायनः ॥ * ॥ लातायनः ॥ * ॥ शाङ्खायनः ॥ विदादित्वादञि शाङ्खः । गर्गादित्वाद्यञि[1] शाङ्ख्यः । कुञ्जादित्वात्फञि[2] शाङ्खायन्यः ॥ * ॥ प्राच्यायनः ॥ * ॥ ध्वानायनः ॥ * ॥ वाहायनः ॥ * ॥ मान्द्रायनः[3] ॥ * ॥ जातायनः । पुमांश्चेत् ॥ अन्यत्र जाताया जातेयः ॥ * ॥ भार्गायणः । त्रैगर्तश्चेत् । भार्गिरन्यः ॥ * ॥ शापायनः । भारद्वाजायनः[4] । आत्रेयश्चेत् ॥ शापिर्भारद्वाजश्चान्यः ॥ * ॥ एत ऋषिवाचकाः ॥ अस्योदाहरणानि ।

अथैष वातण्ड्यवतण्ड्यभीकवातण्डवातण्ड्यभिकप्रियाणि[5] ।
आश्वायनाश्मायनसेवितानि शुचीनि सिप्रापुलिनान्यगच्छत् ॥ १ ॥
पौटायनास्तेषु पुटान्मृजन्तो वैदायना वेदमुदीरयन्तः[6] ।
चान्तायनाः चान्तिभृतोऽस्य चेतः शाङ्खायनाः शङ्खभृतश्च जह्रुः[7] ॥ २ ॥
ग्रैवायणार्हायणरौहिणायनार्कायणन्यस्तसमित्कुशेषु ।
पादायनासन्नदृषन्निषण्णः[8] चाक्रायणेष्वेषु पदं स चक्रे ॥ ३ ॥
औत्सायनैरुत्थमिहोत्पतद्भिः काशायनैः[9] काशकुशं लुनद्भिः ।
स्नानायनैः स्नानमनुद्गृणद्भिर्[10] ग्रैष्मायणैर्ब्रह्ममुदं स लेभे ॥ ४ ॥

---

१ °यणि F.

२ °पञि B. C. D. K.

३ माद्रायनः C. D.; om. B.—Not in the other works.

४ The other works have also आत्रेय भरद्वाजे (cf. also आत्रेयायण in *kârikâ* 13).

५ अथैष वातंड्यवतंड्यमेव पाराशरैयं व्यभिकप्रियाणि C.; °भीका वातंड्यवातंड्यतिवाप्रियाणि F.; D. om. the first stanza, but numbers २ to १४. The first half-couplet appears to refer to गर्गादि; on वतण्डी, वातण्डी cf. sl. 60 comm.

६ अयौर्व्यजनो वैदायना चेदनुदीरयन्त्यः । D.

७ शंखकृतश्च B. C. K.; शंखहृतश्च° F.; °शाखायना शखद्धृतश्च जुहुः D.

८ वादायनासन्न° D.

९ धात्सायनैरुत्थ° C.; ऊत्सायनैभक्षांमिहोत्पमद्भिः D.; °कासायनै B.C.

१० स्नानायनस्नानमनूत्रृ° B. C. K.; °अनुगृणद्भिः F.; अनूद्गुण° D.

धार्म्यायणं धर्ममृचो जपन्तं वाग्मायनं वाग्मितमं यजूंषि ।
गौमायनं गोमिनमेष साम धान्यायनं धन्यमथावमेने[1] ॥ ५ ॥
वैच्यायणं वीच्य विशालवचा ननाम नामायनमायताचः ।
अदुर्मना दौर्मनसायनं स महामनाः सौमनसायनं च ॥ ६ ॥
धौमायनं[2] सोऽध्वरधूमशुभ्रं धौम्रायणं ब्रह्मपरायणं च ।
श्यामायनं श्यामलकण्ठभक्तं काणायनं काणभुजं च भेजे ॥ ७ ॥
शैवायने शैवमतानुकूले कौलायने कूलकुटीरभाजि ।
कौटायने धान्यकुटैकवृत्तौ वासायने वाकृत वासनं सः[3] ॥ ८ ॥
गीर्ब्रह्म गैरायणमुद्गिरन्तं जातायनं जाततदर्थबोधम्[4] ।
ध्वानायनं[5] सध्वनिदत्तचित्तं जाडायनं ध्यानजडं प्रपेदे ॥ ९ ॥
भक्त्यानडुह्यायनमेष नत्वार्जुनायनं वार्जुनतुल्यकीर्त्तिः ।
वैल्वायनं चोपजगाम वैश्वानरायणं विश्वजनीनवृत्तिः ॥ १० ॥
आविष्ठवैशालपरौ कराभ्यां पावित्रपाविन्दपरौ गिरा च ।
खार्जूरपैञ्जूरपरौ तु शश्वन्मूर्धाभिषिक्तोऽनमदायनौ सः ॥ ११ ॥
वैश्वंपगौलाङ्कपरौ च तौ तान् खाडातवप्राहृतदासकेभ्यः[6] ।
रामोदतः कैतवखादिराभ्यां स चापलाद्वाचपलौ ववन्दे[7] ॥ १२ ॥
विद्वान्मुदं को[8] न बभार भारद्वाजायनं राजनि वन्द्यमाने ।
आत्रेय नौमीत्यभिधाय तत्रात्रेयायणं[9] वास्य विपर्ययेण ॥ १३ ॥

---

१ धान्यमथावमेने D. F.

२ Cf. page २८२, note २.

३ वातनं सः C.; वासनां सः D. [वास or वस does not occur in the text; we should probably read वासायने here].

४ गीर्ब्राह्मा° B.; गीब्राह्म° D.; गैरायण° B. C. F. K.; जातवदर्थ° B. C.

५ धानायनं B. C. F.; घानायनं D.; °सध्वनिदत्तवित्तं B. C. D.

६ °प्रादृत° D.; °प्राहृत° B. C.; दाशकेभ्यः B. C. F. K.

७ स चापलौ विश्वतनू ववंदे C.; स वापलाद्वाबलोप ॥ D.; चापलाद्वाचपलौ° F.

८ विद्वोन्मुदं° B. C.; विद्वान्मुद्को D.

९ Cf. page २८५, note ४.

स भाडिताङ्गाण्डितभाडिलाभ्यां नलायनान्भाण्डिलतश्च भूपः ।
शापायनं शापिमथेह भार्गिं भार्गायणं चैव नमस्कार[1] ॥ १४ ॥
२४२ ॥ इत्यश्वादिः ॥

विदोर्वकिंदर्भकिलातधेनु-
विश्वानरा भाजनकश्यपौ च[2] ।
अश्वावतानः प्रियकोपमन्यू
हर्यश्वबिन्दू कुशिकर्तभागौ[3] ॥ २४३ ॥

अश्वविदेत्यादिना पौत्रादावपत्येऽञ्भवति ॥ * ॥ विदस्यापत्यम् । वैदः । वैदौ । विदाः ॥ * ॥ और्वः ॥ * ॥ कैंदर्भः । कीदर्भ इति शकटाङ्गजः[4] । विदर्भ इति भोजः ॥ * ॥ कैलातः[5] ॥ * ॥ धैनवः । अयमृषिवचनः । उत्सादौ तु प्रत्यग्रप्रसवगव्यादिवाचकः[6] ॥ * ॥ वैश्वानरः[7] ॥ * ॥ भाजवः । ताजम इत्यन्यः[8] ॥ * ॥ काश्यपः ॥ अथ । इन्द्रहूः सप्तमः काश्यपानाम्[9] इत्यत्र लुक् कस्मान्न भवति । सामान्येनापत्या-

---

१ A number of words in the text are not exemplified in these *kārikās*.

२ °काश्यपौ च B. C. F.; भाजेनकस्यपौ च D.

३ °कर्त्तुभागौ D. E.; A. om. text and comment.

४ ?चीदर्भ इति शा° B. C. K.; कचीदर्भ° F.; om. D.—°किंदभ इति श्रीभोजः D.—किंदर्भस्य कैंदर्भः कैंदर्भौ किंदर्भाः । किदर्भ इति शाकटायनः । विदर्भ इति भोजः Yajñeṣv.; Bö. has किंदर्भ (*var. l.* कन्दर्प); Hem. कीदर्भ; Kâṣ. V. ed. MS. *a.* किदर्भ.

५ Bö., Hem., have किलात; Yajñ. किरात (किलात इति केचित्); Kâṣ.V. MS. *a.* किरात, ed. किलालप (!) and *var. l.* किलात.

६ प्रत्यग्रप्रवस° B.—उत्सादौ तु नवप्रसूतिकावचनः Yajñ.; *cf.* ṣl. 254.

७ विश्वानरः B.; D. om. from कैलातः.

८ ? भाजनः । भजना; ॥ D.; °इति कश्चित् F. K. (? भाजम° B. C.—Hem. om. both; the other works have भाजन; Bö., Yajñ. also भोगक; Kâṣ. V. MS. *a.* भोजन (om. ed.).

९ अथेंद्रः ससप्तमका° D.; अथेंदु स° F.; Kâṣ.V.iv.1,104,where इन्द्रभूः°.

भिधान ऋष्यण सिद्धिर्भविष्यति । तस्येदं विवक्षायामण वा सर्वेषा-मपि हि पितरः काश्यपा अभेदोपचारात् । यथा बभ्रुः । मण्डुः । लमक इति ॥ * ॥ आश्वावतानः । आश्वावतानाः[१] ॥ * ॥ प्रैयकः । पि-यकेत्यन्यः[२] ॥ * ॥ औपमन्यवः ॥ * ॥ हार्यश्वः ॥ * ॥ बैन्दवः ॥ * ॥ कौ-शिकः । यथा ।

कौशिकेन स किल क्षितीश्वरो राममध्वरविघातशान्तये[३] ॥

आर्तभागः ॥ २४३ ॥

ऋष्टिषेणभरद्वाजापस्तम्बाः[४] शुनकस्तथा ।
शरद्वत्सम्बकौ शिग्रुः[५] कुचवारश्च[६] कीर्तिताः ॥ २४४ ॥

आर्ष्टिषेणः ॥ * ॥ भारद्वाजः ॥ * ॥ आपस्तम्बः ॥ * ॥ शौनकः ॥ * ॥ शारद्वतः ॥ * ॥ साम्बकः । साम्बकाः ॥ श्यवक इति[७] वामनः ॥ * ॥ शैग्रवः । शैग्रवाः[८] ॥ * ॥ कौचवारः ॥ कूचवार[९] इति वामनः । कूवाचर[१०] इत्यन्यः ॥ * ॥ गोपवनश्यामाकश्यापर्णश्यामकास्तु[११] गो-पवनादेर्विदाद्यन्तर्गणत्वाद्रष्टव्याः ॥

---

१ Kâş. V. MS. *a.* reads अश्व । अव-तान, cf. p. २८१, note ८.

२ Om. D.—Hem. has प्रियक and पियक; the others प्रियक only.

३ Raghuv. 11, 1.

४ ऋषिषेण॰ E.; A. om. text & com.

५ शिगु B. C.; शिग्रू E.; शिग्र D.

६ Thus B. D. F.; कुचचारश्च C.; कूचवारश्च E.; cf. n. १० and şl. 353.

७ ? सांवकः । सवकाः । शिवक इति D.; cf. *gopavanâdi*, şl. 35.—Kâş. V. ed. has श्यामक, श्यामाक, श्यापर्ण, and *var. ll.* संवक, श्वायक; MS. *a.* only शामिका and श्यावर्ण; Hem. श्यापर्ण and twice श्यामाक; Bö., Yajñ. श्यापर्ण, श्यावलि, श्यामाक, शमिक, and श्यमाक [शमिक (श्यमाक इत्यन्ये) Yajñ.].

८ शौग्रवाः D.; शिग्रवः F.; cf. *gopavanâdi* şl. 35.

९ ? Thus Kâş. V. ed., MS.; and Bö., Yajñ.; also eds. Pâņ. iv. 3, 94; कुचावर F.; छवावर B.; कुवाचर K. and Hem.; छवाच C.; D. om. from कूचवार to इत्यन्यः.

१० Thus K.; कूचाचर B.; कूचावर F.; छवाचर C.; D. cf. n. ९ [? कुवाचर as Hem. n. ९].

११ C. om. श्यामाक (suppl. by K.).

ऋषिवाचिभ्य ऋष्यणि प्राप्ते । ऋष्टिषेणाच्छिवाद्यणि । अनृषिवाचिभ्योऽदन्तेभ्योऽत इञि । तदन्तेभ्यो[1]ऽणि ॥ परस्त्रिया ञ्यङो ढणि[2] च पाठः ॥ २४४ ॥ इति विदादिः ॥

कुञ्जब्रध्नशुभस्कन्दलोमस्कम्भाः शटो गणः ।
भस्मशङ्खविपाशश्च शुण्डा शाकश्च कीर्तिताः[3] ॥ २४५ ॥

अश्वविदेत्यादिना पौत्रादावपत्य एभ्यः फञ्[4] भवति । तत्संनियोगेन फञ्व्राताद्स्त्रियामित्यनेन[5] स्वार्थे ञ्यश्च ॥ * ॥ कुञ्जस्यापत्यं पौत्रादिः । कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः ॥ * ॥ ब्राध्नायन्यः ॥ * ॥ शौभायन्यः । शुम्भ इति भोजः[6] ॥ * ॥ स्कान्दायन्यः । स्कन्ध इत्यन्ये[7] ॥ * ॥ लौमायन्यः । केचिल्लोमान्तस्यैव मन्यन्ते न लोम्नः । तन्मत औडुलोमायन्य इत्यादि[8] ॥ * ॥ स्काम्भायन्यः । स्कम्भ इत्यपरे[9] ॥ * ॥ शाटायन्यः[10] ॥ * ॥ गाणायन्यः ॥ * ॥ भास्मायन्यः । भस्त्रेत्यन्यः[11] ॥ * ॥ शाङ्खायन्यः ॥ * ॥ वैपाशायन्यः ॥ * ॥ शौण्डायन्यः ॥ * ॥ शाकायन्यः ॥ * ॥ अस्योदाहरणानि ।

---

१ अदंतेभ्यो C.; cf. P. iv. 2, 112.

२ ? ञ्याहो ढणि B.; °स्त्रियाभ्यां हो ठणि C.; ञ्याडा ढणि° F. [? cf. P. iv. 1, 120 (स्त्रीभ्यो ढक्) & sl. 225; (*haritâdi*, sl. 238)].

३ A. om. text and comment.

४ ? पन् B.; यन् F.; पत् C.; यञ्° D.; ? फन् K. [Pâṇ. च्फञ्].

५ पञ्° B. C. (K.); यञंताद्स्त्रियामित्य° F.; पप्याताद्स्त्रियामि° D.—Cf. P. v. 3, 113.

६ ? Thus D.; शुभ इति° B. C. F.; श्रीभोजः D.—Bö., Yajñ. have शुभ; Hem. शुभा; Kâṣ. V. ed. शुभ (*var. l.* शुभा); MS. *a.* & *var. l.* ed. शुभंया.

७ स्कन्द Bö., Kâṣ. V. ed.; स्कंध Hem., Kâṣ. V. *a.*; स्कंद (स्कंध इत्यन्ये) Yajñ.

८ औडलोमायन्यः° B.; D. om. fr. केचिल्लोमान्त°; Yajñ. same as here.

९ ? Thus B. C. F. K.; D. om. from स्कम्भ.—The other works have स्कम्भ (Vardham. स्कम्भा ?).

१० शाकटायन्यः F.—Hem. शट, the others शठ; Kâṣ. V. ed., MS. *a.* have शाकट besides शाक and शठ.—Cf. *kârikâ* 3.

११ Om. D. (& the other works).

ऐचन्त कुञ्जानुपसृत्य[1] कौञ्जायन्यादयोऽर्थर्षिवधूवधूय्यः[2]।
कौञ्जायनाः पार्थिवकुञ्जरं तं ब्राध्नायनाश्चातिकुतूहलेन[3] ॥ १ ॥
शाङ्खायनाः शङ्खकशोभिहस्ता[4] भास्नायना भास्वरहेमभासः।
गाणायना गाणपतव्रतस्थाः शाकायनाः शंकरभक्तिभाजः ॥ २ ॥
शौण्डायना मार्जनकर्मशौण्डाः शाटायनाः शाठ्यविहीनवाचः।
स्कम्भायनाः स्कम्भितमन्मथास्त्राः शौभायनाः शोभनवल्गुवाचः ॥ ३ ॥
स्कान्दायनाः स्कन्दमहौजसं वैपाशायनाः[5] पाशभृतोपमेयम्।
प्रियौडुलोमायनमौडुलोमायन्यं[6] तमालोक्य न तृप्तिमापुः ॥ ४ ॥
२४५ ॥ इति कुञ्जादिः ॥

गर्गो वत्सविरोहितौ शटशकप्राचीनयोगावटा
धूर्तः शङ्खधनंजयाजचमसा विश्वावसुः संकृतिः।
वृक्षागस्त्यपुलस्तिवल्गुकलिता मन्तुर्मनायी लिगुः
मूनुर्लोहितकन्थकौ श्रुवलतू मण्डुर्जिगीषुस्तनुः[7] ॥ २४६ ॥

गर्गादेर्यञिदेत्यादिना यञ् ॥ * ॥ गर्गस्यापत्यं पौत्रादिः। गार्ग्यः ॥ * ॥ वात्स्यः ॥ * ॥ वैरोहित्यः ॥ * ॥ शाट्यः ॥ * ॥ शाक्यः ॥ * ॥ प्राचीनयोग्यः[8] ॥ * ॥ आवट्यः ॥ * ॥ धौर्त्यः ॥ * ॥ शाङ्ख्यः ॥ * ॥ धानंजय्यः ॥ * ॥ आज्यः ॥ * ॥ चामस्यः ॥ * ॥ वैश्वावसव्यः ॥ * ॥ सांकृत्यः[9] ॥ * ॥

---

१ पर्चांतकुंजा॰ F.; पर्य्यंतकुंजानुपसृत्य D.
२ ऽर्थार्षि॰ B. C.; ॰वधूजनाद्यः C.; ॰वधूः वधूघः। D.
३ कुंजरंतः॰ F.; चाध्वयनापाति१D.
४ शांखक॰ B. C. K.; शांखिक॰ F.; वक्र॰ D.; ॰भास्वायना॰ B. F.
५ ॰महौजसस्य वै॰ C.: वैशंपायना B. C. F. K.
६ प्रियोडुलौमा॰ F.; प्रियौडुलौमा॰ D.; B. om. the last two *kārikās.*
७ पंडुर्जि॰ E.; A. B. om. text and comment.
८ प्राचीनयौग्यः C. D. K.
९ शांक्त्यः D.

वार्च्यः ॥ * ॥ आगस्त्यः ॥ * ॥ पुलस्तेः । पौलस्त्यः ॥ पुलस्त्य इत्यपि प्रकृतिरस्ति । तस्याप्यृष्यणि पौलस्त्यः स्यात् । परं[1] पुलस्तिशब्दस्य यञभावे रूपान्तरमनिष्टं स्यात् । आदौ च विशेषः । यञन्तात्स्त्रियां पौलस्ती । पौलस्त्यायनी । अणन्तस्य पौलस्त्येव स्यात् । बहुषु यञन्तस्य पुलस्तयः । अणन्तस्य पौलस्त्याः[2] ॥ * ॥ वात्नाव्यः ॥ * ॥ मान्तव्यः ॥ * ॥ मानाय्यः । पाठसामर्थ्यान्न स्त्रीत्वनिवृत्तिः ॥ * ॥ लैगव्यः[3] ॥ * ॥ सौनव्यः ॥ * ॥ लौहित्यः ॥ * ॥ कान्थक्यः । कथक[4] इत्यन्यः ॥ * ॥ श्रौव्यः[5] ॥ * ॥ लातव्यः ॥ * ॥ माण्डव्यः ॥ * ॥ जैगीषव्यः ॥ * ॥ तानव्यः ॥ २४६ ॥

तण्डोलूकवतण्डधूमशकलाः कण्ठस्तथा[6] कुण्डिनी
गोकक्षैकरहूगणा[7] वृषगणः स्थूराररकाकताः[8] ।
गोलन्दानडुहौ[9] तरुक्षभिषजौ कृष्णोऽलिगुः पिङ्गला[10]
पूतीमाषसुलाभिनौ कुरुकतः शङ्कुस्तितिक्षैकलूः[11] ॥ २४७ ॥

---

१ पुरं C. K.

२ पुलस्त्य इत्यपि प्रकृत्यंतरमास्त । तस्यापि गर्गादित्वे पुलस्तिशब्दस्य पाठ एवोपलक्षणम् । अत एव रामायणादौ रावणे पौलस्त्यपदं प्रयुज्यमानमुपपद्यते न च पुलस्तिपदेन तस्योपपत्तिरिति वाच्यम् । पुलस्त्योऽजनयत्पत्न्यामगस्त्यं च हविर्भुवि ।° (Bhâg. P. 4, 1, 36) यद्यपि पुलस्त्यस्य ऋषित्वादणि पौलस्त्य इत्येव स्यात्तथापि यञभावे रूपांतरमनिष्टमापद्येत । तथा हि यञंतस्य स्त्रियां पौलस्त्यायनी । असंतस्य तु पौलस्तीत्येव । बहुष्वपत्येषु यञो लुकि पुलस्त्याः । ऋष्यणस्तु लुगभावात्पौलस्त्या इति विभावनीयम् । Yajñ.

३ लौगव्यः D.; लाक्षिगव्यः C.

४ ? कथ C., orig. K. (corr. कंथुक or कथुक); कंथ F.; om. D.; कान्थक and कथक Bö., Yajñ.; कंथक, कच्छक Hem.; कथक Kâś. V. ed. (कच्छप । कन्धर *a.*).

५ ? श्रौव्यः C.—Hem. स्रुव; the other works omit this word and लतु.

६ कंवस्तथा C. D.; कंठस्तथा E. F. K.

७ °बहूगणा F. K.; बहुगणा C.

८ स्थौरा° C.; रराका कतः D.; वृषगणस्थूरा रराकाः कताः E.

९ गोलुंदानडुहौ वद्व° C. F. K.

१० पिंगलः D.; पिंगलाः E.—Bö., Yajñ., Hem., Kâś. V. ed. have पिङ्गल, MS. *a.* पिंगला.

११ A. B. om. text and comment.

ताण्ड्यः । तण्डिन्निति[1] कश्चित् ॥ * ॥ औलूक्यः ॥ * ॥ वातण्ड्यः । शिवादिपाठादणपि । वातण्डः ॥ * ॥ धौम्यः । युधिष्ठिरमन्त्री । यथा कादम्बर्याम्[2] । धौम्य इवाजातशत्रोः ॥ * ॥ शाकल्यः ॥ * ॥ काण्व्यः[3] ॥ * ॥ कौण्डिन्यः ॥ * ॥ गौकक्ष्यः ॥ * ॥ ऐक्यः ॥ * ॥ राहूगण्यः[4] । रहोगण इत्यन्यः ॥ * ॥ वार्षगण्यः ॥ * ॥ स्थौर्यः[5] ॥ * ॥ राराक्यः । अरराकेत्यन्यः[6] ॥ * ॥ कात्यः ॥ कात्यशब्दाल्लोहितादित्वाड्डायनि कात्यायनी । गौरी । ऋषिपत्न्याकारत्वादर्धवृद्धा नार्यपि ॥ * ॥ गौलन्द्यः[7] ॥ * ॥ आनडुह्यः ॥ * ॥ तारुक्ष्यः[8] ॥ * ॥ भैषज्यः ॥ * ॥ कार्ष्ण्यः ॥ * ॥ आलिगव्यः ॥ * ॥ पैङ्गल्यः ॥ * ॥ पौतीमाष्यः । पूतिमाष इति भोजः[9] ॥ * ॥ सौलाभ्यः । सुलोभिन्निति[10] वामनः ॥ * ॥ कौरुकात्यः[11] ॥ * ॥ शाङ्कव्यः ॥ * ॥ तैतिक्ष्यः ॥ * ॥ ऐकलव्यः ॥ २४७ ॥

चुलुकचणकमङ्कुः शर्कराक्षाग्निवेशौ
चिकितकुटिलदल्भाः पिप्पलूतृक्षकक्षौ[12] ।

---

१ ? तण्डिन्निति C.; तडिन्निति D.—Hem. त[illegible]न्; the others तण्ड.

२ F[illegible] Calc. (1849) p. 49, 20.

३ [illegible]ण्व्यः C.; कांव्यः K.; कं।ष्य (*i.e.* कांव्यः?) D.; कांठ्यः F.—Hem. कंठ; the other works कण्व.

४ ? बाहूगण्यः C. F. & corr. K.; °रोहूगण इत्यः D.—Bö., Kâṣ. V. ed., Yajñ. have रहूगण; Hem. रहोगण.

५ स्थैर्यः C.—स्थूरा Bö., Yajñ.; स्थूण Kâṣ. V. ed., स्थूला MS. *a.*; स्थूर । Hem.

६ Bö. has अररक (*var. l.* अदरक); Yajñ. अरराक (or °का) । [राराक्य इति केचित्]; Kâṣ. V. ed. अररक, MS. *a.* आरका; Hem. अरराका.

७ Thus D.; गौलुंद्यः C. F. K.—Bö., Yajñ. गोलन्द; Hem., Kâṣ. V. ed. गोलुन्द, MS. *a.* गोलुद; cf. *kârikâ* 13 on ṣl. 252.

८ वारुष्यः C. K.; वारुक्ष्यः F.

९ पूति इति° C.; °ओभोज्यः D.—The other works (and *kârikâ* 15) give पूतिमाष [पूतीमाष इत्यन्ये Yajñ.].

१० ? मुलाभिन्निति D.; सुलाभिन्निति C. F. K.—Kâṣ. V. ed. has सुलोभिन्, MS. *a.* सुलोहित; Bö., Yajñ. सुलाभिन् (सुलामिन(!) Yajñ.) & सुलोहिन्; Hem. twice सुलाभिन

११ कौरुकत्यः D.; cf. ṣl. 164.

१२ चकितकुटल° C. K.; °दल्लीपिप्पलु° C.; दल्भापि° E.; °कचौ C. E.; पिप्पलूतृ K.; पिप्पलूस्तृ°F.; तृष्यकचाः D.

महितमुसलरेभाः[1] शण्डिलोक्थौ च गण्डुर्[2]
विदभृदभयजाताविन्द्रहूतिस्तिरी च[3] ॥ २४८ ॥

चुलुकचणकाभ्यां युक्तो मङ्कुः। चुलुकचणकमङ्कुः॥ चौलुक्यः[4] ॥*॥ चाणक्यः ॥*॥ माङ्कव्यः[5] ॥*॥ शार्कराक्ष्यः ॥*॥ आग्निवेश्यः ॥*॥ चैकित्यः[6] ॥*॥ कौटिल्यः[7] ॥*॥ दाल्भ्यः ॥*॥ पैप्पलव्यः[8] ॥*॥ तार्क्ष्यः। गरुडः ॥*॥ काक्ष्यः[9] ॥*॥ माहित्यः ॥*॥ मौसल्यः ॥*॥ रैभ्यः[10] ॥*॥ शाण्डिल्यः ॥*॥ औक्थ्यः[11] ॥*॥ गाण्डव्यः[12] ॥*॥ वैदभृत्यः। अस्य पौत्रादौ यञ् तस्य लुचि। विदभृतः। अभिजिदादावधीतस्य[13] विदभृच्छब्दस्यापत्यमात्रे यञ् तस्याणि। वैदभृताः॥ विद्वन् साहसिकान् बध्नातीति विद्वभत् तस्य वैद्वबध्य इत्यन्यः[14] ॥*॥ आभयजात्यः ॥ आभय्यः। जात्य इत्यन्ये[15] ॥*॥ ऐन्द्रहव्यः ॥*॥ तैत्तिर्यः ॥ २४८ ॥

बृहदग्निसवर्णर्क्षजमदग्निपराशराः।
जतूकर्णः[16] कुटीगुश्च कर्कटाश्मरथौ मनुः ॥ २४९ ॥

---

१ °मुशल° F.K.; °मुशलसोभोः° C.

२ शंडिलोत्थे° C.; शांडिलोक्षौ° E.; शाण्डिलोत्कैवितडोर्बि° D.; वतंडो for च गण्डु E. F.; च तंडो C. K. (śl. 247).

३ A. B. om. text and comment.

४ चैलुंक्यः° D.—Bö. has चुलुक; Yajñ. चुलक; Kâś. V. ed. कचुलुक (!), MS. *a.* चुकित.

५ मङ्कु Bö., Yajñ., Hem., Kâś. V. MS. *a.*; मचु Kâś. V. ed.

६ Bö., Yajñ. read चेकित; Hem., Kâś. V. ed. चिकित (om. *a.*).

७ ? कौटख्यः C. D. K.—Hem. कुटल; not given by the other works.

८ पैष्पलव्यः C.; पौप्पलव्यः D.

९ Kâś. V. ed. कष; om. MS. *a.*, Bö., Yajñ., Hem.

१० मौशल्यः° C. F. K.; °रौभ्यः K.; °सौभ्यः C.

११ औत्थ्यः C.; औ॰ः D.—उकथ Bö., Yajñ., Kâś. V. MS. *a.* (उकत्थ ed.); उत्थ (? उच्छ) Hem.

१२ ? वातंड्यः F.; तांड्यः C. K.; om. D.—गण्डु Bö., Yajñ., om. others.

१३ Cf. śloka 252.

१४ वितृभद्रस्तस्य° C. K.; K. orig. वैनृबध्य; D. om. from वितृन्.—वितृ from वा गन्धने (हिंसायां) Dhâtup. 24, 42; as पितृ from पा (Weber) [Hem. पितृवध्].

१५ D. om. आभय्यः°.—Bö., Yajñ., Hem. अभयजात; Hem. also divided; K. V. ed. उभय। जात, *a.* उभयजात.

१६ जतुकर्णः° C.; जर्त्तकर्णः K.; A. B. om. text and comment.

बार्हदग्न्यः ॥ * ॥ सावर्ण्यः[1] ॥ * ॥ आर्च्यः । ऋच[2] इत्यन्यः ॥ * ॥ जामदग्न्यः ॥ पाराशर्यः ॥ कथं पुनरनन्तरो रामो जामदग्न्यः । व्यासः पाराशर्य इति । पुत्रोऽपि पौत्रादिकार्यकरणात्तथा व्यपदिश्यते । अनन्तरापत्यविवक्षायां तृष्यणि जामदग्नः[3] पाराशर इति । अन्ये तु बभ्रुः कौशिक[4] इति कौशिकग्रहणं गर्गादियञोऽनित्यत्वख्यापनार्थं मन्यन्ते[5]। तेन पाराशर्यो व्यासः । जामदग्न्यो राम इत्यनन्तरापत्येऽपि यञ् सिद्धः । वैचित्र्यार्थमित्यपरे[6] ॥ भोजस्त्वनन्तरापत्ये पाराशरिः । तस्येदंविवक्षायां तु पाराशर इत्याह[7] ॥ * ॥ जातूकर्ण्यः[8] ॥ * ॥ कौटीगव्यः[9] ॥ * ॥ कार्कश्यः ॥ * ॥ आश्मरथ्यः ॥ * ॥ मानव्यः ॥ कथं मानवी प्रजा । लोहितादित्वाड्डायनङीभ्यां[10] स्त्रियां नित्यं भवितव्यम् । अनन्तरापत्यविवक्षायामृष्यण् भविष्यति ॥ २४९ ॥

पर्णवल्कस्तलुक्षश्च यज्ञवल्कश्च मन्त्रितः[11] ।
व्याघ्रपाद्भिषा[12] देवहूस्तन्तुभण्डितमुद्गलाः ॥ २५० ॥

पार्णवल्क्यः ॥ * ॥ तालुक्ष्यः ॥ * ॥ याज्ञवल्क्यः ।

---

१ सावसर्यः D.

२ ऋच C.; ऋच्य D. F.—Bö. has ऋक्ष; Kâs. V. MS. *a.* ऋच (om. ed.); Yajñ. ऋच । ऋक्ष इत्यपि पाठः ।; Hem. ऋक्ष, ऋच & ऋच.

३ जामदग्न्यः D.

४ Cf. P. iv. 1, 106; also sl. 59 com.

५ °यञोऽभिनित्यत्वाख्यापनार्थः मन्यते D.; गर्गादिगणस्य नित्यत्वख्यापनार्थं° C.

६ विचित्र्यार्थमित्यपरे C. K.

७ D. om. from भोजस्तु.

८ जार्त्तकर्ण्यः C. K.—Bö. has जातूकर्ण (*v.l.* जतूकर्ण); Yajñ. जातूकर्ण (but makes जातुकर्ण्य); Hem., Kâs. V. ed. जतूकर्ण; MS. *a.* जातूकर्ण

९ कौटिगव्यः C. K.

१० Cf. sloka 59.

११ °तुलुचस्य° मंचितः E.

१२ ? Thus F. cf. note ३, next page; व्याघ्रपाद्दिषाद्दैव° D.; °भिषदेवहूस्त° K.; °भिषदेवहव्यस्तु° C.; °भिषगदेव° E.—A.B. *om. text and comment.*

स योगी याज्ञवल्क्यस्त्वां वेदान्तानध्यजीगपत्[१] ॥

मन्द्रं संजातमस्य । मन्द्रितः । तदपत्यं मान्द्रित्यः । मन्त्रित[२] इति वामनः ॥ * ॥ वैयाघ्रपद्यः ॥ * ॥ भैष्यः[३] ॥ * ॥ दैवहव्यः । यज्ञहृरित्यप्यन्यः[४] ॥ * ॥ तान्तव्यः ॥ * ॥ भाण्डित्यः ॥ * ॥ मुदं मदं वा गलतीति मुद्गलः । तदपत्यं[५] मौद्गल्यः ।

मौद्गल्यस्य कवेर्गभीरमधुरोद्गारा गिरां सूक्तयः[६] ॥ २५० ॥

आङ्गिरसे बोधकपी ब्राह्मणकुशिकाङ्कजे च मधुबभ्रू ।
वाजोऽसे जरमाणो भडितासंकृतितितिम्भवामरथाः[७] ॥२५१॥

बौध्यः । काप्यः । आङ्गिरसश्चेत्[८] ॥ अन्यत्र बौधिः । कापेयः ॥ * ॥ माधव्यः । ब्राह्मणश्चेत् । अन्यत्र माधवः ॥ * ॥ बाभ्रव्यः । कौशिकश्चेत् । अन्यत्र बाभ्रवः ॥ अन्ये तु लोहितादिपठितादेव बभ्रोः कौशिके यञं मन्यन्ते । स्त्रियां बाभ्रव्यायण्येव तन्मते स्यात्[९] ॥ * ॥ वाजोऽस इति वाजशब्दोऽसमासे यञमुत्पादयति । वाज्यः ॥ अस इति किम् । सौवाजिः ॥ अस इत्यस्योपलक्षणत्वादन्येषामपि गणपठितानामसमास एव[१०] प्रत्ययः । पारमविदिः । पारमगर्गिरित्यादि[११] ॥ * ॥ जार-

---

१ Anarghyar. 3, 13.

२ Thus Kâṣ. V., Bö., Yajñ.; मंद्रित Hem.

३ ? Thus MSS.—Hem. has भिषज् (cf. ṣl. 247) & भिष ।; Bö. भिषज् (*var. l.* भिषज); Yajñ., Kâṣ. V. ed. भिषज्; MS. *a.* भिषज.—The *kârikâs* on ṣl. 252 give only भैषज्य (*k.* 12) [? भिषज in ṣl. 247, and here भिषज् with E.].

४ D. om. from यज्ञहृ°; Hem. has यज्ञहृ; om. the others.

५ मुदं नुदं वा° C.; D. om. etymology and quotation.—Cf. Nir. 9, 24.

६ Anarghyar. 1, 8 [गिरां व्यूतयः (= राशयः समूहाः comm.) ed. Calc. Ṣ. 1782].

७ °संक्षतितंभवामरथाः C. K.; A. B. om. text and comment.

८ Cf. P. iv. 1, 107.

९ Cf. ṣl. 59 comm.; P. iv. 1, 106.

१० °अस एव C.; असस एव D.

११ पारत्यवैदिः पारमगार्गिरित्यादि D.; पारमवैदिः° F.

माण्ड्यः ॥ * ॥ भाडित्यः ॥ * ॥ आसंक्रत्यः[१] ॥ * ॥ तिम्यन्तं भक्षयतीति तितिम्भः । तस्य तैतिम्भ्यः[२] ॥ * ॥ वामरथ्यः ॥ २५१ ॥

गुहलुर्मनसो मङ्कुः पिङ्गभिष्णजसम्बवः[३] ।
आलापी कृतवीरश्चाभिजिदादिस्तथा गणः ॥ २५२ ॥

गौहलव्यः । गूहलुरित्यन्यः[४] ॥ * ॥ मानस्यः ॥ * ॥ माङ्कव्यः ॥ * ॥ पैङ्ग्यः ॥ * ॥ भैष्णज्यः ॥ * ॥ साम्बव्यः[५] ॥ * ॥ आलाप्यः ॥ * ॥ कार्तवीर्यः ॥ * ॥

अभिजिदादिः पुनरयम् । अभिजित् विदभृत् शालावत् शिखावत् अमत्[६] ऊर्णावत् श्रीमत् शमीवत्शब्दाः[७] । तेषामभिजिदादेर्यञो ऽणित्यनेन यञो ऽण् भवति[८] । अभिजितो ऽपत्यानि । आभिजिताः । वैदभृता[९] इत्यादि ॥ * ॥ अस्योदाहरणानि[१०] । यथा ।

राजन्महाकालवने ऽत्र गार्ग्यो वात्स्यात्मजावत्सलबालवत्सम् ।
वाज्याज्यसोवाजिबटुप्रियेण विलोक्यतामाश्रममण्डनं त्वः[११] ॥ १ ॥

---

१ The others only संक्रति (śl. 246).

२ तैतिभ्यः C.; तिंतिभस्तस्य तैंतिभ्यः F. Only Hem. has this word.

३ ? °संवचः D. E.; °शांबवः K.; शंव ऽव C.—A. B. om. text and comment.

४ Bö., Yajñ. गुहलु; Hem. गूहलु; Kâś. V. ed. गुलु; MS. *a.* गुग्गुलु; (*kârikâ* 8 गूहलु?).

५ शांबव्यः F.; सांवच्यः D. K.—शंखु Hem., om. the others; cf. śl. 60.

६ आमत् C.; °अमत् F. K.; अमत् eds. Pâṇ., Kâś. V.; अमत् Mahâbh. ed. Ben.

७ C. F. om. शमीवत्; K. suppl.; D. om. from अभिजिद्विदभृद्°; cf. P. v. 3. 118.

८ आदेर्यों ण इत्यनेन यञण° C.; om. D. (Pâṇ. अणो यञ्).

९ आभिजितः° C. K.; खादभृत C.; खेदभृत K.; ऽपत्यान्या तो वैदभृतः D.

१० The words अलिगु, एक, कच, क्रतवीर, गण्डु, तनु, तितिभ, तित्तिर, धूर्त, पिङ्ग, भिषा, मङ्कु, मन्त्रित (मन्त्रित), लतु, वामरथ, वृच, शक, सम्बु (संवच्), सूनु, though given in the text, are not exemplified in the *kârikâs*; twice occur अवट (*kâr*. 4b, 7a), कपि (9a, 16b), बभ्रु (5b, 16a), दल्भ (7b, 14a).—संशित is given in *kâr*. 5b, but not in the text (but cf. *lohitâdi*, śl. 60).

११ वात्स्यमजां वत्सल° नः D.

तथेति गौरीपतये प्रणम्य सांकृत्यपत्नीकृतपादपं सः ।
आसंकृतीनर्तितमत्तबर्हि[1] मुनेः पदं राजमुनिर्जगाम ॥ २ ॥
वैयाघ्रपद्योपहितार्घपाद्यः[2] प्राचीनयोग्योदितमङ्गलाशीः ।
स तत्र रैभ्यायणपृष्टवार्त्तः पौलस्त्यहाऽत्रेरिव धाम्न्यभासीत्[3] ॥ ३ ॥
साग्न्याग्निवेश्ये स्तुतसांख्यशांख्ये धौम्यापधौम्ये धुतशाख्यसाख्ये[4] ।
आवव्यचामस्यनमस्यधानंजय्यानडुह्ये[5] स जहर्ष तस्मिन् ॥ ४ ॥
ह्मा तार्क्ष्यलक्ष्मेह[6] सकौरुकात्यवैश्वावसव्यायनजारमाणान् ।
लौहित्यमांशित्यवतोऽभिवाद्य बाभ्रव्यमाण्डव्यमुखानुपेये ॥ ५ ॥
स मङ्क्षु माङ्क्ष्व्यमनस्यमाङ्क्षीत् स वल्गुवाल्गव्यवचस्यवालीत्[7] ।
मानव्य शाङ्कव्य मनोस्य शङ्कुर्मानाय्यमानाय्यमिवैष भेजे[8] ॥ ६ ॥
सावव्यकार्कव्यकुटीगकौटिगव्यान्तिषङ्गिविदभृङ्गिरोद्यान्[9] ।
स वैदभृत्यायनवैदभृत्यसौलाभ्यदाल्भ्यान् बहु तत्र मेने ॥ ७ ॥
जिगीषवेऽस्मै निजुगोप जैगीषव्यो न्यगूहद्यद् गौह्लव्यः[10] ।
तच्छ्रौव्यलैगव्यकथासु तत्त्वं गीर्ब्रह्मणो[11]ऽस्य स्वयमाबभासे ॥ ८ ॥

---

१ °नर्त्तीनमंतबर्हि C.; °नर्त्तितमंतबर्हि K.; °नर्त्तितत्पत्तवर्हि D.

२ वैयाघ्रपाद्यो° C. F. K.

३ रैत्यायन° अमासीत् D.; पौलस्त्यदात्रेरिव° F.

४ साग्न्यग्निवेश्निसुत° C.; साग्न्यग्निवेश्ये सुतसांख्यशाख्ये° D.; सात्यमिदेश्यसुत° F.; °सांख्यसांख्ये C. F. K.; धुतसाद्यसाख्ये D.; °साध्यौ C.

५ आवस्यवामस्यममस्यधामंजप्यान° C.; °धानंजह्यानडुह्ये C. F. K.

६ ह्मोताक्ष्य° F.

७ °ववस्य बालान् C.; वचस्यवलात् F. K.; °वरस्य वलात् D.

८ °सांकव्य° C. D. F.; °मतोस्य C.; °शंनुर्मा° D.; °आनाय्यमिवैष MSS.

९ °विदभिन्नरीयान् F.; विदभित् गरायान् C.; विदभित् गरीद्यान् K.; विदभृहिरीघां D.

१० जिगीशवोऽस्मै° C. F.; निगूहत्य गौहलव्यः D.; °गौहलव्यं C.

११ तद्भ्रौव्यलौगव्यकथासुतन्नं° C.; गीब्राह्मणो C. K.; तक्रौव्यक्ङ्गिव्यकथासतलगीर्ब्रह्मणो D.; तच्क्लौव्यलैगव्य° F.

वातण्ड्यताण्ड्यायनकाप्यकात्यमान्तव्यतान्तव्यदर्मैः स तस्मिन् ।
तारुक्ष्यतालुक्ष्यतपोभिराच्यः काप्यक्यशाकल्यजपैश्च[1] जज्ञे ॥ ९ ॥
स काण्व्यगौकक्ष्यममचमस्मिन्नागस्त्यकौण्डिन्यकृतातिथेयः[2] ।
सुभाषितान्यादित पार्णवल्क्यो यजूंषि सूर्यादिव याज्ञवल्क्यः[3] ॥ १० ॥
माहित्यमाहित्यविदेष जातूकर्ण्यस्य सावर्ण्यसवर्णमोजः[4] ।
भाण्डित्यपाण्डित्यमिहैव राङ्कगण्यादयो वीक्ष्य तमित्यमूचुः ॥ ११ ॥
भाडित्यभैषज्यवचो विचिन्वन्नालाप्यचैकित्यमतिं मिमानः[5] ।
मौमल्यपैङ्गल्यकृतीः स पाराशर्यायमाणो मनसालुलोके[6] ॥ १२ ॥
सवार्हदग्न्यायनजामदग्न्यः स्थौर्यौक्थ्यतैतिक्ष्यजिघृक्षिताभिः[7] ।
कौटिल्यशास्त्रार्णवपारदृश्वा ननन्द गौलन्ध्यमुनीन्द्रवाग्भिः[8] ॥ १३ ॥
कार्ष्ण्यैकलव्यायनपैप्पलव्यदाल्भ्यैन्द्रहव्यायनदैवहव्यान्[9] ।
राराक्यचाणक्यवदारकयमौलूक्यचौलुक्यजुषं सिषेवे[10] ॥ १४ ॥
स भाजयन्नाभयजात्यवैरोहित्याश्मरथ्यायनवार्षगण्यान् ।
सपौतिमाष्यायणशार्कराक्ष्यशाण्डिल्यमौद्गल्ययुजो विरेजे ॥ १५ ॥

---

१ काथक्य° C. F. K.; °साकल्य° D.

२ स कांच्य° C. K.; स कांद्य° F.; स सांवगौ° कृताविधेयः D.

३ सुभाविता° पार्णवल्काः° याज्ञवल्काः C. K.; पार्णवल्क्याज्य–षि° D.

४ जातूकर्णास्य° F.; जातूकसर्पास्य° D.

५ विचिन्वन्नालाज्यचैकत्य° F.; वैकित्य° D.; °आलोप्यचैकित्य° C. K.; मतिमिमानः C.

६ मौशल्य पैगल्यकृतीः स पाराः सर्यापमाणो ममसा° D.; °कृता स पाराशर्यायमाणो मनसलुलोकि C.; °कृती स पारासर्यायमाणो नुमसा लुलोके F. K.

७ ?सवार्हदग्न्याः स्थिरकौशलाग्निस्थैर्योक्थ्य° C. °स्थौर्यौ–तैतिक्ष्यजिघृक्षिताचिः D.

८ कौटल्यशास्त्रा° K.; °नानांद्यगौ° वाग्निः D.; दृश्वा नगौ ऋषकेशमुनी° C.

९ का–कलव्या° D.; कार्ष्णिक° दोल्भिन्द्र° C.

१० राराज्यचाणक्यरुचः स तस्मिन्नौलूक्यचौलुप्वज्जषः सिषेवे D.; °वटारक्यमौलुक्यचौलुक्यजुषः° F.

माधव्यतो धाम स माधवश्रीर्बाभ्रव्यधीर्बाभ्रवतः प्रभावम्[१]।
कापेयतः काप्यरुचिः प्रतापं[२] बौध्याच्च बौधेश्च स बोधमाप[३] ॥ १६ ॥

प्रथमवृत्ते विरोहितागस्त्यशब्दौ[४]। द्वितीयवृत्ते तण्डवतण्डधूमैककुरुकतानडुहलिगुशङ्कुकततरुचवर्जिताः[५] शब्दाः। तृतीयवृत्ते मङ्क्ष्वग्निवेशवृचकचरेभवर्जिताः[६]। चतुर्थश्लोक ऋचमनुवर्जिताः[७]। पञ्चमश्लोके तलुचव्याघ्रपत्तन्तुवर्जिताः[८]। षष्ठार्यायां भडिततितिभवामरथशब्दाः[९]। सप्तमश्लोके भिष्णजालापिकृतवीरशब्दा[१०] अभिजिदादिश्च शकलादिगणयोग्या[११] भवन्ति ॥ आकृतिगणोऽयम्। तेन यज्ञकप्रभृतयो[१२] द्रष्टव्याः ॥ २५२ ॥ इति गर्गादिः ॥

इति
श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितस्वोयगणरत्नमहोदधिवृत्तौ तद्धितप्रक्रियास्वार्थिकापत्यप्रत्ययगणनिर्णयो[१३]
नाम तृतीयोऽध्यायः समाप्तः ॥

---

१ र्वा भवतः प्रभावं F.; °र्वाभुवतः प्रभावं K.; °र्वा भुवनप्रभावः C.

२ कोपेटातः° प्रभापं D.; प्रतापा C.

३ वाध्यास्वबोधस्लस बोधमाप C.; वौध्यास्व वौधिश्च स वाधागपा। D.; बौध्यास्व बौधेश्च स बोधनाय F.; बौध्यास्वबोधेस्व स° K.

४ ? विरोहिताशब्दास्तृतीय° D.; विरोहितागस्तिशब्दौ C. F. K.; śl. 246 has अगस्त्य which in the other works is *kaṇvâdi* (अगस्ति being *gargâdi* only).

५ लिंगुशंकुकतरूच° F.; शंकुकतरूच° C. K.; D. om. from द्वितीय.

६ °वृचकच° MSS.; Bö. also has वृच twice in the *gargâdi*, but not in the *kaṇvâdi*; cf. *lohitâdi*, śl. 60.

७ ऋष्यमनु° D.; °मतुबवर्जिताः C.

८ °तनुवर्जिताः C.

९ षष्ठीर्यायाततितिंभ° D.; षष्ठश्लोके भडिततितिभ° C.; भडिततिंतिभ° F.

१० भिष्णजापिपक्कत° D.

११ सकलादि° D.—*ṣakalâdi* = *kaṇvâdi*, P. iv. 2, 111.

१२ यचहूप्रभृतयो D.

१३ तद्धितप्रक्रयानिरूपणं E.

## अथ चतुर्थोऽध्यायः ॥

धनं सेना पशुक्षेत्रे धान्यप्राणसभागृहाः ।
शताश्वधन्वराष्ट्राधिकुलधर्मगणास्तथा[१] ॥ २५३ ॥

धनादेरपत्ये वाण् पत्युरित्यनेन धनादिपूर्वपदात्पतिशब्दादत्राणधिकारे येऽर्थास्तत्रापत्ये[२] वाण् भवति । ण्यस्यापवादः[३] ॥ * ॥ धनपतेरपत्यं धनपतिर्वा देवताऽस्य । धानपतः ॥ * ॥ सेनापतेरिदम् । सैनापतम्[४] ॥ * ॥ एवं पाशुपतम् ॥ * ॥ चैत्रपतम् ॥ * ॥ धान्यपतम ॥ * ॥ प्राणपतम् ॥ * ॥ साभापतम् ॥ * ॥ गार्हपतम् ॥ * ॥ शातपतम् ॥ * ॥ आश्वपतम् ॥ * ॥ धान्वपतम् ॥ * ॥ राष्ट्रपतम् ॥ * ॥ आधिपतम् ॥ * ॥ कौलपतम् ॥ * ॥ धार्मपतम् ॥ * ॥ गाणपतम् ॥ २५३ ॥ इति धनादिः[५] ॥

उत्सोशीनरभल्लकीयविकरा धेनूदपानोष्णिहः[६]
पञ्चालापवदौ महानदपृथे इन्द्रावसानः कुरुः ।
सत्वद्गीष्मरथन्तरं जनपदो मध्यंदिनानुष्टुभौ
त्रिष्टुप्पङ्क्तिमहानसाश्च भरतो ज्ञेयः सुवर्णः ककुप्॥२५४॥

उत्सादेस्तान्नित्यनेनोत्सादेर्देवपृथिवीशब्दाभ्यां[७] वास्ये तस्मात्पूर्वेऽपत्ये

---

१ ०धान्वराष्ट्रादिकुल० E.; A. om. text and comment; B. om. to धनपतेरपत्यं धनपतिर्.

२ येऽर्थासेनापत्ये D.

३ णास्यापवादः C.; ण्यत्यापवादः D.; ण्यस्यापवादः K.

४ Thus also Hem.; Bö., Yajñ., Kâś. V. *a.* & *var. l.* ed. have स्थानपति instead.

५ = *aśvapatyâdi*, P. iv. 1, 84; Hem. (*dhanâdi*, vi. 1, 14) reads also गज (गाजपतं) and adds केचित्तु गृहसेनाशब्दौ न पठन्ति। तन्मते गार्हपत्यं सैनापत्यमित्युत्तरेण ञ्य एव (P. iv. 4, 90).

६ उत्सोसीनर० D. E.; ०विधुरा घेनूरपादो० D.; ०धेनूदपातो० C.; A. om. text and comment.

७ The other works include देव and पृथिवी in the *gaṇa*.

वार्थेऽञ् भवति। अणस्तदपवादानां च बाधकः ॥ * ॥ उत्सस्यापत्यम् उत्सो वा देवताऽस्येति। औत्सः ॥ * ॥ औशीनरः ॥ * ॥ भाल्लकीयः ॥ * ॥ वैकरः। अस्य पथ्यादिपाठाच्चातुरर्थिको[१] ण्य एव ॥ * ॥ धैनवः[२] ॥ * ॥ औदपानः ॥ * ॥ औष्णिहः ॥ * ॥ एवं पञ्चालेषु भवः। पाञ्चालः। अके प्राप्ते[३] ॥ * ॥ आपवदः। वामनमतेन[४] ॥ * ॥ माहानदः ॥ * ॥ पृथाया अपत्यम्। पार्थः।

यियक्षमाणेनाहूतः पार्थेनाथ मुरं द्विषन्[५] ॥ * ॥

इन्द्रावसानो नाम वाहीकग्रामस्तस्य[६]। ऐन्द्रावसानः ॥ * ॥ कुरुषु भवः। कौरवः ॥ * ॥ सत्वतोऽपत्यम्। सात्वतः। यथा।

समरेषु रिपून्निजघ्नता[७] शिशुपालेन समेत्य संप्रति।
सुचिरं सह सर्वसात्वतैर्भवविश्वस्तविलासिनीजनः ॥

यादवैरित्यर्थः ॥ * ॥ ग्रीष्मे भवम्। ग्रैष्मं महः[८] ॥ * ॥ रथंतरो नाम राजा साम वा। तदपत्यं तत्र भवं वा। राथंतरम् ॥ * ॥ जानपदः ॥ * ॥ माध्यंदिनः ॥ * ॥ आनुष्टुभः ॥ * ॥ त्रैष्टुभम् ॥ * ॥ पाङ्क्तम् ॥ * ॥ माहानसोऽग्निः ॥ * ॥ भारतः ॥ * ॥ सौवर्णं कटकादि ॥ * ॥ काकुभम् ॥ २५४ ॥

**बृहतीजगतीमहिमन्तरुणास्तलुनो महन्महाप्राणौ।**
**विनदबृहत्यीलुकुणा वृषदंशो बष्कयश्वासे[९] ॥ २५५ ॥**

---

१ This must refer to the *saṁkāṣādi* (Hem. vi. 2, 82 *supanthyādi*), ṣl. 274-6 (in which Vardh. includes the *pragadyādi*, P. iv. 2, 80).

२ Cf. p. 287, l. 11.

३ आकप्राप्ते B. C. (P. iv. 2. 124); ॰अपवादः B. C. K.

४ The MSS. apparently refer this to the following माहानदः which is given by all the works, whilst अपवद is given by none of them.

५ Śiṣ. 2, 1 [द्विषन्मुरम् eds.].

६ वाहिक॰ D.; वाहाकाग्राम॰ C.; वाहीक B. F. K., Yajñ.

७ Śiṣ. 16, 14; रिपून्विनिघ्नता eds

८ ग्रैष्ममहः D.; cf. p. 304, l. 1.

९ ॰महिमतरुणा॰ B.; पीलुकुणपृषदंशो॰ E.; ॰पीलुकणवृहषदंशो वष्कयश्वासि D.; A. om. text and comment.

बार्हतम् ॥ * ॥ जागतम् ॥ * ॥ महिमतो[१] भावो महिमा । तस्य माहिमः ॥ महीमदित्यन्यः ॥ * ॥ तारुणः । तालुनः ॥ तरुणाऽपत्यं तारुणः । तालुनः । ढणि प्राप्ते[२] ॥ * ॥ माहतः ॥ * ॥ माहाप्राणः । महाप्रयाण[३] इत्यन्यः ॥ * ॥ वैनदः ॥ * ॥ बार्हतः ॥ * ॥ पीलूनां पाकः पीलुकुणः । ततोऽञि । पैलुकुणः[४] ॥ * ॥ वृषं मूषिकं धर्मं वा दशतीति वृषदंशो मार्जारः पापवान्वा । ततोऽञि[५] । वार्षदंशः ॥ जिनेन्द्रबुद्धिस्तु वृषदंशे[६] इति वृषच्छब्दादंशेऽञ् । वृषद अंशो वार्षदः । अंश इति किम् । वार्षदोऽन्यः । अणेव भवति ॥ * ॥ बभ्रुयशब्दोऽसेऽसमासेऽञमुत्पादयति । बाभ्रयः ॥ अन्यच्च सुबभ्रुयस्यापत्यं सौबभ्रुयिः ॥ अस्य समासप्रतिषेधाद् उत्पादान्तस्यापि प्रत्ययः । गोधेनुभ्य आगतं गौधेनवम् । मयड्रूप्यौ न भवत इति शकटाङ्गजः । अस्मन्मते तु तदन्तानां व्यवच्छेदः[५] ॥ २५५ ॥

देशे तूदस्थानो हंसपथं वर्धमानमहितौ च[७] ।
दंशं कुरुकतकुणपावुत्सादिगणे पठन्त्येके[८] ॥ २५६ ॥

उदस्थानशब्दो देशे वर्तमानोऽञमुत्पादयति । देशेऽभिधेय इत्यन्यः । औदस्थानः ॥ अन्यच्च । उदस्थानो नाम कश्चित् तस्य । औद-

---

१ महतो *D.*—महिमत् *Hem.*, om. others.

२ Acc. to Pâṇ. iv. 1, 120.

३ Thus D.; माहाप्रापाण° F.; महाप्राण C. K.; महोप्राण [? = माहाप्राण] B.—Hem. has महाप्राण & महाप्रयाण; the others महाप्राण only.

४ पीलुकणः B.—Bö., Yajñ. पीलुकुण; Kâṣ. V. ed. पीलु । कुल । (!); MS. *a.* पीलुकर्णः.

५ *D. om. from* ततोऽञि *to the end.*

६ Kâṣ. V. ed. reads पृष, दंशे; MS. *a.* पृषदंशे; Bö. पृषदंश; Yajñ. वृषदंशो मार्जारस्तस्य वार्षदंशः; Hem. वृषद् अंशे । वृषदंश इत्यन्ये.

७ देशे वुद° वर्द्धमहितौ च C.

८ E. om. this ṣloka; A. D. om. text and comment; उदस्थान alone is given by Bö., Yajñ., K. V., and exemplified in the *kârikâs*; Hem. has उदस्थान, हंसपथ, वर्धमान, महित्.

स्थानिः ॥ * ॥ हांसपथः ॥ * ॥ वार्धमानः ॥ * ॥ महितस्थ[1]। माहितः ॥ * ॥ दांशः ॥ * ॥ कौरुकातः ॥ * ॥ कौणपः ॥ * ॥ एतेषां यथासंभवमुदाहरणानि[2]।

दृष्टोडुलोमेषु मयौडुलोमे[3] ञ्औवैरसिंहादिषु रुद्रभक्तिः।
अपार्थिवा सा त्वयि पार्थिवी यां नौत्स्यौदपान्यो ऽपि न वर्णयन्ति[4] ॥ १ ॥
आनुष्टुभैस्त्रैष्टुभकाकुभैर्यं पाङ्क्तौष्णिहैर्वार्हतजागतैश्च[5]।
स्तुवन्ति राथंतरभाज्ञकीयसाङ्ख्यंदिनाः सोऽर्हणयादृतस्ते[6] ॥ २ ॥
कस्तारुणस्तालुनवाष्कयो वा सौवष्कयिर्वा हृदये करोति।
विलासिनोर्वीपतिसा कलौ यद्बलौकि लोकेऽत्र मृगाङ्कमौलिः[7] ॥ ३ ॥
न भारतेनैच्चि न कौरवेण नैन्द्रावसानेन न सात्वतेन।
पाञ्चालमाहानदवैनदैर्नो नौशीनरेणाद्य यथा त्वयेशः[8] ॥ ४ ॥
सौवर्णमुर्व्यादि तथा न दत्त्वा[9] न धैनवं जानपदं द्विजेभ्यः।
न वैकरं रत्नचयं विकीर्य त्वमीशमालोक्य यथाद्भुतोऽभूः ॥ ५ ॥
न माहतीमृद्धिमवैमि माहाप्राणी न को जल्पति बार्हतीयम्[10]।
भक्त्येह योऽभ्यर्चति रुद्रमोदस्थानं तमभ्येति जनं[11] जयश्रीः ॥ ६ ॥

---

१ Hem. omits महित, but remarks on महिमत्: महिदित्यपि केचित्.

२ D. om. to यथासंभवमुदा; cf. last page, note ५.

३ मयोडुलोमे C. F.; भयौडलोमे D.

४ ? या नानौस्त्यौद° दर्शयति D.; नौस्यौदीपान्यो° B.; नौस्योद° पि वर्णयंति C.; नास्यौदपान्यो° F.

५ आनुष्टुभं काकुलधैर्यं पांक्ता मनोष्णि° C.; पांक्तोष्णि° F.; °य पांक्तौ° D.

६ °याहृतस्ते F. & corr. D.; °याहृतास्ते C.; °याहृतस्तौ K.

७ विलासिनोर्वापतिन° B. C. K.; विसेलाशिनोर्वा° नृमृगांक° D.; °प्रमृगांक° C. F. K.

८ यथो त्वयेश: B. C. K.; यथान्वयेशः D.

९ तथानर्हैत्वा° D.

१० न साहती वृतद्धिमषवैमि° साहतीयं D.; माहप्राणी° B. C. K.

११ जने B. D. K.; मुदं C.

माहानसोऽग्निः पचतेऽन्नजातं ग्रैष्मं महः पैलुकुणं गृणन्ति[१]।
वृषाङ्कभक्तोऽर्हति वार्षदंशान् भेत्तुं[२] विभिन्ना हि पदार्थशक्तिः ॥ ७ ॥
॥ २५६ ॥ इत्युत्सादिः ॥

भिक्षाखण्डिकदक्षिणायुवतयो धर्मी[३] सहस्रो युगं
 स्रेचं श्वा हलबन्धभिक्षुकशुकोलूकाः पदातिः पुनः।
अङ्गारो वडबाऽथ पद्धतिरहोऽथर्वा करीषं तथा
 चर्मी चर्म च[४] गर्भिणी युगवरत्रा स्याद्वरत्रा तथा ॥ २५७ ॥

भिक्षादेरित्यनेन षष्ठ्यन्तात्समूहेऽण्प्रत्ययो भवति ॥ * ॥ भिक्षाणां समूहः । भैक्षम् । यथा श्रीसागरचन्द्रस्य[५]।

अकल्पितप्राणसमासमागमा
 मलीमसाङ्गा धृतभैक्षवृत्तयः।
निर्ग्रन्थतां त्वत्परिपन्थिनो गता
 जगत्पते किंत्वजिनावलम्बिनः[६] ॥ * ॥

खण्डिकानां[७] कलायानाम् । खाण्डिकम् ॥ * ॥ दक्षिणानाम् । दाक्षिणम् ॥ * ॥ यौवनम् । युवतिपाठः पुंवद्भावबाधनार्थः । अत्रास्य पाठश्चन्द्राचार्याद्यभिप्रायेण[८]। वस्तुतस्तु तद्धितोत्पत्तेः प्रागेव पुंवद्भावेन भवितव्यम् । ततो युवतीनां समूहो यौवनम् । यथा ।

---

१ पवने च जातग्रैष्मं महः पैलुकुणंति D.; ग्रैष्ममहः against metre B. C.
२ वार्षदंशात्॰ D. F.; भोक्तुं D.
३ वर्मी F.
४ वर्मी चर्म च॰ C. D.; A. om. text and comment.
५ यथा सगराचंद्रस्य D.
६ किंतु जनावलंविनः D.
७ Yajñ. & Kâṣ. V. ed. read खण्डिका; Bö., Hem., K. V. *a.* खण्डिक
८ ॰पाठः खंडवार्याद्य॰ D.

सरूपमतिनेपथ्यं[१] कलाकुशलयौवनम् ।
यस्य पुण्यकृतः प्रैव्यं सफलं तस्य यौवनम्[२] ॥

यत उक्तं भाष्यकृता[३] । भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्प्रत्ययविधाविति ॥ * ॥ धार्मिणम्[४] ॥ ब्रह्मादिपाठान्नोऽनक्तौ व्ये शित्यणादावित्यनेन लुङ्[५] ॥ * ॥ साहस्रम् ॥ * ॥ यौगम् ॥ * ॥ चैत्रम् ॥ * ॥ शौवनम् । शकटाङ्गजस्तु श्वखलादिभ्योऽञिनित्यत्र श्वादेरन्वचनम्[६] । शुनां समूहः शौवम् । दण्डिनां दाण्डम् । चक्रिणां चाक्रमित्यादिषु नो पदस्येति लोपार्थमिति मन्यते ॥ * ॥ हालम् । पाशादिपाठाद्[७] हल्या ॥ * ॥ बान्धम् ॥ हलबन्ध इत्यन्यः[८] ॥ * ॥ भैक्षुकम् ॥ * ॥ शौकम् ॥ * ॥ औलूकम् । यञन्तो[९] वृक्षपत्यवाची शुका निर्दिश्यते । तस्येह पाठादपत्यलक्षणोऽकञ्[१०] न भवति ॥ * ॥ पादातम् ॥ * ॥ आङ्गारम् । पाशादिपाठाद्[११] अङ्गार्या ॥ * ॥ वाडवम् ॥ * ॥ पाद्धतम् ॥ * ॥ अक्राम् । आक्रम् ॥ * ॥ अथर्वा नामर्षिः । तत्प्रयुक्ता मन्त्रा अथर्वाण उपचारात्तेषाम् आथर्वणम् ॥ * ॥ कारी-

---

१ Thus Hem. *on* vi. 2, 10 where the sloka is quoted; सुरूपपमितिनेपथ्यं B. C. F. K.; स्वरूपमपि नोपथ्यं° D.

२ पुण्यवतः° B.C.F.K.; जीवितं। F.

३ Mbh. on P. iv. 2, 38.

४ वार्मिणं B. C. F. K.; Hem. has वर्मन् । वर्मिन् instead; Kâș. V. ed. धर्मिन् *var. l.* धर्मन् (MS. *a.* वर्मन्); om. Bö., Yajñ.

५ ? °व्ये सित्यणादावि° B.C.K.; सित्यणा° लुक्। F.; वे सित्यणौदा° मुक् D.—Cf. Pâṇ. vi. 4, 144-8 (व्ये = 146-8); 167; above p. 254, l. 14.

६ Hem. vi. 2, 26 also has a special *gaṇa* श्वादि, in which श्वन् । अहन् । दण्डिन् । वर्मिन् (!) are enumerated [शुनां समूहः शौवं । etc.].

७ See sloka 260.

८ Hem. has them both separate and combined; the others only combined.

९ Cf. *gargâdi*, sl. 247.

१० °लक्षणाकञ् B.; ऽकञ्च D.; ऽन्कञ F.; B. C. D. om. न.—औलूक्यशब्दस्य (!) गोत्राकञो बाधनार्थः पाठः । Hem. cf. P. iv. 2, 39.

११ Cf. sl. 259.

षम् ॥ * ॥ चार्मिणम् ॥ चार्मणम् । चार्ममित्यन्यः[१] ॥ * ॥ गर्भिण्यः क्षेत्रभक्तयः । तासां गार्भिणम् ॥ * ॥ यौगवरत्रम् ॥ * ॥ वारत्रम् ॥ * ॥

क्षुद्रकाणां क्षत्रियाणां मालवानां चापत्यानि । राष्ट्राख्याद्राज्ञोऽञेवेत्यञ् तस्य लुकि । क्षुद्रकाश्च मालवाश्च क्षुद्रकमालवाः[२] । ततोऽपत्याकञो बाधनार्थं सेनासंज्ञायां भिक्षादिपाठादण्विधिः । क्षौद्रकमालवी सेना । अन्यत्र क्षौद्रकमालवकम् ॥ * ॥ भिक्षुकवडवाशुकपदातिप्रभृतयस्त्रिचकाष्ठादिप्रतिमावृत्तयो गणपाठं प्रयोजयन्ति ॥ २५७ ॥ इति भिक्षादिः[३] ॥

**केदाराजौ राजराजन्यवत्सा उष्ट्रोरभ्रौ वृद्धयुक्तो मनुष्यः ।**
**उक्षा ज्ञेयो राजपुत्रस्तथेह केदारादौ वामनाचार्यदृष्टे[४] ॥ २५८ ॥**

अपत्यकेदारेभ्योऽकञित्यनेनापत्यान्तात् केदारादेश्चाकञ् भवति ॥ * ॥ केदाराणां समूहः । कैदारकम् ॥ कैदार्यमित्यपि ॥ * ॥ आजकम् ॥ * ॥ राजकम् ॥ * ॥ राजन्यकम् ॥ * ॥ वात्सकम् । यथा धनंजयस्य ।

समं द्विषन्तः शुकसारिकाभिर्
विपाशिता वत्सशिशुं शशंसुः[५] ।
निर्मोच्यमाणं सह धेनुकेन
गृहे गृहे वात्सकमभ्यनन्दत् ॥

---

१ G. thrice वा°; F. K. चा°; B. D. doubtful.—Bö., Hem., Kâç. V. ed. both चर्मन् & (*v. l.* Bö., K. V.) चर्मिन्; Yajñ. चर्मन् only.

२ क्षुद्रिकाश्च° F. K.; क्षौद्रकमालवाः D.—Cf. Kâç. V. iv. 2, 45.

३ This *gaṇa* includes both *bhikshâdi* to Pâṇ. iv. 2, 38, and *khaṇḍikâdi* to iv. 2, 45.

४ A. om. text and comment.—Cf. Pâṇ. iv. 2, 39-40; Hem. vi. 2, 12-13.

५ शुकसारिकादिभिर्° B. C. F. K.; सुकुमारिकाभिः विपारि । ता वत्सशिसु शशंसुः D.

औष्ट्रकम् । लोलौष्ट्रमौष्ट्रकमुदग्रमुखं तरूणाम्

अभ्रंलिहानि लिलिहे नवपल्लवानि[१] ॥

औरभ्रकम् । क्रीत्वौरभ्रकमिदमाजकं च वीथ्याम् ॥

वार्द्धकम् ॥ * ॥ मानुष्यकम् ॥ * ॥ औक्षकम् ।

रोमन्थमन्थरचलद्गुरुसास्नमासां-

चक्रे निमीलदलसेक्षणमौक्षकेण[२] ॥ * ॥

राजपुत्रकम् ॥ २५८ ॥ इति केदारादिः ॥

**पाशधूमतृणाङ्गाराः पिटाकः पिटको वनम्[३] ।**
**गोरथौ शकटं वातः खलपोतौ गलो नडः ॥ २५९ ॥**

खलपाशादिभ्यां लिन्न्यावित्यनेन खलादेः पाशादेश्च लिन्न्यौ[४] क्रमेण भवतः ॥ * ॥ पाशानां समूहः । पाश्या ॥ * ॥ धूम्या ॥ * ॥ तृण्या ॥ * ॥ अङ्गार्या । भिक्षादिपाठादणपि । आङ्गारम् ॥ * ॥ पिटाकपिटकौ वंशदलादिमये भाण्डे । पिटाक्या पिटक्या ॥ * ॥ वन्या[५] ॥ * ॥ गव्या । स्त्रीलिङ्गार्थमस्य पाठः । यप्रत्ययस्तु गोर्योऽजादेरित्यनेनैव[६] सिद्धः ॥ * ॥ रथ्या ।

स्नेहाद्दहन्ती क्षणमुत्कटाक्षा

वेश्येव शल्यं हृदये दधाना ।

उच्चाल्यमाना तुरगैः परैश्च

स्थानाद्विरोधेन चचाल रथ्या[७] ॥

---

१ Śiśup. 5, 65.

२ Śiśup. 5, 62.

३ धनं D. E.; °तृणांगारथौ शकटं° B. C. (the missing words are supplied by K. in the margin); A. om. text and comment.

४ The two corresponding sûtras of Hem. are vi. 2, 25: पाशादेश्च ल्यः ॥ 27: खलादिभ्यो लिन् ॥ (लकारः स्त्रीत्वार्थः).

५ धन्या D. (cf. n. ३).—The other works have वन.

६ Cf. P. iv. 1, 85, vârtt. 9.

७ उच्चाल्यमानस्तुर° B. C. K.; D. om. from [स्नेहाद्दिहतो] चणमु° to तव सैन्य [संनिवेशः] in the com. on śl. 260.

गोत्रारथकश्चेत्यनेन[१] गोत्रा । रथकव्या ॥ * ॥ शकव्या ॥ * ॥ वात्या ॥ * ॥ खलानां पिण्याकानां धान्यमर्दनभूमीनां दुर्जनानां च समूहः । खल्या ॥ * ॥ पोत्या । प्रवहणसंघातः ॥ * ॥ गलो मत्स्यबन्धनविशेषः । गल्या ॥ * ॥ नड्या । तृणसंघातः[२] ॥ २५९ ॥

हलं जनः पटाकश्च ज्ञेयः पोटगलोऽपरैः ।
खलोकौ कुन्दुमो[३]ऽन्येऽपि स्युः खलादौ प्रयोगतः ॥ २६० ॥

हल्या । भिक्षादिपाठाद् हालम् ॥ * ॥ जन्या । ग्रामादिसूत्रेण[४] जनतेति च । प्रयोगद्वयं वामनमतेन ॥ * ॥ पटाक्या । वैजयन्तीसमूहः ॥ * ॥ पोटेन संश्लेषेण गलति । पोटगलः । काशो नडश्च । पोटगल्या । अपरैरिति शाकटायनप्रभृतिभिः ॥ * ॥ इति पाशादिः ॥

खलानां समूहः । खलिनी । खल्याऽपि ॥ * ॥ ऊककुन्दुमौ निचयार्थौ[५] । ऊकिनी[६] । कुन्दुमिनी ॥

यत्रैताखिलखलिनीशणोकिनीभिः[७]
शिप्रायास्तटमनु शालिकुन्दुमिन्यः ।

---

१ गोत्ररथ° B. C. K.; cf. Pāṇ. iv. 2, 51.

२ नल्या° B.; C. K. om. from गल्या; D. see note ७, last page.—Hem. has नल; Bö., Yajñ. नट.

३ कुंदमो B. C. K.—A. om. text and comment; E. om. this śloka (but see हल्या p. 305, l. 9); D. see note ७, last page.

४ Cf. P. iv. 2, 43.

५ निश्चयार्थौ F.; C. & orig. K. om. from ऊककुन्दुम; K. supplies ओककुंदमौ (?) निचयार्थौ.

६ K. corr. ओकिनी (?).—Hem. has likewise ऊक & कुंदुम; Bö., Kāś. V. डाकिनी (Bö., *var. l.* डूकिनी) & कुटुम्बिनी । कुण्डलिनी ।

७ °तिलखलिनीभिः B. C. & orig. K.; after which K. supplies शिणाकिनी; °खलिनीसृणोकिनी सासि प्रायास्तटमनु° F.; (? °तृणोकिनी°); for D. see last page, n. ७.

गोचावानिह[1] तव सैन्यसंनिवेशः
सार्धं ग्रामतय च्हतीयते[2]ऽत्र देशे ॥

अन्येऽपीति कुलटाप्रभृतयो द्रष्टव्याः ॥ * ॥ इति खलादिः ॥ २६० ॥

**तालो धनुषि पीयूक्षा कराटकारी[3] त्रिकराटकः ।**
**श्यामाकपाटलाकाराडा[4] गोधूमेन्द्राविशाविमौ[5] ॥ २६१ ॥**

तालादेरित्यनेन तालादेर्गणात्षष्ठ्यन्ताद्विकारावयवयोरर्थयोरण् एव भवति ॥ * ॥ तालस्य विकारः । तालं धनुः । तालमयमन्यत् ॥ * ॥ पीलुवाची पीयूचन्निति[6] चपणकः । पीयूचायाः पैयूचम् ॥ * ॥ काण्टकारम् ॥ * ॥ त्रैकण्टकम् ॥ * ॥ श्यामाकस्यौषधिविशेषस्य । श्यामाकी यवागूः ॥ * ॥ पाटला वृचः । तस्याः पाटलम् ॥ पाटलिरिति भोजः । पाटलीत्यन्यः[7] ॥ * ॥ काण्डं भस्म ॥ * ॥ गौधूमः ॥ * ॥ इन्द्राविशस्य वनस्पतिविशेषस्य । ऐन्द्राविशः[8] ॥ २६१ ॥

**बर्हिणेन्द्रालिशौ मुञ्जो बिल्ववेणुगवेधुकाः ।**
**कुटीरव्रीहिकर्पासीककेन्धूशिंशपेक्षवः[9] ॥ २६२ ॥**

---

१ ? गोचाव्यानिह F.; मोचावानिह B.—? गोचावानिव.

२ ? Suggested by Prof. Stenzler; सार्धग्रामतया° B. C. F. K.; कतीयते K.; सार्धं ग्रामतया च्हतीयते D.—Prof. Aufrecht prop. सार्थग्रामगतय ईच्यते.

३ Thus all MSS.; the other works have काण्टकार.

४ श्यामक° B.C.F.K. (not in comm.); यमाकः पाटुला कांडो D.; श्यामाकपाटलीकांडा E.

५ °मेंद्रादृशा° E.; °मेंद्रादिशा° D.

६ पीयुचन्निति D.—Bö., Yajñ. have पीयूचा; Kâṣ. V. ed., पीयुचा.—पीयूचा पीलुद्रुमः तद्विकारः पैयूचमिति वर्द्धमानः ॥ चापपीयूचेत्येकः शब्द इति तत्वबोधिनीस्वारस्यम् ॥ Yajñ.

७ पाटली वृचस्तस्याः पाटलो (om. the rest) D.—Bö., Kâṣ. V., Hem. पाटली; Yajñ. पाटलि.

८ इंद्रादिशस्य° ऐंद्रादिशः D.—Bö., Kâṣ. V. have इन्द्रादृश and इन्द्रालिश (Bö. *var. l.* इन्द्रासिश); Yajñ. इंद्रादृश and इंद्राविश.

९ °कर्कंधु° D.; कर्बंधुशिंशपेचवः E.; °शिंशिपेचवः F.—A. om. text & comm.

बार्हिणम्[1] ॥ * ॥ इन्द्रालिशस्य वनस्पतिविशेषस्य। ऐन्द्रालिशः[2]। ॥ * ॥ मुञ्जस्य विकारो मौञ्जी। यथा।

पिशङ्गमौञ्जीयुजमर्जुनच्छविम्[3] ॥

बैल्वः ॥ * ॥ वैणवः ॥ * ॥ गवेधुका। ओषधिः। तस्या गावेधुकः ॥ * ॥ कौटीरः ॥ * ॥ ब्रैहः ॥ * ॥ कार्पासः ॥ * ॥ कार्कन्धवः ॥ * ॥ शांशपः[4] ॥ * ॥ ऐक्षवः ॥ २६२ ॥

**चयखदिरमसूरान्[5] सीसकंसौ शिरीषं**
**रजतचमरलोहानं पीतदारुं पलाशम्।**
**अपि च वचकरीरेन्द्रायुधस्पन्दनानि[6]**
**शृणु तदनु यवासोदुम्बरं तीव्रदारुम्[7] ॥ २६३ ॥**

चायः[8] ॥ * ॥ खादिरः ॥ * ॥ मासूरः ॥ * ॥ सैसः ॥ * ॥ कांसः ॥ * ॥ शैरीषः ॥ * ॥ राजतः कलशः ॥ * ॥ चामरम् ॥ * ॥ लौहः ॥ * ॥ पैतदारवः ॥ * ॥ पालाशः ॥ * ॥ वचस्य वंशविशेषस्य। वाचः[9] ॥ * ॥ कारीरः ॥ * ॥ इन्द्रायुधस्य वनस्पतिविशेषस्य[10]। ऐन्द्रायुधः ॥ * ॥ स्यान्दनः[11] ॥ * ॥

---

१ All MSS. read वर्हिण in text.—Bö., Hem. वार्हिण; Yajñ., Kâś. V. ed. बार्हिण, MS. *a.* वर्हिण.—[बर्हिणोऽवयवो बार्हिणं मयूरपुच्छम् तद्विकारो बार्हिणः Yajñ.]

२ इंद्राविशस्य° ऐंद्रादिलिशः(!) D.

३ Śiśup. 1, 6.

४ शौंशयः D.; शैंशिपः F.

५ चपखदिर° B. C. D. K.

६ °स्यंदनानि? some MSS.

७ Thus F.; वीव्रदारुं B. C. E. K.; चीव्रदारिं D.—A. om. text and comm.

८ चापः MSS.—चय Bö.; चाप (*v.l.* चर्म) Kâś. V. ed. (वाम MS. *a.*); चाप [चापं धनुः। चापी कोटिः। चयेति क्वचित्पाठः] Yajñ.

९ *Not given by the other works.*

१० वनविशेषस्य D.—इन्द्रायुधं वनस्पतिविशेष इति वर्द्धमानः शक्रधनुरित्यन्ये। Yajñ.

११ स्पन्दन Bö., Kâś. V. *a.*; स्यन्दन Kâś. V. ed., Yajñ. [स्यंदनस्यावयवः स्यांदनं रथांगम् Y.].—*Cf.* Aufrecht's *Rigveda, preface*, p. v.

यावासः ॥ * ॥ औदुम्बरः ॥ * ॥ तैव्रदारवः[१]। श्लेष्मातकवृक्षविशेषवाचो नीव्रदारुरित्यन्यः[२] ॥ २६३ ॥

विकङ्कतश्च पूलासो[३] रोहीतकविभीतकौ।
व्याघ्रकाञ्चनमर्थे स्याद्विकारेऽवयवे तथा ॥ २६४ ॥

वैकङ्कतः ॥ * ॥ पौलासः[४] ॥ * ॥ रौहीतकः ॥ * ॥ वैभीतकः ॥ * ॥ वैयाघ्रं चर्म ॥ * ॥ काञ्चनस्य विकारः। काञ्चनम्। यथा।

स काञ्चने यत्र मुनेरनुज्ञया
नवाम्बुदश्यामतनुर्न्यविक्षत[५]।

यथा वा। काञ्चनेन किमिवास्य पत्रिणा
केवलं न सहते विलङ्घनम्[६]।

ये तु नाधीयते तेऽभेदोपचारादेवात्र काञ्चनशब्दः काञ्चनविकारे प्रयुक्त इति समर्थयन्ति ॥ * ॥ तालादीनामादिवृद्धिमतां नित्यं मयटि प्राप्ते तदन्येषां तु विकल्पितेऽणवचनम्। अन्यमते स्वरस्य प्रयोजनम् ॥ तालादिषु हेमशब्दो[७] द्रष्टव्य इति केषांचिन्मतम्। तथा च। तदण्ड-

---

१ ? Thus F.; वैव्रदारवः B. C. D. K.

२ ? नाव्रदारु° C.; तीव्रदारु° F.; श्लेष्मातकः। वृक्ष° तीम्रदारव इत्यन्यः D.—Bö., Yajñ., K. V. तीव्रदारु; MS. Hem. नीवुदार [cf. नीव Gobh. i. 5, 15].

३ पूलाशो B. C. D. F. K.—A. om. text and comment.

४ पौलाशः B. C. D. F. K.—पूलाक Bö.; पुलाकस्तुच्छधान्यम् पौलाकम्। पूलाक इत्यन्ये। पूलास इति पाठे पूलासो ग्रामविशेषस्तस्यैकदेशः पौलासः। Yajñ.; om. K. V., Hem.

५ Śiśup. 1, 19 (श्यामवपुर्न्यविक्षत ed. Calc. S. 1769; °वपुर्न्यवीक्षत ed. Calc. 1815).

६ Kirât. 13, 55.

७ हेमन् Hem., cf. next page, n. ११.—The others do not give the word.

मभवद्धैममिति[1] पुराणादौ। पादेन हैमं विलिलेख पीठमिति[2] कालिदासस्य। समुद्रोपत्यका हैमीति भट्टेः[3]। अणि हि प्रकृतिभावे सति हैमनमिति स्यात्। न च वाच्यम् अकारान्त एवायमिति। हेम्नः संलक्ष्यते ह्यग्नाविति[4] कालिदासस्य॥

येषामशेषभुवनाभरणस्य हेम्नस्
तत्त्वं विवेक्तुमुपलाः परमं प्रमाणम्।

इति च भल्लटस्य[5] प्रयोगे नकारान्तस्यैवोपलब्धेः। न च मुनित्रयेण साक्षादननुमतमित्येतावतोपेक्षापेक्ष्यमेतदिति सुवचं बहुतरलक्ष्यक्षतिप्रसङ्गात्[6]। तथा हि। त्रिफलेत्यजादिषु मुनित्रयेण साक्षादननुमतमित्यप्यभ्युपगतमेव[7]। अङ्गगात्रकण्ठेभ्यश्चेत्येतदपि मुनित्रयाप्रदर्शितमपि शिष्टैरिष्टमेव॥ शाकटायनोऽपि हेमादिभ्योऽञित्यनेनाञ्विधानमन्त्याजादिसुगर्थमाह[8]। तेन हैमं सारसनं[9] हैमी यष्टिरिति सिद्धम्। सहृदयचक्रवर्तिना वामनेन तु हेम्न इति सूत्रेण विकारेऽर्थेऽन्त्याजादेर्लुक् कृत एव। अण् हेमार्थादित्यत्र मानव्यां वृत्तौ हैमी हेममयी रशनेत्युदाहृतं च[10]॥ २६४॥ इति तालादिः[11]॥

---

१ Manu 1, 9.

२ Raghuv. vi. 15.

३ *Bhaṭṭik.* 5, 89.

४ Raghuv. 1, 10.

५ Thus B. C. F. K.; भदस्य D.; (? भल्लट).

६ सुवचबहुतरलक्ष्यप्रसंगा D.

७ साक्षादनुमत° D.

८ हेमादिभ्यो विधानमंत्यजादि° C.; हेमादिभ्यो ञिधान° K.; हेमादिभ्यो ऽञित्यनेना° D.

९ हैममासनं D.

१० मानव्या वृत्तौ° B. C. K.; °रसने° B. C. F. K.; D. om. fr. [वि]कारेऽर्थे°.

११ Vardhamâna's *tâlâdi* includes *tâlâdi* to P. iv. 3, 152; *rajatâdi* ib. 159; *palâśâdi* ib. 141; and *bilvâdi* ib. 136.—Hem. (vi. 2, 44) has only a gaṇa *hemâdi*, corresponding on the whole to *rajatâdi*, the other gaṇas being rendered unnecessary by general rules (vi. 2, 30-32).

शरदर्भकुटीसोमा भवेतां तृणबल्वजौ[1]।
स्तो राजन्यात्मकामेयौ वैकर्णश्च वसातिना ॥ २६५ ॥

शराद्येकाजप्राणिन्येवेत्यनेन[2] मयट् ॥ * ॥ शराणां विकारोऽवयवो वा। शरमयम् ॥ * ॥ दर्भमयम् ॥ * ॥ कुटीमयम् ॥ * ॥ सोममयम् ॥ * ॥ तृणमयम् ॥ * ॥ बल्वजमयम्[3] ॥ * ॥

येषां शरमयीर्दर्भमयीस्तृणमयीः कुटीः[4]।
कुटीमयीः सोममयीस्ता बल्वजमयीः स्तुमः[5] ॥

इति शरादिः ॥ * ॥

राजन्यभौरिक्यैषुकार्यादिभ्योऽकञ्विधभक्ता इत्यनेन तस्य राष्ट्रमित्यर्थे राजन्यादेरकञ् भौरिक्यादेर्विध ऐषुकार्यादेर्भक्त एते प्रत्ययाः क्रमेण भवन्ति ॥ * ॥ राजन्यानां जनपदः। राजन्यकः ॥ पीठमर्दराजवयस्येषु रूढो राजन्यशब्द इत्यन्यः ॥ * ॥ आत्मकामेयकः ॥ * ॥ वैकर्णकः। विकर्ण इत्यन्यः[6] ॥ * ॥ वासातकः। अत्रास्य पाठानङ्गीकाराद्वासातमित्यन्यः[7] ॥ २६५ ॥

---

१ °बिल्वजौ B. C.; D. om. from शर° to राजन्या; A. om. text and comment.

२ °काजजप्राणित्यच इत्यनेन D.; °प्राणित्यवयव इत्यनेन F.; °प्राणित्पव इत्यनेन K.

३ D. om. from शराणां to येषां.

४ येषां शरमयी दर्भमयी तृणमयी कुटीः F. K.; ॥ शरारमयोर्दर्भमयी कुटीः D.; तृणमयी° B. C.; C. om. कुटीः.

५ कुटीमयी सोममयीस्ता बल्वजमयी (बि° C.) स्तुमः B. C. F. K.; कुटीमयी। सोममयी। स्ता वल्वजमयीः स्तुमः D.

६ The other works have neither word.

७ Hem. has a special sûtra (vi. 2, 61) for this word: वसातेर्वा ॥° वासातकं। वासातं ॥ The other works include it in the gaṇa *râjanyâdi*.

बाभ्रव्यानृतदेवयातवयुतो दाक्षायणो वातवस्
तीव्रोदुम्बरमालवार्जुनफणः[1] पुत्रो ऽम्बरीषात्परः ।
शालङ्कायनदाक्षितैलुकलितौ वैराटशैलूषकौ[2]
त्रैगर्तश्च वसानबैल्ववनकौ स्यात्संप्रियस्तैल्वलः[3] ॥ २६६ ॥

बाभ्रवकम् ॥ * ॥ आनृतस्य[4] । आनृतकः । आवृत[5] इत्यन्यः ॥ * ॥ दैवयातवकः । दैवयातव[6] इत्यन्ये । देवयात[7] इत्यपरे ॥ * ॥ दाक्षायणकः ॥ * ॥ वतोरपत्यं वातवः । तस्य वातवकः[8] । वात्तव इत्यन्यः[9] ॥ * ॥ तीव्रस्य तैव्रकः । अस्य पाठो वामनमतेन[10] ॥ * ॥ औदुम्बरकः । औदुम्बर इत्यन्यः[11] ॥ * ॥ मालवस्य राज्ञः । मालवकः ॥ * ॥ अर्जुनफण[12] इति । आर्जुनायन इत्यर्थः । तस्य । आर्जुनायनकः ॥ * ॥ आम्बरीषपुत्रकः ॥ * ॥ शालङ्कायनकः ॥ * ॥ दाक्षकः ॥ * ॥ तैलोः । तैलवकः । अस्य पाठो वामनमतेन[13] ॥ * ॥ वैराटको राजा । वि-

---

१ तीव्रौदुंबर° D. E.; °वार्जुनपणः B. C. D.; °यणः F.

२ विराट° C.; °शलूषकौ D.

३ सांप्रियस्तैल्वलः B. K.; सांप्रियसौल्वलः C.; सांप्रिया वैल्वलः E.; संप्रियास्तैल्वलः D.; संप्रियस्तैल्वजः F.—A. om. text and comment.

४ ? आनृतस्य B. C. K.—आनृत Bö.; अनृतस्य आनृतकः । अत्रानृतशब्दस्तद्वति वर्तते लक्षणया ॥ Yajñ.; आवृत । आवृत [क suppl.; ? आनृत] Hem.; om. Kâṣ. V. (*v.l.* आप्रीत).—Bö. (*v.l.*), K.V. ed. also अव्रीड (Yajñ. व्रीडा!).

५ आवृत्त C. K.; आवृतक D.; आनृत F.

६ दैवव्यातव C.; देवयातव B.; देवयायातवक D.

७ दैवयात° C. D. F.—Bö., Yajñ., K. V. have देवयात (Bö., *v. l.* दैवयातव); Hem. देवयात & देवयातव.

८ ? वातोरपत्यं° B. F. K.; वातकः D.; दातोर° दातव° दातवकः C. (? वतु = वतू).

९ वाचत° K.; दात्र इत्यन्यः C.; om. D.—Hem. has वात्तव; K. V. ed. *var. l.* वात्तक; om. Bö., Yajñ.

१० अन्यपाठो° B.—तीव्र Bö., Yajñ.; om. Kâṣ. V., Hem.

११ Hem. has both forms; the others उदुम्बर only.—C. om. from तीव्रस्य.

१२ अर्ज्जुनपण B. C. D.; °यण F.

१३ तैलु Bö., Yajñ.; om. K. V., Hem.

राट[1] इत्यन्यः ॥ * ॥ शैलूषकः । शैलूषज इति दिग्वासाः[2] ॥ * ॥ त्रैगर्तकः । त्रिगर्त[3] इत्यन्यः ॥ * ॥ वासानकः ॥ * ॥ बिल्ववने भवो जातो वा । बैल्ववनः । तस्य बैल्ववनकः ॥ शैलूषबैल्ववनशब्दौ सूत्रे कप्रत्ययान्तौ निर्दिष्टौ ॥ * ॥ सांप्रियकः[4] ॥ संप्रिया दाची च नाम्ना[5] स्त्री पुरुषो वा राजा । तस्य सांप्रियकः । दाचक इति तु वामनः ॥ * ॥ तैल्वलकः । बैल्वल[6] इत्यन्यः ॥

आकृतिगणोऽयम् । तेन जालंधरायणः । और्णनाभः । जालंधरः । कौन्तालप्रभृतयो[7] द्रष्टव्याः ॥ २६६ ॥ इति राजन्यादिः ॥

**भौरिकिसैकयतावथ चैकयतो[8] भौलिकिश्च काणेयः ।**
**चौपयतश्चैटयतो[9] वाणिजको वालिकाज्यश्च ॥ २६७ ॥**

भौरिकीणां राज्ञां जनपदः । भौरिकिविधम् ॥ विधभक्तप्रत्ययान्तानां स्वभावान्नपुंसकलिङ्गतैव । चन्द्राद्याः पुंस्त्वमपि दर्शयन्ति ॥ * ॥ सैकयतविधम् ॥ * ॥ चैकयतविधम्[10] । चैजयतचौद्यतावित्यपि कश्चित्[11] ॥ * ॥ भौलिकिविधम् ॥ * ॥ काणेयविधम् ॥ * ॥ चौपय-

---

१ विराट् D.; the other works have neither word.

२ MS. Hem. has शैलूषज, the others शैलूष.

३ Thus Hem., om. by the others.

४ ? सांप्रियः C. F. K.; om. B.—The other works have संप्रिय.

५ सप्रियादाचीनाम्नो D.; °दाचावनाम्ना C.

६ वैल्वव C.; वैल्वलकः । वैल्वत D.; तैल्वजकः । बैल्वल F.—Bö. has वैल्वज, Yajñ. बैल्वज; Kâs. V. ed. बैल्वल, om. *a.*; Hem. तैतल.

७ जालाधरः कौन्ताल° F.; कौन्तालाप्रभृतयो D.—कौन्ताल° Hem., om. others.

८ वैकयतो B. C. E.; वैयकतो D.

९ °चैटीयतो B. C. K.; °चौटयितो (!) F.; A. om. text and comment.

१० वैकयत° B. C.—The other works have वैकयत; but see śl. 36.

११ चैजयित° C. F. K.; °वौद्यिता° B. C.; चौद्यिता° F. K.; °वौद्यता° D.—MS. Hem. त्रैतयत and वौद्यत (also वौपयत & वैटयत for चौ° चै°); cf. śl. 231 and 36.

तविधम्[1] ॥ * ॥ चैटयतविधम् ॥ * ॥ वणिजोऽपत्यं वाणिजः । के वाणिजकः । तस्य वाणिज्य:विधम् ॥ * ॥ वालिकाजस्यापत्यं कुरुकोसलेत्यादिना ण्यचि[2] । वालिकाज्यः । तस्य वालिकाज्यविधम् ॥ २६७ ॥
इति भौरिक्यादिः ॥

ऐषुकारिः शयण्डश्च सौवीरो वैश्वमानवः[3] ।
दासमित्रिर्नडः शौण्डः शायाण्डो वैश्वधेनवः[4] ॥ २६८ ॥

इषुकारस्यापत्यानि । ऐषुकारयो राजानः । तेषां जनपदः । ऐषुकारिभक्तम् ॥ * ॥ शयण्डभक्तम् । शयाभ्र इत्यपि भोजः[5] ॥ * ॥ सौवीरभक्तम् ॥ * ॥ वैश्वमानवभक्तम् । वैश्वमाणव इत्यन्यः[6] ॥ * ॥ दासमित्रिभक्तम् । दासमित्र इत्यन्यः[7] ॥ * ॥ नडभक्तम् ॥ * ॥ शौण्डभक्तम् ॥ * ॥ शायाण्डभक्तम् । शायाण्डिरित्यन्यः[8] ॥ * ॥ वैश्वधेनवभक्तम्[9] । अन्ये तु वैश्वभक्तं धैनवभक्तमिति[10] पृथगाहुः ॥ २६८ ॥

---

१ चीपयित॰ B. C.; वी॰ ? D.

२ णवि B. C.; णचि F. and orig. K. (corr. ञचि).

३ एषुकारि॰ C.; विश्वमानवः B. C. K.; वैश्वमाणवः F.

४ सौंडः॰ E.; सौंद्रः॰ D.; विश्वधेनवः C.; वैश्वधैनवः F.; A. om. text and comment.

५ इत्यवि श्रीभोजः D.; इत्यन्यः F.—Bö., Kâs. V. ed., Hem. have शयण्ड, see also note ७.

६ वैश्वमाणवक इ॰ D.—वैश्वमानव Bö.; वैश्वमाणव K. V. ed.; वैश्ववामन Yajñ., om. Hem.

७ The other works have दासमित्र only (besides दासमित्रायण).

८ शयाण्ड and *v.l.* शयाण्डि Bö.; शयांड and शय । अंड Yajñ.; सायण्डि (शायंडि *a.*) and *v.l.* शयाण्ड K. V. ed.; शयांड, शायांडि and शायंडि Hem.

९ वैश्वधैनवभक्तं F.

१० MS. Hem. विश्व । वैश्व । धैनव २। (*i.e* both separate and combined ?).

ह्यक्षत्र्यक्षौ दासमित्रौडचान्द्राः[१]
खाडः शौद्रो दाक्षिसारस्यजौलाः[२]।
शायण्डो ऽथो तार्क्ष्यशौभ्रौ फणन्ता[३]
एते ज्ञेया विश्वतुण्डाश्च देवः ॥ २६९ ॥

ह्याक्षायणभक्तम्। त्र्याक्षायणभक्तम्। गणपाठाद्वृद्ध्यभावः॥ ह्याक्षायणः। त्र्याक्षायण इत्यन्यः[४]॥ * ॥ दासमित्रायणभक्तम्॥ औडायनभक्तम्[५]॥ * ॥ चान्द्रायणभक्तम्॥ * ॥ खाडायनभक्तम्। खादायन[६] इत्यन्यः॥ * ॥ शौद्रायणभक्तम्। शौद्रकायण[७] इत्यन्ये॥ * ॥ दाक्षायणभक्तम्। राजन्यादिपाठाद् दाक्षायणकम्॥ * ॥ सारस्यायनभक्तम्[८]॥ * ॥ जौलायनभक्तम्॥ * ॥ शायण्डायनभक्तम्॥ * ॥ तार्क्ष्यायणभक्तम्[९]। शकटाङ्गजमतेन॥ * ॥ शौभ्रायणभक्तम्[१०]। चन्द्रमतेन॥ * ॥ वैश्वदेवभक्तम्[११]॥ * ॥ तुण्डदेवभक्तम्। अन्ये तु विश्वभक्तं तुण्डभक्तं देवभक्तमित्याहुः[१२]॥ २६८ ॥ इत्यैषुकार्यादिः॥

---

१ दासमित्रौंड° B. C. K.; मित्रौ-दुवांद्राः D.

२ सौद्रो° B. F. K.; दक्षि E.; सौ-रस्यजौला: B.C.K.; सारौ च जौला: F.

३ शायांडो E. F. K.; °शुभ्रौ° B. C. D. K.; पणंता B. C. D.; यणांता E.; A. om. text and comment.

४ ह्याक्षायण। त्र्याक्षायण (त्र्यायण K. V. ed.) Bö., Yajñ., K. V.; ह्यक्ष्या-यण, ह्याक्ष्यायण, त्र्यक्ष्यायण, त्र्याक्ष्या-यण MS. Hem.

५ औंडायन° B. C. K. (Kâś. V. *a.*), D. see ६.—औडायन Bö., Yajñ., K. V. ed.; औलायन Hem.

६ Thus Hem.; the others खाडा-यन.—D. om. from ह्यदायणभक्तं.

७ Thus Hem.; the others शौद्रा-यण.—B. C. F. K. read सौ° both times.

८ सौरस्यायनभक्तं B. C. K.; सा-रायणभक्तं F.

९ Thus all works; तार्चायणभक्तं D.

१० Thus Bö., Yajñ., K.V.; om. Hem.

११ Thus MSS.

१२ वैश्वदेव। तुंड। देव२। Hem.

नडप्लक्षकपोतेक्षुकाष्ठत्रिवेत्रवेतसाः
कृतहृस्वन्लुचौ क्रुञ्चातक्षाणौ बिल्ववेणु च[1] ॥ २७० ॥

नडादेः कुक् छ[2] इत्यनेन नडादेश्चातुरर्थिकश्छो[3] भवति ॥ * ॥ नडा अत्र देशे सन्ति । नडकीयः । नड्वल इति च ॥ * ॥ प्लक्षकीयः ॥ * ॥ कपोतकीयः ॥ * ॥ इक्षुकीयः ॥ * ॥ काष्ठकीयः ॥ * ॥ त्रिभिर्ऋषिभिर्निर्वृत्तं नगरम्[4] । त्रिकीयम् ॥ * ॥ वेत्रकीयः ॥ * ॥ वेतसकीयः ॥ * ॥ क्रुञ्चकीयः ॥ * ॥ तक्ष्णा निर्वृत्तस्तक्ष्णां निवासः । तक्षकीयः ॥ * ॥ बिल्वकीयः ॥ * ॥ वेणुकीयः ॥ * ॥ छान्तं केचित्पुंस्युदाहरन्ति । अपरे स्त्रियाम्[5] ॥ २७० ॥ इति नडादिः ॥

अश्मयूथनदर्भशिखोषा वृन्दकन्दगुदकाण्डकुलानि ।
मीनगह्वगुडकुण्डलखण्डाः पीनपामनगकोटगुहाश्च[6] ॥ २७१ ॥

रादयोऽश्मादिभ्य इत्यनेनाश्मादिभ्यो[7]ऽष्टादशभ्यो गणेभ्यश्चातुरर्थिका यथायथं र[8] इत्यादयोऽष्टादश प्रत्यया भवन्ति ॥ * ॥ अश्मानोऽत्र देशे सन्ति । अश्मरम् ॥ * ॥ एवं यूथरम् । यूष[9] इत्यन्यः ॥ * ॥ नदरम् ॥ * ॥ दर्भरम् ॥ * ॥ शिखरम् । ङ्याप्ले हृस्वश्च बहुलमित्यनेन[10]

---

१ A. om. text and comment.

२ Thus D.: ककुश्छ B. K.; ककुस्व C.; ककुच्छ F.: cf. P. iv. 2, 91.

३ नडादेस्तत्रास्तीत्यर्थे देशनाम्नि छो D.

४ निवृत्तं॰ B. C. F.; निवृत्तनगर D.—Hem. reads त्रि; Bö., Yajñ., and Kāś. V. तृण.

५ D. om. from छान्तं.

६ ॰गुडगुंडलखंडाः॰ F.; A. om. text and comment.

७ रादयो श्मद्यादित्यनेनाश्मादिभ्यो D.; ?ऽश्माद्यादिभ्य॰.

८ तर B. C. F. K.; om. D.

९ ? यूथ B. C. K.; यूथर F.; एवं पूथरा पूथर इ॰ D.—यूथ Bö., Yajñ.; यूप (v.l. यूथ) K. V. ed.; यूथ and यूष Hem.

१० ?Cf. p. 195, l. 3.—ङ्याडत्वे हृ॰ B. K.: ङ्याह्वि हृ॰ C.; ङ्यादेर्हृ॰ F.; द्याद्देरुस्वश्च॰ D.

ह्रस्वत्वे सति । ह्रस्वत्वं नेत्यन्यः ॥ * ॥ ऊषरम्[1] ॥ * ॥ वृन्दरम् ॥ * ॥ कन्दरम् ॥ * ॥ गुदरम् ॥ * ॥ काण्डरम् ॥ * ॥ कुलरम् ॥ * ॥ मीनरम् ॥ * ॥ गङ्करम् ॥ * ॥ गुडरम् ॥ * ॥ कुण्डलरम्[2] । वामनमतेन ॥ * ॥ खण्डरम् ॥ * ॥ पीनरम्[3] । वामनमतेन ॥ * ॥ पामरम् ॥ * ॥ नगरम् ॥ * ॥ कोटरम् ॥ * ॥ गुहरम् । ह्रस्वत्वं नेत्यन्यः[4] ॥ २७१ ॥

इत्यश्मादिः ॥

सखिकरवीराशोका वासवसख्यग्निवायुतो दत्तः ।
छगलो गोफिलदत्तौ भल्लः पुरपालवज्राश्च[5] ॥ २७२ ॥

सख्यादेर्ढण् ॥ * ॥ सख्या पुरुषविशेषेण निर्वृत्तम्[6] । साखेयं नगरं मण्डलं वा ॥ * ॥ कारवीरेयम् । वैरेयमित्यन्ये[7] ॥ * ॥ आशोकेयम् ॥ * ॥ वासवदत्तेयम् ॥ * ॥ साखिदत्तेयम् ॥ * ॥ आग्निदत्तेयम् ॥ * ॥ वायुदत्तेयम् ॥ * ॥ छगलो मुनिश्छागलस्य । छागलेयम् ॥ * ॥ गौफिलेयम् । गोभिल इति भोजः[8] ॥ * ॥ दात्तेयम् ॥ * ॥ भाल्लेयम् । अन्त्यजातिर्भिल्ल इत्यन्यः । भल्लपाल इति समस्तं भोजः[9] ॥ * ॥ पौरेयम् ॥ * ॥ पालेयम् ॥ * ॥ वाज्रेयम ॥ २७२ ॥

---

१ ऊखरं B. C. K.; D. om. ह्रस्वत्वं नेत्यन्यः.

२ गुंडलरं F.—कुण्डल Bö., Yajñ.; om. Hem., Kâṣ. V.

३ पीन also Bö., Yajñ.; om. Hem., Kâṣ. V.

४ D. F. om. from ह्रस्वत्वं.

५ A. om. text and comment.

६ निवृत्तं B. C. F. K. throughout.

७ Cf. next page, note ६.

८ ओभोजः D.—गोपिल Bö.; गोफिल । गोपिलेत्यन्ये । गोभिलेति भोजः Yajñ.; गोकिल MS. Hem.; गोहित (*v.l.* गोहिल) K. V. ed.; गोच्चिल MS. *a.*

९ इत्यन्यः । उल्लपाल इत्यन्यः समस्तं श्रीभोजः.—D.—भल्ल । पाल Bö., Yajñ., K. V. (भल्लपाल *v.l.* Bö.); भल्ल & भल्लिपाल Hem.

**कदलस्तमालरोहौ सप्नलचक्रौ कुशीरकः सरकः ।**
**सुरसः सीकरसमलौ[1] सरमसरसचीरचक्रवाकाश्च ॥ २७३ ॥**

कादलेयम् ॥ * ॥ तामालेयम् ॥ * ॥ रौहेयम् ॥ * ॥ साप्नलेयम् ॥ * ॥ चाक्रेयम् ॥ * ॥ कौशीरकेयम् । शीरक इत्यन्यः[2] ॥ * ॥ सारकेयम् ॥ * ॥ सौरसेयम् ॥ * ॥ सैकरेयम्[3] । वामनमतेन ॥ * ॥ सामलेयम्[4] ॥ * ॥ सारमेयम्[5] ॥ * ॥ सारसेयम् ॥ * ॥ चैरेयम् । वीर इत्यन्ये[6] ॥ * ॥ चाक्रवाकेयम् ॥

एते सख्यादयः प्रायः पुंविशेषवृत्तयः । ततस्तन्निवासेऽपि ढण् विधेयः ॥ करवीरसीकरचक्रच्छगलप्रभृतयः स्वार्थवृत्तयः । तेषां च तदत्रास्तीत्यर्थे प्रत्ययः ॥ २७३ ॥ इति सख्यादिः ॥

**संकाशकश्मीरपचारनासाचूडारयूपौ[7] पलितानुनाशौ ।**
**मन्दारकूटौ दशकोविदारशीर्षाश्मतीर्थाशमडारकुम्भाः॥२७४॥**

संकाशादेर्ण्यः ॥ * ॥ संकाशेन राज्ञा निर्वृत्तम्[8] । सांकाश्यम् ॥ * ॥ काश्मीर्यम् ॥ * ॥ पाचार्यम्[9] । वामनमतेन ॥ * ॥ नास्यम्[10] ॥ * ॥ चौडार्यम् ॥ * ॥ यूपा अस्मिन्सन्ति । यौप्यम् ॥ * ॥ पालित्यम् ॥ * ॥

---

१ सीकरसकलौ B. K.; सीरकसकलौ° F.; सुरसकलौ C.; E. om. this śloka; A. om. text and comment.

२ कौशिरकेयं° B. C. F. K.; शारक° इत्य° C.; कुशीरक इत्य° F.—कुशीरक Bö., Yajñ.; कुसीरक & सीरक (for सीकर) Hem.; उशीर *v.l.* K. V. ed.

३ सैरकेयं B.C.F.K.—सीरक Hem.; सीहर Bö., Yajñ. (शीहर *var. l.* Bö.); सीकर K. V. ed. (यीकर *a.*).

४ साकलेयं B. C. F. K.—समल all works.

५ समर Bö., Yajñ.; सरम Hem.; om. K. V.

६ ?वैरेयं° MSS.; D. om. from वीर.—Hem. has वीर and चीर; Bö., Yajñ. वीर; om. Kâś. V.; cf. preceding page, l. 10.

७ °नाशाचूडा° B. C. F. K.; A. om. text and comment.

८ Cf. preceding page, note ६.

९ Not in the other works.

१० नास्यं B. C. F. K.

आनुनाय्यम् । वामनमतेन ॥ * ॥ मन्दाराणामदूरभवम् । मान्दार्यम् ॥ * ॥ कौट्यम् । कुट इत्यन्यः[१] ॥ * ॥ दशस्य । दाश्यम् ॥ * ॥ कौविदार्यम् ॥ * ॥ शैर्ष्यम् ॥ * ॥ आश्मन्यम् ॥ * ॥ तैर्थ्यम् ॥ * ॥ आंश्यम्[२] ॥ * ॥ माडार्यम् । मजार इत्यन्यः[३] ॥ * ॥ कौम्भ्यम् ॥ २७४ ॥

**नाशिकासरकसूरचिरन्ताः[४] कम्पिलः समलखण्डितसीराः[५] ।**
**पञ्जरप्रगदिनाथनलाङ्गा रोमलोमपुलिना मगदी च ॥ २७५ ॥**

नाशिका नाम राक्षसी । तस्या निवासस्तया निर्वृत्तं वा । नाशिक्यम्[६] ॥ * ॥ सारक्यम् ॥ * ॥ सौर्यम्[७] ॥ * ॥ चैरन्त्यम्[८] ॥ * ॥ काम्पिल्यम् । कम्पील[९] इत्यन्यः ॥ * ॥ समलेन निर्वृत्तम् । सामल्यम् ॥ * ॥ खाण्डित्यम्[१०] ॥ * ॥ सैर्यम् ॥ * ॥ पाञ्जर्यम् ॥ * ॥ प्रागद्यम् । नगरं देशो वा ॥ * ॥ नाथ्यम् ॥ * ॥ नाल्यम् ॥ * ॥ आङ्ग्यम् ॥ * ॥ रौमण्यम् ॥ * ॥ लौमन्यम् ॥ * ॥ पौलिन्यम् ॥ * ॥ मागद्यम् । नगरं देशो वा ॥ २७५ ॥

---

१ Hem. has both, the others कूट.

२ B. C. om. from वामनमतेन ॥ मन्दाराणां.

३ मडार Bö., Yajñ.; मंजार and मदार Hem.; मार्जार Kâś. V. ed. मागार *a*.

४ नासिका° B. C. F. K.; शूर° D.; सूरचिरंत्यः F. K.; °विरंत्यः B. C.

५ कपिलः (against metre) B. E.; °खंडिमसीराः B. C. K.; खंडिमासीराः D.; खंडिलसीराः D.; A. om. text and comment.

६ नासिका नाम° नासिक्यं B.C.F.K.

७ शौर्यं D.—शूर Hem.; सूर Bö., Y.

८ वैरंत्यं B. C. D. K.—विरत K. V., Yajñ. and (*v.l.* चिरन्त) Bö.; विरच (or °न्त) Hem.; ? चिरत.

९ Thus Hem.; कम्पिल Yajñ.; कपिल Bö.; काम्पिल्य Kâś. V. ed. (कंपिल्य *a.*).

१० ? खांडिल्यं F.; खांडिम्यं B. C. & orig. K. (corr. °त्यं or °ल्यं); खांडिन्यं D.—खण्डित Bö., Yajñ.; खडिव Hem., Kâś. V. ed. (खाचिर *a.*); these works also have गदित Bö., Yajñ.; गडिव Hem., Kâś. V. ed.

सुपरिः कटिपः कलिवो मलिनागस्ती सकर्णको[1] वृष्टिः।
पन्थादेशः सुपथी मादितविकरौ च सूरसेनश्च[2] ॥ २७६ ॥

सुपरिः कश्चिद्राजा। तेन निर्वृत्तम्। सौपर्यम् ॥ * ॥ काटिप्यम्[3] ॥ * ॥ कालिव्यम्[4]। कलित इत्यन्ये ॥ * ॥ मालिन्यम् ॥ * ॥ अगस्तिकुण्डिन्योरगस्तिकुण्डिनी[5] वेति ङ्घि। अगस्तीनां निवासः। आगस्त्यम्। अन्ये त्वगस्त्यस्यापत्यम् आगस्त्यः[6]। स्त्र्यणि। तस्यागस्त्यम् ॥ * ॥ साकर्णक्यम् ॥ * ॥ वृष्टिना निर्वृत्तम्। वार्ष्ण्यम् ॥ मृष्टिर्नाम काचित्स्त्री[7]। तस्या निवासो मार्ष्ण्यमित्यपरे ॥ * ॥ सुपथोऽदूरभवं सुपथं वास्यास्तीति। सौपथ्यम् ॥ * ॥ मादिता स्त्री काचिदित्यन्यः[8] ॥ * ॥ वैकर्यम् ॥ * ॥ सौरसेन्यम् ॥ * ॥ गोभिलचक्रचक्रवाकाशोकच्छगलकुशीरकयमलमुखमन्मथशब्दानभयनन्दी गणेऽस्मिन्ददर्श ॥ २७६ ॥ इति संकाशादिः ॥

बलश्चुलः पुलोलौ च नलो दुलदलौ वनम्[9]।
वडशब्दः कुलं मूलं लकुलोरलसंयुतम्[10] ॥ २७७ ॥

---

१ °कटिपः कलिके मलिनागस्ती° D.; सकर्णको D. E.

२ °सुपथिगदितविकरौ° E.; A. om. text and comment.

३ कादिप्यं B.; कोटिप्यं C.—कटिप Bö., Yajñ.; कटिप, कटिव, कटिद Hem.; om. Kâs. V.

४ कालिक्य। D.—कलिव Hem., Kâs. V. ed. (कलिप, कलिल *a*.); कविल Bö.; विकल Yâjñ.

५ आगस्तिकुंडिन्योर° B. C. F. K.; °आगस्तिकुंडिनी C.; अगस्त्यकुंड° कुंडिनौ D.

६ अन्ये तु आगस्त्यस्या° C. F.—अगस्ति and आगस्त्य Hem.; the others अगस्ति.

७ वृष्टि Bö., Yajñ.; सृष्टि (?) Hem.

८ मादित Hem.; om. the others.

९ वतं F.; चनं C.

१० रकुलोरल° E.; मूलकुलोरल° D.; लकुलोरल° B. C. K.; A. om. text and comment.

बल्वादेर्यः ॥ * ॥ बलेन निर्वृत्ता । बल्या नाम नगरी ॥ * ॥ एवं चुल्या ॥ * ॥ पुल्या । वामनमतेन । तुल इति[1] शाकटायनः ॥ * ॥ उल्या ॥ * ॥ नल्या ॥ * ॥ दुल्या ॥ * ॥ दल्या ॥ * ॥ वन्या ॥ * ॥ वज्या[2] । वामनमतेन ॥ * ॥ कुल्या ॥ * ॥ मूल्या । मुल इत्यन्ये[3] ॥ * ॥ सकुल्या ॥ * ॥ उरल्या ॥ * ॥ एते यप्रत्ययान्ताः स्त्रीलिङ्गाः । अन्ये तु बल्यादीनां नपुंसकतामाहुः[4] ॥ २७७ ॥ इति बलादिः ॥

पक्षतुषचित्रकुम्भाः कुण्डो मकराण्डहंसका रोम ।
लोमसुवर्णकसमलाः कम्बलिकाकुत्ससकलाश्च[5] ॥ २७८ ॥

पक्षादेः फण्[6] ॥ * ॥ पक्षेण निर्वृत्तं पक्षस्य निवासो वा । पाक्षायणं नगरं राष्ट्रं वा ॥ * ॥ तौषायणम् । तुक्ष[7] इति वामनः ॥ * ॥ चैत्रायणम् । चित्रेत्यन्यः[8] ॥ * ॥ कौम्भायनम् ॥ * ॥ कौण्डायनम् ॥ * ॥ माकरायणम् । वामनमतेन[9] ॥ * ॥ आण्डायनम् ॥ * ॥ हांसकायनम् ॥ * ॥ रौमायणः ॥ * ॥ लौमायनः ॥ * ॥ सौवर्णकायनः । वामनमतेन[9] ॥ * ॥ सामलायनः ॥ * ॥ काम्बलिकायनः ॥ * ॥ कौत्सायनः । वामनमतेन[10] ॥ * ॥ साकलायनः ॥ २७८ ॥

---

१ मुल इति B. C. and orig. K. (corr. तुल); उल इति F.—पुल Yajñ. & (*v.l.* पुख) Bö.; तुल Kâṣ. V. ed.; तल *a.*; om. Hem.

२ वज्या K.—वट Bö., Yajñ.; om. Kâṣ. V., Hem.

३ सुल इत्यन्ये D. F.—मूल Bö., Yajñ., Kâṣ. V. *a.*; मुल Hem.

४ Kâṣ. V. and Hem. take the neuter forms; also Yajñ. (except बल्या नगरी).

५ कुसशकलाश्च D.; A. om. text and comment.

६ Thus F.; पण् B. C. K.; छण् D.

७ लुक्ष D.; तुष्ट B. C. F. K.—तुष and तुक्ष Bö., Yajñ.; तुष Kâṣ. V., Hem.

८ Hem. has both forms.

९ मकर, सुवर्णक, कुत्स, खिल, निवात given by Bö., Yajñ.; om. Kâṣ. V., Hem.

१० D. adds कुम्भ इत्यन्यः ।

पन्थादेशे विहिते पन्थिन्शब्दो निगद्यते कृतिभिः ।
यमलबिलहस्तिहस्ताः सिंहकसरकौ खिलास्त्यतिश्वानः[१]
॥ २७९ ॥

पान्थायनः ॥ * ॥ यामलायनः ॥ * ॥ बैलायनः ॥ * ॥ हास्तिनायनः ॥ * ॥ हास्तायनः ॥ * ॥ सैंहकायनः ॥ * ॥ सारकायणः ॥ * ॥ खैलायनः[२] । आस्तायनः । इयं वामनमतेन ॥ * ॥ आतिश्वायनः । अतिश्व[३] इत्यन्यः ॥ २७९ ॥

सीरको लोमकः शीर्षनिवातौ च सकर्णकः ।
अंशुकः सरसः पाकः सहको[४] वलिकः कला ॥ २८० ॥

सैरकायणः[५] ॥ * ॥ लौमकायनः ॥ * ॥ शैर्षायणः ॥ * ॥ नैवातायनः । वामनमतेन[२] ॥ * ॥ साकर्णकायनः ॥ * ॥ आंशुकायनः[६] ॥ * ॥ सारसायनः ॥ * ॥ पाकायनः ॥ * ॥ साहकायनः ॥ * ॥ वालिकायनः ॥ * ॥ कालायनः ॥ २८० ॥ इति पचादिः[७] ॥

कर्णार्कजीवन्तजवानडुह्या[८]
आण्डीवतोऽथ द्रुपदश्च जैत्रः[९] ।

---

१ A. om. text and comment.

२ See note ९, preceding page.

३ Thus Hem., K. V. *a.*; the others अतिश्वन्.

४ शीरको लो॰ MSS.; ॰अंशकः ॰सहिको B. C. K.; सहाकाः E.; A. om. text and comment.

५ शैरकायणः MSS.; cf. last note.

६ आशुकायनः D.; आंशकायनः B. K.; आशकायनः C.—अंशुक Hem.; प्रङ्कुश Bö., Yajñ.

७ पंथ्यादिः B. C.

८ कर्णाकिजीवंतजवातडुखा E.; कर्णार्क वंत वानुडुह्या D.; कर्णाटजीवंत॰ F.; कर्णाक॰ C.

९ आंडवतो थ द्रुषडश्चजैत्रः B.; आंडीवनोऽथ D.; आजीवनो थ द्रुषदश्च॰ C.

स्फिगर्कलूषाकनपाञ्चजन्याः
कुन्ती वशिष्ठः कुलिशश्च जित्वा[1] ॥ २८१ ॥

कर्णादेः फिञ्[2] ॥ * ॥ कर्णेन निर्वृत्तः कर्णस्य निवासो वा । कार्णायनिः ॥ * ॥ अर्को गुल्मः स्फटिकश्च । आर्कायणिः ॥ * ॥ जीवन्त ऋषिः । जैवन्तायनिः ॥ * ॥ जावायनिः । वामनमतेन[3] ॥ * ॥ आनडुह्यायनिः ॥ * ॥ आण्डीवतायनिः ॥ आण्डीवदित्यन्यः[4] ॥ * ॥ द्रौपदायनिः[5] ॥ * ॥ जैत्रायणिः ॥ * ॥ स्फैजायनिः । स्फिगेत्यन्यः[6] ॥ * ॥ अर्कलूष ऋषिः । आर्कलूषायणिः[7] ॥ अन्ये त्वर्कलुष इति[8] ॥ * ॥ आकनायनिः । आकिनी[9] स्त्रीत्यन्यः ॥ * ॥ पाञ्चजन्यायनिः ॥ * ॥ कौन्तायनिः । कुम्भी कुम्भो वेत्यपरे[10] ॥ * ॥ वाशिष्ठायनिः[11] ॥ * ॥ कौलिशायनिः ॥ * ॥ जित्वा धर्मः । जैत्वायनिः । जित्येत्यन्यः[12] ॥ २८१ ॥ इति कर्णादिः ॥

---

१ स्फिगर्कलूखा° B.; °लूकाः कन° C.; °लूखाकणपाचजन्याः कुती° D.; °कतपांचजन्याः कुंतो वसिष्ठः° F.; A. om. text and comment.

२ Thus F. [Pâṇ. iv. 2, 80]; पिञ् B. C. D. K.

३ B. C. orig. K. om. वामनमतेन.—जाव Bö., Yajñ.

४ आण्डीवत Bö., Yajñ.; आण्डीवत् K. V., Hem., Bö. *var. l.*

५ द्रौषदायनिः B. C. K.

६ स्फिगित्यन्यः F.; om. D.—Bö., Yajñ., Hem. have both स्फिज् and (*v.l.* Bö., Yajñ.) स्फिग.

७ आर्कलूषायनिः B. C. K.; आर्कलू--निः D. (! ख).

८ तु अर्कलुख इति C. F.; cf. śl. 281, notes.—अर्कलूष Bö., Yajñ.; अर्कलुस २ (? *i.e.* combined and separate अर्क । लुस) Hem.; अलुश (*v.l.* अर्क । लुष) Kâṣ. V. ed.; अर्क । लुस *a.*

९ Thus Hem.; आनक Bö., Yajñ. (आकनेत्यन्ये Y.).

१० कौंभी वेत्यपरे C.: कु--भो वेत्यपरे D.; कुम्भी । कुन्ती Bö.; कुंती (कुंभी कुंभो वेत्यन्ये) Yajñ.; कुम्भी Kâṣ. V. ed.; कुंभ *a.*, Hem.

११ वासिष्ठायनिः F. (श cf. p. 54, l. 7).

१२ जित्वन् Bö., Yajñ. (जित्वनां निवासो जैत्वायनिः); जित्व Kâṣ. V. ed. (जित MS. *a.*); जित्वत् (?), जित्या (? corr. °त्व) Hem.

ज्ञेयाः सुतंगमाजिरजीवार्जुनविप्रचित्तमुनिचित्ताः[1] ।
श्वनशुक्रमहापुत्राः खण्डिककर्णौ[2] महाचित्तः ॥ २८२ ॥

सुतंगमादेरिञ् ॥ * ॥ सुतंगमेन निर्वृत्तं सुतंगमस्य निवासो वा । सौतंगमिः ॥ * ॥ आजिरिः ॥ * ॥ जैविः ॥ * ॥ अर्जुनं तृणम् अर्जुनस्य पार्थः । आर्जुनिः ॥ * ॥ वैप्रचित्तिः ॥ * ॥ मौनिचित्तिः ॥ * ॥ श्रौवनिः ॥ * ॥ शौक्रिः ॥ * ॥ माहापुत्रिः ॥ * ॥ खाण्डिकिः । वामनमतेन[3] । खण्डित इत्यन्यः ॥ * ॥ कार्णिः ॥ * ॥ माहाचित्तिः ॥ २८२ ॥

बीजवापिस्वनश्वेतगडिका[4] विग्रविग्रहौ ।
एषां सुतंगमादित्वादिञूचे चातुरर्थिकः ॥ २८३ ॥

बैजवापिः । अन्ये तु बीज इति वापिन्निति पृथगाहुः[5] ॥ * ॥ स्वानिः[6] । वामनमतेन ॥ * ॥ श्वैतिः ॥ * ॥ गाडिकिः । गदिक[7] इत्यन्यः ॥ * ॥ वैग्रिः ॥ * ॥ वैग्रहिः ॥ * ॥ चातुरर्थिक इति निवासोऽदूरभवो नास्ति देशे तेन निर्वृत्तस्तदत्रास्ति च[8] ॥ २८३ ॥ इति सुतंगमादिः ।

---

1 °विप्रचितमुनिचिताः E. (& Bö.); °विप्रविद्यमुतिवि D.

2 खंडीककर्णौ E. against metre; षंडिककर्णौ B. K.; षडिककर्णौ C.; खडिकः कर्णौ° F.; खंडिकर्णौ D.; A. om. text and comment.

3 खांडिकिः । खाडिकिर्वामनमतेन F.—खडिक and खण्डित Bö.; खंडिक Yajñ.; om. Kâṣ. V., Hem.

4 वीजवापस्वन° B.; ॥ वपश्वतश्वे-ताश्वतगडिका C.; °स्वतश्वेत° F.; वीजवापिश्वनेश्वेन° E.; °श्वनश्वेत° D.; A. om. text and comment.

5 वीजवापिन् (v. l. वीज । वापिन्) Bö.; वीजवापिन् Yâjñ., Kâṣ. V.; वीजवाप । वीज । वाप । Hem.

6 स्वातिः B. C. F. K.; स्वनिः D.—Bö. and Yajñ. read स्वन; om. Kâṣ. V., Hem.

7 Thus Hem.; गडिक Bö., K. V.; om. Yajñ.

8 वा D.

वराहबाहू अथ शर्करा नि-
मग्नः शिरीषश्च तथा विदग्धः[१]।
ज्ञेयो वलाहः खदिरो विभग्नः
स्थूलः पलाशः पिनिनद्धबद्धौ ॥ २८४ ॥

वराहादेः कञ् ॥ * ॥ वराहा अत्र देशे सन्ति । वाराहकम् ॥ * ॥ बाहुकम् ॥ * ॥ शार्करकम् ॥ बल्वजादिपाठाट्ठः । शर्करिकम्[२] ॥ शर्करायाष्ठण्छौ[३] वेत्यनेन शार्करिकम् । शर्करीयम् । शार्करम् ॥ शर्करा इति देशसंज्ञा स्वभावादभेदोपचाराद्वा ॥ * ॥ नैमग्नकम् ॥ * ॥ शैरीषकम् ॥ * ॥ वैदग्धकम् ।[४] विजग्ध इत्यप्यन्यः ॥ * ॥ वालाहकम्[५] ॥ * ॥ खादिरकम् ॥ * ॥ वैभग्नकम् । विभक्त इत्यन्ये[६] ॥ * ॥ स्थौलकम् ॥ * ॥ पालाशकम् ॥ * ॥ पिनिनद्धबद्धाविति पिनिभ्यां नद्धबद्धौ क्रमेण ज्ञेयावित्यर्थः । पैनद्धकम् । नैबद्धकम् ॥ २८४ ॥ इति वराहादिः ॥

कुमुद कुण्डलकूटौ मुनिस्थलाश्वत्थघासकुन्दाश्च ।
मधुकर्णदशग्रामौ शाल्मलिरथकारगोमठशिरीषाः[७] ॥ २८५ ॥

कुमुदादेष्ठञ् ॥ * ॥ कुमुदान्यत्र देशे सन्ति । कौमुदिकम् ॥ * ॥

---

१ सर्करा E.; A. omits text and comment.

२ Cf. şl. 295 (where affix इक!).

३ शर्करायाष्ठष्ठौ C.; शर्करायाश्व-ण्छौ D.; ॰च्छण्छावित्यनेन F.; cf. Pâṇ. iv. 2, 83-4.

४ The other works have both words.

५ इत्यन्यः॰ F.; वालहकं D. (व॰ cf. वलाहक şl. 146 comm.).

६ इत्यन्यः D. F.—Hem. has both, the others विभग्न only.

७ ॰गोमवशिरीषाः D.; A. om. text and comment.

कौण्डलिकम् ॥ * ॥ कौटिकम् । कूर्ण[१] इत्यन्यः ॥ * ॥ मौनिस्थलिकम्[२] । मुनिः स्थलस्येत्यन्ये[३] ॥ * ॥ आश्वत्थिकम् ॥ * ॥ घासकुन्दिकम् ॥ * ॥ माधुकर्णिकम् । मुचुकर्ण[४] इति शकटाङ्गजः । शुचिकर्ण[५] इत्यभयनन्दी ॥ विगृहीतादपीष्यते । माधुकम् । कार्णिकम् ॥ * ॥ दाशग्रामिकम् ॥ * ॥ शाल्मलिकम् ॥ * ॥ रथकारेण निर्वृत्तं तस्य निवासो वा । राथकारिकम् ॥ * ॥ गौमठिकम्[६] । पर्वतो ह्रदो वा गोमेध[७] इत्यन्ये ॥ * ॥ शैरीषिकम् । अरीहणादिपाठाच् शैरीषकम् । शिरीषा इति बहुवचनान्तः संज्ञावाची स्वभावात् सोऽयमिति संबन्धाद्वा[८] ॥ शार्करिकशब्दः पृथक्सूत्रेण सिद्ध इति नात्र पाठः ॥ २८५ ॥ इति कुमुदादिः ॥

अरीहणोद्दण्डविपाशशिंशपा[९]
भलन्दनोदञ्चनखाण्डवीरणाः ।
सुयज्ञजम्बूकशकृत्स्नरैवताः
शिरीषबिल्वौ बधिरोऽथ जाम्बवान् ॥ २८६ ॥

---

१ ? कूर्ण C.; तूर्ण F.—The other works have कूट only.

२ मौनस्थलिकं B. C. K.

३ ? मुनिच्छव॰ B.; मुनिबव॰ (ब = छ) C.; मुनिस्थव॰ D. F. & (?) corr. K. —B. K. add: मौनिकं छवाछागाश्छाविकं; C. मौनिकं बवाबागास्थाविकं.—Bö., Yajñ. मुनिस्थल; K. V. ed. मुनिस्थूल, a. मुनि । स्थूल; Hem. मुनि । स्थल । मुनिस्थल ।.

४ ? Thus D.; मनुकर्ण B. C. F. K.—Hem. has मुचुकर्ण । मुचुकर्णि; Kâs. V. ed. मुचुकर्ण, v.l. मधुकर्ण; Bö., Yajñ. मधुकर्ण.

५ इत्युभयनंन्दी D.—Thus also Bö., Hem., Kâs. V. ed. v.l.

६ गोमथिका B. C. K. — गोमठ Hem.; गोमथ Bö., Yajñ., Kâs. V. ed., गोमद a.

७ ? Thus B. C. K.; गोमेव D. F. (? गोमेद or ह्रदो वा ॥ गोमेध इत्यन्ये ॥).

८ सो यमभिसंबंधाद्वा B. C. K.

९ ॰शंसपा B. K.; ॰शंसद्या C.; ॰शिंशिपा॰ F.; A. om. text and comment.

अरीहणादेरकञ्[1] ॥ * ॥ अरीहणेन निर्वृत्तम् । आरीहणकम् ॥ * ॥ औद्गुण्डकम् ॥ * ॥ वैपाशकम् ॥ * ॥ शिंशपानां वृक्षविशेषाणामदूरभवं शिंशपा अत्र सन्तीति वा । शांशपकम्[2] । देविकाशिंशपाश्रेयोदीर्घसत्रस्यादित्यनेनैकारस्याकारः[3] ॥ * ॥ भालन्दनकम् ॥ * ॥ औदञ्चनकम् ॥ * ॥ खाण्डवैरणकम्[4] ॥ * ॥ सौयज्ञकम् ॥ * ॥ जाम्बवकम् ॥ * ॥ काशकृत्स्नकम् । काशकृत्स्न[5] इति भोजः ॥ * ॥ रायावतो रैवतः । रेवत इत्यन्ये[6] । रैवतकः पर्वतः ॥ * ॥ शैरीषकम् ॥ * ॥ बैल्वकम् ॥ * ॥ बाधिरकम् ॥ * ॥ जाम्बवता निर्वृत्तम् । जाम्बवतकम् । अन्ये जाम्बवतोऽपत्यं जाम्बवत इत्याहुः[7] ॥ २८६ ॥

**खाडगौमतमैत्रोष्ट्रत्रैगर्ता वैमतस्तथा ।**
**शाण्डिल्यसांपरौ भास्त्र[8] आयनान्ता अमी मताः ॥ २८७ ॥**

खाडायनकम् ॥ * ॥ गौमतायनकम् ॥ * ॥ मैत्रायणकम् । श्वैत्रायणक इत्यपरः[9] ॥ * ॥ औष्ट्रायणकम् ॥ * ॥ त्रैगर्तायनकम् ॥ * ॥

---

१ Om. D. F.

२ शिंशिपानां° शिंशिपा° F.; °शांशपं D.

३ °दीर्घशत्रस्या° B. C. K.; दीर्घसूत्रस्या° D.; देविकाशिंशपेति सूत्रेण° F.; cf. Pâṇ. vii. 3, 1.

४ Thus B. C. D. K.; खांडवीरणकं F.—खाण्डवीरण Bö., Yajñ. [खाण्डवीरणकम् । खाण्डवैरणकमिति केचित् अनुशतिकादेराकृतिगणत्वात्° Yajñ.]; om. K. V., Hem.

५ ? Thus F.; कशकृत्स B. C. K.; कसकृत्स्न इति श्रीभोजः D.—कशकृत्स्न Bö., Yajñ., Hem.; काशकृत्स्न Kâṣ. V., Bö., *v. l.*

६ C. F. K. om. रेवत.—Bö. रैवत, *v. l.* रेवत; the others रैवत.

७ Bö., Yajñ. and twice Hem. जाम्बवत् (जांबवत इति केचित् Yajñ.); जाम्बवन्त Kâṣ. V. ed.; जांववत *a.*

८ भास्त्रा E.; भास्त्राः D.; A. om. text and comment.

९ ? Thus B. C. K.; चैत्रायणक D. F.—श्वैत्रायणि (or श्वि°) Hem.; मैत्रायण Bö., Yajñ., Kâṣ. V. ed. (चित्रायण *a.*).

वैमतायनकम् ॥ * ॥ शाण्डिल्यायनकम ॥ * ॥ सांपरायणकम् ॥ * ॥ भास्त्रायणकम् ॥ २८७ ॥

खदिरो विपथः खण्डुर्भगलो द्रुघणस्तथा[1] ।
सुशर्मकनलोलन्दा[2] रायस्पोषश्च वीरणः ॥ २८८ ॥

खादिरकम् ॥ * ॥ वैपथकम् ॥ * ॥ खण्डुना निर्वृत्तम् । खाण्डवकम् ॥ खण्डूरित्यन्यः[3] ॥ * ॥ भागलकम् ॥ * ॥ द्रुघणा अत्र सन्ति । द्रौघणकमिति वामनः । द्रुहण इति भोजः[4] ॥ * ॥ सौशर्मकम्[5] ॥ * ॥ कानलकम्[6] ॥ * ॥ औलन्दकम् ॥ * ॥ रायः पोषः । रायस्पोषः । अत एव निपातनाद्विभक्तेरलुग्विसर्गस्य सकारः । रायस्पोषकम् ॥ * ॥ वैरणकम् ॥ २८८ ॥

किरणो यज्ञदत्तश्च दलता सौमतायनः[7] ।
क्रौष्ट्रधौमतसौमेन्द्रसौसकौद्राः[8] फणन्तकाः[9] ॥ २८९ ॥

कैरणकम् ॥ * ॥ याज्ञदत्तकम् ॥ * ॥ दलत्रा निर्वृत्तं दलतुः पर्वतस्य वादूरभवम् । दालत्रकम् ॥ * ॥ सौमतायनकम् ॥ * ॥ क्रौष्ट्रायणकम् ॥ * ॥ धूमतस्यापत्यं धौमतिः । तस्यापत्यं युवा धौमतायनः । तस्य[10]

---

१ भागलो° E.; द्रुहण° D. E.

२ सुशर्मकतलो° B. C. K.; °कातलो° F.; A. om. text and comment.

३ खाडकं । खंडरित्यन्यः D.—Hem has both; Bö., Yajñ. खण्डु, K.V. खण्ड

४ Bö. has both; Hem., Kâṣ. V. ed. द्रुघण; MS. *a.* द्रुहण; Yajñ. द्रुहिण.

५ सौशर्मिकं B. C. F. K.

६ ? कातलकं B. C. F.; K. doubtful.—Bö. कनल (*v. l.* कलन); Yajñ. कतल; om. Kâṣ. V., Hem.

७ यज्ञो दत्तस्य° E.; यत्र–स्य D.; दलतृसौमतायनो D. E.

८ °सौमेंद्रसौसकौद्रः E.; सौमेंद्° B. C. D.; सोमेंदसोसकोद्राः F.; सौमेंद्° K.

९ पणंतकाः B. C. D.; फगंतकाः E.

१० B. C. K. om. धौमतायनः । तस्य.

धौमतायनकम् ॥ * ॥ सोमस्य । सौमायनकम् ॥ * ॥ इन्द्रस्य । ऐन्द्रायणकम्[1] ॥ * ॥ सुष्ठु स्यतीति सुसः । तस्य सौसायनकम् ॥ * ॥ कुद्रस्य । कौद्रायणकम्[2] ॥ एतेषां धौमतायनवत्प्रक्रिया ॥ २८९ ॥ इत्यरीहणादिः ॥

कृशाश्वकूटाजिनवेश्मलोमशा
विशालधूमौ सुकरश्च वर्चलः[3] ।
अरिष्टमौद्गल्यपराशरारुषः
सुवर्चलारिश्मपुरारसूकराः[4] ॥ २९० ॥

कृशाश्वादेश्छण् ॥ * ॥ कृशाश्वेन निर्वृत्तम् । कार्शाश्वीयम् ॥ * ॥ कौटीयम् ॥ * ॥ आजिनीयम् ॥ * ॥ वैश्मीयम् ॥ * ॥ लौमशीयम् ॥ * ॥ वैशालीयम् ॥ * ॥ धौमीयम् ॥ * ॥ सौकरीयम्[5] ॥ * ॥ वार्चलीयम् ॥ वर्तुल[6] इत्यन्ये ॥ * ॥ आरिष्टीयम् ॥ * ॥ मौद्गलीयम् ॥ * ॥ पाराशरीयम् ॥ * ॥ आरुषीयम् ॥ * ॥ सौवर्चलीयम् ॥ * ॥ आरिश्मीयम् । आरिष्य[7] इत्यन्यः ॥ * ॥ पौरारीयम् । वामनमतेन[8] ॥ * ॥ सौकरीयम्[9] ॥ २९० ॥

---

१ ? इंदस्यैंदायनकं B. C. F. K.; इंदस्यैंद्रायनकं D. (!).—Bö., Yajñ. have ऐन्द्रायण; Hem. ऐडायन.

२ कौद्रायनकं (!) B. C. K.—Bö. कौन्द्रायण; Hem., Yajñ., Bö. *v.l.* कौद्रायण; om. K. V.

३ कृशास्तकूटा॰ B.; ॰कूटानिन॰ वर्चनः । E.; ॰वर्त्तुलः । D. F.

४ ॰परासरा॰ E.; ॰शूकराः B. F.; स्वकराः C.; A. om. text and comm.

५ शौकरीयं B. C. D. K.

६ वर्चलीयं॰ B. C. & (or वर्व्वलीयं) K.; वार्त्तुलीयं । वर्च्चल F.; वार्वुलीयं । वर्व्वलीयं । वर्च्चुल. D.—वर्चल Bö., Yajñ. (वर्त्तुलशब्दं केचित्पेठुः Y.); वर्वुल corr. Hem.; वर्वर Kâś. V. ed. (चरमन *a.*).

७ आरिख्य C.; आरिल्य B.; आरिद्य K. (? corr. ड्य).—Hem. has आरिष्य; Bö., Yajñ., K.V. MS. *a.* अरिश्म (K. V. ed. अरीश्व).

८ पौरारीय तेन D.—? Bö., Yajñ. have पुराग (besides पुरग, next śloka; पुरार इत्यन्ये Y.); om. K.V., Hem.

९ शौकरीयं B.C.F.K.; सौष्करीयं D.

अवनतसदृशायोरोमका लोमकश्च
प्रतरसुखविविक्तासायसाः पूतरश्च ।
विनतपुरगदासीपूकराः पूगरश्चा-[1]
ऽजिनतसतुलवेष्येरोऽरसा[2] धूकरश्च ॥ २९१ ॥

आवनतीयम् ॥ * ॥ सादृशीयम् ॥ * ॥ आयसीयम् ॥ * ॥ रौमकीयम् ॥ * ॥ लौमकीयम् ॥ * ॥ प्रातरीयम् ॥ * ॥ सौखीयम् । शिपल[3] इत्यन्ये ॥ * ॥ वैविक्तीयम्[4] ॥ आसायसीयम् । सायस[5] इत्यन्यः ॥ पूतरो[6] जलजन्तुः । पौतरीयम् ॥ अयं वामनमतेन ॥ * ॥ वैनतीयम् ॥ * ॥ पौरगीयम् । पुरगा नाम काचिद्राक्षसी तया भक्षितं पाटलिपुत्रं[7] तस्या निवासः पौरगीयमित्यन्यः ॥ * ॥ दासीयम् ॥ * ॥ पुवं करोति । पूकरः[8] । तस्य पौकरीयम् ॥ * ॥ पूगान्यस्य सन्ति । पूगरः[8] । तस्य पौगरीयम् ॥ * ॥ आजिनतीयम्[9] ॥ * ॥ सातुलीयम्[10] । वामनमतेन ॥ * ॥ वैष्यीयम्[11] ॥ * ॥ ऐरसीयम्[12] ॥ * ॥ आरसीयम्[13] ॥ * ॥ धौकरीयम् ॥ * ॥ केचित्पुंलिङ्गमपरे तु स्त्रीलिङ्गमुदाहरन्ति[14] ॥ २९१ ॥

---

१ ०पूकराः (: om. E.) पूकरश्च D. E.

२ अजिनमपुलवेश्चिरोरसा D.; जिनतसुचलवेसा आरसो E.; ०वेष्थिरोरसो० B. K.; वैथिरोरसौ० C.; ०वेष्यैरसा F.; A. om. text and comment.

३ ? शिपल D.—Hem. has शिवल, the others सुख.

४ वैवक्तीयं C.; वैवक्रीयं F.—विवक्त Yajñ., om. the others.

५ ? सायस् Hem.; अवयास (v.l. आयावस्) K. V. ed.; अकवाशि a.; om. Bö., Yajñ.

६ Trivikrama on Hem. (Prâk.) i. 170 (Pischel) explains पूतर bei अधमः । जलजन्तुर्वा ।

७ Thus D. F. & corr. K.; पाटलितं B. C. & orig. K.; पौरगा नाम० D.

८ पूकर । पूगर Hem.; यूकर Bö., Yajñ.

९ ? अनिनतीयं D.—अविनत (also अवनत) Hem.; others अवनत only.

१० सावुलीयं D.; not given by others

११ ? Thus (or वैष्पीयं) B. C. F. K.; वैषीयं D.—वेष्य Hem.; om. others.

१२ इरस & इर Hem.; not given by the other works.

१३ ? औरसीयं B.; आर यं D.; औरसीयमिति कश्चित् F.; om. C. K.—Not given by the other works.

१४ D. om. from केचित्.

।विकुड्यासासुरावेतौ[1] शबलश्चाभितो जनः।
रोमशश्च[2] कृशाश्वादौ ज्ञेयाश्छणप्रत्ययान्विते ॥ २९२ ॥

वैकुड्यासीयम्[3]। विकुड्य इत्यन्ये ॥ * ॥ आसुरीयम् ॥ * ॥ शाबलीयम् ॥ * ॥ आभिजनीयम् ॥ * ॥ रौमशीयम्[4] ॥ २९२ ॥ इति कृशाश्वादिः ॥

ऋश्यस्थूलनिलीनकर्दमशरा बाहुर्निधानाशनि-[5]
न्यग्रोधाः परिगूढखण्डखदिरा वेणुः सितः शर्करा[6]।
अश्मांशू परिवंशवीरणमता वेश्मोपगूढाविमौ
दण्डश्चानडुहोत्तराश्म परितो वृत्तो निबन्धारडू[7] ॥२९३॥

ऋश्यादेः कः ॥ * ॥ ऋश्या अत्र देशे सन्ति। ऋश्यैर्निर्वृत्तं वा। ऋश्यकम्[8] ॥ * ॥ स्थूलकम् ॥ * ॥ निलीनकम् ॥ * ॥ कर्दमकम् ॥ * ॥ शरकम् ॥ * ॥ बाहुकम् ॥ * ॥ निधानकम्[9] ॥ * ॥ अशनिकम्[10] ॥ * ॥ न्यग्रोधकम् ॥ * ॥ परिगूढकम् ॥ * ॥ खण्डकम् ॥ * ॥ खदिरकम् ॥ * ॥ वेणुकम् ॥ * ॥ सितकम् ॥ * ॥ शर्करकम् ॥ * ॥ अश्मकम् ॥ * ॥ अंशु-

---

१ विकुद्या° (?) C. E. K.; दिकुद्याशा° D.; विकुड्याशा° F.

२ रौमसश्च E.; A. om. text & comm.

३ वैकुड्याशीयं (? some द्य; घ D.) MSS.—विकुड्यास Bö., Yajñ. (कुविद्यास *v. l.* Bö.); विकुघास K. V. ed. (विक्तपुसा *a.*); विकुड्याश्च (or °ड्यांश्च) and विकुड्य Hem.

४ रौमसीयं D.

५ °निधानासनि° D. E.; ऋश्च cf. note ८.

६ वैणुः शिता सर्करा D.; शितिः° शर्करः B. F. K.; शकारः C.

७ वृंतो° B. F.; परितो निबंधोरडूः C. K.; निबंधारडू F.; A. om. text and comment.

८ The MSS. waver between ऋष्य and ऋश्य.

९ Thus Bö., Yajñ., K. V. [विधान इत्यन्ये Yajñ.]; om. Hem.

१० असनि° D.—अशनि Yajñ.; असनि Bö.; न्यशनि MS. Hem.; om. K.V

कम् ॥ * ॥ परिवंशकम् ॥ * ॥ वीरणकम् ॥ * ॥ मतकम् ॥ * ॥ वेश्मकम् ॥ * ॥ उपगूढकम् ॥ * ॥ दण्डकम् ॥ * ॥ अनडुहोत्तराश्मेति समाहारद्वन्द्वः । अनडुहकम्[1] ॥ * ॥ उत्तराश्मकम् ॥ * ॥ परितो वृत्त इति परिवृत्त इत्यर्थः । तस्य परिवृत्तकम्[2] ॥ * ॥ निबन्धकम् ॥ * ॥ अरडुस्तरुविशेषः । तस्य । अरडुकम्[3] ॥ २८३ ॥ इत्यृश्यादिः[4] ॥

बल्वजः कूपबीजे च यवासेक्कटकङ्कटाः[5] ।
शिरीषः शकटाश्वत्थपरिवापविकङ्कतम् ॥ २९४ ॥

बल्वजादेरिकः ॥ * ॥ बल्वजा अत्र देशे सन्ति । बल्वजिकम् ॥ * ॥ कूपिकम् ॥ * ॥ बीजिकम् ॥ * ॥ यवासिकम् । यवाष[6] इत्यन्यः ॥ * ॥ इक्कटिकम्[7] ॥ * ॥ कङ्कटः संनाहः सीमा च । कङ्कटिकम् ॥ * ॥ शिरीषिकम् ॥ * ॥ शकटिकम् ॥ * ॥ अश्वत्थिकम् ॥ * ॥ परिवापिकम् ॥ * ॥ विकङ्कतिकम् ॥ २८४ ॥

शर्कराऽथ दशग्रामो न्यग्रोधः कुमुदं कचः[8] ।
मध्वश्वसंकटा गर्तनिर्यासौ गदिताविह ॥ २९५ ॥

शार्करिकम् ॥ * ॥ दशग्रामिकम् ॥ * ॥ न्यग्रोधिकम् ॥ * ॥ कुमुदि-

---

१ आनडुहोत्तर॰ आनडुहकं D.—अनडुह् Bö., Kâs. V.; अनडुह Hem., *v.l.* Bö.; (अनडुहोऽपत्यमानडुहः) आनडुहोत्तराश्मेति॰ Yajñ.

२ ॰वृंत ॰परिवृंत ॰परिवृंतकं B. F. K. (C.)—The other works have परिवृत्त (K. V. *a.* परिग्रंथ).

३ अरटु॰ अरटुकं B.C.F.K.—अरडु Bö., Yajñ. (अरटुरित्यन्ये Yajñ.); अरडु । अरदु Hem.; om. Kâs. V.

४ Cf. note ८, preceding page.

५ यवासेक्कट॰ B. C. K.; यवासेत्कट॰ D. E.; A. om. text & comment.

६ पवासिकं॰ C.; यवास B. C. F. K.; पवाष॰ D.—यवाष Bö., Kâs. V., Hem.; यवाद्य Yajñ.

७ इक्कटिकं B. C. F. K.; ॰त्कटिकं D.—इक्कट Bö., Yajñ.; इत्कट Kâs. V., Hem.

८ कची B. C. K.; कधी D.; ॰कवि: F. [कच Bö., Yajñ.; कत *v.l.* Kâs.V. ed.; om. Hem.]; A. om. text and comment.

कम् ॥ * ॥ कच्चिकम् ॥ * ॥ मधुकम् ॥ अश्विकम् ॥ इयं वामनमतेन[1] ॥ * ॥ संकटिकम् ॥ * ॥ गर्तिकम् ॥ * ॥ निर्यासिकम् ॥ * ॥ केचिद्बल्वजिका कुमुदिकेत्यादि स्त्रीलिङ्गमुदाहरन्ति । तत्र लोकः प्रमाणम ॥ २९५ ॥ इति बल्वजादिः[2] ॥

काशपाशतृणाश्वत्थाः पलाशवनकङ्कटाः[3] ।
वासकर्दमपीयूक्षा[4] गुहाकर्पूरबर्बराः ॥ २९६ ॥

काशादेरिलः ॥ * ॥ काशस्तृणविशेषः । काशा अत्र सन्ति । काशिलम् ॥ * ॥ पाशिलम् ॥ * ॥ तृणिलम् ॥ * ॥ अश्वत्थिलम् ॥ * ॥ पलाशिलम् ॥ * ॥ वनिलम् ॥ * ॥ कङ्कटिलम्[5] ॥ * ॥ वासो गुल्मविशेषः । वास्यन्ते रुवन्तीति वासाः पक्षिण इत्यन्यः[6] । वासिलम् ॥ * ॥ कर्दमिलम् ॥ * ॥ पीयूक्षिलम् ॥ * ॥ गुहिलम् ॥ * ॥ कर्पूरिलम् ॥ * ॥ बर्बरो म्लेच्छजातिः । बर्बरिलम् ॥ २९६ ॥

मधुरग्रहवच्छूलाः[7] कपित्थश्वरणो बिसः ।
नडोऽथ जतुसीपालौ[8] गणे काशादिसंज्ञिते ॥ २९७ ॥

मधुरिलम् ॥ * ॥ ग्रहिलम् ॥ * ॥ वच्छूलिलम्[9] ॥ * ॥ कपित्थि-

---

१ दुर्गवामनमतेन D.

२ This *gaṇa* corresponds to कुमुदादि to P. iv. 2, 80, no. 4; Hem. vi. 2, 96.

३ °कंटका: B. F.

४ °पीयूच्या E.; A. om. text and comment.

५ कंटकिलं F.—कङ्कट Bö., Yajñ.; कण्टक Kâṣ. V. ed., MS. *a.*, Hem.; cf. *prekshâdi*, ṣl. 299.

६ वास्यात रु° वासा पचिण° C.; om. D. [वाश्यन्ते° ?].—वाश Kâṣ. V. ed., Hem.; वास Bö., Yajñ.

७ °ग्रहवत्थूला: F. K.; °वचूला: E.; °वक्कला: D.; ग्रहद्स्थूला: C.

८ जतुशापालो C.; A. B. om. text and comment.

९ ? वत्थूलिलं F. K. (त्थ often written like च्छ); वचूलिलं B.; वब्रूलिले D (cf. वचूल E., note ७).—वच्छूल Bö., Yajñ.; वर्तुल Hem.; वधूल *v.l.* Kâṣ. V. ed.; om. MS. *a.*

लम् ॥ * ॥ चरणिलम् ॥ * ॥ विसिलम्[१] ॥ * ॥ नडिलम् ॥ * ॥ जत-विलम् ॥ * ॥ सीपालिलम्[२] ॥ २९७ ॥ इति काशादिः ॥

तृणमूलसुवर्णार्णा वराणवर्णौ[३] वनार्जुनौ पर्णम् ।
नडबलबिलपुलचरणा बुसः[४] फलं चात्र विज्ञेयम् ॥ २९८ ॥

तृणादेः सः[५] ॥ * ॥ तृणान्यस्मिन्देशे सन्ति । तृणसा नदी नगरी सरसी[६] पर्वतिका ॥ * ॥ मूलसा ॥ * ॥ सुवर्णसा ॥ * ॥ अर्णो जलम् । तदत्रास्तीति । अर्णसा नदी । पाठसामर्थ्यात्सलोपः ॥ अर्ण । इत्यकारान्ता प्रकृतिरित्यन्ये[७] ॥ * ॥ वराण इति वीरणाभिधानम्[८] । तदस्तित्वाद् वराणसी[९] नदी । तस्या अदूरभवा वाराणसी नगरी ॥ वराणसो देशस्तत्रभवा वाराणसी नगरीत्यन्ये ॥ * ॥ वर्ण इति वीरणाख्या[१०] । वर्णसा ॥ * ॥ वनसा ॥ * ॥ अर्जुनसा दिग्वस्त्रमतेन ॥ जन इति शकटाङ्गजः[११] ॥ * ॥ पर्णसा ॥ * ॥ नडसा ॥ * ॥ बलसा ॥ * ॥ बिलसा ॥ * ॥ पुलसा ॥ * ॥ चरणसा ॥ * ॥ बुससा[१२] ॥ * ॥ फलसा । दिग्वस्त्रमतेन ॥ २९८ ॥ इति तृणादिः ॥

---

१ विशिलं D.

२ शापालिलं D.—सीपाल Bö.; शीपाल Hem.; सोपालो नाम कश्चित्तेन निर्वृत्तं सोपालिकम् Yajñ.; om. K.V.

३ सुवर्णार्णोवराणवर्णा F.; सुवर्णाणि विराण॰ C.

४ वुशः॰ D.; चुलफलं॰ F.; A. om. text and comment.

५ शः D. throughout (तृणशः ॰मूलशा etc.).

६ सारसी B. C. K.; सरसि D.

७ The other works have अर्ण [गणे लुप्तसकारस्योपादानात्सकारनिवृत्तिः। अदंत एवायमित्यन्ये Yajñ.].

८ ? Thus B. D. F. K.; वारणाभिधानं C.

९ वराणसा F.; D. om. from तदस्तित्वाद् to अर्जुनसा.

१० Thus also Yajñeṣvara.

११ B. C. om. from जन to end of comm. (K. suppl. in margin).—अर्जुन Bö., Yajñ.; जन Hem., Kâṣ. V. ed. (अञ्ज a.).

१२ चुलसा F.

**प्रेक्षा स्यात्परिवापसंकटकटाः[1] कूपो यवासः पुटः**
**संलक्ष्या ध्रुवका महश्च धुवका कैश्चित्कपिः कोविदैः।**
**ज्ञेयः कङ्कटबन्धुकापुकबुका गर्तेक्कटौ[2] कूपको**
**न्यग्रोधक्षिपकाहिरण्यफलकाः प्रेक्षादिरेवं गणः ॥२९९॥**

प्रेक्षादेरिन् ॥ * ॥ प्रेक्षा बुद्धिः । तया हेतुना निर्वृत्तः । प्रेक्षी ग्रामः ॥ अथवा प्रेक्षा अत्र सन्ति । प्रेक्षी देशः ॥ प्रेक्षाशब्दो यद्यपि प्रेक्षणवाची[3] तथाप्यत्र पक्षे रूढितो नदीसरसीस्थल्यादिवृत्तिर्द्रष्टव्यः ॥ * ॥ परिवापो बीजनिक्षेपः । परिवापी ॥ * ॥ संकटं संकीर्णता । संकटी ॥ * ॥ कटः पर्यन्तः । कटी ॥ * ॥ कूपी ॥ * ॥ यवासो दुःस्पर्शः । यवासी[4] ॥ * ॥ पुटी ॥ * ॥ ध्रुवका । आवपनविशेषः । ध्रुवकी ॥ * ॥ मह उत्सवः । मही ॥ * ॥ धुवका । आवपनविशेषः । धुवकी ॥ * ॥ कैश्चिदिति दिग्वस्त्रप्रभृतिभिः कपिशब्दः संलक्ष्यः । कपी ॥ * ॥ कङ्कटः संनाहः । कङ्कटी ॥ * ॥ बन्धुरेव बन्धुका । बन्धुकी ॥ * ॥ पुको दानम् । पुकी ॥ * ॥ बुको हास्यम् । बुकी[5] ॥ * ॥ गर्तोऽवटः । गर्ती ॥ * ॥ इक्कटं चषकः । इक्कटी[6] ॥ * ॥ कूपको गुणवृक्षः । कूपकी ॥ * ॥ न्यग्रोधो वटः । न्यग्रोधी ॥ * ॥ क्षिपका । आयुधम् । क्षिपकी ॥ * ॥ हिरण्यं सुवर्णम् । हिरण्यी[7] ॥ * ॥ फलकम् आकाङ्क्षितसिद्धिरावरणं वा[8] ।

---

१ °परिवापकंटकाः° D. E.

२ गर्तोत्कटौ° D.; गर्त्तोकटौ E.; °पुकचुका° F.; A. om. text and comm.

३ यद्यपि प्रेक्षिशब्दः प्रेक्षकवाची तथाप्यत्र° Yajñ.

४ Thus also Yajñ. (यवाष इति क्वचित्पाठः); यवाष Bö., Hem.; om. K.V.

५ चुको° चुकी C. F.; वुको° वुकी B. D. K.—[पुको दानम्° । बुको हास्यम्° । Yajñ.]

६ इत्कटं चकषः इत्कटी D.; इक्कटं° इक्कटी F. K.—इक्कट Bö., Yajñ.; इक्कट Hem.; इकुंट K.V.ed., कर्कट a.; cf. sl. 294.

७ हिरिणी B. C. K.; हिरिण्यी D.—हिरण्य Bö., Yajñ.; हरिण्य Hem.; om. Kâṣ. V.

८ °सिद्धिः वरणं वा D.—हलका Bö., Yajñ.; फलका Hem., v.l. Bö.; om. Kâṣ. V. [हलका पुरविशेषस्तस्मादूरभवो हलकी ग्रामः । Yajñ.].

फलको ॥ * ॥ कूपगर्तपरिवापयवासहिरण्यशब्दाः[१] शकटाङ्गजमतेनोपात्ताः ॥ २९९ ॥ इति प्रेचादिः ॥

मध्विक्षू शररोमवेणुमरुतः शक्तीष्टकारिष्टयो[२]
वार्दालीशकलाकरीरकिशरासन्दीशलाकाहिमाः[३] ।
स्थाणुस्तक्षशिलाविसासुतिशमीसर्याणपादामिषी-[४]
कर्कन्धूवटवेटकृथरुमणो वल्मीकपीडाखडाः[५] ॥ ३०० ॥

मध्वादेर्मत्[६] ॥ * ॥ मधु पुष्परसादिः । तदत्र देशेऽस्ति । मधुमान्देशः ॥ * ॥ इक्षू रसालः । इक्षुमान् ॥ * ॥ शरो मुञ्जः । शरावान् । शरादीत्यादिना दीर्घत्वे ॥ शरुरित्यन्यः[७] ॥ * ॥ रोम तनूरुहम् । रोमवान् ॥ * ॥ वेणुमान् ॥ * ॥ मरुतो देवा वायुश्च । मरुत्वान् ॥ * ॥ शक्तिः प्रहरणम् । शक्तिमान् ॥ शुक्तिरित्यन्यः[८] ॥ * ॥ इष्टका मृद्विकारः । इष्टकावान् ॥ * ॥ रिष्टिश्चन्द्रहासः । रिष्टिमान् ॥ मदिराजातीयः संधानविशेषो रिष्टिशब्द इति वामनः[९] ॥ * ॥ वार्दाली । ओषधिविशेषः । वार्दालीवान् ॥ पार्दाकीत्येके[१०] ॥ * ॥ शकलो मत्स्यः । शकलावान् । कृतदीर्घोऽयं पठितः । शकलीवानित्यन्ये[११] ॥ * ॥ करीरो

---

१ °हिरण्यशब्दाः D.

२ शक्तीष्टकारिष्टयो E.

३ किसरा° B.C.F.K.; कसरा° D.; शलाकीहिमाः C.

४ °समी° D.; शर्याण° E.

५ °कर्कंधू° वेटकृथरुमलो° E.; °रुमतो° B. C. F. K.; वेटकृचकमतो° D.

६ °मतुः D.

७ त्सरुरित्यन्यः F.; om. D.—Hem. has शरु cf. next page, n. १; others शर.

८ Hem शक्ति; the others शुक्ति.

९ D. om. from मदिराविशेषः.—मदिराजातीयः संधानविशेषो रिष्टिः। चंद्रहासो रिष्टिरित्यन्ये । रिष्टिमान् Yajñ.; Bö. हृष्टि; Kâs. V. ed. मुष्टि (v.l. हृष्टि), MS. a. रिष्ट; Hem. ऋषि.

१० वार्द्दाकीत्येके D.; om. F.—वार्दाली Bö., Yajñ.; पार्दाकी Hem.; दर्वाघाट K. V. ed., दर्वाक a.; cf. next page, note १.

११ शकली Hem.; शकल (शकला) Bö.. Yaiñ.; om. Kâs. V.

वृक्षविशेषः। करीरवान् ॥ * ॥ किशरो गन्धद्रव्यम्। किशरावान्। तृणजातिः ॥ किशरुरित्यन्यः[१] ॥ * ॥ आसन्दी वेत्रासनम्। आसन्दीवान् ॥ * ॥ शलाका। एषणी पूरणरेखा[२] द्यूतोपकरणं च। शलाकावान ॥ * ॥ हिमं तुहिनम्। हिमवान् ॥ * ॥ स्थाणुमान्। यवादेराकृतिगणत्वाद्वत्वाभावः[३] ॥ * ॥ तक्षशिला नगरी। तक्षशिलावान् ॥ अक्षशिलेत्यन्यः। अक्षवान्। शिलावानित्येके[४] ॥ * ॥ बिसवान् ॥ * ॥ आसुतिः सोमरसः। आसुतिमान् ॥ आसुतीवानिति वामनाद्याः। ते ह्यासुतीशब्दं पठन्ति ॥ सुत्येत्यन्यः[५] ॥ * ॥ शमो वृक्षः। शमीवान्[६] ॥ * ॥ सर्याणः पर्वतः। सर्याणावान् ॥ सार्याण[७] इत्यन्ये ॥ * ॥ पार्दी वृक्षः। पार्दावान् ॥ पार्दा नाम काचित्स्त्रीत्यन्ये[८] ॥ * ॥ आमिषी। ओषधिः। आमिषीवान्[९] ॥ * ॥ कर्कन्धूः क्षुद्रबदरी। कर्कन्धूमान्। कर्कन्धुरित्यन्यः[१०] ॥ * ॥ वटो न्यग्रोधः। वटावान् ॥ * ॥ वेटः पीलुवृक्षः। वेटावान् ॥ * ॥ ऋष्यो मृगविशेषः। ऋष्यावान्[११] ॥ * ॥ रुमाँल्लवणविशे-

---

१ किसरो॰ किसरावान्॰ किसरु॰ B. C. F. K.—किशर (॰रा) Bö., K. V.; किसर (॰रा) Yajñ., Hem.—Hem. has also कीशरु [? orig. a misreading; MS. Hem. has पार्दा। कीशरु। इष्टका। पार्दाकीशरु। (*i.e.* पार्दाकी। शरु।)].

२ ॰रेषा B. C. D. K.; एषिणी D.; om. C.

३ ॰गणत्वाभावः C. K.; om. D.; cf. şl. 414.

४ शलावानित्येके B. C. K.—Hem. has तक्षशिला & अक्षशिला; the others तक्षशिला only.

५ सुतेत्यन्यः B. F. and orig. K.; om. D.—Hem. has आसुति and सुत्या; the others आसुति only.

६ समो॰ समीवान् D.

७ सर्याण इत्यन्ये B. C. K.; सार्यापा इत्यन्ये D.; (? सर्याणवान्। सार्पण इत्यन्ये!).—शर्याण Bö., Yajñ.; सार्पण Hem.; शर्प्यणा Kâş. V. ed., शर्यणा *a.* [शर्याणः पर्वतः। शर्याणवान् Yajñ.]. For the correct forms see the St. Petersb. Dict. *s.v.* शर्यण, शर्यणावन्त्.

८ पार्दा Hem.; om. others; cf. n. १.

९ B. K. add वर्त्ततेत्यन्यः; C. वर्त्तीतत्यन्यः; F. वर्त्वतेत्यन्यः।

१० Hem. both; कर्कन्धू Bö., Yajñ.; कर्कन्धु K. V.

११ ऋष्य Yajñ., Kâş. V. *a.*; ऋक्ष Kâş. V. ed.; कृष्य Bö.; ऋषि Hem.

घस्तृणविशेषो[1] वा । तृमणवान्[2] ॥ तृणवदित्यन्यः ॥ * ॥ वल्मीको नाकुः । वल्मीकावान् । अयं दिग्वस्त्रमतेन ॥ * ॥ पीडावान् ॥ * ॥ खडस्तृण- जातिः । खडावान् ॥ * ॥ अनद्यर्थमारम्भः[3] ॥ ३०० ॥ इति मध्वादिः ॥

**उत्कराश्मखदिरास्तृणवृक्षाविन्द्रवृक्षतिकपिप्पलशाकाः ।**
**आर्द्रवृक्षकपलाशसुवर्णश्यावनायसहिता विजिगीषा[4]॥३०१॥**

उत्करादेश्छः ॥ * ॥ उत्करो दृषत्पांसुप्रचयः । सोऽस्यास्तीत्युत्क- रीयं नगरम् ॥ * ॥ अश्मीयम् ॥ * ॥ खदिरो वृक्षः । खदिरीयम् ॥ * ॥ तृणीयम् ॥ * ॥ वृक्षीयम् ॥ * ॥ इन्द्रवृक्षीयम् ॥ * ॥ तिको राजा । तिकीयम् ॥ * ॥ पिप्पलोऽश्वत्थः । पिप्पलीयम् ॥ * ॥ शाकं भक्ष्यवि- शेषः । शाकीयम् ॥ * ॥ आर्द्रवृक्षीयम्[5] ॥ * ॥ पलाशीयम् ॥ * ॥ सुव- र्णीयम् ॥ * ॥ श्यावनायो मुनिः । श्यावनायीयम् ॥ * ॥ विजिगीषी- यम् ॥ ३०१ ॥

**शालानैकखलाजिनातपफला जन्याजिनं पिप्पली-[6]**
**मूलं संपरशूर्पणायपिचुका भस्त्रा च नैवाकवः[7] ।**
**अक्षोशाकिनिताक्तवृक्षशफरा [illegible]**
**काशारख्यनिशान्तपर्णकितवाः क्षुद्राणकक्षान्तयः[9]॥३०२॥**

---

१ तृमणवत्° B. C. F. K.; तृणाक्ष- कवविशेषघस्तविशेषो D.

२ तृमलान् MSS. (!); D. om. तृव- दित्यन्यः.—Hem. has तृवत्, om. others.

३ अनद्यर्थमारंभः D.; cf. P. iv. 2, 85.

४ A. om. text and comment.

५ आर्द्रवृक्षक Bö.; आर्द्रवृक्ष the others and Bö. *v. l.* [? °क here ad- jectively].

६ °खलाजिनातप° B.; जन्याजनं° B. F.; पलाजिनातपफली° जन्याजन- पि° C.; °जान्याजिनं° D.

७ °नैचाकव: F.

८ °वृक्षशफला° B.; °वृक्षसफषरा गर्ता° D.

९ क्षुद्राणवक्षांतय: B.; °कक्षाक्षय: E.; A. om. text and comment.

शालीयम् ॥ * ॥ अनेकीयम् ॥ * ॥ खलाजिनीयम् ॥ खण्डाजिन[1] इत्यन्यः ॥ * ॥ आतपीयम् ॥ * ॥ फलीयम् ॥ * ॥ जन्या वधूस्तद्वाहिका[2] वा । जन्यीयम् ॥ * ॥ अजिनीयम्[3] ॥ * ॥ पिप्पलीमूलीयम् ॥ * ॥ संपरो मुनिः । संपरीयम् ॥ * ॥ शूर्पणायो मुनी राक्षसो वा । शूर्पणायीयम्[4] ॥ * ॥ पिचुकस्थूलकम्[5] । पिचुकीयम् ॥ * ॥ भस्त्रीयम् ॥ * ॥ निवाकुर्निर्गुणः । तस्य निवासो नैवाकवः । तस्यादूरभवं नैवाकवीयम्[6] ॥ * ॥ उत्क्रोशः कुररः[7] । उत्क्रोशीयम् ॥ * ॥ अर्को गुल्मः सूर्यश्च । अर्कीयम् ॥ * ॥ नितान्ता वृक्षा यत्र सन्ति स नितान्तवृक्षो देशः । तस्यादूरभवं नितान्तवृक्षीयम् ॥ * ॥ शफरो मत्स्यः । शफरीयम्[8] ॥ * ॥ गर्तीयम् ॥ * ॥ अग्नीयम् ॥ * ॥ वैराकणो नामर्षिः । वैराकणीयम्[9] ॥ * ॥ काशीयम् ॥ * ॥ अरणीयम् ॥ * ॥ निशान्तम् अन्तःपुरम् । निशान्तीयम् ॥ * ॥ पर्णीयम् ॥ * ॥ कितवो धूर्तो गन्धद्रव्यं च । कितवीयम् ॥ * ॥ क्षुद्रीयम् ॥ क्षुद्रा राक्षसी तन्निवासः क्षुद्रीयमित्यन्ये[10] ॥ * ॥ अणकम् अधमम् । अणकीयम् ॥ * ॥ क्षान्तीयम् ॥ क्षान्त इति भोजः[11] ॥ ३०२ ॥

---

१ Hem. both; the others खलाजिन.

२ °तद्वाहका B. C. F. K.

३ [अ suppl. K.] जनीयं B. F. K.; om. C.

४ सूर्पणायो° सूर्प° B. C. F. K.

५ पिचकस्थूरकं B.K.; पिचकस्तूरकं° C.; पिचुकः स्थूलकं D.

६ निचाकु° नैवाकव° नैचाकवीयं K.; °चा° F. throughout.—नैचाकव Hem.; नैवाकव Bö., Yajñ.; नैव । वक Kâś. V. ed., *a.*; cf. śl. 204.

७ कुक्षर: B. C. D. K.

८ सफरो° सफरीयं D.—Hem. संफर, the others शफर.

९ वैराकाणीयं B.; वैराक । णीयं D. — वैराकण Yajñ.; वैराणक Bö., Hem.; om. Kâś. V.

१० Yajñ. notices both readings; Hem. काश । क्षुद्रा २ । (२ generally indicates that the two preceding words are to be taken both combined and separate).

११ क्षान्त Bö.; शान्त Kâś. V. ed.; क्षांति Yajñ., Kâś. V. *a.*; om. Hem.

अश्वत्थनीचापकशंकरेडावरोहितक्षारविशालवेचाः ।
अरीहणत्रैवणचर्मखण्डवातागराः संपलमन्त्रणार्हौ[1] ॥ ३०३ ॥

अश्वत्थीयम् ॥ * ॥ नीचानाप्नोतीति । नीचापकः । नीचापकीयम् ॥ * ॥ शंकरीयम् ॥ * ॥ इडाः स्त्रियः । इडीयम्[2] ॥ * ॥ अवरोहितो नामर्षिः । अवरोहितीयम् ॥ * ॥ क्षारीयम् ॥ चोध[3] इत्यन्यः ॥ * ॥ विशालो नामर्षिः । विशालीयम् ॥ * ॥ वेत्रीयम् ॥ क्षारवेत्रौ वामनमतेन ॥ * ॥ अरीहणः पुंविशेषः । अरीहणीयम् ॥ * ॥ त्रिवेण्या अपत्यं त्रैवणः । तस्य निवासस्त्रैवणीयम् ॥ * ॥ चर्मीयम् । शाखाभिधानवाचि वर्म्मणि- त्यन्यः[4] ॥ * ॥ खण्डीयम् ॥ * ॥ वातागरीयम् ॥ * ॥ संपलो[5] मुनिः । संपलीयम् ॥ * ॥ मन्त्रणार्हीयम् ॥ * ॥ उत्करादीञ्छप्रत्ययान्तान् केचित्पुंलिङ्गान् अपरे स्त्रीलिङ्गानाहुः[6] ॥

एतेऽष्टादशाकृतिगणा वेदितव्याः । तेनान्येऽपि शब्दा यथादर्शनं द्रष्टव्याः । अन्यैस्तु नैयत्यमेषां प्रतिपादितम् । एतदीयशब्दानां चलारोऽप्यर्था यथासंभवं द्रष्टव्याः ॥ ३०३ ॥ इत्युत्करादिः ॥

शौनकोऽथ तलवाजसनेयौ रज्जुकण्ठकठशाठकषायाः ।
स्कन्धसाङ्गरवतुम्बुरुताण्ड्या[7] रज्जुभारकमलारुणयश्च ॥ ३०४ ॥

शौनकादिभ्यो णिन् इत्यनेन तेन प्रोक्तं वेदं विदन्त्यधीयते वेत्यर्थ-

---

1 सपल° C.; सरालमंत्रणार्हौ D.; A. om. text and comm.

2 ईडा° ईडीयं all MSS.; the other works have इडा.

3 ? Thus B. F., and (? चाध) K.; चोद C.; चांत D.—चांध MS. Hem.; चार Bö., Yajñ. [क्रोध इत्यन्ये Yajñ.] om. Kâś. V.

4 Thus B.F.K., ? वर्मन्, or suff. ण्य: °वाधिवर्ण्यणि° D.; °वाविवर्ण्यणि° C.

5 सफल C.—संफल Bö., Yajñ., Kâś. V. ed. (संहल *a*.); संपल । संफर । संफल । संफुल । Hem. (cf. संपर).

6 D. om. from उत्करादीन्.

7 °तुंवुरतांड्या B.; °तुवुरु° E.; तंगवुरु° D.; A. om. text and comm.

योर्णिन्भवति ॥ * ॥ शौनकेन प्रोक्तं वेदं विदन्त्यधीयते वा। शौनकिनः ॥ * ॥ ताखिनः ॥ * ॥ वाजसनाया अपत्यं वाजसनेयः। वाजसनेयिनः ॥ * ॥ राज्जुकण्ठिनः ॥ * ॥ काठशाठिनः। कठशाठाभ्यां प्रोक्तवेदवेदकाः ॥ * ॥ काषायिणः ॥ कषय[1] इति वामनः ॥ * ॥ स्कान्धिनः। स्कन्द[2] इति चन्द्रः ॥ * ॥ साङ्गरविणः[3] ॥ * ॥ तौम्बुरविणः ॥ * ॥ ताण्डिनः[4]। शकटाङ्गजभोजमतेन ॥ * ॥ राज्जुभारिणः ॥ * ॥ कामलिनः ॥ * ॥ आरुणिनः ॥ ३०४ ॥

हरिद्रुशाष्पेयपलिङ्गयुक्ताः
शापेयखाडायनदेवदर्शाः।
श्यामायनालम्बिरुचाभदण्डाः
स्तम्भोलपौ स्तः परुषांसकश्च[5] ॥ ३०५ ॥

हारिद्रविणः ॥ * ॥ शष्पमिव शष्पः। तस्यापत्यं शाष्पेयः। शाष्पेयिणः ॥ * ॥ पालिङ्गिनः। पुलिङ्ग[6] इति वामनः ॥ * ॥ शपस्यापत्यं शापेयः। शापेयिनः ॥ शाफेय[7] इत्यन्ये ॥ * ॥ खडस्यापत्यं नडादिफाण[8]। खाडायनः। खाडायनिनः ॥ * ॥ दैवदर्शिनः। वेददर्श इति वामनः[9] ॥ * ॥ श्यामायनिनः ॥ * ॥ अलम्बस्यापत्यम् आलम्बिः।

---

१ ? काषाया C.—कषाय Bö., Yajñ.; कशा : K. V. ed., om. *a.*; कखाय Hem.

२ स्कंध C. F. K.—स्कन्ध Bö., Yajñ., K. V. ed., Hem.; स्कन्द K. V. ed., *a.*

३ सागरविणः D.—शार्ङ्गरव Bö., Yajñ., Kâṣ. V. ed.; साङ्गरव Hem., also Kâṣ. V. ed., संगर *a.*

४ ताडिनः B. C. K.

५ श्यामायिनालंबिरुचाभ० B.C.K.; ०रचाभदंडा० E.; रूट वदंडा० D.; ०तंडा(:) स्तंभोलुपौ० B. D. F. K.; पुरुषांशकश्च D. E.; A. om. text and comm.

६ ? Thus B. D. K.; पुंलिंग C. F.—पलिंग Hem.; पलङ्ग (पालंगिनः) Pâṇ. iv. 3, 104 scholl.; also Kâṣ. V. ed. *ib.* (फलिंग MS. *a.*).

७ Thus Hem.; शापेय Bö., Yajñ.; सांपेय K. V. ed., कापेय *a.*

८ षडस्यापत्यं० पञ्चि B. C. K.; पावे D.; not in (âkṛiti) gaṇa *naḍâdi*, 232-6.

९ ? देवदर्शन Bö., Yajñ.; देवदर्श Hem.; देवदत्तशठ (!) Kâṣ. V. ed.; शंभुदेव। दश। *a.*

आलम्बिनः ॥ * ॥ आर्चाभिनः ॥ ऋचभाग इत्यभयनन्दी[१] ॥ * ॥ दाण्डिनः[२] । चन्द्रवामनमतेन ॥ * ॥ स्ताम्भिनः । स्कम्भ[३] इति शकटाङ्गजः ॥ * ॥ औलपिनः[४] ॥ * ॥ परुषे अंसे अस्य । परुषांसकः । पारुषांसकिनः[५] ॥

सर्वेऽप्येते सोपज्ञवेदशाखानां[६] प्रणेतारः प्रसिद्धाः । तदभिधायिनस्तु प्रोक्तप्रत्ययान्ताः शब्दा अध्येत्रादिविषयत्वात्ख्यातव्यमुख्या प्रयोगभाजो न स्युः[७] । भोजमतमाश्रित्य वामनोक्तः कलापिशिष्यप्राच्यादिविशेषो[८] नाश्रितः ॥ आकृतिगणोऽयम् । तेन तलवकाराश्वपत्समदावकण्ठैतरेयभाल्लविशाट्यायनप्रभृतयो द्रष्टव्याः ॥ ३०५ ॥ इति शौनकादिः ॥

उक्थन्यासवसन्तयज्ञशिशिरं चर्चा पुराणं गणः
संज्ञातर्कपदक्रमाश्च गणितं लक्ष्यं च लोकायतम्[९] ।
आयुर्वेदगुणेतिहासचरमं हेमन्तहेतू यजुर्
वर्षाज्योतिषसंहिता शरदथो संघाटवृत्तीतरम् ॥ ३०६ ॥

क्रतूक्थादेष्ठण् इत्यनेन क्रतुवाचिन उक्थादेश्च ठण् ॥ * ॥ उक्थशब्दः सामसलक्षणो ग्रन्थ औक्थिक्ये वर्तमानो गृह्यते । उक्थं[१०] वेत्त्य-

१ अर्चाभिनः° B. C. F. K.; आर्चधिनः° इत्युभयनंदी D.

२ तांडिनः B. C. F. K.—दण्ड Bö., Yajñ.; om. Hem., Kâṣ. V.

३ Hem. has both; the others स्तम्भ.

४ उलेपिनः C.; अलुपिनः D.; P. iv. 3, 104 scholl.

५ पुरुषे अंशे अस्य पुरुषांशकः । पैरषांशकिनः D.—पुरुषांसक Bö.; पुरुषासक Kâṣ. V. ed.; परुषांसक (क्वचित्पुरुषांसक इति पाठः) Yajñ.; Hem. both.

६ सोमत्ववेद° D.; °वेदसामानां B. C. K.; वेदशास्त्राणां F.

७ °प्रयोगः । श्रीभोजः स्युः । D.

८ कलापिशिष्य° F.; D. om. fr. भोजमतमाश्रित्य to व्योम वीक्ष्य in ṣl. 334.

९ लौकायतं F. K.—E. om. this ṣloka; A. D. om. text and comment.

१० उकथ्यं B. C. K.

धीते वा। औक्थिकः। औक्थिक्यशब्दाच्च प्रत्ययो न भवत्यनभिधानात्॥ शकटाङ्गजस्तु याज्ञिकौक्थिकलौकायतिकान्[1] ब्रह्मणीत्येतत्सूत्रमाह। यज्ञोक्थाभ्यां ठण्। याज्ञिक्यौक्थिक्यशब्दाभ्यां च ठण् इक्यलोपश्च निपात्यते। यज्ञं याज्ञिक्यं वा वेत्त्यधीते वा। याज्ञिकः। एवम् औक्थिकः। लोकायतशब्दाट्टणीकारः। लौकायतिकः। लौकायतिक इति[2] न्यायादिपाठात्सिद्धम्॥ * ॥ न्यासः पञ्जिका। नैयासिकः॥ * ॥ वसन्तशब्दः कालसहचरिताध्ययने वर्तमानः प्रत्ययं लभते। एवं शिशिरहेमन्तवर्षाशरद्ग्रीष्मशब्दा द्रष्टव्याः। वासन्तिकः॥ * ॥ यज्ञार्थो ग्रन्थो यज्ञः[3]। याज्ञिकः॥ * ॥ चर्चा विचारणा[4]। चार्चिकः। चर्चाक इति वामनः॥ * ॥

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुवंशचरितं[5] पुराणं पञ्चलक्षणम्॥

पुरापि न नवं पुराणमिति निरुक्तम्। पौराणिकः॥ * ॥ गाणिकः॥ * ॥ सांज्ञिकः॥ * ॥ तार्किकः॥ * ॥ पादक्रमिकः॥ अन्यस्तु पदक्रमावित्याह। तन्मते क्रमादिपाठाद्वुनपि[6]॥ * ॥ गाणितिकः। गाणित इति वामनादयः॥ * ॥ लाक्षिकः॥ * ॥ लोकायतं बृहस्पतिमतानुसारि चार्वाकशास्त्रम्। लौकायतिकः॥ * ॥ आयुर्वेदिकः॥ * ॥ गौणिकः॥ * ॥ इत्येवं हासश्चित्तविकाशो[7] यस्मिन्स इतिहासः॥ अथवा। इति। ह।

---

१ °लोकायतिकान् B. C. K.

२ ? B. F. K. apparently twice लौकायतिक (& no । before; ? once । लौ); °इत्यन्ये C.—Śâkaṭâyana (like Hem. vi. 2, 119) evidently has a gaṇa *nyâyâdi* corresp. to our *ukthâdi* (? and *vasantâdi*), cf. p. 350, note 1.

३ ग्रंथः। याज्ञः MSS. (B. C. F. K.).

४ °यद्वांगरागश्चर्चा तत्प्रकारख्यापको ग्रंथोऽपि चर्चा Yajñ.

५ The usual reading is: वंशानुचरितं चैव; cf. Wilson, Vishṇu P. (Hall) vol. i. p. vii.

६ Cf. P. iv. 2, 61, and ṣl. 311.

७ °चित्तविकासो MSS. (B.C.F.K.).

आसीदिति यत्रेति । इत्येवमर्थे । ह: किलार्थे पूर्वचरितम् ॥ ऐतिहासिक: ॥ * ॥ चारमिक: । चरमप्रथमशब्दौ विशेषणवृत्ती विशेष्यस्य तु ग्रन्थस्य प्रक्रमात्प्रतीतिः । यद्वा क्रियाविशेषणवृत्ती । चरममधीते । चारमिक: ॥ चरमो गुणश्चरमगुण: । तस्य चारमगुणिक इत्यन्ये ॥ * ॥ हैमन्तिक: ॥ * ॥ हैतुक: ॥ * ॥ याजुष्क: । वामनमतेन ॥ * ॥ वार्षिक:[1] ॥ * ॥ ज्योतींष्यधिकृत्य कृतो ग्रन्थ: । ज्योतिषम् । संज्ञापूर्वको विधिरनित्य इति ॥ अथवा । अनुबन्धकृतमनित्यमित्यौर्न भवति । ज्योतिषिक: । गणनिपातनादैजभाव: । ज्योतींषि ग्रहनक्षत्रादीनि वेत्ति ज्यौतिषिक[2] इति वामनक्षीरस्वामिनौ ॥ * ॥ सांहितिक: ॥ संहिता पदे विषयभूते प्रत्ययं लभते[3] । पदविषयां संहितामधीयान: सांहितिक: । अन्यत्राण् । सांहित इत्यन्य: ॥ * ॥ शारदिक: ॥ * ॥ सांघाटिक: ॥ संगता घटा: संघटेत्यन्य: । सह घटया सघटेत्यन्य: । संघट इत्यपर:[4] ॥ * ॥ वार्त्तिक: ॥ * ॥ ऐतरिक: । वामनमतेन ॥ ३०६ ॥

श्लक्ष्णानुसूलक्षणसंग्रहा: स्युर्
ग्रीष्मो निरुक्तं पुनरुक्तमत्र ।
आथर्वणोऽथ प्रथमानुकल्पौ
क्रमेतरन्यायकृतान्ततन्त्रम्[5] ॥ ३०७ ॥

---

१ Or. MSS.

२ ? ज्योतिषिक MSS.—MS. Kshîr. on A. K. ii. 8, 1, 14 has: ज्योतींषि ग्रहादीनधिकृत्य कृतो ग्रंथो ज्योतिषः । ज्योतिषं वेद ज्यौतिषिक:.

३ प्रलयं° B. C., and orig. K.; लभंते B. C. K.

४ सटेत्यन्य: । सट इत्यपर: । B. C. K.—Bö. संघट्ट (*v.l.* संघट); Yajñ. संघट्टो रचना । या पांचालीवैदर्भीत्यादिपदै रलंकारशास्त्रे व्यवह्रियते तल्लक्षणपरो ग्रंथोऽपि लक्षणया संघट्टस्तमधीते वेद वा सांघट्टिक: । केचित्संघाटं पठंति; Kâṣ. V. ed. संघात & संघत; Hem. संघट & संघटा.

५ A. D. om. text and comment.

स्वाध्यायिकः। केचिच्चस्वाध्यायशब्दात्स्त्रीलिङ्गात्प्रत्ययं मन्यन्ते[१] ॥ * ॥ अनुसूर्यन्थविशेषः। आनुसुकः। केऽणश्च[२] इति ह्रस्वत्वे ॥ * ॥ लाक्षणिकः ॥ * ॥ सांग्रहिकः ॥ * ॥ ग्रैष्मिकः। चन्द्रमतेन ॥ * ॥ नैरुक्तिकः ॥ * ॥ पौनरुक्तिकः ॥ * ॥ अथर्वर्षिः। तेन प्रोक्तो वेद आथर्वणः। तं वेत्त्यधीते वा। आथर्वणिकः। पाठसामर्थ्याच्चस्तुग्न भवति[३] ॥ * ॥ प्राथमिकः। प्रथमो गुणः प्रथमगुण इत्यन्यः[४] ॥ * ॥ प्रथमकल्पादन्योऽनुकल्पः। आनुकल्पिकः ॥ * ॥ क्रमादितरः क्रमेतरः[५]। अक्रम इत्यर्थः। क्रामेतरिकः ॥ * ॥ नैयायिकः ॥ * ॥ कृतान्तं वेत्ति। कार्तान्तिको मौहूर्तः। कृतान्तमाह पृच्छति वा[६]। कार्तान्तिक इत्यन्यः ॥ * ॥ तन्यते तन्त्र्यते वानेन। तन्त्रं वैदिकं ज्योतिषादि। तान्त्रिकः। ज्ञातसिद्धान्तः ॥ ३०७ ॥

अनुगुणवर्षाशरद्द्विपदा[७] भारतपदेपदानुपदम्।
अनुलक्ष्याख्यानं[८] स्याद्विशेषपरिषन्मुहूर्तमप्येके ॥ ३०८ ॥

गुणस्य सदृशं गुणमनुगतं वा। अनुगुणम्। आनुगुणिकः[९] ॥ * ॥ वर्षाश्च शरच्च[१०]। वर्षाशरदम्। वार्षाशरदिकः ॥ * ॥ द्वैपदिकः[११]। त्रिपदेति वामनः ॥ * ॥ भारतिकः ॥ * ॥ पदं पदमध्येता। वीप्सायां

---

१ पुनरुक्तं स्वल्पम् अनुपदमिति त्रितयं ग्रंथविशेषवाचि Yajñ.

२ ? MSS. apparently के णश्च; cf. Pâṇ. vii. 4, 13.

३ Bö., Yajñ., Hem. both आथर्वण and अथर्वन्; Kâś. V. only अथर्वन् (ed. also अपर्वन् !).

४ Hem. has प्रथमगुण and गुण (not प्रथम); the others प्रथम and गुण.

५ क्रमेतरेति ग्रंथविशेषस्य संज्ञा Y.

६ कृतांतमापृच्छति वा B. C. K.

७ अनुगणवर्षाशरद्विपदा E.

८ अनुलक्षाख्यातं° E.; A. D. om. text and comment.

९ Om. B. C.

१० वर्षा शरच्च B. C. K.—वर्षाशरद् Hem.; om. others.

११ द्वैषदिकः B.; त्रि–– C.; om. K.—The other works have द्विपदा (K.V. ed द्विपदी).

द्विर्वचने निपातनात्पूर्वपदस्यैत्वे । पादेपदिकः[1] ॥ * ॥ पदमनुगतम् अनुपदम् । आनुपदिकः ॥ * ॥ लक्ष्यमनुगतम् अनुलक्ष्यम् । आनुलक्ष्यिकः[2] ॥ * ॥ आख्यानिकः ॥ * ॥ अत्यन्तव्यावृत्तबुद्धिहेतुर्विशेषः । तं तच्छास्त्रं वा वेत्ति । वैशेषिकः ॥ * ॥ पारिषदिकः ॥ पर्षच्छब्दोऽपि । परिषकपार्षदाविति[3] वामनः ॥ * ॥ मौहूर्तिकः । वामनमतेन तु मौहूर्तः ॥ मुहूर्तमित्युपलक्षणम् । तेन नैमित्तिकः । अस्मिन्मते नैमित्तः ॥ ३०८ ॥

सुलक्षब्राह्मणावेतौ पदोत्तरपदादिकाः ।
असंसर्गाङ्गधर्मेभ्यश्चाद्विद्या परा मता[4] ॥ ३०९ ॥

सौलक्षिकः[5] ॥ * ॥ ब्राह्मणिकः ॥ * ॥ पदोत्तरपदं वेत्त्यधीते वा । पादोत्तरपदिकः ॥ शकटाङ्गजस्तु पदोत्तरपदेभ्यष्ठ इति सूत्रमाह । अस्यार्थः । पदशब्द उत्तरपदं यस्य ततः पदशब्दात्पदोत्तरशब्दाच्च ठः । पूर्वपदिकः । उत्तरपदिकः । न्यायादिपदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकाट्टण् इत्यनेन[6] तु पौर्वपदिकः । औत्तरपदिकः । पदात्पदिकः । पदोत्तरपदात्पदोत्तरपदिकः । बहुवचनं सर्वभङ्गपरिहारार्थम्[7] ॥ * ॥ संसर्गादिवर्जितात्परो विद्याशब्दष्ठणं लभते[8] । वायसविद्यिकः । सार्वविद्यिकः ॥ असंसर्गादेरिति किम् । सांसर्गविद्यः ।

---

१ °पदस्यैत्वे B. C. K.—Hem. has likewise पदेपद; om. others.

२ आनुलक्षिकः B. C. K. (cf. P. iv. 2, 60, v. 7).

३ परिषक्° (? right) F.; cf. ṣl. 217; परिषद् Hem.; परिषद्व Bö., Yajñ.

४ A. D. om. text and comment.

५ Hem. has सुलक्ष्य; om. others.

६ °लक्षणांतरित्वाख्या° B. C. K.; °तरिताख्या° F.—Cf. Hem. vi. 2, 119: न्यायादेरिकण् ॥ 120: पदकल्पलक्षणांतक्रत्वाख्यानाख्यायिकात् ॥ see Pâṇ. iv. 2, 60 with vârtts. 1. 5.

७ परिग्रहार्थं K. F.

८ Cf. Pâṇ. iv. 2, 60, vârtt. 3, and Kâṣ. V. *ib.*

शकटाङ्गजमतेन ॥ आङ्गविद्यः ॥ धार्मविद्यः ॥ त्रैविद्यः । त्र्यवयवा विद्या त्रिविद्येति कर्मधारयात्प्रत्ययश्रुतिः । तिसृणां विद्यानां बोद्धेत्यर्थे द्विगोः लुकि त्रिविद्यः ॥ चात्त्रविद्यः ॥ ३०९ ॥

**कल्पलक्षणसूत्रान्तमकल्पादि मतं बुधैः ।**
**आख्यानाख्यायिकावाची[1] लुग्द्विगोः सर्वसादितः ॥ ३१० ॥**

मातॄणां ब्राह्म्यादीनां कल्पः पूजाद्यर्थं[2] शास्त्रम् । मातृकल्पिकः । रासायनकल्पिकः ॥ * ॥ गौलक्षणिकः ॥ * ॥ वार्त्तिसूत्रिकः[3] । सांग्रहसूत्रिकः ॥ अकल्पादीति सूत्रस्यैव विशेषणं तेन काल्पसूत्रः ॥ * ॥ आख्यानवाचिभ्य आख्यायिकावाचिभ्यश्च ठण् इत्यर्थः । यवक्रीतमाख्यानमधीते । यावक्रीतिकः । एवं प्रियंगवाविमानप्रभृतय[4] उदाहार्याः ॥ वासवदत्तामाख्यायिकामधीते । वासवदत्तिकः । एवं सुमनोहरानर्मदासुन्दरीतरङ्गवतीविलासवतीप्रभृतय[5] आख्यायिकाशब्दाश्रुणि द्रष्टव्याः । वासवदत्तादिशाहचर्याद्ग्रन्थोऽपि तथोच्यते । यथाऽग्निसहचरितो ग्रन्थोऽग्निः ॥ द्विगोः समासात्सर्वशब्दादेः सादेश्च शब्दाट्ठण् तस्य च लुक् । शकटाङ्गजलक्षणठणोः । पञ्चकल्पः[6] । त्रिलक्षणः । त्रिसूत्रः ॥ असंसर्गेत्यादिना ठण् तस्य लुक्[7] । तथा द्वितन्त्रः । पञ्चव्याकरणः ॥ सह वार्त्तिकेन यो ग्रन्थः स सवार्त्तिकः । तं वेत्ति ठणो

---

१ आख्यानाख्यायिवाची च B. K. (C.); A. D. om. text and comment.

२ कल्पपूजाद्यर्थं B. C. K.

३ Thus B. C. K., Hem.; वार्त्तिकसूत्रिकः F.

४ Hem. has यावक्रीतिकः । यावक्रिकः । प्रैयंगविकः । प्रैयंगुकः । आविमारकिकः ॥ (? cf. अविमारक page 255, line 6)

५ सुमनोत्तरा° B. D. F.; सुमनोत्तरा° C.; B. C. om. विलासवती (K. suppl.).

६ °लणठणौ° B.; °यवकल्पः । C.

७ ठणुतस्य° B. C. K.; लुक् न । C.

लोपे । सवार्त्तिकः ॥ एवं ससंग्रहः । सर्ववेदः । सर्वतन्त्रः ॥ * ॥ आकृतिगणोऽयम् । अन्येऽपि यथादर्शनं ज्ञेयाः ॥ ३१० ॥ इत्युक्थादिः[१] ॥

क्रमः शिक्षा पदं चैव मीमांसा सामसंयुता[२] ।
उपनिषत्तथा ज्ञेया गणे क्रमादिसंज्ञिते ॥ ३११ ॥

क्रमादिभ्य इत्यनेन क्रमादेस्तद्वेत्त्यधीतेऽर्थे को भवति ॥ * ॥ क्रमं वेत्त्यधीते । क्रमकः ॥ * ॥ शिक्षा ग्रन्थविशेषः । शिक्षकः ॥ * ॥ पदकः ॥ * ॥ मीमांसा ग्रन्थविशेषः । मीमांसकः ॥ * ॥ सामकः ॥ * ॥ उपनिषद् वेदान्तो रहस्यं च[३] । उपनिषदकः । एतदर्थमेवाकारोच्चारणम् । शेषाणां कप्रत्ययेऽपि साध्यं सिद्धम् । अकप्रत्ययस्य टित्त्वप्रज्ञानं[४] युक्तम् । तेन शिक्षकी मीमांसकीत्याद्युपपन्नं स्त्रियां लभ्यते न त्वाडीति ॥ ३११ ॥ इति क्रमादिः ॥

इति
श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितायां स्वीयगणरत्नमहोदधिवृत्तौ समूहविकारावयवचतुर्थवेत्त्यधीतेविहिततद्धितप्रत्ययगणनिर्णयो[५] नाम चतुर्थोऽध्यायः समाप्तः ॥

---

१ Hem. vi. 2, 119 न्यायादि including, as here, उक्थादि and वसन्तादि to P. iv. 2, 60; 63.

२ मीमांसाथ साम च E.—A. D. om. text and comment.

३ रहस्यं यः । B. C. K.—उपनिषद् not given by the other works; but Hem., who enumerates these words in a sûtra (vi. 2, 127), remarks in the comm.: उपनिषच्छब्दादपीच्छति कश्चित् ।

४ ट्रित्विप्रज्ञानं K.; द्वित्वि० B. C.; टित्वप्रतिज्ञातं F.; cf. P. iv. 1, 15.

५ ०गणनिरूपणो E.

अथ पञ्चमोऽध्यायः ॥

अध्यात्ममुक्तीहपरत्रशेषाकस्मादमुत्रोर्ध्वंदमाधिदेवाः ।
ऊर्ध्वंदमम्बोर्ध्वमुहूर्तसर्वलोकावमुष्मिन्नधिभूतनिष्ठाः[1] ॥ ३१२ ॥

अध्यात्मादेरित्यनेनाध्यात्मादेः शेषे ठञ् भवति[2] ॥ * ॥ अध्यात्मे भवम् । आध्यात्मिकम् ॥ * ॥ मुक्तौ भवम् । मौक्तिकम् ॥ * ॥ ऐहिकम् । आगमिकोऽयं शब्दः । यथा पञ्चायतनमैहिकम् । किमस्य गणपाठेन । लोके चेहत्यमित्येव भवतीति कश्चित्सचेताः ॥ * ॥ परत्रामुष्मिन्नमुत्रशब्दाः परस्य लोकस्य वाचकाः । परत्र लोके भवम् । पारत्रिकम् ॥ * ॥ शेषे भवाः । शैषिकाः ॥ * ॥ अकस्मादित्यनेन हेतुशून्यः कालो लक्ष्यते । तत्र भवम् । आकस्मिकम् ॥ * ॥ अमुत्र लोके भवम् । आमुत्रिकम् ॥ * ॥ और्ध्वंदमिकः । ऊर्ध्वे भव इत्यर्थः ॥ केचिद् ऊर्ध्वंदमोर्ध्वदेहशब्दावनुशतिकादिषु मन्यमाना और्ध्वंदामिकम् और्ध्वंदैहिकमित्युदाहरन्ति[3] ॥ * ॥ अधिदेवे भवम् । आधिदैविकम् ॥ * ॥ और्ध्वंदमिकम् । ऊर्ध्वशब्दसमानार्थो[4]ऽव्ययमनव्ययमूर्ध्वंशब्दोऽप्यस्ति । मुगागमोऽन्येषाम् ॥ * ॥ और्ध्वमौहूर्तिकः । तत्रोर्ध्वमौहूर्तिक[5] इति ज्ञापकादुत्तरपदस्यैव ॥ * ॥ सार्वलौकिकम् ॥ * ॥ अमुष्मिँल्लोके भवम् ।

---

१ °अधिभूतिनिष्ठाः E.; A. D. om. text and comment.

२ C. om. from अध्यात्मादेरि°.

३ Similarly Hem. vi. 3, (79): केचिदूर्ध्वंदमोर्ध्वदेहावनुशतिकादिषु पठन्ति । उभयपदवृद्धिमिच्छन्ति.

४ ?और्ध्वशब्द° F. K.; और्ध्वंशब्द° B.; ऊर्ध्वशब्द° C.

५ तत्रोर्ध्व° B.; om. C. K.—और्ध्वमौहूर्तिकः । अत्र सप्तमी चोर्ध्वमौहूर्तिक इति ज्ञापकादुत्तरस्यैव वृद्धिः । Hem.

आमुष्मिकम् ॥ * ॥ आधिभौतिकम् ॥ * ॥ निष्ठायां भवम् । नैष्ठिकम् । यथा ।

श्रुतदेहविसर्जनः पितुश्चिरमश्रूणि विसृज्य राघवः ।
विदधे विधिमस्य नैष्ठिकं यतिभिः सार्धमनग्निमग्निचित्[1] ॥ ३१२ ॥

**स्यात्समानस्तदादिश्च तथा लोकः परेहतः ।**
**ऊर्ध्वोर्ध्वमः परो देहोऽध्यात्मादिराकृतिगणः[2] ॥ ३१३ ॥**

सामानिकः ॥ * ॥ सामानग्रामिकः । सामानदेशिकः ॥ * ॥ पारलौकिकम् ॥ * ॥ ऐहलौकिकम् ॥ * ॥ और्ध्वदेहिकम्[3] । यथा ।

अकरोच्च तदौर्ध्वदेहिकं पितृभक्त्या पितृकार्यकल्पवित्[4] ॥ * ॥
और्ध्वदेहिकम् ॥ ३१३ ॥ इत्यध्यात्मादिः[5] ॥

**नदीपावापुरी मावा श्रावस्ती धातकी मही[6] ।**
**वनाद्वासी च कौशाम्बी शाल्वाथो वडबा वृषे[7] ॥ ३१४ ॥**

नद्यादिकव्यादेर्ढञ्ढकञित्यनेन नद्यादिकव्यादिभ्यां शेषेऽर्थे ढञ्ढकञौ क्रमेण भवतः ॥ * ॥ नद्यां जातो भवो वा । नादेयः ॥ * ॥ पावा नगरी । पावेयः ॥ पामेति वामनः । पाठेति[8] भोजः ॥ * ॥ पौरेयः ॥ * ॥ मावा नगरी । मावेयः । मायेति भोजः । मामेति वामनः[9] ॥ * ॥

---

१ Raghuv. 8, 25 [विमुच्य राघवः । eds.].

२ A. D. om. text and comment.

३ ऊर्द्धदेहिकं B. K.: और्द्धदेहिकं C.

४ Raghuv. 8, 26.

५ Cf. Kâṣ. V. on P. iv. 3, 60.

६ नदी यावा E. (?); °स्त्रावस्ता धातका मही C.

७ कौशाम्बी° E.; A. D. om. text and comment.

८ पार्ठेति B.; पैठेति C. K.—पाठा Bö., Yajñ.; पावा Hem., Kâṣ. V. ed. (पापा *a.*).

९ माया Bö., Yajñ.; मावा Hem., Kâṣ. V. ed. (मामा *a.*).

श्रावस्ती नगरी। श्रावस्तेयः ॥*॥ धातकेयः ॥*॥ माहेयः ॥*॥ वनवासी नगरी। वानवासेयः ॥*॥ वानकौशाम्बेयः ॥*॥ शाल्वेयः। माल्वा नगरीत्यन्यः[१] ॥*॥ वाडवेयः। वृषः। वाडवोऽन्यः ॥ ३१४ ॥

कौशाम्बी वनसेतकी गिरिगरी वाराणसी खादिरी
दार्वा काशफरी च पूर्वनगरी नद्यादिरेवं गणः।
कन्त्रिः कुण्डिनपुष्करौ च नगरीकुम्भ्युम्भिमाहिष्मती-
वर्मत्योऽथ च पौदनो[२] निगदितो ग्रामस्तथा पुष्कलः ॥ ३१५ ॥

कौशाम्बी नगरी। कौशाम्बेयः ॥ कौशाम्बीयेन वणिजेति[३] चिन्त्यम् ॥ कौशम्बीत्यन्यः[४] ॥*॥ वानेयः ॥*॥ सेतकी पुरी। सैतकेयः ॥*॥ गिरेरिदम्। गैरेयम्। शिलाजतु ॥*॥ गारेयः ॥*॥ वराणसी नदी[५]। तस्या अदूरभवा वाराणसी। वाराणसेयः ॥*॥ खदिराणामदूरभवा। खादिरी नगरी। खादिरेयः ॥*॥ दार्वा पुरी। दार्वेयः ॥*॥ काशफरी नगरी। काशफरेयः ॥ अन्यस्तु शफरीत्याह। काशस्थलीति[६] वामनः ॥*॥ पौर्वनगरेयः। अन्यस्तु निपातनादित्वे ह्रस्वत्वे च पूर्वनगिरेय[७] इत्याह ॥*॥ आदैजाद्यग्भ्यो ढे[८] प्राप्ते। आवस्त्या-

१ ? माल्वनगरीत्यन्यः B. C. K.—शाल्वा Bö., Yajñ., K. V. *a.*; साल्वा K.V. ed.; साल्वा or. Hem., corrects माल्वा.

२ चर्मत्यो° C. F. K.; पोद्दनो C. F.; A. D. om. text and comment.

३ Ratnâv., ed. Cappeller in Böhtlingk's Chrest. p. 291, 15.

४ ? कौशांबी° MSS. (? को°); Hem. has कौशांबी & (added in margin) कौशंबी; the others कौशाम्बी only.

५ वाराणसा नदी B. C. K.; वाराणसी° F.; cf. p. 336, l. 9.

६ काशस्थालाति C.—K.V. ed., Hem. काशफरी; Bö., Yajñ. काशपरी। काशफरी (Bö. *v.l.* काशफारी); K. V. *a.* काशकरी। केशपरी। काशहरी.

७ केचित्तु पूर्वनगिरीति पठन्ति। विच्छिद्य च प्रत्ययं कुर्वन्ति। पौरेयम्। वानेयम्। गैरेयमिति। तदुभयमपि दर्शनं प्रमाणम् ॥ K. V. iv. 2, 97.—MS. Hem. has पूर्वनगर्। पूर्वनगरी। पूर्वनागरी। पूर्वनगिरि। पुर्। वन। गिरि। वनगिरि.

८ ? आदैजाद्यज्भ्यः ढे F.; °ज्भ्यः। ढे (or ढे) K.; [? °द्यग्भ्यो ढे cf. P. iv. 1, 121].

द्विश्च इरोपान्त्यादकञ इत्यनेनाकञि[1]। शेषेभ्योऽपि प्राप्ते वचनम् ॥ * ॥ इति नद्यादिः ॥

कुत्सितास्त्रयः कत्त्रयः। बहुव्रीहिर्वा कत्त्रि अस्मादेव निपातनात् कुशब्दस्य किंशब्दस्य वा कदादेशः। कत्त्रयाणां कत्त्रेर्वा गर्दभ्या इदम्। कात्त्रेयकम् ॥ * ॥ कुण्डिनं पुरम्। कौण्डिनेयकः। कुडिनेति[2] वामनः ॥ * ॥ पौष्करेयकः ॥ * ॥ नागरेयकः। नगरशब्दः[3] संज्ञावाची गृह्यते ॥ * ॥ कुम्भिर्नाम[4] ग्रामः। कौम्भेयकः ॥ * ॥ औम्भेयकः। औम्भिरित्यन्ये[5]। उम्भिरित्यन्यः ॥ * ॥ माहिष्मती नाम नदी पुरी वा। माहिष्मतेयकः ॥ * ॥ वर्मती नदी। वार्मतेयकः। चर्मण्वतीति[6] वामनः ॥ * ॥ पुदना नाम नदी। तस्या अदूरभवं पौदनं नाम नगरं ग्रामो वा। पौदनेयकः ॥ मोदन इति भोजः। सोदन[7] इति वामनः ॥ * ॥ ग्रामेयकः। ग्रामाद्यञ्खञावित्यनेन[8] ग्राम्यो ग्रामीण इत्यपि ॥ * ॥ पुष्कलो वाहीकग्रामः। पौष्कलेयकः ॥ २१५ ॥

कुशाङ्गाकुड्ये ग्रामात्कुशाङ्गा कुशयावल्ये[9] वन्यामुल्ये।
उत्थ्यातृण्ये भाण्ड्यावुल्ये प्राज्ञैः प्रोक्ते यल्लोपे च[10] ॥ ३१६ ॥

---

१ इरौपांत्या° C.; °दिकञित्य° B. C. K.; cf. P. iv. 2, 123 (अकञ् = वुञ्).

२ ? कुंडिना Hem. (thus here?); the others कुण्डिन.

३ ? नगरी°; the other works have नगर.

४ The other works have कुम्भी.

५ औभिरित्यन्ये । औभेयकः F.; उभेयकः । उभिरित्यन्ये C.—Hem. has उंभि, औम्भि & उम्पि; the others उम्भि.

६ चर्मती° चार्मतेयकः B. F. K.; चर्मण्वती C.—Bö., Yajñ. चर्मती (P. iv. 3, 94); K. V. चर्मण्वती (P. viii. 2, 12) and *v.l.* वर्मती; Hem. वर्मती & चर्मण्वती (? व°).

७ ? सौदन F.; मोदन B. C.; B. om. मोदन इति भोजः.—Hem. has पौदन (? पौंदन); the others मोदन.

८ ग्रामाद्यञ्ठञा° F.; °द्य अवञा-वित्यनेन B. C. D.; cf. Pâṇ. iv. 2, 94.

९ कुश्यावल्ये F.

१० उच्यातृण्ये B. C. K.; उचातृण्ये° वुल्ये° F.; भाण्ड्यातुल्ये° प्रोक्ता° E. A. D. om. text and comment.

कुण्ड्या अन्नदेशे नदी। कौण्ड्येयकः ॥*॥ कौडेयकः ॥*॥ ग्रामस्य कुण्ड्या। ग्रामकुण्ड्या ग्रामो नगरं वा। ग्रामकुण्ड्येयकः ॥*॥ कौणेयकः[१] ॥*॥ वाल्लेयकः[२] ॥*॥ वानेयकः ॥*॥ मौलेयकः ॥*॥ औखेयकः[३] ॥*॥ तार्णेयकः ॥*॥ भाण्डेयकः ॥*॥ वौलेयकः[४] ॥*॥ यल्लोपे चेति यस्य लोप इत्यर्थः। कुड्याया[५] यलोपश्चेति गणसूत्रं वामनोक्तमुपलक्षणं द्रष्टव्यम् ॥

विद्युन्माला छन्दः। मौ गौ चेत्सा विद्युन्माला ॥ ३१६ ॥ इति कत्र्यादिः[६] ॥

गहानृशंसी समभुक्तपक्षौ
खाडायनानन्तरपार्श्वतोऽन्याः[७]।
इष्वग्रसाङ्ग्रान्तरभौजिवैज्या-
ध्यश्वीष्वनीकैकपलाशिकाङ्गाः[८] ॥ ३१७ ॥

गहादित्यदाद्यादेरच्चो जिह्वाकात्यहरितकात्याच्छ[९] इत्यनेन गहादेः शेषेऽर्थे छो भवति ॥*॥ गहे ग्रामे भवो जातो वा। गहीयः ॥*॥ नृञ्शंसति द्रुह्यतीति नृशंसः। द्रोहार्थे शंसतिर्द्रष्टव्यः। न नृशंसो ऽनृशंसः। तस्यापत्यम् आनृशंसिः। आनृशंसीयः ॥*॥ समीयः।

---

१ कौलेयकः F.—कुण्ड्या Hem.; om. by the others.

२ Hem. has मल्ला instead; the others have neither.

३ औचेयकः B. F. K.; उचे° C.—उज्ज्या Hem.; उख्या others [औख्येयकं Yajñ.].

४ पुल्या Hem.; om. others.

५ कुंड्याया B. C. K.; cf. Kâś. V. iv. 2. 95.

६ Hem. has a special *gaṇa* कुण्ड्यादि comprising the words ending in *yâ* (śl. 316), of which the other works have only उख्या & कुड्या.

७ गहीनृषंसी° पार्श्वतोय। E.

८ °शाड्रांतर° F.; °पलासिकांगाः B. E.; °पलाशकांगाः C.; A. D. om text and comment.

९ Thus F., cf. P. i. 1, 73-4; °द्देजा-चचो हरितकात्या छ B, C. K.

समादागतं समीयम् ॥ नृहेतोर्मयड्रूप्यौ[1] वा । समरूप्यं सममयमपि ॥ * ॥ शुङ्कपक्षीयम् ॥ * ॥ खाडायनो मुनिः । खाडायनीयः । खाडायनिरिति भोजः[2] ॥ * ॥ अनन्तरीयः[3] ॥ * ॥ पार्श्वत आगतः । पार्श्वतीयः । मुखपार्श्वकात्तसो[4] लोपश्चेति गणसूत्रमाह[5] वामनः । अस्माभिस्त्वन्यदीयमतमाश्रित्य त्रयाणां सामान्येन पाठः कृतः ॥ * ॥ अन्यदीयः । तथा च ।

अन्यदीयविशिखे न केवलं
निःस्पृहस्य भवितव्यमाहृते[6] ॥ * ॥

इषोरग्रम् इष्वग्रम् । इष्वग्रीयः[7] ॥ * ॥ साडस्यापत्यं साडिः । साडीयः[8] ॥ * ॥ अन्तरीयः । तथा च ।

पर्यस्यत्पृथुमणिमेखलांशुजालं
संजज्ञे युतकमिवान्तरीयमूर्वोः[9] ॥ * ॥

भोजस्यापत्यं भौजिः । भौजीयः ॥ भोजिरित्यन्यः[10] ॥ * ॥ बैजीयः ॥ * ॥ अश्वमधितिष्ठति । अध्यश्वः । तस्यापत्यम् आध्यश्विः । आध्यश्वीयः ॥ * ॥ इषूणामनीकम् इष्वनीकम् । इष्वनीकीयम् ॥ * ॥ एका चासौ पलाशिका च । एकपलाशिका । एकपलाशिकीयः ॥ एकपलाश[11] इति वामनः ॥ * ॥ अङ्गीयः ॥ २१७ ॥

---

१ See Pâṇ. iv. 3, 81-2.

२ Hem., Kâṣ. V. ed. खाडायनि; Bö., Yajñ. खाडायन.

३ आनंतरीयः MSS. (B. C. F. K.) · all other works read आनन्तर.

४ ? मुखपार्श्वकात्तसो MSS.—Of the others only Hem. has एकतस्; cf. Kâṣ. V. iv. 2, 138.—Kramadîṣvara also, quoting the Chândrâḥ, forms एकतीय.

५ गणे सूत्रमाह B. K.

६ Kirât. 13, 46.

७ ॰इष्वग्रीयो ग्रंथः । इष्वग्रं नाम ग्राम इति केचित् । Yajñ.

८ शाडस्य॰ शाडिः शडीयः B. C. F. K. (स in text).—साटि Hem.,om. others.

९ Kirât. 7, 14.

१० ? भौजि । भौज्जी (or भौज्जि) । Hem.; the others भौजि only.

११ Thus all other works.

अन्तस्थोत्तमदैवशर्मिविषमव्याड्यासुरिश्रौतयः
शौङ्गिः शैशिरिपूर्वपक्षमगधा दन्ताग्रकाठेरणी[1]।
मत्वर्थापरपक्षमुत्तरकतौ वाल्मीकिवाराटकौ
कामप्रस्थसमानशाखमुखतोऽवस्यन्दनामित्रयः॥ ३१८॥

अन्ते तिष्ठतीत्यन्तस्थः। अन्तस्थीयः॥ अन्तस्था नगरात्यन्यः॥*॥ उत्तमीयः॥*॥ देवशर्मणोऽपत्यं दैवशर्मिः। दैवशर्मीयः॥*॥ विषमे देशे भवो विषमीयः। विषमादागतं विषमीयम्। विषमरूप्यम्। विषममयम्॥ समविषमौ नाम ग्रामावित्यन्ये॥*॥ व्यडस्यापत्यं व्याडिः। व्याडीयः॥*॥ असुरस्य श्रुतस्य शुङ्गस्य शिशिरस्यापत्यं तत्र भवः। आसुरीयः[2]॥ श्रौतीयः॥ शौङ्गीयः॥ शैशिरीयः॥*॥ पूर्वपक्षीयः॥ केचित्पूर्वपक्षापरपक्षभव इति पठन्ति। तन्मते पूर्वपक्षापरपक्षाभ्यां तत्र भव इत्यर्थे कोऽन्यत्र ठणेव। पौर्वपक्षिकः। आपरपक्षिकः॥*॥ मगधीयः॥*॥ दन्तयोरग्रं दन्ताग्रम्। अन्य इत्वग्रदन्ताग्रौ ग्रामावित्याह। दन्ताग्रीयः॥*॥ कठस्येरणः कठेरणः। तस्यापत्यं काठेरणिः। काठेरणीयः[3]॥ काठेरिणिरित्यन्यः[4]॥*॥ मत्वर्थीयः। मतुबर्थ इति वृद्धः॥*॥ अपरपक्षीयः॥*॥ उत्तरीयं वस्त्रं। तथा च।

सरिदुत्तरीयमिव संहतिमत्
स तरङ्गरङ्गि कलहंसकुलम्[5]॥

---

१ काठेरणा C.; काठेरिणी F.— A. D. om. text and comment.

२ आसुरि Hem., Kâṣ. V. ed. (वसुरि a.); आसुत् Bö.; आसुनोतीत्यासुत् क्विबंतमेतत् आसुतीयम् Yajñ.

३ कठस्येरिणः कठेरिणः °काठेरिणिः काठेरिणीयः B. C. F. K.; cf. ṣl. 29 comm.

४ काठिरणिरित्यन्यः B. C. K.—काठेरणि Bö., Yajñ.; कावेरणि (v.l. कामवेरणि) K. V. ed., कावेरिणि MS. a.; काठेरणि। काठेरिणि Hem. [कठेरणस्य काठेरणिः° Yajñ.].

५ Kirâtârj. 6, 6; स तरङ्गभङ्गि° eds

कतीयः ॥ * ॥ वाल्मीकीयः । यथा ।

रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने[1] ॥

वराटकस्य वाराटकिः । वाराटकीयः ॥ वाराटिकिरित्यन्यः ॥ * ॥ कामप्रस्थीयः । इति वामनः[2] ॥ * ॥ समाना शाखा यस्यासौ समानशाखः । समानशाखीयः ॥ * ॥ मुखतीयः ॥ * ॥ अवस्यन्दनीयः । अवस्यन्द इत्यन्ये ॥ * ॥ अमित्रस्यापत्यम् आमित्रिः । आमित्रीयः ॥ ३१८ ॥

एकाधमोत्तमाच्छाखो ग्रामश्चैकसमानतः ।
लावेरण्यग्निशर्माणावाहिंस्येकतसौ तथा[3] ॥ ३१९ ॥

शाख इति कृतह्रस्व इत्यर्थः । एकशाखीयः ॥ अधमशाखीयः ॥ उत्तमशाखीयः ॥ * ॥ एकग्रामीयः ॥ समानग्रामीयः ॥ * ॥ लावस्येरणो लावेरणः । तस्यापत्यं लावेरणिः । लावेरणीयः ॥ सौवेरणिरित्यन्यः[4] ॥ * ॥ अग्निशर्मीयः । आग्निशर्मिरित्यन्यः[5] ॥ * ॥ अहिंसस्यापत्यम् आहिंसिः । आहिंसीयः ॥ * ॥ एकतीयः ॥ ३१९ ॥

क्षैमधृत्विश्च[6] सौमित्रिरेकवृक्षौपबिन्दवी[7] ।
हंसवज्रौ तथाश्वत्थितन्त्वग्रौज्ञाहमानयः[8] ॥ ३२० ॥

---

[1] Raghuv. 15, 11; [रथस्वनोत्कण्ठमृगे॰ eds.]

[2] कामप्रस्थीयः । वामप्रस्थीय इति वामनः । B. C.—All other works have कामप्रस्थ.

[3] लावेरिण्य॰ F.; A. D. om. text and comment.

[4] ? Thus MSS. (B. C. F. K.); लावेरणि Bö., Yajñ.; लावेरणि । लावेरिणि । लावीरणि । Hem.; om. Kâṣ. V. (सौवि । पारकि । ed. ?!).

[5] आग्निशर्मि॰ Bö., Yajñ., Hem.; अग्निशर्मन् Kâṣ. V. ed., आमित्रंद्रि MS. a.

[6] क्षैमवृत्तिश्च E. F.; चौमधृत्तिश्च C.

[7] वृचैकविंदवि । E.; वृचोपविंदवी F.; वृचौ औपविंदवी orig. K.; ॰वृचौ उपेंदवी C.

[8] ॰तल्वग्रोज्ञाहमानयः B.; C. and orig. K. om. from तन्त्वग्रौ to तस्यापत्यम् आश्वत्थिः.—A. D. om. text and comment.

क्षेमवृत्तिनोऽपत्यं क्षैमवृत्तिः। क्षैमवृत्तीयः[1] ॥ * ॥ सौमित्रीयः ॥ * ॥ एकवृचीयः ॥ * ॥ औपबिन्दवीयः[2] ॥ * ॥ हंसीयः ॥ * ॥ वल्गीयः ॥ * ॥ अश्वत्थो नाम कश्चिद्गोत्रकारी। तस्यापत्यम् आश्वत्थिः। आश्वत्थीयः ॥ * ॥ तन्त्वग्रीयः[3] ॥ * ॥ औद्गाहमानीयः ॥ ३२० ॥

कुट् च[4] स्वराजपरजनदेवानां णिच्छ वेणुकादिभ्यः।
प्रस्थोत्तरपदवेत्रकमध्योत्तरकाश्च मध्यमिका[5] ॥ ३२१ ॥

स्वकीयः ॥ पाणिन्यादयस्तु स्वदेवशब्दौ न पठन्ति। तन्मते सौवं दैवमित्येव भवति[6] ॥ वामनमतेन गणकृतमनित्यमिति न्यायात् कुट्क्वाभावे[7]ऽण्प्रत्यये सौवम्। उत्सादेश्चाञित्यनेनाञि दैवमित्यपि संभाव्यते। महाकविप्रणीतप्रयोगदर्शनं चेत्स्वीक्रियते तदा गहादिपाठः समाश्रयणीयः। तथा हि रुद्रस्य।

विब्बोकः[8] सहजः पयोधरतटः कान्तोऽङ्गजो विभ्रमः
कण्ठाश्लेषसुहृच्च पञ्चमरवः श्लाघ्यो गुरुर्मन्मथः।
संबन्धी विनयश्चिरं सहचरी लीलेति पण्याङ्गना
यस्यां स्वीयपरिग्रहं न रहयन्त्येकान्तयाता अपि ॥

यथा वा। एभिर्निदर्शनैः स्वीयैः परकीयैश्च पुष्कलैः[9] ॥

---

१ क्षेमवृत्तिनो° क्षैमवृत्तिः। क्षैमवृत्तीयः F.—क्षैमवृद्धि Bö., Yajñ.; क्षैमधन्वि Hem.; क्षेमवृद्धिन् Kâṣ. V. ed., क्षेमवृत्ति *a.*; cf. ṣl. 204.

२ औपबिंदवि Hem.; एक। विन्दावि Bö.; एक। वैंदवि Yâjñ.; om. Kâṣ. V.

३ तलग्रीयः B. C.

४ कुद्र B. K.; कुंडश्च C.; कुण्फः E. (कुट्=कुक् Kâṣ. V. iv. 2, 138; cf. P. iv. 2, 91 vârtt.).

५ ? Thus E.; मध्यमका B. F. K.; मेध्यकाः। C.; cf. next page, note ३.—A. D. om. text and comment.

६ See the *gaṇasûtra* कुग्जनस्य परस्य च to which the *vârtt.* of Kâṣ. V. देवस्य चेति वक्तव्यं (iv. 2, 138).

७ कुटक्वाभावे B. K.; कुटठासदि C.; कुटस्वाभावे F.

८ Thus F.; विब्बोकः B. C. K.

९ Vâm. Kâvyâl. 4, 3, 33, comm.

राजकीयः । राज्ञ इदं राजकीयमित्यपि ॥ * ॥ परकीयः ॥ * ॥ जनकीयः ॥ * ॥ देवकीयः ॥ * ॥

णिच्छेति णोऽनुबन्धश्छप्रत्यय इत्यर्थः ॥ वेणुभिर्निर्वृत्तो वेणुकः । तत्र भवो जातो वा । वैणुकीयः ॥ * ॥ प्रास्थीयम् । प्रस्थके भवः । प्रास्थकीय इत्यन्यः[1] ॥ * ॥ औत्तरपदीयः ॥ * ॥ वैत्रकीयः ॥ * ॥ माध्यीयः[2] ॥ औत्तरकीयः ॥ मध्ये भवा मध्यमिका नाम नगरी । तस्यां भवो माध्यमिकीयः[3] । मध्यमक इत्यन्यः ॥ एते त्रयो वामनमतेन[3] ॥ * ॥ निपुणके भवो[4] निपुणकीय[5] इति केचिदुदाहरन्ति ॥ * ॥ वेणुकादिर्गहादावाकृतिगणः । तेनाभयनन्दिस्वीकृतौ पितृकमातृकशब्दावपि संगृहीतौ ॥ अङ्गमगधशब्दयो राष्ट्रात्कञि[6] । पूर्वपक्षशुक्लपक्षापरपक्षशब्दानां कालाट्ठञि[7] । कामप्रस्थशब्दात्प्रस्थेत्यादिनाकञि । इञन्तानामाद्यात्पौत्रादीञ इत्यादिनाञि[6] । शेषेभ्यस्त्वणि प्राप्ते वचनम् ॥ ३२१ ॥ इति गहादिः ॥

---

१ प्रस्थ । प्रस्थक Hem.; प्रास्थकीयं Kâṣ. V. ed. *v.l.* and MS. *a.* प्रास्थीयं; Bö. and Yajñ. do not specify the gaṇa *veṇukâdi.*

२ माधीयः C. K.—For the *gaṇa-sûtra* मध्यमध्यमं चाण् चरणे (Kâṣ. V. iv. 2, 138)—acc. to which मध्यमीय, माध्यम from मध्य—the grammar to which our work refers, probably had separate rules, as Hem. vi. 3, 65: पृथिवीमध्यान्मध्यमश्चास्य । 66: निवासाच्चरणेऽण् ॥

३ ? मध्यमका नाम° माध्यमकीयः MSS. (B. C. F. K.); cf. Kielhorn, Ind. Ant. vii. p. 266.—Hem., on vi. 3, 67 (वेणुकादिभ्य ईयण्) reads माध्यमकीयः । माध्यमिकीयः ।; Kâṣ.V. ed., *a.* माध्यमकीयम्.

४ निपुणकभवो B. C. K.

५ ? Thus MSS.; नैपुणकीय Hem.

६ ? राष्ट्रादकञि cf. Pâṇ. iv. 2, 124 (राष्ट्र= जनपदावधि); cf. page 365, note १.

७ See Pâṇ. iv. 3, 11; 2, 122; 2, 112.

काश्यच्युतौ मोदनमोदमानौ
गोवासनारिंदमदेवदत्ताः ।
संवाहसांयाति च हस्तिकर्षूः
कुनामचेदी करणां हिरण्यम्[१] ॥ ३२२ ॥

काश्यादिबाहीकग्रामाच्छेट्ठञ्ञिठावित्यनेन काश्यादिभ्यो देश-वाचिभ्यो बाहीकग्रामेभ्यश्च ठञ्ञिठौ प्रत्येकं भवतः ॥ * ॥ काश्यो जनपदाः । तेषु भवा जाता वा । काशिकी । काशिका ॥ * ॥ अच्युतो ग्रामः । आच्युतिकी । आच्युतिका ॥ * ॥ मोदनानां[२] निवासो ग्रामो मोदनः । मौदनिकी । मौदनिका ॥ * ॥ मोदमानो ग्रामः । मौद-मानिकी । मौदमानिका ॥ * ॥ गवां वासनो गोवासनः । तन्निवासो ग्रामो गोवासनः । गौवासनिकी । गौवासनिका[३] ॥ गौवासन[४] इत्यन्ये ॥ एषां देशादेवेडाद्यचेति[५] के प्राप्ते ॥ * ॥ अरीन्दमयति । अरिंदमो ग्रामः । आरिंदमिकी । आरिंदमिका ॥ * ॥ देवदत्तः प्राग्ग्रामः । दैवदत्तिकी । दैवदत्तिका । अस्य काश्यादिषु पाठः प्राग्देशार्थः । यस्तु बाहीकेषु ग्रामस्तस्मादणेव[६] । दैवदत्तो ॥ * ॥ संवाहयतीति संवाहः । तस्य निवासोऽपि संवाहः । सांवाहिकी । सांवाहिका ॥ सां-वाह[७] इत्यन्ये ॥ * ॥ संयातस्यापत्यं सांयातिरादिराजः । तस्यापत्यं

१ करणा हिरण्यः B. C. K.; कर-णाहिरण्याः F.; करणो हिरण्यः E.; A. D. om. text and comment.

२ ? मोदनाया B. K.; मोदनी । या C.

३ गोवासानिकी । गोवासनिका B. C. K.

४ ? गोवासन MSS. (B. C. F. K.)—Hem. has गौवाशन and (suppl. in margin) गौवासन; Bö., Yajñ. गोवा-सन; Kâś. V. ed. गोधाशन, *a*. गोधा-सर

५ ? °द्यवेति B. K.; °डास्यचेति F.; देशादेवेडल्पोचेति C.

६ देवदत्तं नाम वाहीकग्रामः । तत्र जातो दैवदत्तः । Hem.

७ संवाह B. C.—सांवाह Hem.; सं-वाह Bö., Yajñ., K. V.ed. (सांवाहि *a*.).

युवा सांयात्यः। कुरुकोसलेत्यादिना[1] एचि तस्य बहुषु लुचि। सांयातयः। तन्निवासोऽपि जनपदसाहचर्यादुच्यते[2]॥ संयातो नाम कश्चित् तस्यापत्यं सांयातिः। तस्य निवासो ग्रामः सांयातिरित्येके। सांयातिकी। सांयातिका॥*॥ हास्तिकर्षुकी। हास्तिकर्षुका॥*॥ कुत्सितं नाम यस्य स कुनामा। तन्निवासोऽपि ग्रामः कुनामा। कौनामिकी। कौनामिका॥ कुनाम्नोऽपत्यं कौनाम[3] इत्यन्ये॥ कुलनाम इति वामनः॥*॥ चेदयो जनपदः। चैदिकी। चैदिका[4]॥*॥ करणं देशविशेषः। कारणिकी। कारणिका॥*॥ हैरण्यिकी। हैरण्यिका॥ ३२२॥

शकुलाददशग्रामौ हिरण्यकरणस्तथा।
सिन्धुदाससुधासोमच्छागाग्निचस्तथा सधात्[5]॥ ३२३॥

शकुलान्मत्स्यानत्तीति शकुलादः। अथवा। शूनां कुलान्यत्तीति निपातनाद्दलोपे[6]। शकुलादः। तन्निवासोऽपि ग्रामः। शाकुलादिकी। शाकुलादिका॥ शाकुलाद इति वामनः। स्वकुलाल[7] इत्यन्यः॥*॥ दाशग्रामिकी। दाशग्रामिका॥ दाशग्राम[8] इत्यन्ये॥*॥ हैरण्यकरणिकी। हैरण्यकरणिका॥ अन्येषां हैरण्य इति प्रकृतिः[9]। करण

---

१ पुरुकोसले° B. C. K.; cf. P. iv. 1, 171-2.

२ तन्निवास ऋषिजनपदः साह° F.; तन्निवासोर्षेजनपदसा° C. K.

३ कोनाम B. F. K.; om. C.—Hem. कौनाम; Bö., Yajñ., K. V. *a.*, *v.l.* ed. कुनामन्.

४ वेदयो° वैदिका वैदिकी C.—Bö. चेदि, *v.l.* वेदि; Hem. doubtful; K. V. ed. चेदि, *v.l.* बैदि; MS. *a.* चेदि and adds वेदि; Yajñ. चेदि। वेदीति केचित्.

५ A. D. *om. text and comment.*

६ निपातनाच्च लोपे B. C.

७ Thus F.; स्वकुला B. C. K.—Hem. has शकुलाद् & स्वकुलाल; the others शकुलाद्.

८ दशग्राम C.—Hem., Kâṣ. V. दासग्राम; Bö., Yajñ. दशग्राम.

९ MS. Hem. has हि[रण्यक suppl.] रण। है हिरण्य करणे।; the others have only हिरण्य & करण.

इति प्रत्ययार्थविशेषणम् । हैरण्यिकः । परस्वादि करणमुच्यते[१] ॥ अन्ये ग्रामवाची हैरण्य[२] इति पठन्ति । तन्मते हैरण्यकी । कुठारी कुद्दालो वा[३] करणम् ॥ * ॥ सिन्धवो मित्राण्यस्य सिन्धुमित्रो देशः । सैन्धुमित्रिकी । सैन्धुमित्रिका ॥ * ॥ एवं दासमित्रः । दासमित्रिकी ॥ सौधामित्रिकी ॥ सौममित्रिकी ॥ छागमित्रिकी ॥ * ॥ सह मित्राण्यस्य । सधमित्रः[४] । निपातनाद् हस्य धकारे । साधमित्रिकी ॥ ३२३ ॥

युवदेवोपतो राजः कालात्कोपादिपूर्वतः ।
शौवावतानभारङ्गी अरित्रो भोजसंमतः[५] ॥ ३२४ ॥

युवराजस्य निवासोऽपि युवराजः । यौवराजिकी ॥ * ॥ एवं देवराजोपराजौ ग्रामौ । दैवराजिकी ॥ औपराजिकी ॥ * ॥ कालात्कोपादिपूर्वत इति कोपादयः पूर्वे यस्यासौ कोपादिपूर्वः । कौपकालिकी । कौपकालिका ॥ आपत्कालिकी ॥ पौर्णकालिकी ॥ और्ध्वकालिकी[६] ॥ प्राक्कालीनोत्तरकालीनार्वाक्कालीनप्रभृतिप्रयोगेषु खप्रत्ययो दृश्यते स चानुक्तोऽप्यवगन्तव्यः । अन्यथा बहुतरलक्ष्यव्यतिप्रसङ्गः स्यात् ॥ * ॥ शुनोऽवतानः श्वावतानो मणिः । तेन निर्वृत्तो ग्रामः । शौवावतानः । शौवावतानिकी ॥ * ॥ भारङ्गेर्निवासोऽपि भारङ्गिः । भारङ्गिकी । तारङ्गिरित्यन्ये[७] ॥ * ॥ अरित्रस्य निवासोऽप्यरित्रः । आरित्रिकी ॥ * ॥

---

१ कारणमुच्यते B. F. K.

२ ? हैरिण्य B. K.; cf. p. 337, n. ७; and p. 362, n. ९.

३ हैरिण्यकी° B. K.; हिरण्यकी° C.; °कुद्दाली वा K. F.; कुद्दाला वा B. C.

४ साधमित्रः B. C. K.

५ सौवावतान° B. C.; भारिगा अ° C.; A. D. om. text and comment.

६ Bö., Yajñ., Kâṣ. V. ed. (not MS. *a.*) add तत् (तात्कालिकी °का); for Hem. see व्यादि in list of *gaṇas*.

७ Thus F.; भारंगिरित्यन्ये B. K.; सारंगिरित्यन्ये C.—Hem. has भारिंग & तारंगि; Bö. भारङ्गी; Yajñ., Kâṣ. V. *a.* भारङ्गि; Kâṣ. V. ed. भौरिकि । भौलिङ्गि । (!).

देशादिति किम् । काशीनां क्षत्रियाणां छात्राः । काशीयाः ॥ देवदत्तो नाम कश्चित् । तस्य च्छात्राः । देवदत्तीयाः । दैवदत्ताः ॥ अच्युतादीनां क्वविषयाभावेऽपि काश्यादिपाठसामर्थ्याट्ठञ्ञिठौ भवतः । काशिचेदिभ्यां[1] प्रस्थपुरेत्यादिना बहुले त्वित्यादिना[2] वाऽकञि ॥ सांयातिभारङ्गिभ्याम् आद्यात्यौत्रादीञोऽद्युच्प्राच्यभरताभ्यामित्यनेनाणि[3] । आदैजाद्यचं छे ॥ हस्तिकर्षूशब्दात् प्राच्योष्ठञीत्यनेन[4] ठञि ॥ सिन्धुमित्रादिभ्य ईरोपान्तादकञ् इत्यनेनाकञि[5] ॥ शेषेभ्योऽणि प्राप्ते वचनम् ॥ ३२४ ॥ इति काश्यादिः ॥

पलदी गोमती गोष्ठी परिखा परिषत्तथा ।
बाहीकः शूरसेनश्च नैकती च पटच्चरः[6] ॥ ३२५ ॥

कोपान्तपलदीभ्योऽण् इत्यनेन कोपान्तात्पलद्यादेश्च देशवाचिनः शेषेऽर्थेऽणप्रत्ययो भवति ॥ * ॥ पलद्यां देशविशेषे जातो भवो वा । पालदः । पालदी । बाहीकग्रामलक्षणयोष्ठञ्ञिठयोः प्राप्तयोः ॥ * ॥ गोमती नदी । तस्याश्चरितो देशो गोमती । गौमतः । ईरोपान्तादकञि प्राप्ते[8] ॥ * ॥ गौष्ठः[9] । बाहीकग्रामलक्षणयोष्ठञ्ञिठयोः ॥ * ॥ पारिखः ॥ पारिषदः पार्षदो वा । अनयोश्छेऽस्य बाहीकलक्षणयोष्ठञ्ञिठयोर्वा ॥ * ॥ बाहीकेषु भवो बाहीकः । गहादीत्यादिना

---

१ काशिविदिभ्यां C.; काशिचिदिभ्यां B. K.—? cf. P. iv. 2, 122.

२ See Pâṇ. iv. 2, 112-3.

३ बहुलेत्यादिना F.; cf. Pâṇ. iv. 2, 125.

४ प्राच्येष्ठञित्य॰ F.; cf. Pâṇ. iv. 2, 119-20.

५ See Pâṇ. iv. 2, 123.

६ सूरसेनश्च॰ E.; A. D. om. text and comment.

७ See Pâṇ. iv. 2, 117.

८ See Pâṇ. iv. 2, 123.

९ Bö., Yajñ., K. V. गौष्ठी; Hem. गौष्ठी । अन्ये तु गोष्ठी ।

के ॥ * ॥ शौरसेनः । प्रस्थपुरेत्यादिना[1] ॥ * ॥ नैकतः ॥ नैकीति[2] वामनः ॥ * ॥ पाटच्चरः । ईरोपान्त्यादकञि प्राप्ते ॥ ३२५ ॥

बहोः कमलजालाभ्यां कालात्कीटोऽथ रोमकः ।
सकृल्लोमोदपानौ च कमलात्कीकरो भिदा[3] ॥ ३२६ ॥

बाहुकीटः ॥ * ॥ कामलकीटः ॥ * ॥ जालकीटः ॥ * ॥ कालकीटः ॥ कलकूट इति वामनः[4] ॥ * ॥ रौमकः । देशादेवैराद्यच[5] इत्यनेन के ॥ * ॥ सकृल्लोम्नि भवः । साकृल्लोमः । निपातनान्नलोपः । अयं भोजमतेन ॥ यकृल्लोमन् इति वामनः[6] ॥ यकृल्लोमनखं चेत्यन्येऽपि[7] ॥ शकटाङ्गजस्थूदग्ग्रामाद् यकृल्लोम्न[8] इति विशेषसूत्रमाह । उदग्ग्रामवाची याकृल्लोमो[9]ऽञि । अन्यो याकृल्लोमनः[10] ॥ * ॥ औदपानः ॥ * ॥ कामलकीकरः ॥ * ॥ कामलभिदः ॥ अनुक्तानां तु बाध्यबाधकाभावः स्वयं द्रष्टव्यः[11] ॥ ३२६ ॥ इति पलद्यादिः ॥

---

१ The complete rule apparently includes P. iv. 2, 122 (121) & 124 (where it seems to have राष्ट्र for जनपदावधि). Hem. has the two rules vi. 3, 44: प्रस्थपुरवहान्तयोपान्त्यधन्वार्थात् ॥ 45: राष्ट्रेभ्यः ॥ cf. p. 360, n. ६.

२ नैकाति C.; कैकीति B,—नैकती Bö., Yajñ.; नैतकी (*v.ll.* नैधिकी । नैकेती) Kâṣ. V. ed., नैरीकी MS. *a.*; नैकेती । तैकी । अन्ये तु नैकीं नैवीं च पठन्ति । Hem.

३ कमलाचीकरो भिदाः C. K.; A. D. om. text and comment.

४ कलकीट Bö., Yajñ., K. V. ed. *a.*; Kâṣ. V. ed. also कालकूट; om. Hem.

५ ? देशोदेः वैराद्यच C.; देशादेचे-रा° F.

६ यकृल्लोम इति° B.; om. C. K.—The other works have यकृल्लोमन (K. V. ed. *v.l.* सृ°).

७ ? यकृल्लोमन् खंडेत्यन्येऽपि F.

८ Hem. has the same rule, vi. 3, 28 उदग्ग्रामाद् यकृल्लोम्नः ॥

९ ? यकृल्लोमो MSS. (B. C. F. K.).

१० ? अन्ये याकृल्लोमानः B. C. K.

११ °बाधकभावो द्रष्टव्यः B. C. K.

कच्छः कुलूतः परसिन्धुसाल्वौ गन्धारसिन्धू स्थलसिन्धुवर्णू[१]।
कश्मीररङ्कू कुरुसक्तुसिन्धू विजापकद्वीपकुलानुषण्डाः[२]॥ ३२७॥

कच्छादेरित्यनेन कच्छादेः शब्दगणाद्देशवाचिनः शेषेऽर्थेऽण् भवति ॥*॥ कच्छे भवः। काच्छः ॥*॥ कौलूतः ॥ उलूप इत्यन्ये[३] ॥*॥ परसिन्धुषु भवः। पारसैन्धवः। ह्रस्वगसिन्धूनामित्यनेनोभयपदादैच्[४] ॥*॥ साल्वः ॥*॥ गान्धारः ॥*॥ सिन्धुषु भवः। सैन्धवः। कम्बलः ॥*॥ स्थालसैन्धवः[५] ॥*॥ वर्णुर्नाम ह्रदः। तस्यादूरभवो देशो वर्णुः। तत्र भवो वार्णवः ॥*॥ कश्मीरेषु भवः। काश्मीरः कुङ्कुमः ॥*॥ राङ्कवः। यद्वा रङ्कुर्मृगविशेषः। राङ्कवं मृगरोमजम् ॥*॥ कौरवम् ॥ कुरुयुगंधराद्वेत्यनेनाकञपि। कौरवकोऽश्वादिः[६] ॥*॥ साक्तुसैन्धवः ॥*॥ वैजापकः। वैजावक इति भोजः ॥*॥ द्वैपः ॥*॥ कौलः। अयं वामनमतेन ॥ कुल्य इत्यन्यः[७] ॥*॥ आनुषण्डः ॥ अनूषण्ड इत्यन्ये[८] ॥ ३२७ ॥

अङ्गारानूपकम्बोजा रज्जुकर्णुविरूपकाः[९]।
मधुमानन्तरीपश्च वापवाहावजात्परौ[१०] ॥ ३२८ ॥

---

१ °सिंधुशाल्वौ° E.; °सिंधुवर्णौ B. C. K.

२ °कुलानुखंडाः B. C. F.

३ कुलूत Hem.; कुलून Kâṣ. V. ed., कुलून *a.*; कलूतर Bö., Yajñ.; Yajñ. adds: वर्धमानस्तु कलूतशब्दं(!) पपाठ। उलूपमित्यन्ये ॥

४ ह्रस्वगगंगसिंधूना° F.; cf. Pāṇ. vii. 3, 19.

५ The other works omit परसिन्धु, सक्तुसिन्धु & स्थलसिन्धु; but Hem. has तस्थाल। सिन्ध्वन्त।

६ ऽस्वादिः B. C. K.; कौरवः। कौत्सादिः F.; cf. P. iv. 2, 130.

७ Neither word is given by the other works.

८ Hem. has both forms; Bö. अनुषण्ड; Yajñ. अनुषंड [अनुखंड इति केचित् comm.]; अणु। खण्ड। (!) Kâṣ. V. ed.; om. MS. *a.*

९ अंगाराक्रूप° कर्णुतिरूपकाः E; रच्चकर्णु° C.

१० पादवाहाव° E. (A. cf. next note); A. D. om. text and comment.

आङ्गारः । चन्द्रमतेन ॥ * ॥ आनूपः ॥ * ॥ काम्बोजः ॥ * ॥ राञ्जवः ॥ कार्णवः ॥ वैरूपकः ॥ त्रयं वामनमतेन ॥ * ॥ मधुमान्पर्वतः । तत्र भवो माधुमतः ॥ * ॥ आन्तरीपः ॥ आजवापः[१] ॥ द्वयं चन्द्रमतेन ॥ * ॥ आजवाहः ॥

एतेषां शब्दानां नृतत्स्थेऽकञ् इत्यनेनाकञि[२] ॥ काच्छको मनुष्यः । काच्छकमस्य हसितम् । काच्छिका चूडा ॥ सैन्धवको मनुष्यः । सैन्धवकमस्य जल्पितम् । एवं सर्वत्र ॥ तथा अपदातौ साल्वात् । गोयवाग्वोरित्याभ्यामकञ् भवति[३] । साल्वको मनुष्यः । अपदाताविति किम् । साल्वः पदातिः । साल्वमस्य हसितम् । साल्वको गौः । साल्विका यवागूः । द्वैप्यान्वर्थीति[४] वचनात् । यमुनाद्वीपे जातो भवो वा । द्वैपको व्यासः । राष्ट्रार्थादकञि[५] प्राप्ते । बहुलं त्वित्यनेन वा वचनम् ॥ अत्र प्रायेण कच्छादयः शब्दा जनपदवाचिनः ॥ ३२८ ॥ इति कच्छादिः ॥

धूमार्जुनावावयगर्तघोषाः
षडण्डसाकेतशशादनाश्च ।
संस्थीयतीर्थारुणमित्रवर्चा
द्वीपान्तरीपोज्जयनीविदेहाः[६] ॥ ३२९ ॥

१ In A. the following passage is inserted in the comm. on ṣl. 128: आंतरीपः । आजपादः (cf. last note) । द्वयं चंद्रमतेन आजवाहः । एतेषां पदानां नृतत्स्थेऽकञित्यनेनाकञि कात्सको मनुष्यः । काच्छकमस्य हसितं ।

२ Cf. Pâṇ. iv. 2, 134.

३ See Pâṇ. iv. 2, 135-6.

४ ? द्वैप्याऽन्वर्थीति B. K.; द्वैप्यात्वधीति C.; द्वैप्यादत्वर्षीति F. [? cf. P. iv. 3, 10; Hem. on vi. 3, 69 (द्वीपादनुसमुद्रं ण्यः ।) remarks: द्वैप्यो मनुष्यः । द्वैप्यमस्य हसितम् । अनुसमुद्रमिति किम् । अनुनदि यो द्वीपस्तस्माद् द्वैपको व्यासः । द्वैपकमस्य हसितम्].

५ राष्ट्रार्थादञि B. C. K.; cf. Pâṇ. iv. 2, 124-5.

६ °मित्रवर्ध्वा द्वीपांतरीयो° E.; मित्रचर्चा° C. F.; °पोज्जयिनी° B. C. F.; A. D. om. text and comment.

धूमादिदेशप्राक्कच्छाग्निवक्त्रवर्तान्तादित्यनेन[1] धूमादेः शब्दगणादकञ् भवति ॥ * ॥ धूमो ग्रामः । तत्र भवो धौमकः ॥ * ॥ ऋज्व्यो नावोऽस्य । ऋजुनौः । तस्य निवासस्तन्निर्वृत्तो[2] वा । आर्जुनावः । तत्र भव आर्जुनावकः । के प्राप्ते[3] । अथायं बाह्लीकग्रामस्तदा क्वापवादयोष्ठञ्ञिठयोरकञ् ॥ * ॥ आवये भव आवयकः । आवयो नदीग्राम इत्यन्ये[4] ॥ आवयात्तीर्थे । आवयकं तीर्थम् । आवयमन्यदित्यन्यः ॥ * ॥ गार्तकः ॥ * ॥ घौषकः ॥ * ॥ षाडण्डकः । षडाण्ड[5] इत्यन्यः ॥ * ॥ साकेतकः ॥ * ॥ शाशादनकः । माषादन[6] इति वामनः ॥ * ॥ सांस्तीयकः । संस्फीय[7] इत्यन्ये ॥ * ॥ तैर्थकः ॥ * ॥ अरुणो ग्रामः । आरुणकः ॥ * ॥ मैत्रकः ॥ * ॥ वार्चकः[8] ॥ * ॥ द्वैपकः ॥ * ॥ आन्तरीपकः[9] ॥ * ॥ औज्जयनकः ॥ * ॥ वैदेहकः ॥ ३२९ ॥

सत्रासाहानर्तपाठेयपल्ल्यः
शष्पाराड्यौ धार्तराज्ञी च कुक्षिः ।
ब्राहावव्याहावपाथेयवर्ज्या
आज्ञीकूलो माठरो बर्बरश्च[10] ॥ ३३० ॥

---

१ धूमादिश° MSS.; cf. Pâṇ. iv. 2, 125-7.

२ °निर्वृत्तो B. C. F. K. always.

३ वृद्धाच्छे प्राप्ते Yajñ.; P. iv. 2, 114.

४ ? Thus MSS. (? नदी । ग्राम इत्यन्ये).—आवयं वाह्लीकग्रामः° । आवयो नदीग्राम इत्यन्ये । आवयात्तीर्थे° Yajñ.—Bö. आवय; Hem. अवय; K. V. ed. अवयात । तीर्थ; *a.* अवाट । तीर्थ ।

५ षडांद F.—षडंड । षडांड Hem.; षडण्ड Bö., Yajñ.; खण्ड, *v.l.* खडण्ड K. V. ed., षण्ड *a.*

६ माषोदन C.—All the other works have शशादन.

७ Thus Bö., Yajñ., Hem.; संहीय Kâṣ. V. ed., om. *a.*

८ ? वार्चकः F.; चार्चकः । वार्वकः । C.—मित्रवर्ध, *v. l.* मित्रवर्ध्र Bö., मित्रवर्ध [वर्धभानस्तु मित्र । वर्च ।] Yajñ.; om. Hem.; मित्र । (वल ।) Kâṣ. V. ed., om. MS. *a.*

९ आंतरीयकः F.

१० आजीकूलो° E.; बर्ब्ररस्य E. K.; वर्चरस्य B.; वर्द्धरस्य C.—A. D. om. text and comment.

मत्रासाहो[1] राजा । तन्निवासोऽपि सः । सात्रासाहकः ॥ * ॥ आनर्ताः क्षत्रियाः । तन्निवासोऽपि सः । आनर्तकः ॥ * ॥ पाठेयस्य निवासोऽपि सः । पाठेयकः ॥ * ॥ पल्लिर्भिल्लनिवासः[2] । पाल्लकः ॥ * ॥ शष्पाणां बालतृणानां स्थानं शष्पम् । शाष्पकः ॥ * ॥ अराज्ञी[3] नाम काचित्स्त्री । तस्या निवास आराज्ञी नगरी । आराज्ञकः ॥ अराज्ञीत्यन्यः[4] ॥ * ॥ धृता राजानो येन स धृतराजो नृपः । तन्निर्वृत्ता धार्तराज्ञी नगरी । धार्तराज्ञकः ॥ धार्तराष्ट्रीत्यप्यन्ये पठन्ति[5] । तत्र धृतं राष्ट्रमनेन । धृतराष्ट्रो राजा । तन्निर्वृत्ता धार्तराष्ट्री नगरी । धार्तराष्ट्रकः ॥ * ॥ कुक्षिर्नगकुक्षौ ग्रामः । कौक्षकः ॥ समुद्रकुक्षिरित्यन्ये पठन्ति । तन्मते सामुद्रकुक्षकः[6] ॥ * ॥ द्वावाहावौ यस्मिन्[3] । द्व्याहावो ग्रामः । एवं त्र्याहावः । द्वैयाहावकः । त्रैयाहावकः ॥ * ॥ पाथेयो ग्रामः । पाथेयकः ॥ * ॥ वर्ज्यो ग्रामः । वार्ज्यकः[7] ॥ * ॥ आञ्जीकूलो नाम ग्रामः । आञ्जीकूलकः[8] ॥ अञ्जिकूल[9] इति भोजः ॥ * ॥ माठरो ग्रामः । माठरकः ॥ * ॥ बर्बरो देशविशेषः । बार्बरकः ॥ वर्वड[10] इत्यन्यः ॥ ३२० ॥

---

१ Thus. Kâṣ. V.; सात्रासाह Bö., Yajñ.; Hem. both.

२ पल्ली Bö., Yajñ., Hem.; वल्ली v.l. K. V. ed., वल्लि a.

३ C. om. from अराज्ञी to द्वावाहावौ यस्मिन् । द्व्या.

४ आराज्ञीत्यन्यः MSS. (B. F. K.), cf. page 372, note 2.—आराज्ञी Bö., Yajñ., Kâṣ. V.; अराज्ञी and आराज्ञी Hem.

५ Hem. has these two & धार्तराष्ट्र; the others धार्तराज्ञी only.

६ सामुद्रकुक्षिकः F. — Hem. has कुक्षि and समुद्रकुक्षि; the others कुक्षि only.

७ वर्जो॰ वार्ज्यकः B. C. K.

८ आंजीमूलो॰ आंजीमूलक B. K.; आंज्यमूलो॰ आंजामूलकः C.; आजी-कूल cf. page 368, note 10.

९ ? आंजिकूल F. — आजीकूल Bö., Yajñ.; आञ्जीकूल K. V. ed.; आजी-कूल a.; अंजीकुल Hem.

१० वर्वड F.—बर्वड Hem.; the others बर्बर.

दाक्षिणापथपट्टारौ समुद्रो नौमनुष्ययोः[1]।
मद्रकूलं च भक्षाली राजशब्दात्स्थलीगृहे[2] ॥ ३३१ ॥

दक्षिणः पन्था दक्षिणापथः। ड्याप्त्ले ह्रस्वस्य बहुलमिति[3] बहुलवचनादतः पाठाद्वा दीर्घः। दाक्षिणापथकः ॥ * ॥ पट्टारो[4] ग्रामः। पाट्टारकः ॥ * ॥ सामुद्रिका नौः। सामुद्रको मनुष्यः। अन्यत्र सामुद्रं लवणं जलं वा ॥ * ॥ मद्राणां कूलं मद्रकूलम्। तत्समीपे ग्रामो मद्रकूलः। माद्रकूलकः ॥ * ॥ भक्षाली ग्रामः। भाक्षालकः ॥ भक्षादीत्यन्यः[5] ॥ * ॥ राजस्थलकः ॥ * ॥ राजगृहं नगरम्। राजगृहकः॥३३१॥

माहकादानकान्माषाद्घोषमानाट्टमद्रकात्[6]।
दाण्डायनसमुद्राभ्यां स्थलीशब्दः परो मतः ॥ ३३२ ॥

माहकानां स्थली। माहकस्थली। माहकस्थलकः ॥ * ॥ आनकस्थलकः ॥ * ॥ माषस्थलकः ॥ * ॥ घौषस्थलकः ॥ * ॥ मानस्थलकः। मानकस्थलीत्यन्यः[7] ॥ * ॥ आट्टस्थलकः[8] ॥ * ॥ माद्रकस्थलकः[9] ॥ * ॥ दण्डस्यापत्यं दाण्डिः। तस्यापत्यं युवा दाण्डायनः। तस्य स्थली

१ °पाट्टारौ° B. C. F. K.; पट्टारौ E.

२ स्थलगृहे F.; A. D. om. text and comment.

३ ? ड्याङ्ले ह्रस्वस्य° B. K. (perhaps right); ड्याङ्ले° C.; ड्याङ्के° F.; cf. p. 61, l. 5; p. 195, l. 2; p. 318, l. 15; P. vi. 3, 63-4.

४ ? पाट्टारो B. F. K.; पाट्टीरो C.— पट्टारः Bö., Yajñ.; om. Hem., K. V.

५ भक्षाली Bö., Yajñ.; भक्ष्यादी। भक्ष्यली। भक्ष्याली। Hem.; भक्षास्थली K. V. ed., तक्षाली a.

६ मानाद्रिमद्रकात् B. C. F. K. (see note ८); °मद्रुकात् E.; A. D. om. text and comm.

७ मानस्थलीत्यन्यः B. — Hem. has both; Bö., Yajñ. मानस्थली; K. V. ed. v.ll. मनवल्ली & मानवस्थाली.

८ Thus acc. to E.; अट्टस्थली also Bö., Yajñ., Hem.; om. K. V.; आद्रिस्थलकः MSS. (B. C. F. K.); अद्रि° perhaps from misreading अद्द for अट्ट.

९ Bö. मद्रुकस्थली (? E. cf. n. ६); मद्रक° Yajñ., Hem.; om. K. V.

दाण्डायनस्थली । दाण्डायनस्थलकः ॥ * ॥ सामुद्रस्थलकः । अयं दिग्वस्त्रमतेन[१] ॥ ३३२ ॥

अर्जुनवातण्डायनविनादवणियावसायवाटूराः[२] ।
कूलात्सौवीरेष्विमकान्तशकुन्तीकषायाश्च[३] ॥ ३३३ ॥

अर्जुनः पार्थोऽन्यो वा । तन्निवासोऽपि ग्रामोऽर्जुनः । आर्जुनकः ॥ * ॥ वातण्डायनकः[४] । अयं वामनमतेन ॥ अवतण्ड ऋषिग्राम[५] इत्यन्यः । वतण्ड इत्यपरः ॥ * ॥ विनादो ग्रामः । वैनादकः ॥ * ॥ अनुकम्पितो वणदन्तो वणियः[६] । वाणियकः ॥ * ॥ अवसायो ग्रामः । आवसायकः । अयं वामनमतेन[७] ॥ * ॥ वाटयतीति वाटूरो ग्रामः । वाटूरकः[८] ॥ खाटूर इत्यन्यः[९] ॥ * ॥ कौलको भवति सौवीरश्चेत् । कौलोऽन्यः ॥ कुलादित्यन्ये पठन्ति ॥ * ॥ इमः कश्चित् । तस्य कान्त इमकान्तः । ऐमकान्तकः ॥ * ॥ शाकुन्तकः[१०] ॥ * ॥ काषायकः । अयं वामनमतेन ॥ * ॥ अविषयेभ्यः प्राप्ते वाहीकग्रामेभ्यष्ठञ्ञिठयोः परिशिष्टेभ्योऽणि । विदेहानर्तपाठेऽपार्थेयानां प्रस्थपुरेत्यादिनाऽकञि[११] सिद्ध आदेशार्थः पाठः । तेन विदेहानामानर्तानां च क्षत्रियाणां स्वं वैदेह-

---

१ Also Bö., Yajñ., K. V. *a.*; om. Kâṣ. V. ed., Hem

२ °अणिगाव E.; वाडूराः C. E.; वाडूराः B.

३ °सकुंती° B. C. E.; A. D. om. text and comment.

४ वातंदाडायनकः C. K.; वातंडायनः F.

५ अवतंग° B.; ऋषिग्राम B. C. K. —Hem. has अवतंड । तंडक । वतंडव ।; omitted by the others.

६ ? अनुकंतो° F.; cf. Pâṇ. v. 3, 76. —वणिय Hem.; om. by the others.

७ Not given by the other works.

८ वाडूरो° वाडूरकः B. K.; वाहयतीति वाहरो ग्रामा वाहरकः C.

९ Thus F. K.; खाडूर B. C.—Hem वाडूर । खाडूर; om. by the others [cf. खदूर ṣl.220; खदूरक ṣl.215; *v.l.* °दू°].

१० साकुंतकः B. K.—शकुंति Hem.; not given by the other works.

११ See page 365, note 1

कम्[१] आनर्तकम् । पाठेयस्य स्वं पाठेयकम् । एवं पट्टारमाठराराज्ञी-धार्तराज्ञीनामीरोपान्त्यत्वादकञि[२] द्रष्टव्यम् ॥ ३३३ ॥ इति धूमादिः ॥

संध्या पञ्चदशी शश्वदमावास्या[३] त्रयोदशी ।
प्रतिपत्संधिवेलाऽथ पौर्णमासी चतुर्दशी ॥ ३३४ ॥

संध्यादिभावर्तुभ्यो[४]ऽण् इत्यनेन संध्यादिभ्यः कालवाचिभ्यः शेषेऽर्थेऽण् भवति ॥ * ॥ संध्याऽस्तमयकालः । तत्र भवं सांध्यं कर्म । यथा ममैव सिद्धराजवर्णने ।

जाते यस्य प्रयाणे तुरगखुरपुटोत्खातरेणुप्रपञ्चे
तीव्रं ध्वान्तायमाने प्रसरति बहले सर्वतोदिक्कमस्मिन् ।
भास्वच्चन्द्रार्कबिम्बग्रहगणरहितं व्योम वीक्ष्य प्रमुग्धाः
सांध्यं कर्मारभन्ते शिशुमुनिबटवो जातसंध्याभिशङ्काः[५] ॥

पञ्चदशानां पूरणीयं पञ्चदशी । पाञ्चदशः ॥ * ॥ शश्वद्भवं शाश्वतम् ॥ अशश्वत इत्यतः[६] शाश्वतिक इति ठणपि[७] । शकटाङ्गजमतमेतत् ॥ संपदिति वामनः ॥ * ॥ आमावास्यः[८] । एकदेशविकृतस्यानन्यत्वाद-मावस्याशब्दादपि भवति । आमावस्यः[९] ॥ * ॥ त्रयोदशानां पूरणी

१ वैदेहिकं B. C. K.

२ पाट्टार° B.C.K.; °माठर अराज्ञी B. K.; °माठर आराज्ञी C.; cf. P. iv. 2, 123.

३ °शश्वदमावस्या B. C. K.; A. om. text and comment (but see note ५ for A. and D.).

४ संध्यादिभावर्षर्तुभ्यो B. C. K.—Hem.'s rule is भर्तुसंध्यादेरण्; cf. P. iv. 3, 16 (*sandhivelâdi*).

५ D. om. to व्योम वीक्ष्य, see page 344, note ८.—The passage from ध्या-भिशङ्काः । भास्वच्च° to पिचण्डकः in śl. 335 is inserted by A. in the comment on śl. 134, see p. 171, n. 3.

६ ? असश्वत इत्यतः । C. K.; असस्वत इत्यतः । A. B.; अश्वत इत्यन्यः । F.; अत्र शश्वश्च इत्यतः D.

७ शास्वतिक° A. B. C. K.; सास्वसिक° D.; ठणपीति A. D.—Hem. has शश्वत्; om. by the others.

८ अमावस्यः B. K.

९ °अमावास्याशब्दाद° B. C.; आमावास्यः A. B. C.

त्रयोदशी । त्रायोदशः ॥ * ॥ प्रतिपद्यन्तेऽह्रान्यस्याः । प्रतिपत् पक्षतिः ।

संध्या प्रातिपदेनेव व्यतिभिन्ना[१] हिमांशुना ॥ * ॥

संधिवेला संधिकालः । सांधिवेलः ॥ * ॥ पूर्णो मासश्चन्द्रो मासो वाऽस्यां तिथौ । पौर्णमासी[२] । अत एव गणपाठादणि । तत्र भवः पौर्णमासः ॥ * ॥ चातुर्दशः । कन्याकालाट्ठञ्[३] इत्यनेन ठञि प्राप्तेऽविधानम् ॥ ३३४ ॥ इति संध्यादिः ॥

अश्मपादाशनिह्लादपिशाचाः शकुनिर्जयः ।
त्सर्वाकर्षपिचण्डाश्च निचयश्च नयो ह्रदः ॥ ३३५ ॥

कोऽश्मादेरित्यनेनाश्मादेः[४] सप्तम्यन्तात्तत्र साधुरित्यर्थे को भवति ॥ * ॥ अश्मन्यश्मकर्मणि कुशलः । अश्मकः ॥ * ॥ पादप्रक्षालनादौ कुशलः । पादकः ॥ * ॥ अशनिनिपातने साधुः । अशनिकः ॥ * ॥ ह्लादे प्रह्लादने साधुः । ह्लादकः ॥ * ॥ पिशाचापनयने साधुः । पिशाचकः ॥ * ॥ शकुनिरुतग्रहणादौ साधुः । शकुनिकः ॥ * ॥ जयकः ॥ * ॥ त्सरुकरणे साधुः । त्सरुकः ॥ * ॥ आकर्षणम् आकृष्यत आकर्षन्त्यस्मिन्निति वा । आकर्षो द्यूतम् अक्षः शारिफलकं[५] च । तत्करणे साधुः । आकर्षकः ॥ * ॥ पिचण्डापनयने साधुः । पिचण्डकः[६] ॥ * ॥ निचयकः । चय इत्यन्यः ॥ * ॥ नयकः ॥ * ॥ ह्रदकः । ह्राद इत्यन्ये[७] ॥

---

१ प्रतिभिन्ना F., perhaps right.

२ पूर्णामासी B. C. F. & orig. K.

३ कथाकाल° D.; cf. P. iv. 2, 102; 3, 11.—[? Hem. has rule वर्षाकालेभ्यः cf. P. iv. 3, 11; 18.]

४ कोश्मादिरित्य° A.; काश्मादे° B. C.; K. doubtful; अतसादरित्य° D. —Hem.'s rule is काश्मादेः ।

५ सारिफलकं A.—आकृष्यते सुवर्णादिकमस्मिन्नित्याकर्षो निकषोपलः। तत्र कुशल आकर्षकः। आकर्षेति रेफरहितो मुख्यः पाठ इति दीक्षिताः । तत्राप्याकर्षति सुवर्णादिकमस्मिन्नित्येव विग्रहः। Yajñ.

६ See page 372, note ५.

७ Hem. ह्राद ; the others have both.

तत्र साधुरित्यर्थयोगादश्मादयः[1] शब्दास्तद्विषयायां क्रियायां वर्तमानाः प्रत्ययमुत्पादयन्ति ॥ ३३५ ॥ इत्यश्मादिः[2] ॥

कथेक्षुमांसौदनवृत्तिसंग्रहाः[3]
प्रवाससंघातनिवाससक्तवः ।
गुडो वितण्डाजनवादवेणवो
गणोपवासौ विकथागुणाविमौ ॥ ३३६ ॥

कथाप्रतिजनादिभ्यां ठञ्खञाविति अनेन कथादेः प्रतिजनादेश्च ठञ्खञौ क्रमेण भवतः ॥ * ॥ कथायां साधुः । काथिकः ॥ * ॥ ऐक्षुकः ॥ * ॥ मांसौदन इति व्यस्तसमस्तस्य ग्रहणम् । मांसिकः । औदनिकः । मांसौदनिकास्तेदयः[4] ॥ * ॥ वार्त्तिकः । धर्मदेशनानिपुणो वार्त्ता-ख्याननिपुणो वा ॥ * ॥ सांग्रहिकः ॥ * ॥ प्रावासिकः ॥ * ॥ सांघातिकः ॥ * ॥ नैवासिकः ॥ * ॥ साक्तुका यवाः ॥ * ॥ गौडिका इक्षवः ॥ * ॥ वैतण्डिकः ॥ * ॥ जनवादः कौलीनम् । जानवादिकः ॥ * ॥ वैणुका गिरयः ॥ * ॥ गाणिकः ॥ * ॥ औपवासिकः ॥ * ॥ स्त्रीभिक्षादिविषया कथा विकथा । वैकथिकः ॥ * ॥ गौणिकः ॥ ३३६ ॥

आयुर्वेदजनेवादौ संग्रामापूपसंकथाः ।
विश्वात्कथा च कुल्माषो[5] जनोवादोऽथ कुष्ठवित् ॥ ३३७ ॥

आयुर्वेदिकः[6] ॥ ननु वृत्तिसंग्रहगुणगणायुर्वेदानां पाठो निरर्थकः ।

---

१ साधुरित्यर्थः यो॰ C. K.; ॰इत्यन्यः यो॰ B.; इत्येवं योगाद॰ D.

२ आकर्षादि Pâṇ. v. 2, 64; अश्मादि Hem.

३ ॰मांसोदन॰ E.; A. om. text and comment.

४ ॰चेटयः C.; मांसौदनिकचेष्टा-दयः F.

५ कुल्माशो॰ E.; कुल्मोषो D.; A. om. text and comment.

६ Thus F., Yajñ.; आयुर्वैदिकः B. C. D. K.

उक्थादिपाठाट्ठण् सिद्धः । यो हि वृत्त्यादिषु साधुः स वृत्त्यादीनां बोद्धा भवत्येव । सत्यम् । अत्र पाठो द्विवर्थः । द्वयोर्वृत्त्योः साधुः । द्वैवृत्तिकः । त्रैवृत्तिक इत्यादि सिद्धम् ॥ * ॥ जने वादो जनेवादः । सप्तम्या अलुग् अत एव निपातनात् षष्ठ्या वैत्वम् । जानेवादिकः ॥ * । सांग्रामिकः ॥ * ॥ आपूपिका गोधूमाः ॥ * ॥ संकथाऽन्योन्यसंलापः । सांकथिकः ॥ * ॥ विश्वस्य कथा विश्वकथा । वैश्वकथिकः ॥ * ॥ कौल्मा-षिकाः कलायाः[1] ॥ * ॥ जनेषु निष्ठुरो वादो जनोवादः । उकारो निपातो मध्यभूतो नैष्ठुर्ये द्रष्टव्यः । अथवा षष्ठीसप्तम्योः स्थान उकारेऽत एव निपातनात् । जानोवादिकः[2] ॥ * ॥ कुष्ठस्य श्वित्रस्य विज्ञा-नम् । तत्र साधुः कौष्ठवित्कः[3] । अयं वामनमतेन ॥ ३३७ ॥ इति कथादिः[4] ॥

जनः प्रतिमहद्विश्वपञ्चसर्वानुतः कुलम् ।
परामुष्यपरस्येभ्यः समेदंसंपराद्युगः[5] ॥ ३३८ ॥

जनं जनं प्रति प्रतिजनम् । तत्र साधुः प्रातिजनीनः । जने जने साधुरित्यर्थः ॥ * ॥ माहाजनीनः[6] ॥ * ॥ विश्वो जनो विश्वजनः । वैश्वजनीनः ॥ * ॥ पञ्चसु जनेषु साधुः । पाञ्चजनीनः । तद्धितद्विगोः खञ्[7] ॥ अथवा पञ्चानां जनः पञ्चजनः । पाञ्चजनीनः ॥ * ॥ सर्वो

---

1 Hem. has कुल्मास and गुल्मास.

2 Hem. has besides भूम्नोवाद and अनभूम्नोवाद.

3 कौष्टविष्कः B. K.; कौष्ठविष्कः C. F.; कौष्ठविकाः D.—Yajñ. has कुष्ट-विद्° कौष्टविदिकः.

4 This gaṇa includes कथादि and गुडादि to P. iv. 4, 102-3; but Hem. also has कथादि only.

5 °सर्वानुतः° E.; °परस्य स्यात्स-मेदं° E.; °परस्यात्स्यात्° D.; A. om. text and comment.

6 महाजनीनः B. C. F. K.; माह-नीनः D.

7 तद्धितः द्विगोः° B. K. F.; तद्धि-तार्थात् द्विगोः खञ् Yajñ

जनः सर्वजनः। सार्वजनीनः॥ शकटाङ्गजस्तु सर्वजनात्खञ्चेत्यनेन सूत्रेण सार्वजन्यः सार्वजनीन इत्याह[१]॥ * ॥ अनुगतो जनम् अनुजनः। जनं जनमनु। अनुजनः। आनुजनीनः। अयं शकटाङ्गजदिग्वस्त्रमतेन[२]॥ * ॥ कुलमिति परामुष्यपरस्येभ्यः परं द्रष्टव्यम्। परं कुलं परकुलम्। परस्य वा कुलं परकुलम्। पारकुलीनः॥ आमुष्यकुलीनः। गणपाठात्षष्ठ्यलुक्॥ पारस्यकुलीनः। गणपाठात्षष्ठ्यलुक्॥ वाक्रोश इत्यनेन[३] वा यदा परकुलसंबन्धेनाक्रुश्यते॥ * ॥ समो युगोऽस्मिन्। समयुगो बलीवर्दः। समो युगः समयुगः। सममविषमं वा युगं कालविशेषः। सामयुगीनः॥ * ॥ ऐदंयुगीनः। अस्मिन्काले साधुरित्यर्थः॥ * ॥ संयुगं संग्रामः। सांयुगीनो भटः।

संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः[४]॥ * ॥

परमिष्टमनवरम् अन्यद्वा[५] युगं परयुगम्। पारयुगीणः॥ * ॥

अत्र साधुर्योग्यः प्रवीणो वा गृह्यते। उपकारकवाची तु हितमित्यनेन[६] संगृहीतः। अत्र हि सूत्रकदम्बकें सप्तम्यन्तात्प्रत्ययः। अग्रे तु हितार्थे चतुर्थ्यन्तात्प्रत्ययः। अतो न बाध्यबाधकभावः॥ ३३८॥ इति प्रतिजनादिः॥

दिग्वर्गपूगा गणपक्षमेधा
वंशानुवंशौ वनमित्रमेधाः।
धाय्यादिसाक्ष्यन्तरवेशकाशा
अब्यूथकालान्तरहोमुखाश्च[७]॥ ३३९॥

१ Hem. also does not include this word, but has a special rule: सर्वजनाण्ण्येनञौ। (*i.e.* ण्य + ईनञ्).

२ Also Hem.; om. by others.

३ Cf. Pâṇ. vi. 3, 21.

४ Kumâras. ii. 57.

५ परिपिष्टमनवरतमन्यद्वा D.

६ Cf. Pâṇ. v. 1, 9 and vârtts.

७ °मुखाद्यौः B. C. F. K.; A. om. text and comment.

दिगादिदेहांशाद्य इत्यनेन[1] तत्र भव इत्यर्थे दिगादेर्यप्रत्ययो भवति ॥ * ॥ दिशि भवम् । दिश्यम् । यथा ।

विक्रीय दिश्यानि धनान्युरूणि
द्वैप्यानसावुत्तमलाभभाजः ।
तरीषु तत्रत्यमफल्गु भाण्डं
सांयात्रिकानावपतोऽभ्यनन्दत्[2] ॥ * ॥

वर्ग्यः ॥ * ॥ पूग्यः ॥ * ॥ गण्यः ॥ * ॥ पक्ष्यः ॥ * ॥ मेध्यः ॥ * ॥ वंश्यः ॥ * ॥ अनुवंश्यः ॥ * ॥ वन्यः करी ॥ * ॥ मित्र्यः ॥ * ॥ मेघ्यः ॥ * ॥ धाय्या सामिधेनी । धाय्यः ॥ धाय्या मित्रमस्येति ह्रस्वत्वे धाय्यमित्र इति केचित्[3] ॥ * ॥ आद्यः ॥ * ॥ साक्ष्यः ॥ * ॥ अन्तरे भवः । अन्तर्यः ॥ अन्त-रित्यन्ये । तन्मतेऽन्त्यः[4] ॥ * ॥ वेशे[5] प्रतिकर्मणि पुरे वा भवा । वेश्या । यथा ।

स्वास्तीर्णतल्परचितावसथः[6] क्षणेन
वेश्याजनः कृतनवप्रतिकर्मकाम्यः ।
खिन्नानखिन्नमतिरापततो मनुष्यान्
प्रत्यग्रहीच्चिरनिविष्ट इवोपचारैः ॥ * ॥

काम्यः[7] ॥ * ॥ अप्सु भवः । अप्सव्यः[8] ॥ * ॥ यूथ्यः ॥ * ॥ काल्यः ॥ * ॥ अन्त्यः ॥ * ॥ रहस्यम् ॥ * ॥ मुख्यम्[9] ॥ ३३८ ॥

---

१ Hem. has the same sûtra.

२ Sisupâlab. 3, 76.

३ D. om. from धाय्या मित्रमस्येति.—Hem. both combined and separate; the others separate only (धाय्य Bö.).

४ ?! Thus B. C. F. K.; D. om. from तन्मते.—Hem. both अन्तर and अन्तर्; the others अन्तर.

५ वेशे C. K.; विशे D.—वेश Bö.; वेश्या Hem.; विश K. V. ed., om. *a.*; वेशो नेपथ्यं वेश्या गृहं च तत्रभवा वेश्या Yajñ.

६ Sisup. 5, 27 [आस्तीर्ण° eds.].

७ काम्यः C. K.; काम्युः B.—Not given by the other works.

८ अब्यः F.; cf. P. vi. 3, 1, v. 6.

९ C. F. K. add द्विव्यं which is not given by the other works.

अमित्रजघनालीका आकाशाकालपथ्युखाः ।
माघन्यायकशा देशः संज्ञायामुदकं तथा[1] ॥ ३४० ॥

अमित्र्यः ॥ * ॥ जघन्यः ॥ * ॥ अलीक्यः ॥ * ॥ आकाश्यः ॥ * ॥ अकाल्यः । अयं चन्द्रवामनमतेन ॥ * ॥ पथ्यम् ॥ * ॥ उख्यम् । आकारान्तादप्युखाशब्दात्[2] पिठरादिवाचकाद्यः । कर्णपार्श्ववाचकात्तु देहांशद्वारेणैव सिद्ध इति केचित् ॥ * ॥ माघ्यं कुन्दकुसुमम् ॥ * ॥ न्याय्यम् ॥ * ॥ कशे देशे[3] भवम् । कश्यं मद्यम् ॥ * ॥ देश्यः ॥ * ॥ संज्ञायाम् उदक्या रजस्वला स्त्री ॥ संज्ञाया अन्यत्र । औदको मत्सी ॥ * ॥ मुखजघनवंशानुवंशानामदेहांशार्थः पाठः । यथा शरीरस्य मुखं प्रधानमग्रभागो वा जघनं निकृष्टं पश्चाद्भागो वा तथाऽन्यस्मिन्नर्थे मुखजघनसदृशे यदैतावुपचारेण वर्तेते तदापि यप्रत्ययः स्यात् । तद्यथा । मुखे प्रधाने पदेऽग्रे वा भवो मुख्यः । सेनाजघने निकृष्टे पश्चाद्भागे वा भवो जघन्यः ॥ ३४० ॥ इति दिगादिः ॥

मुखोलूखलसीरौष्ठहनुशीलरथाः परेः ।
उपात्स्थूलाकलापौ च स्थानसीरादि[4] संमतम् ॥ ३४१ ॥

परिमुखादेरव्ययीभावादित्यनेन परिमुखादिभ्योऽव्ययीभावेभ्यस्तत्र भव इत्यर्थे ञ्यप्रत्ययो भवति ॥ * ॥ परिमुखं भवः । पारिमुख्यः सेवकः । स हि यतो यतः स्वामिनो मुखं तत्र संनिहितो भवन्नेवमु-

---

[1] A. om. text and comment.

[2] अकारांताद° C.; °उषशब्दात् B. C. K.; °उखशब्दात् F.; D. om. from आकारान्ताद° to केचित्.

[3] कशो देशे D.; कशादेशे भवं कश्यं Kshîrasv. to Amarak. ii. 10, 40.

[4] °शीरादि B. D. E. F.; शारादि C.; A. om. text and comment.

च्यते ॥ * ॥ पार्युलूखल्यः ॥ * ॥ पारिसीर्यः । परिसिरमित्यप्यन्यः[1] ॥ * ॥ पार्योष्ठ्यः ॥ * ॥ पारिहनव्यः[2] ॥ * ॥ पारिशील्यः ॥ पारिरथ्यः ॥ एतौ दिग्वस्त्रमतेन । स च परिशालशब्दमप्याह ॥ परेरिति परिशब्दादित्यर्थः ॥ * ॥ उपस्थूले भवम् औपस्थूल्यम् । स्थूलाशब्देन[3] हलिरुच्यते ॥ स्थूणेत्यन्यः ॥ * ॥ औपकलाप्यः ॥ * ॥ औपस्थान्यः । अयं वामनमतेन ॥ * ॥ औपसीर्यः[4] ॥ * ॥ आदिशब्दात्कपालशालशब्दौ[5] संगृहीतौ ॥ ३४१ ॥

पद्यूपवंशसीताः[6] पथितिलमाषाः ससातयवभङ्गाः ।
गङ्गासीरे[7] सरथे सर्वेऽप्येतेऽनुतो लक्ष्याः ॥ ३४२ ॥

आनुपद्यः ॥ * ॥ आनुयूप्यः[8] ॥ आनुसूप्य[9] इति वामनमतेन ॥ * ॥ आनुवंश्यः ॥ अनुवंशेति दिगादावपि पठ्यते तत्राव्ययीभावादन्यत्र यः । केचित्तु तत्राप्यव्ययीभाव एवेति मन्यन्ते[10] ॥ * ॥ आनुसीत्यः[11] ॥ * ॥ आनुपथ्यः ॥ * ॥ आनुतिल्यः ॥ * ॥ आनुमाष्यः ॥ * ॥ ससातेति सह सातयवभङ्गाभिर्वर्तन्ते । ससातयवभङ्गाः । स्यति दुःखमिति सातं सु-

---

1 ॥ पारिस्थैर्यः ॥ D.—परिसीर Bö., Kâs. V.; परिशीर (पारिसीर्यमित्यन्ये) Yajñ.; परिसीर & परिशर Hem.

2 पारिहानव्यः B. C. K.

3 °भवमौपस्थूलाशब्देन° D.—उपस्थूल (= स्थूलस्य समीपे comm.) Yajñ.; उपस्थूण Bö., Kâs. V. *a.*; both Hem.; अपस्थल K. V. ed.

4 औपशीर्यः MSS.

5 °कलापशालिशब्दौ D.; °कलापिशालि° F.—Hem. also has उपवपाल, the others only उपकलाप.

6 पदयूप° B. E. F. K.; यूपपदयूपवंश C.; पदात्मपवश° D.; °शीताः B. F. K.

7 °शीरे B. D. F. K.; °शारे C.; A. om. text and comment.

8 आनुपूप्यः B. F. K.; आनुतप्यः C. अनुयूप Bö., Kâs. V., Hem.; om. Yajñ.

9 आनुसूप्य F.; अनुसूप्य B. K.; अनुरूप्य C.—अनुसूर्प Yajñ.; om. by the others.

10 D. om. from अनुवंशेति.

11 आनुशीत्यः B. F. K.; आनुशात्यः C.—अनुसीत Bö., Kâs. V. *a.*; अनुशीत Hem., K. V. ed.; om. Yajñ.

खम् । सातमनु । अनुसातम् । आनुसात्यः । अयं दिग्वस्त्रमतेन ॥ * ॥ आनुयव्यः ॥ * ॥ आनुभङ्ग्यः । अयं भोजमतेन ॥ * ॥ आनुगङ्ग्यः । अयं वामनादिमतेन ॥ * ॥ आनुसीर्यः[१] ॥ * ॥ आनुरथ्यः । अयं दिग्वस्त्रमतेन ॥ * ॥ ननु मुखं परित इत्यर्थे कथमव्ययीभावः । सत्यम् अस्मादेव निपातनात् । अथवा परेर्वर्जनार्थवृत्तित्वे सति बहिःपर्यपाङ्ग्वाञ्चित्यनेनाव्ययीभावः[२] । अनुसीरादीनां[३] तु सामीप्यवृत्तित्वात्स्वलक्षणेनैवाव्ययीभावः ॥ अव्ययीभावादन्यत्र । परिगतं मुखं परिमुखम् । तत्र भवः पारिमुखः ॥ ३४२ ॥ इति परिमुखादिः ॥

ऋगयनपुनरुक्तन्यायशिक्षानिमित्ता
उपनिषदृषियज्ञश्लक्ष्णचर्चामुहूर्ताः[४] ।
अपि निगमनिरुक्तोत्पातसंवत्सरा व्या-
करणमथ पदव्याख्यानविद्यान्विद्याः ॥ ३४३ ॥

ऋगयनेभ्योऽण् इत्यनेन ऋगयनादेस्तस्य व्याख्यानो ग्रन्थस्तत्र भव इति वार्थेऽण्प्रत्ययो भवति ॥ * ॥ ऋचामयनम् ऋगयनम् । न क्षुभ्नादेरित्यनेन णत्वाभावः[५] । तस्य व्याख्यानस्तत्र भवो वा । आर्गयणः । रत्वनिमित्तं तु णत्वं[६] भवत्येव ॥ आर्गयन इत्यन्यः । अस्मन्मते तु गिरिनद्यादित्वादुभयम्[७] ॥ * ॥ पौनरुक्तः ॥ * ॥ नैयायः ॥ * ॥ शैक्षः ॥ * ॥

---

१ आनुशीर्यः MSS.

२ °पर्यपाङ्ग्वाञ्चित्य° B. C. K.; °पर्यपाङ्ग्वाञ्चि° D.; पर्यपार्श्वाञ्चित्य° F.; cf. P. ii. 1, 12; 13.

३ अनुशीरादीनां B. D. K.; अनुशारादीनां C.

४ °शिक्षानिमित्ता° D. E.; °सच° E.; A. om. text and comment.

५ णीत्वाभावः °णीत्वं B. C. K.; cf. page 195, note ६ (णी° probably suggested by णीभावः).

६ एवनिमित्तं तु° D.; स्वनिमित्तं° B. C.; णीत्वं B. C. K.

७ D. om. from अस्मन्मत. All other works read आर्गयन in the gaṇa गिरिनद्यादि; cf. śl. 160.

नैमित्तः ॥ * ॥ औपनिषदः ॥ * ॥ आर्षः ॥ * ॥ याज्ञः ॥ * ॥ ब्राह्मणः ॥ * ॥ चार्चः ॥ * ॥ मौहूर्तः ॥ * ॥ निगच्छन्त्यनेन निश्चयमिति निगमो ग्रन्थविशेषः । नैगमः ॥ * ॥ नैरुक्तः ॥ * ॥ उत्पातः प्रतिपादकशास्त्रम्[1] । औत्पातः ॥ * ॥ सांवत्सरः ॥ * ॥ वैयाकरणः ॥ * ॥ पदानां व्याख्यानं पदव्याख्यानम् । पादव्याख्यानः ॥ अन्ये तु पदं व्याख्यानमिति च्छिन्दन्ति[2] । तन्मते पादं वैयाख्यानम् ॥ * ॥ वैद्यः ॥ * ॥ त्रैविद्यः ॥ ३४३ ॥

छन्दसो विजितिर्भाषामानं[3] विचितिनामनी ।
क्षत्राङ्गवास्तुतो विद्या स्यादुत्पादः क्रमेतरः ॥ ३४४ ॥

छान्दोविजितः[4] ॥ * ॥ छान्दोभाषः ॥ * ॥ छान्दोमानः ॥ * ॥ छान्दोविचितः ॥ छान्दोव्याख्यान इत्यप्यन्यः[5] ॥ * ॥ छान्दोनामः । अयं वामनमतेन ॥ * ॥ क्षात्रविद्यः ॥ * ॥ आङ्गविद्यः ॥ * ॥ वास्तुविद्यः[6] ॥ * ॥ औत्पादः ॥ * ॥ क्रामेतरः ॥ * ॥ ऋतूक्थसूत्राग्रगादिभ्यष्ठञ्[7] इत्यनेन ठञि प्राप्ते वचनम् । आदेजाद्यतस्थौ[8] ॥ ३४४ ॥ इति ऋगयनादिः ॥

ऋग्ब्राह्मणाध्वराख्याननामाख्यातानि नाम च ।
आद्यन्तप्रथमावेतौ षत्वणत्वनतान्तौ[9] ॥ ३४५ ॥

---

[1] उत्पातप्रतिपादक° B. F.; उत्पादप्रति° C.

[2] पदव्याख्यानमिति° B. C. D.; छिदंति B. C.

[3] °विजिताभाषा° E.; A. om. text and comment.

[4] छन्दोविजित Hem.; छन्दोविजिती *v.l.* Kâś. V. ed.; om. Bö., Yajñ.

[5] छंदोव्याख्यान Hem., *om.* others.

[6] वास्तव्यविद्य: D.

[7] See P. iv. 3, 68; 72.—The MSS. are all more or less corrupt.

[8] Thus C. F.; °द्यतीस्था D.; °द्यनस्थौ B.; °द्यतस्थौ K.; ? °ऋक्‌: I; [? Pâṇ. iv. 2, 114.—व्याकरणशब्दात्तु वृद्धाच्छः प्राप्त इति ठञादेरपवादोऽयमण् Yajñ.].

[9] षत्वनत्व° F.; A. om. text and comment.

ऋत्वगृग्ग्वृगादिभ्यष्ठञ् इत्यनेन ऋकारान्ताद् यज्ञवाचिनो द्व्यच ऋगादेश्च तस्य व्याख्यानस्तत्र भव इत्यर्थे ठञ् भवति ॥ * ॥ ऋचां व्याख्यानस्तत्र भवो वा । आर्चिकः ॥ * ॥ ब्राह्मणिकः ॥ * ॥ आध्वरिकः ॥ * ॥ आख्यातिकः ॥ * ॥ नामाख्यातिकः ॥ * ॥ नामिकः । नामशब्दस्य द्व्यज्द्वारेण ठञ् सिद्धः ॥ * ॥ परं वामनपाणिनिचन्द्रादिमते न गणे[1] पठितः ॥ * ॥ आद्यन्तिकः ॥ * ॥ प्राथमिकः ॥ * ॥ षात्वणत्विकः ॥ * ॥ नातानतिकः ॥ * ॥ आकृतिगणश्चायम् । तेन पुरश्चरणप्रभृतयो द्रष्टव्याः ॥ ३४५ ॥ इति ऋगादिः ॥

शुण्डिकोलपतीर्थान्युदपानतृणभूमयः ।
कृकणस्थण्डिलौ पर्णोपतीर्थोदकपिप्पलाः[2] ॥ ३४६ ॥

आयस्थानादशुण्डिकादेरित्यनेन शुण्डिकादिवर्जितात्तत[3] आगत इत्यर्थे ठञ् भवति । शुल्कशालाया आगतः । शौल्कशालिकः । आकरिकः ॥ * ॥ शुण्डिकादेः । शुण्डिकः शुण्डिका वा सुरापणः[4] । तत आगतः शौण्डिकः ॥ * ॥ औलपः । उपल[5] इति शकटाङ्गजः ॥ * ॥ तैर्थः ॥ * ॥ औदपानः ॥ * ॥ तार्णः ॥ * ॥ भौमः ॥ * ॥ कार्कणः ॥ * ॥ स्थाण्डिलः ॥ * ॥ पार्णः ॥ * ॥ औपतीर्थः[6] । अयं चन्द्रवामनमतेन ॥ * ॥ औदकः ॥ पैप्पलः ॥ एतौ शकटाङ्गजमतेन[7] ॥ ३४६ ॥ इति शुण्डिकादिः ॥

---

१ °मते गणे D.—See Pâṇ. iv. 3, 72, where, however, प्रथम is given. Hem. also has no special gaṇa ऋगादि.

२ °पर्णोप° D. E.

३ °वर्जनात्तत B. C. K.

४ शुण्डः शुण्डा वा सुरा । ततो मत्वर्थीये । शुण्डिकः शुण्डिका वा । सुरापणः सुराविक्रयी वोच्यते । Hem.; शुण्डिकः शुण्डिका वा सुराऽपणः Yajñ.

५ Hem. has both words; the others उपल only.

६ Not given by the other works.

७ MS. Hem. has उदक । पिप्पल ।; both are omitted by the others.

कुलालसेनोपनिषन्निषादा
मधुश्वपाकौ रुरुदेवराजौ ।
रुद्रो वधूब्राह्मणकुम्भकाराः
कर्मारचण्डालयुतः सिरिन्ध्रः[1] ॥ ३४७ ॥

कुलालेभ्योऽकञ् इत्यनेन कुलालादेः शब्दगणात्कृत इत्यर्थे संज्ञाविषयेऽकञ् भवति ॥ * ॥ कुलालेन कृतं कौलालकम् । घटघटीशरावोदञ्चनादि भाण्डम् ॥ * ॥ सैनकं नगरोपरोधादि ॥ * ॥ औपनिषदकम् । अयं वामनमतेन ॥ * ॥ नैषादकम् ॥ * ॥ माधवको मध्वासवः । अयं चन्द्रमतेन ॥ * ॥ शौवपाककम् ॥ * ॥ रौरवकम् ॥ * ॥ दैवराजकम् ॥ देव राजन्निति केचित्पठन्ति । तत्र दैवकम् । राजकम् ॥ * ॥ रौद्रकम् । शकटाङ्गजदिग्वस्त्रमतेन ॥ * ॥ वाधवकम् ॥ * ॥ ब्राह्मणकम् ॥ ब्रह्मन्निति[2] शकटाङ्गजादयः ॥ * ॥ कौम्भकारकम् ॥ * ॥ कार्मारकम् ॥ * ॥ चाण्डालकम् । उपानदादिकम् ॥ * ॥

अदासो दासवृत्तिर्यः स सिरिन्ध्र इति स्मृतः ।

सैरिन्ध्रकम्[3] ॥ ३४७ ॥

अनड्वान्परिषच्चैव सैरिन्ध्री[4] वरुटस्तथा[5] ।
अकप्रत्ययुजो[6] ज्ञेयाः संज्ञायां बुधपुङ्गवैः ॥ ३४८ ॥

---

१ सिरिन्ध्रः E.; सिरिंध्वः B.; सिरिंध्रुः C. D. K.; A. om. text & com.

२ Thus all works; ब्राह्मन्निति D.

३ सिरिन्ध्र Bö., Yajñ.; Kâś. V. ed. (Bö., v.l. सिरिंध्र); सिरंध्र Hem.; शिरंध्र Kâś. V. a. [सीरं हलमेव सैरम् । तद्धरतीति सैरंध्रः सैरिकः सिरिन्ध्रोऽपि स एव । सैरंध्रकम् Yajñ.].

४ ? Thus D. E.; ०परिषद्दैवसिरिंध्री K.; परिषद्दैवसैरिंध्रा B.; परिषद्दैवसिरिंध्री F.; --वसिरिंध्रा C.

५ वरुठस्तथा E.

६ ? अस्कृत्यययुजो E. (? F.); अप्रस्कृत्ययुजो D.; B. C. K. omit this half-śloka; A. omits text and commentary.

आनडुहकम् ॥ * ॥ पारिषदकम् । पर्षच्छब्दोऽपि द्रष्टव्यः[१] ॥ * ॥ सैरिन्ध्रकः[२] । अयं श्रीभोजराजमतेन ॥ * ॥ वारुटकम्[३] । शूर्पपिष्टकादि ॥ * ॥ संज्ञाया अन्यत्र । कौलालः श्लोक इत्यादि ॥ ३४८ ॥ इति कुलालादिः ॥

[असुरो देवरक्षोभ्यां गुणान्मुख्यः परो मतः[४] ॥] ३४९ ॥

देवासुरः ॥ * ॥ रक्षोऽसुरः ॥ * ॥ गौणमुख्यः ॥ * ॥ अत्र शिशुक्रन्दाद्यदेवासुरादिद्वन्द्वाच्छ इति छो न भवति ॥ ३४९ ॥ इति देवासुरादिः[५] ॥

शिशुप्रद्युम्नसीतेन्द्रयमाद् यथाक्रमं मताः ।
क्रन्दोऽभिगमनं चैवान्वेषणं जननं सभः[६] ॥ ३५० ॥

शिशुक्रन्दाद्यदेवासुरादिद्वन्द्वाच्छ इत्यनेन शिशुक्रन्दादेः शब्दगणाद् देवासुरादिवर्जिताच्च द्वन्द्वाद् द्वितीयान्तादधिकृत्य कृतो ग्रन्थ इत्येतस्मिन्नर्थे छप्रत्ययो भवति ॥ * ॥ शिशवो बालास्तेषां क्रन्दस्तमधिकृत्य कृतो ग्रन्थः । शिशुक्रन्दीयः । बालपुस्तकः ॥ शैशुक्रन्द इत्यन्यः[७] ॥ * ॥ प्रद्युम्नस्याभिगमनं प्रद्युम्नाभिगमनम् । प्रद्युम्नाभिगमनीयः ॥ * ॥ सीतान्वेषणीयः ॥ * ॥ इन्द्रजननीयः ॥ * ॥ यमस्य सभा यमसभम् ।

---

१ B. C. F. add दैवकः.

२ सैरिंद्रकः D.; सैरिध्रकः C.—Bö. has सैरिन्ध्र; Yajñ. सैरंध्र; K. V. ed. सैन्ध्रिय (!), om. *a*.

३ वरूड Bö., K. V. ed.; वरुड Yajñ.; वरुट Hem., K. V. ed.; *cf. śl.* 208, p. 250, *with notes* 6 *and* 8.

४ °रक्षाभ्यां° B. C. K.; D. E. (A.) om. this gaṇa.

५ Cf. Pâṇ. iv. 3, 88 v.—Hem., to his sûtra vi. 3 (163), अदेवासुरादिभ्यो वैरिद्वन्द्वात् । enumerates दैवासुरं । राक्षोसुरं ।

६ °भिगमश्चैवा° समः E.; A. om. *text and comment.*

७ D. om. from शैशुक्रन्द.—Hem. remarks शिशुक्रन्दशब्दात्केचिन्नेच्छन्ति । शैशुक्रन्दं ।

यमसभीयः ॥ * ॥ आकृतिगणो ऽयम् । तेन प्रद्युम्नप्रत्यागमनप्रद्युम्नो-द्यनसीताहरणप्रभृतयो द्रष्टव्याः[1] ॥ ३५० ॥ इति शिशुक्रन्दादिः ॥

सिन्धुस्तक्षशिलावसानदरदो गान्धारशाल्वोरसाः[2]
कार्णः सामलकाण्डधारच्छगलाः कैर्मेदुरो ग्रामणीः[3] ।
कंसार्धासनसिंहकर्णमधुमत्कश्मीरसिंहा इमे
स्याद्वत्सोद्धरणोऽथ बर्बरयुतो वर्णुस्तथा किंनरः ॥३५१॥

सिन्धुशण्डिकादिभ्यो ऽणञावित्यनेन सिन्ध्वादेः शण्डिकादेश्च[4] सो ऽस्याभिजन इत्यर्थे ऽणञौ क्रमेण भवतः ॥ * ॥ सिन्धुः समुद्रो नदी वा । सिन्धवो जनपदः । सो ऽभिजनो ऽस्य । सैन्धवः ॥ * ॥ ताक्षशिलः ॥ * ॥ आवसानः ॥ * ॥ दरदो जनपदः । दारदः ॥ * ॥ गान्धारः[5] ॥ * ॥ शाल्वः ॥ * ॥ उरसा[6] जनपदः । औरसः ॥ * ॥ कार्णः ॥ सामलः ॥ इयं वामनमतेन ॥ * ॥ काण्डधारः । काण्डवरक[7] इति शकटाङ्गजः ॥ * ॥ छगलो ग्रामः । छागलः ॥ * ॥ कैर्मेदुरः[8] ॥ * ॥ ग्रामणः ॥ * ॥ कांसः ॥ * ॥ आर्धासनः । अयं वामनमतेन ॥ * ॥ सैंहकर्णः ॥ सिंह कर्ण[9]

---

१ ॰प्रत्यागमनप्रमाणागमनसीता॰ D.; lac. from सीता C.—Hem. has all three forms.—Yajñ. gives also किराताजुनी and विरुद्धभोजन ।

२ ॰शाल्वौरसाः D. E. F.; शाल्वारसाः C.

३ ॰वगला कौमे – – ग्रामणीः C.; कौमदुरो॰ D.; कौर्मेदुरो॰ E.; कौमंदुरो F.—A. om. text and comm. [B. might also be read कौर्मंदुरो].

४ सिध्वादेश्च B. C. K.

५ All MSS. read गांधार in text; the other works गन्धार.

६ औरसा B. C.; औरसो F.—उरसा Bö., Yajñ.; उरस K. V., Hem.

७ ? कांडचरक F.; काडधारक D.; कांडधारक suppl. K.; see note ९.—काण्डधार Bö., Yajñ.; कांडवरक Hem., K. V. *a.*; काण्डवारण K. V. ed.

८ कैर्मेदुकः D.; कौमुंदुरः F.; om. B. C.—कैर्मेदुर Bö., Yajñ.; कौमेदुर K. V. ed.; कौशेदुरः *a.*; [? Hem.].

९ ॥ सिंहकर्ण इति॰ B. C.;—? Bhoja only singly & Vâmana (cf. सिंह & कर्ण) singly and combined.—सिंहकर्ण Bö., Yajñ.; सिंहकोष्ठ K. V. ed. *a.* [Hem. next page n. 6.]

इति भोजः ॥ * ॥ मधुमान्पर्वतः । माधुमतः ॥ * ॥ काश्मीरः ॥ * ॥ सैंहः । अयं वामनमतेन ॥ * ॥ वात्सोद्धरणः ॥ * ॥ बार्बरः ॥ * ॥ वार्णवः ॥ * ॥ कैंनरः ॥ ३५१ ॥

गन्दिकावासकम्बोजक्रोष्टुकर्णसुमङ्गलाः[१] ।
संकुचितोऽथ किष्किन्धा पर्वतोऽपि निगद्यते ॥ ३५२ ॥

गन्दिका[२] जनपदः । गान्दिकः ॥ * ॥ आवासः । अयं वामनमतेन ॥ * ॥ काम्बोजः ॥ * ॥ क्रौष्टुकर्णः ॥ क्रोष्टुकर्णक[३] इति भोजः ॥ क्रोष्टुकशब्दो[४] वामनमतेन ॥ * ॥ सौमङ्गलः । अयं वामनमतेन ॥ * ॥ सांकुचितः ॥ * ॥ कैष्किन्धः ॥ * ॥ पार्वतः ॥ * ॥ येऽत्र कच्छादिषु च पठ्यन्ते तेषां तत एवाणि सिद्धे नृतत्स्थलक्षणेऽकञि । अन्येषां च राष्ट्रलक्षणेऽकञि प्राप्ते वृद्धेभ्यश्छ बाह्लीकग्रामेभ्यष्ठञ्ञिठयोः शेषेभ्योऽणि प्राप्ते वचनम्[५] ॥ ३५२ ॥ इति सिन्ध्वादिः[६] ॥

शुण्डिका कुचवारो[७]ऽथ सर्वसेनशटौ शकः ।
सर्वकेशरहौ[८] बोधश्चणकः शङ्खशंकरौ[९] ॥ ३५३ ॥

शुण्डिका ग्रामः । अभिजनोऽस्य शौण्डिक्यः ॥ अयं वामनमताभि-

---

१ गन्दिका° E.—A. om. text and comm.

२ Thus Hem., K. V. ed.; गन्दिका Bö., Yajñ.

३ क्रौष्टुकः । क्रोष्टु° B. C.; °क्रोष्टुकशुक F.

४ ? क्रोष्टुशब्दो B. C. K.

५ °ठञ्ञिठयोर्वचनं ॥ B. C. F. K.—Cf. Pâṇ. iv. 2, 134; 124; 114; 117.

६ This *gaṇa* includes Pâṇ.'s and Hem.'s सिन्ध्वादि and तक्षशिलादि (P. iv. 3, 93).—Hem.'s तक्षशिलादि not found in MS., though referred to. [It may however form part of सिन्ध्वादि, which seems incomplete in the MS.]

७ ? Thus E.; कूचवारो B. C. D. F. K. (P. iv. 3, 92); cf. śl. 244.

८ रहो B. D. K.; °केशारहो F.; °केशहरौ E.; °केरांशहो C.

९ वोधो चणकः संखशंकरौ E.; वोधा वणकः शंकरौ ॥ D.; बोधक्षणकः° B.; A. om. text and comm.

शाथः । पाणिन्यादयस्तु शण्डिकस्य ग्रामजनपदवाचिनः शाण्डिक्य इत्युदाहरन्ति[1] ॥ * ॥ कौचवार्यः ॥ * ॥ सर्वसेना जनपदः । सार्वसेन्यः ॥ * ॥ शटा जनपदः । शाट्यः ॥ * ॥ शका जनपदः । शाक्यः सुगतः[2] ॥ रक इत्यपि शकटाङ्गजः[3] ॥ * ॥ सर्वकेशा जनपदः । सार्वकेश्यः ॥ * ॥ राह्यः । अयं भोजमतेन । वह इति वामनः[4] ॥ * ॥ बौध्यः ॥ * ॥ चाणक्यः[5] ॥ * ॥ शाङ्ख्यः[6] कपिलः ॥ * ॥ शांकर्यः ॥ कत इत्यपि वामनः ॥ * ॥ राष्ट्रवाचिभ्योऽकञि शेषेभ्योऽणि प्राप्ते वचनम् ॥ २५२ ॥ इति शुण्डिकादिः ॥

कर्णाक्षिकेशा नखपादगुल्फ-
भ्रूशृङ्गदन्तौष्ठमुखास्यपृष्ठम् ।

कर्णादिपचान्मूलंजाहतिरित्यनेन[7] कर्णादेः शब्दगणात्पचशब्दाच्चास्य मूलमित्यर्थे जाहतिप्रत्ययौ भवतः ॥ * ॥ कर्णस्य मूलम् । कर्णजाहम् । यथा ।

अपि कर्णजाहविनिवेशिताननः[8] ॥

यथा च । दधाना वलिभं मध्यं कर्णजाहविलोचना ।
वाक्चेशातिसर्वेण चन्द्रलेखेव पचती[9] ॥

अक्षिजाहम् ॥ * ॥ केशजाहम् ॥ * ॥ नखजाहम् ॥ * ॥ पादजाहम् ॥ * ॥

---

१ वामनामताभिप्रायेण °शांडिकस्य शांडिक्य° D.—Hem. also शण्डिक.

२ D. om. सुगतः.

३ रेक इति° C.; D. adds सौद्धोदनिः ।.—All other works have रक.

४ B. C. om. राह्यः; अय श्रीभोजमतेत्वह इति वामनः D.—The other works have neither word.

५ बाणाख्यः B. C.; चाणक्यः D.—चणक Hem.; om. others.

६ Thus MSS.; °कापिलः F.—The other works also read शङ्ख.

७ cf. P. v. 2, 24; 25.

८ Mâlatîm. v. sl. 8. [चयि for चपि B. F. K.]

९ Bhaṭṭik. iv. 16.

गुल्फजाहम्। गुल्म[1] इत्यपि चन्द्रः ॥ * ॥ भ्रूजाहम् ॥ * ॥ शृङ्गजाहम् ॥ * ॥ दन्तजाहम् ॥ * ॥ ओष्ठजाहम् ॥ * ॥ मुखजाहम् ॥ * ॥ आस्यजाहम्[2]। अयं शकटाङ्गजमतेन ॥ * ॥ पृष्ठजाहम्। अयं वामनमतेन ॥ पुष्प[3]। इति चन्द्रादयः ॥ वल्कफले[2] अपि शकटाङ्गजः ॥ * ॥ इति कर्णादिः ॥

कर्णादिरेषोऽथ च पीलुशम्याव्
अश्वत्थकर्कन्धुकरीरयुक्तौ[4] ॥ ३५४ ॥

पील्वादेः पाके कुण इत्यनेन पील्वादेः शब्दगणादस्य पाक इत्यर्थे कुणप्रत्ययो भवति ॥ * ॥ पीलूनां वृक्षाणां फलानां वा पाकः। पीलुकुणः ॥ * ॥ शमीकुणः ॥ * ॥ अश्वत्थकुणः ॥ * ॥ कर्कन्धुकुणः ॥ * ॥ करीरकुणः ॥ ३५४ ॥

कुवलं बदरं पुष्पकर्कन्धूखदिरास्तथा।
बदरीकुवलीशब्दौ शाकटायनसंमतौ[4] ॥ ३५५ ॥

कुवलकुणः ॥ * ॥ बदरकुणः ॥ * ॥ पुष्पकुणः। अयं चन्द्रमतेन ॥ * ॥ कर्कन्धूकुणः ॥ * ॥ खदिरकुणः ॥ * ॥ बदरीकुणः ॥ * ॥ कुवलीकुणः ॥ ३५५ ॥ इति पील्वादिः ॥

रैवतिकबैजवापी गौरग्रीविस्तथौदमेघिश्च।
स्वापिशिरथौदवापिः परिपठितः क्षैमवृत्तिश्च[5] ॥ ३५६ ॥

रैवतिकादेश्छ इत्यनेन रैवतिकादेः शब्दगणाद् अस्येदमित्यर्थे

---

१ गुल्फ D.
२ Thus Hem.; om. others.
३ Thus Hem.; the others पृष्ठ.
४ A. om. text and comment.
५ स्वापिशि° B.C.F.K.; चैमवृत्तिश्च E.; चैमवृकिश्च D.; A. om. text & comm.

कप्रत्ययो भवति ॥ * ॥ रेवत्या अपत्यं रैवतिकः । रेवत्यादेष्ठण् इत्यनेन ठणि । रैवतिकस्यायं रैवतिकीयः शकटाश्वादिः ॥ * ॥ बीजवापस्यापत्यं बैजवापिः । बैजवापीयः ॥ * ॥ गौरग्रीवीयः ॥ * ॥ औदमेघीयः ॥ * ॥ स्वः पिशः स्वपिशः । तस्यापत्यं स्वापिशिः[1] । अत एव गणपाठाद् द्वारादेरित्यनेन टैज् न भवति[2] ॥ * ॥ औदवापीयः ॥ औदवाहिरित्यन्ये[3] ॥ * ॥ चैमवृत्तीयः[4] ॥ * ॥ अस्यापि शिष्येत्यादिना[5] ऽकञि प्राप्ते वचनम् ॥ ३५६ ॥ इति रैवतिकादिः ॥

गोहविःखरदरासुरमेधा[6]
 अष्टकायुगखदा[7] विषकूपौ ।
सुक्स्वदाध्वसहिताक्षरवेदाव्
 ऊधसोऽनङि नभेऽपि च नाभेः[8] ॥ ३५७ ॥

गवाद्योस्तु य इत्यनेन गो । इत्यादेः शब्दगणाद् उवर्णान्ताच्च यप्रत्ययो भवति वक्ष्यमाणेष्वर्थेषु ॥ * ॥ गव्यम् ॥ * ॥ हविर्होतव्यं वस्तु । हविषे हितं तदर्थं वा । हविष्यम् ॥ * ॥ खर्यम्[9] ॥ * ॥ दर्यम् ॥ * ॥ असुर्यम् ॥ * ॥ मेध्यम् ॥ * ॥ अष्टका श्राद्धकालः । अष्टक्यम् ॥ * ॥ युगाय हितं युगोऽस्य स्यादिति वा । युग्यम् ॥ * ॥ खदतीति खदो

---

१ स्वः॰ स्वपिशः॰ F.; स्वापिशिः B. F. K.; lacuna C.

२ See sl. 167; P. vii. 3, 4.

३ औदवापि Bö., Yajñ.; औदवाहि Kâṣ. V. ed., *a.*, Hem.

४ चैमवृत्तीयः B. C.; चैमवृ-यः D. —? चैमधृत्वि with Hem., and sl. 205, 320; चैमवृद्धि Bö., Yajñ., K. V. ed.; चौम। वृत्ति *a.*

५ अस्यांशिष्ये॰ B. C. K.—Cf. P. iv. 3, 126.

६ गोहविःस्वर॰ D. E. F.

७ ॰युगषदा B. F. K.; युगपदी C.

८ श्रुक्॰ D. F.; स्कदा॰ F.; A. om. text and comment.

९ ? स्वर्यं D. F. (cf. note 6). — खर Bö., Yajñ., Kâṣ. V. ed., Hem.; स्वर Kâṣ. V. *a.*

हिंसकः । खद्यम्[१] ॥ * ॥ विष्यम् ॥ * ॥ कूप्यः ॥ * ॥ सुच्यः ॥ * ॥ खदा[२] कुद्दाली । तदर्थं खद्यं लोहम् ॥ * ॥ अध्वन्यः ॥ * ॥ अचर्यः ॥ * ॥ वेध्यः । अयं वामनमतेन ॥ * ॥ ऊधस इत्यूधःशब्दस्यानङादेशे[३] इति पाठः । ऊधसे हितः । ऊधन्यो[४]ऽभ्यङ्गः ॥ * ॥ नाभये हितम् । नभ्यमञ्जनम् । नभ्योऽचः ॥ प्राण्यङ्गवाचिनस्तु नाभिशब्दादुत्तरसूत्रेण[५] य एव । नाभ्यं तैलम् ॥ ३५७ ॥

शुनो यण[६] इति ज्ञेयं दीर्घत्वं च विभाषया ।
कूर्पबीजक्षरा[७] दीसबर्हिःशब्दौ मताविह ॥ ३५८ ॥

शुने हितं शुन्यं शून्यं च[८] । रक्षपालमात्रेणापि रहितं गृहं कुटीरकादि पर्वतारण्यादिस्थानं[९] तूपचारेण ॥ * ॥ कूर्प्यो[१०] देशः ॥ * ॥ बीजेभ्य इमे । बीज्या व्रीहयः ॥ * ॥ क्षरायेदम् । क्षर्यं काष्ठम् ॥ * ॥ दीसः[११] क्षेपः । तदर्थं काष्ठं दीस्यम् ॥ * ॥ बर्हिर्दर्भः । बर्हिष्यम् ॥ ३५८ ॥

इति गवादिः ॥

---

१ षद्तीति षद्ः॰ F.; षद्यं B. F. K.; lacuna C.

२ Thus also Bö.; खद Yajñ., Hem., K. V. ed.; om. *a*.—खदो विद्रावणं तस्मै हितं खद्यं पौरुषम् Yajñ. [? कुद्दालो all MSS., cf. p. 363, note 3].

३ ॰स्यानञादेशे F.; ॰स्य नञादेशे B. K lac. C.; ॰स्य नञ्यादेशे D.

४ ऊधस्यो B. K.; औधस्यो F.; lacuna C.

५ Cf. Pâṇ. v. 1, 6.

६ शुणो यण E.

७ कूपबीज॰ B. E. F. K.; lac. C.—A. om. text and comment.

८ B. C. D. K. om. शून्यं च.

९ रहितगृहकुटीरं को पर्व॰ D.—Hem. has a special rule vii. 1, (34) शुनो वश्चोदूत् ॥ ॰शुने हितं शुन्यं शून्यं ॥

१० ? Thus D.; कूप्यो B. C. F. K.—K. V. *a*. has कूप and कुप; the others कूप only.

११ दीश Hem.; दीप्त (*v.l.* दीस) Bö.; om. K. V.; दीपनं दीप्तनम् दीप्त्यमिंधनम् Yajñ.

अपूपयूपौ[1] कटकोऽथ किण्वः
सूपौदनौ तण्डुलकर्णवेष्टौ ।
अवोषदीपौ[2] पृथुकश्च पत्त्रं
स्थूणार्गलाश्वा मुसलोऽपि पूपः[3] ॥ ३५९ ॥

हव्यापूपादेर्वेत्यनेन वक्ष्यमाणेष्वर्थेषु हविर्विशेषवाचिनोऽपूपादेश्च यप्रत्ययो भवति वा ॥ * ॥ आमिक्ष्यम् आमिक्षीयं[4] दधि ॥ * ॥ अपूप्यम् अपूपीयम् अन्नम् ॥ यवापूप्यम् । यवापूपीयम् ॥ * ॥ यूपो यज्ञस्तम्भः । यूप्यम् । यूपीयम् ॥ * ॥ कटक्यम् । कटकीयं हेम ॥ * ॥ किण्वं मदिराकिट्टः[5] । किण्व्यम् । किण्वीयम् ॥ * ॥ सूप्यम् । सूपीयम् ॥ * ॥ ओदन्यम् । ओदनीयम् ॥ * ॥ तण्डुल्यम् । तण्डुलीयम् ॥ * ॥ कर्णवेष्ट्यम् । कर्णवेष्टीयम् ॥ कर्णवेष्टक[6] इत्यन्ये ॥ * ॥ अवोष्याः । अवोषीयाः[7] कलायाः ॥ * ॥ दीप्यम् । दीपीयं वेश्म ॥ * ॥ पृथुक्याः । पृथुकीया व्रीहयः ॥ * ॥ पत्त्र्यम् । पत्त्रीयम् ॥ अश्वपत्त्र्यम् अश्वपत्त्रीयमित्यपि ॥ * ॥ स्थूण्यम् । स्थूणीयं काष्ठम् ॥ * ॥ अरेण कर्षणेन गलति । अर्गला[8] दारुमयो लोहमयो वा दण्डः । अर्गल्यम् । अर्गलीयम् ॥ अयं भोजमतेन । वामनाद्यास्त्वर्गल इति पेठुः ॥ * ॥ अश्व्यम् । अश्वीयम् ॥ * ॥ मुसल्यम् । मुसलीयम्[9] ॥ * ॥ पूप्यम् । पूपीयम्[10] ॥ * ॥

---

१ अपूपपूपौ F. K.

२ अभ्योषदीपौ B. C.; अभूषदीपौ E.; अवापदीपौ F.; आवाषदीपौ D.

३ मुशलो° B. E. F. K.; यूपः B. K.; यूषः F.; lac. C.; A. om. text and comm.

४ आमीक्ष्यं आमीक्षीक्षीयं D.

५ किण्वं पापं तस्मै हिता किण्व्या कुसंगतिः Yajñ.

६ Thus all other works.

७ आवाष्याः आवाषीयाः D.; अवाप्याः अवापीयाः F.—The other works have अवोष, अभ्यूष, अभ्येष (om. Hem.), and अभ्योष.

८ अर्गल B. C. D.—Bö., Yajñ., K. V. अर्गल; Bö., Yajñ. also दुर्गल; Hem. दुर्गल, दुल्ज, दुल्जलक.

९ मुशल्यं मुशलीयं D. F.

१० यूष्यं यूषीयं B. C. F. K.

शाकटायनमतमाश्रित्यान्नविकाराश्चेति न पठितम् । एभ्यस्तु सुर्याः सुरीयास्तण्डुला इत्याद्युदाहरणम् । सादेश्चेत्यधिकारात्प्रदीप्यं प्रदीपीयमित्यादि[1] । अन्ये तु प्रदीपशब्दमपि[2] पठन्ति । तन्मते नियमार्थं विदीपीयमित्यादि । अन्नविकारेभ्यस्त्वर्थपरत्वान्न[3] भवति । यवसुरीयम् । पिष्टसुरीयम् । अत एवापूपाद्यन्नविकाराणां पृथग्ग्रहणमर्थवद्भवति । अपूपादिषु येऽन्नभेदशब्दा अपूपादयस्तेषां केनचिदाकारसादृश्येनार्थान्तरवृत्तौ प्रत्ययार्थमुपादानमिति शकटाङ्गजः । अस्माकं त्वयमाशयः । शष्कुलीमोदकप्रभृतयोऽन्नविकाराः पृथुकापूपादयस्त्वन्नमेव[4] विशिष्टावस्थं नान्नविकार इति पृथगुपादानम् ॥ ३५९ ॥

इत्यपूपादिः ॥

इति

श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितायां

स्वोयगणरत्नमहोदधिवृत्तौ शेषसाध्वर्थभवाख्यानागतार्थ-

कृताभिजनपाकेदमर्थविहिततद्धितप्रत्ययगणनिर्णयो

नाम पञ्चमोऽध्यायः समाप्तः ॥

---

१ °सुदीप्यं सुदीपीयमित्यादि D.

२ प्रतीपशब्द° B. F. K.; अन्ये कृगुतीय° C.—All other works include प्रदीप in the *gaṇa*.

३ °अर्थे परत्वान्न D.

४ पृथुकाभ्यूषादयस्त्वन्नमेव B. F. K.; पृथुकाप्रषोदय° C.; पृथुकापूपाद्यो अन्नमेव D.

अथ षष्ठोऽध्यायः ॥

**संशयषष्ठान्नव्रतभारतरामायणैकभक्तानि ।**
**अष्टममासक्षपणोपवासपारायणानि स्युः[1] ॥ ३६० ॥**

तत्संशयादेः करोतीत्यनेन द्वितीयान्तात्करोतीत्येतस्मिँल्लोकप्रसिद्धेऽर्थे ठञ् भवति ॥ * ॥ संशयं करोति । सांशयिकः स्थाण्वादिः ॥ * ॥ षाष्ठान्नव्रतिकः ॥ * ॥ भारतिकः ॥ रामायणिकः ॥ अनयोः करोतिः कथने वर्तते ॥ * ॥ ऐकभक्तिकः ॥ * ॥ आष्टमिकः ॥ * ॥ मासक्षपणिकः ॥ * ॥ औपवासिकः ॥ * ॥ पारायणं साकल्यवचनम् । पारायणिकः ॥ अथवा पारायणमिति सामान्येनाभिधानाद्धातुपारायणं नामपारायणं वाभिधीयते । तत्करोति पठनपरिसमाप्तिं नयतीत्यर्थः । एतच्च करोतेरशेषधात्वर्थानुगतवृत्तित्वाल्लभ्यते । तदुक्तम् ।

विकारभेदसंसर्गोत्कर्षहानादिरूपतः ।
करोतिः परिणामार्थे[2] चित्रमाह स्वभावतः ॥

आकृतिगणोऽयम् । तेन तुरायणचान्द्रायणप्रभृतयो[3] द्रष्टव्याः ॥ ३६० ॥ इति संशयादिः[4] ॥

**अजशङ्कूत्तरा वारि कान्तारस्थलजङ्गलाः ।**

तेनाजाद्यादेराहृतं वेत्यनेनाजादिपूर्वपदात्पथिशब्दात् तेनाहृतं तद्गच्छतीत्येतस्मिन्नर्थे ठञ् भवति ॥ * ॥ अजपथेनाहृतम् अजपथं[5]

---

१ शंशय °च्चपणौयवास° E.; A. om. text and comment.
२ परिमाणार्थे D.; lac. C.
३ तेनन्तरायणचांद्रायण° B.; तेनांतरायण° D.; lac. C.
४ शंशयादिः E.—Cf. P. v. 1, 72-3.; Hem. vi. 4, (80. 89. 90).
५ अजपथा D.; lac. C.

गच्छति वा । आजपथिकम् । आजपथिकः ॥ * ॥ शङ्कुरिव ऋजुः पन्थाः । शङ्कुपथः । शाङ्कुपथिकम् ॥ * ॥ औत्तरपथिकम् ॥ * ॥ वारिपथिकम् ॥ * ॥ कान्तारपथिकम् ॥ * ॥ स्थालपथिकम् ॥ * ॥ जाङ्गलपथिकम् ॥ * ॥ इत्यजादिः[१] ॥

**ऋतुस्तथोपवस्ता च प्राशिता च बुधैर्मतः[२] ॥ ३६१ ॥**

ऋत्वादिभ्योऽण् इत्यनेन ऋत्वादेरस्य प्राप्त इत्येतस्मिन्नर्थेऽण् भवति ॥ * ॥ ऋतुः प्राप्तोऽस्य । आर्तवं पुष्पम् । आर्तवी कलिका । आर्तवः पुष्पबन्धः ॥ * ॥ उपवस्ता । उपवासव्रती । स प्राप्तोऽस्य । औपवस्तं पर्व भोज्यं वा ॥ * ॥ प्राशिता भोक्ता प्राप्तोऽस्य । प्राशितं भोजनम् । प्राशिती रसवती ॥ * ॥ ऋत्वादयः प्रयोगगम्याः ॥ ३६१ ॥ इति ऋत्वादिः[३] ॥

**संतापसंघातनिसर्गयोगोपवाससंपादनसंपरायाः ।
संग्रामसंयोगविसर्गमांसप्रवासमांसौदनसंनिपाताः[४] ॥ ३६२ ॥**

तस्मै प्रभवति संतापादिभ्य इत्यनेन संतापादेश्चतुर्थ्यन्तात्तस्मै प्रभवतीत्येतस्मिन्नर्थे ठञ् भवति ॥ * ॥ संतापाय प्रभवति । सांतापिकं दुर्जनसंगतम् । सांतापिको ग्रीष्मकालः । सांतापिकी नीचसेवा ॥ * ॥ सांघातिकम् ॥ * ॥ नैसर्गिकम् ॥ निःसर्ग[५] इत्यपि वामनः ॥ * ॥ यौगिकम्[६] । अयं शकटाङ्गजमतेन ॥ * ॥ औपवासिकः ॥ * ॥ सांपाद-

---

१ See P. v. 1, 77; Hem. vi. 4, (87).

२ प्राशिता विबुधै॰ F.; A. om. śloka and comment.

३ See Kâś. V. v. 1, 107 (उपवस्त्रादि); Hem. vi. 4, (126) ऋत्वादिभ्योऽण् ॥

४ A. om. text and comment.

५ Hem. has both; निसर्ग Bö., Yajñ., K. V. ed.; निःसर्ग a.

६ With Hem. this *gaṇa* is योगादि; cf. Pâṇ. v. 1, 102.

निकः ॥ * ॥ सांपरायिकः ॥ * ॥ सांग्रामिकः ॥ * ॥ सांयोगिकः ॥ * ॥ वैसर्गिकः ॥ * ॥ मांसिको व्याधागमः[1] ॥ * ॥ प्रावासिकः ॥ * ॥ मांसौदनिकः ॥ सक्तुमांसौदन[2] इत्यन्यः ॥ * ॥ सांनिपातिकः ॥ ३६२ ॥

संनाहौदनसंवेशसक्तुसंमोदनं[3] निरः ।
पेषघोषावुपात्सर्गः पेषवासक्रमाः[4] समः ॥ ३६३ ॥

सांनाहिकः ॥ * ॥ औदनिको दानपतिसंयोगः ॥ * ॥ सांवेशिकः[5] ॥ * ॥ सक्तुभ्यः शक्तः । साक्तुकः ॥ * ॥ संमोदनं हर्षः । सांमोदनिकः ॥ * ॥ नैष्पेषिकः ॥ * ॥ नैर्घोषिकः ॥ * ॥ औपसर्गिकः ॥ * ॥ सांपेषिकः ॥ * ॥ सांवासिकः ॥ * ॥ सांक्रामिकः[6] । अयं शकटाङ्गजमतेन ॥ ३६३॥

इति संतापादिः ॥

व्युष्टोपवासौ परिषत्प्रवासौ
संग्रामतीर्थं समुदायनित्यम् ।
प्रवेशनो निष्क्रमणः समोऽस्मेर्
घातः[7] पदं पीलुपरं च मूलम् ॥ ३६४ ॥

व्युष्टादिभ्योऽण् इत्यनेन व्युष्टादेस्तत्र कार्यं दीयत इत्येतयोरर्थयोरण् भवति ॥ * ॥ व्युष्टं प्रभातम् । तत्र कार्यं दीयते वा । वैयुष्टम् ॥ * ॥

---

१ व्याध्यागमः B. C. K.

२ मांसौदिकः । सक्तुः । मांसौदन इ° F.; Hem. has both compounds.

३ °संदेशसक्तु° B. C. F. K.; °सवेश-सक्तु° D.; संमोदना MSS.

४ पेषवाशक्रमाः E.; A. om. text and comment.

५ सांवेधिकः D.; सांदेशिकः B. C. F. K.—Hem., K. V. *v.l.* संवेश; Bö., Yajñ. संवेष; Bö., Yajñ., K. V. *a.*, *v.l.* ed. also संवेशन.

६ सांक्रमिकः F.; cf. śl. 166.—Only Hem. has this word.

७ घातं E.; A. om. text and comment.

औपवासम् ॥ * ॥ पारिषदम् ॥ * ॥ प्रावासम् ॥ * ॥ सांग्रामम् ॥ * ॥ तैर्थम् ॥ * ॥ सामुदायम् ॥ * ॥ नित्यशब्दो दिवसाभ्यावृत्तिविषयो[1] द्रष्टव्यो व्युष्टसाहचर्यात् ॥ ननु कूटस्थाकाशादिवस्तुवृत्तिस्ततः सर्वे ऽध्वभावकाला इति सप्तमीप्रसङ्गे द्वितीया स्यात् । नैत्यः । सर्वकालं दीयत इत्यर्थः ॥ * ॥ प्रवेशने गृहान्नगराद्वा कार्यं दीयते वा । प्रावेशनम् ॥ * ॥ एवं नैष्क्रमणम् ॥ * ॥ सांघातम् ॥ * ॥ आग्निपदम् ॥ * ॥ पैलुमूलम् ॥ * ॥ परिषत्समुदायशब्दौ न्यासकृन्मतेन ॥ * ॥ आकृतिगणश्चायम् । तेन लोकयात्राप्रभृतयो द्रष्टव्याः ॥ ३६४ ॥ इति व्युष्टादिः ॥

चूडा श्रद्धा द्वादशाहस्तथायं
ज्ञेया याचा देवतीर्थात्परेह ।
स्वर्गः कामो वो[2] धनायुर्यशांस्य-
नेको लक्ष्यो धीमता लक्ष्यतश्च[3] ॥ ३६५ ॥

चूडास्वर्गोत्थापनास्वस्तिवाचनादेरण्यच्छठञ्लुगित्यनेन[4] चूडादिस्वर्गाद्युत्थापनादिस्वस्तिवाचनादीत्येतेभ्यो गणेभ्यः प्रथमान्तेभ्यो ऽस्य प्रयोजनमित्येतस्मिन्नर्थे ऽण्यच्छठञ्लुगित्येते[4] क्रमेण भवन्ति ॥ * ॥ चूडा प्रयोजनमस्य । चौडम् । यथा ।

स वृत्तचौलश्चलकाकपक्षैर्
अमात्यपुत्रैः सवयोभिरन्वितः[5] ॥

---

१ दिचसाषयो D.

२ °कामो बाधः नायु° B.; कामो बाधना° K.; स्वर्गीकाम्या बाधना° C.; कामो धो धना° F. (cf. n. १ next page); कामो थो D.

३ °यशस्यलोकाल्लक्ष्या धी° D.; °अनोकालच्यो° E.; A. om. text and comment.

४ °ठञ्ल्सुगि° D.

५ Raghuv. iii. 28.

एवं आद्धम् ॥ * ॥ द्वादशाहम् ॥ * ॥ दैवयाची पुष्पप्रचितिः ॥ * ॥ तैर्थयात्र्यन्नपङ्क्तिः ॥ * ॥ इति चूडादिः ॥

स्वर्गः प्रयोजनमस्य । स्वर्ग्यं धनम् । स्वर्ग्या देवपूजा ॥ * ॥ काम्या इष्टयः[१] ॥ * ॥ धन्यम् ॥ * ॥ आयुष्यम् ॥ * ॥ यशस्या विद्या ॥ ३६५ ॥ इति स्वर्गादिः ॥

उदुपाभ्यां परात्स्थापेरनोऽनोः प्रवचेर्वचेः[२] ।
विशेर्वासेस्तथाङ्प्राच्च रुहेः समा विशे रभेः[३] ॥ ३६६ ॥

उत्थापनम् उत्थापना[४] वा प्रयोजनमस्य । उत्थापनीयम् ॥ उपस्थापनीयम् ॥ * ॥ अनुप्रवचनीयम् ॥ अनुवचनीयम् ॥ अनु पश्चादाचनम् अनुवाचनमिति[५] वामनः ॥ अनुवादनम् । अनुपानमित्यपरः[६] ॥ * ॥ अनुवेशनीयम् ॥ संवेशनमिति वामनः ॥ * ॥ अनुवासनीयम् ॥ * ॥ आङ्प्राच्चेति चकारेणानोरित्यनुकृष्यते । आरोहणीयम् ॥ प्ररोहणीयम्[७] ॥ अनुरोहणीयम्[८] ॥ * ॥ समावेशनीयम् ॥ * ॥ समारम्भणीयम् ॥ ३६६ ॥

विशेः पदे रुहेः पूरेः समापेश्च सपूर्वतः ।
स्वस्तिवाचनं पुण्याहवाचनं शान्तिवाचनम्[९] ॥ ३६७ ॥

---

१ F. adds अधस्य:

२ °परा स्थापिरतो° प्रवदेर्वघेः E.; °अतोऽनोः° F.; °स्थापेनोनोः C. K.

३ रजः D.; रतः E.; A. B. om. text and comment.

४ उपस्थापना F.; उत्थीयना D.

५ Bö., Yajñ. have both; K. V. ed. अनुवचन only; Hem. om. this and अनुप्रवचन.

६ अनुपादनमित्य° C. F. K.; °इत्यप्यपरः D.—Hem. has अनुवादन and अनुपान; Kâś. V. ed. अनुवादन; Bö., Yajñ., K. V. β. om. both.

७ प्रारोहणीयं D. F. K.—प्ररोहण K. V., Hem.; om. Bö., Yajñ.

८ Thus Hem., Yajñ.; अन्वारोहण Bö., K. V., Hem.

९ A. B. om. text and comment.

अन इत्यनुवर्तते ॥ गृहप्रवेशनं प्रयोजनमस्य । गृहप्रवेशनीयम् ॥ * ॥ अश्वप्रपदनीयम् ॥ * ॥ प्रासादारोहणीयम् ॥ * ॥ प्रपापूरणीयम् ॥ * ॥ व्याकरणसमापनीयम् ॥ * ॥ सर्वत इति गृहादिपूर्वपदोपेतात् ॥ * ॥ इत्युत्थापनादिः[१] ॥

स्वस्तिवाचनं प्रयोजनमस्य । स्वस्तिवाचनम् ॥ * ॥ पुण्याहवाचनम् ॥ * ॥ शान्तिवाचनम् ॥ * ॥ उत्थापनादयः स्वस्तिवाचनादयश्च प्रयोगगम्याः ॥ * ॥ इति स्वस्तिवाचनादिः[२] ॥ ३९७ ॥

देवतिलदेशविरतेर्महतः सामायिकाद्व्रतं[३] गदितम् ।
दीक्षाऽवान्तरपूर्वा त्रिश्रुतिकाः[४] स्युर्महानाम्न्यः ॥ ३९८ ॥

तच्चरति देवव्रतादिभ्यो डिन् इत्यनेन तदिति द्वितीयान्ताद् देवव्रतादिशब्दगणाच्चरतीत्यर्थे डिन् भवति ॥ * ॥ देवव्रतं चरति । देवव्रती ॥ * ॥ तिलव्रतं चरति । तिलव्रती ॥ * ॥ देशविरतिव्रती ॥ * ॥ महाव्रती ॥ * ॥ सामायिकव्रती[५] ॥ * ॥ अवान्तरदीक्षी ॥ * ॥ इति देवव्रतादिः[६] ॥

त्रिश्रुतिका इति त्रिशब्दो[७] महानाम्न्यादिरित्यर्थः । महानाम्न्यादेरित्यनेन महानाम्न्यादेर्द्वितीयान्ताच्चरतीत्यर्थे ठञ् ॥ * ॥ महानाम्न्यो नाम ऋचः । तत्सहचरितं व्रतं तच्छब्देनोच्यते । महानाम्नीश्चरति । माहानाम्निकः । आख्यातरूपत्वादस्त्रीत्वाभावः ॥ * ॥ आदित्यव्रतिकः

---

१ अनुप्रवचनादि Pâṇ. v. 1, 111; उत्थापनादि Hem. vi. 4, (122).

२ Thus Hem. vi. 4, (124); पुण्याहवाचनादि Pâṇ. v. 1, 111 vârtt.

३ °देशेविरहेर्महत° E.; °विरर्महतः सामापि° D.

४ स्त्रीश्रुति D.; A. B. om. text & c.

५ सामयिक° C.; सामापिक° D.

६ Thus also Hem. (om. सामायिकव्रत and देशविरतिव्रत); अवान्तरदीक्षादि P. v. 1, 94 vârtt.

७ स्त्रीश्रुतिका° स्त्रीशब्दो D.

॥*॥ गौदानिकः[१] ॥*॥ तथाऽस्य ब्रह्मचर्यं इत्यनेन ब्रह्मचर्येऽभिधेय एषां तुल्यं रूपम् ॥*॥ इति महानाम्न्यादिः ॥ ३६८ ॥

अश्ववस्वश्मभङ्गोमावर्षोर्णा गणमित्यपि[२]।
वंशबल्वजमूलाक्षस्थूणाखट्वाकुटेष्ववः ॥ ३६९ ॥

ब्रह्मवर्चसद्व्यचोऽसंख्यामानाश्वादेर्य इत्यनेन ब्रह्मवर्चसशब्दात्संख्यामानाश्वादिवर्जिताच्च[३] द्व्यचः शब्दात् तस्य हेतुः संयोगोत्पाताविव्येतस्मिन्नर्थे[४] यप्रत्ययो भवति ॥*॥ ब्रह्मवर्चसस्य निमित्तं संयोग उत्पातो वा । ब्रह्मवर्चस्यः ॥*॥ द्व्यचः । धनस्य निमित्तम् । धन्यम् । स्वर्ग्यमित्यादि ॥*॥ संख्यामानाश्वादिप्रतिषेधः किम् । पञ्चकः । सप्तकः । प्रास्थिकः । खारीकः ॥

अश्वादेः ॥ आश्विकः ॥*॥ वासुकः ॥*॥ आश्मिकः ॥*॥ भाङ्गिकः ॥*॥ औमिकः ॥*॥ वार्षिकः ॥*॥ और्णिकः ॥*॥ गाणिकः[५] ॥*॥ इत्यश्वादिः ॥

वंशादिभारं हरति वहत्यावहतीत्यनेन वंशादेः पराद् भारशब्दाद् भारभूताद्वा वंशादेर्द्वितीयान्ताद्धरति वहत्यावहतीत्यर्थे ठञ् भवति ॥*॥ वंशभारं हरति वहत्यावहति वा । वांशभारिकः ॥*॥ बाल्वजभारिकः ॥*॥ मौलभारिकः ॥*॥ आक्षभारिकः ॥*॥ स्थौणाभारिकः[६] ॥*॥ खाट्वाभारिकः[६] ॥*॥ कौटभारिकः ॥ कुटज

---

१ पौपनिकः D.—Hem. calls this *gaṇa* गोदानादिः.

२ मणमित्यपि C. F. K.—A. om. to ऽसंख्या in the comm.; B. to य[प्रत्ययो].

३ ब्रह्मचर्येर्थे सशब्दा° A.

४ हेतुः संयोगो° A. D., cf. P. v. 1, 38.

५ माणिकः B. C. F. K.; om. D.—The other works have गण.

६ स्थौणभारिकः° C. F.; खाट्वभारिकः F.

इति वामनः[1] ॥ * ॥ ऐक्षुभारिकः ॥ * ॥ अश्वत्य इत्यपि हिम्बलः । स्रक्ष्ण[2] इत्यपि भोजः ॥ * ॥

भारभूतान्वा वंशान्हरति वहत्यावहति वा । वांशिकः ॥ बाल्वजिकः ॥ मौलिकः ॥ आक्षिकः ॥ स्थौणिकः ॥ खाड्गिकः ॥ कौटिकः ॥ ऐक्षुकः ॥ * ॥ अश्वाश्मशब्दौ गणे द्रष्टव्यौ ॥ * ॥ हरति देशान्तरं प्रापयति चोरयति वा[3] । आवहत्युत्पादयतीत्यर्थः ॥ * ॥ इति वंशादिः ॥ ३६९ ॥

छेदं भेदं संप्रयोगं विकर्षं
दोहद्रोहौ विप्रकर्षप्रकर्षौ ।
कर्षं नर्तं विप्रयोगप्रयोगौ
संवेः प्रश्नं प्रेषणं विद्धि विद्वन् ॥ ३७० ॥

छेदादेर्नित्यमित्यनेन च्छेदादेस्तदर्हतीत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति ॥ * ॥ छेदं नित्यमर्हति । छैदिकस्तरुः ॥ * ॥ भैदिकः शत्रुः ॥ * ॥ सांप्रयोगिकः ॥ * ॥ वैकर्षिकः ॥ * ॥ दौहिकी गौः ॥ * ॥ द्रौहिकः ॥ * ॥ वैप्रकर्षिकः ॥ * ॥ प्राकर्षिकः ॥ * ॥ कार्षिकः ॥ * ॥ नार्तिकः ॥ गोनर्त इत्यन्ये[4] ॥ * ॥ वैप्रयोगिकः ॥ * ॥ प्रायोगिकः[5] ॥ * ॥ सांप्रश्निकः ॥ * ॥ वैप्रश्निकः ॥ * ॥ प्रैषणिकः ॥ प्रेक्षण[6] इति शकटाङ्गजः ॥ * ॥ विराग विरङ्ग चेति गणसूत्रं वामनमतेन । वैरङ्गिकः ॥ ३७० ॥ इति छेदादिः ॥

---

१ Hem. has कुट and कुटज; the others कुटज only.

२ स्रक्ष A.; स्रक्ष्ण D.; शुक्ल B.; C. om. from इत्यपि.—Hem. has स्रक्ष्ण (appar. corr. into स्रक्ष); K. V. *a.* स्रक्ष; om. Bö., Yajñ., K. V. ed.

३ वोदयति वा A.; नोदयति वा B. C. F. K.; प्रापयति वहति चारयति D.

४ गौनर्त्त° F.—Hem. has both words; the others नर्त (K. V. ed. वर्त्त!).

५ ? प्रायौगिकः cf. ṣl. 164.

६ Thus Hem., the others प्रेषण.

दण्डार्घमेधामुसलानि[1] मेघो[2]
वधोदकेभा मधुपर्कयुक्ताः।
युगं कशासौ[3] पितृदेवता च
दण्डादिरेवं विबुधैः प्रणीतः ॥ ३७१ ॥

दण्डादेरित्यनेन दण्डादेः शब्दगणादर्हतीत्येतस्मिन्नर्थे यो भवति ॥ * ॥ दण्डमर्हति। दण्ड्यः। दण्डो दमनं न तु यष्टिः। यथा। स्थित्यै दण्डयतो दण्ड्यान्[4] ॥ ननु दण्ड्यत इति दण्ड्यः पूर्वतोत्यादिना[5] सिद्धम्। सत्यम्। दण्डमर्हतीति ठञ् प्रसज्येत[6]॥ * ॥ अर्घ्योऽतिथिः। यथा। तमर्घ्यमर्घादिकयादिपूरुषः[7] ॥ * ॥ मेध्यः[8] ॥ * ॥ मुसलघातो मुसलः। मुसल्यः[9] ॥ * ॥ मेघ्यः[10] ॥ * ॥ वध्यः ॥ * ॥ उदक्यः ॥ * ॥ इभ्यो धनी ॥ * ॥ मधुपर्क्यः श्रोत्रियो गृहागतः ॥ * ॥ युग्यो दम्यः ॥ * ॥ कशाघातोऽपि कशा। कश्यो[11]ऽश्वः ॥ * ॥ पितृदेवत्यः[12] श्राद्धकालः ॥ * ॥ आकृतिगणश्चायम्। तेन रथकन्यादयो[13] द्रष्टव्याः ॥ ३७१ ॥ इति दण्डादिः ॥

सुस्नाताभ्युन्नती बन्धुमैत्री निद्रा सुखात्परा।
सुखाच्छय्या तथो रात्रिर्दिवसः शयनं शयः[14] ॥ ३७२ ॥

---

१ °मेघा° B. C. F. K.; मुशलानि A. B. C. F. K.

२ मेधा A. B. C. F. K.; मेघा E.

३ कसासौ A. D. E.

४ Raghuv. i. 25.

५ ? मूच्यतीत्यादिना D. F.; पूच्छती° (or पृ°) A.; apparently refers to the kritya य (P. iii. 1, 95 ff.; 3, 139 ff.)

६ प्रयुज्यते A.; cf. P. v. 1, 19; 63.

७ Śiś. i. 14 (तमर्घ्यमर्घ्यादि° eds.).

८ मेघ्यः B. F. K.

९ मुशल° मुशल्यः A. B. C. F. K.

१० मेध्यः A. B. C. F.

११ कसा° कसा° कस्यो A. D.

१२ पितृदैवत्यः B. C. K.; °दैवत्यं A. D.

१३ Hem. om. these; Bö., Yajñ. have instead गुहा, अङ्ग, भाग (also K. V.), सुवर्ण.

१४ सुखाच्छरया तथा रात्रिः शयः शयनमित्यपि D. E.

सुस्नातादेः पृच्छतीत्यनेन सुस्नातादेर्द्वितीयान्तात्पृच्छतीत्यर्थे ठञ् भवति ॥ * ॥ सुस्नातं पृच्छति । सौस्नातिकः । यथा । सौस्नातिको यस्य भवत्यगस्त्यः[१] ॥ * ॥ आभ्युन्नतिकः ॥ * ॥ वान्धुमैत्रिकः ॥ * ॥ सौखनिद्रिकः ॥ * ॥ सौखशय्यिकः ॥ * ॥ सौखतपसिकः[२] ॥ * ॥ सौखरात्रिकः ॥ * ॥ सौखदिवसिकः[२] ॥ * ॥ सौखशयनिकः[३] । अयं शकटाङ्गजमतेन । अस्मन्मते तु सौखशायनिक इति स्यात् ॥ * ॥ सौखशयिकः[२] ॥ ३७२ ॥ इति सुस्नातादिः ॥

परदारा गुरोस्तल्पं माथोत्तरपदं[४] तथा ।
पद्व्यनुपदाक्रन्दजन्ययाचाः[५] प्रकीर्तिताः ॥ ३७३ ॥

परदारादेर्गच्छतीत्यनेन परदारादेर्गणाट्ठञ् भवति ॥ * ॥ परदारान्गच्छति कामयते । पारदारिकः ॥ * ॥ गुरोस्तल्पं कलत्रं गुरुतल्पम् । गौरुतल्पिकः ॥ * ॥ दाण्डमाथिकः । शौल्कमाथिकः[६] ॥ माथशब्दः पथिपर्यायः[७] ॥ * ॥ पाद्विकः ॥ * ॥ आनुपदिकः । अनुगतप्रत्युत्तरवक्ता प्रत्यासत्त्या धावति वा[८] ॥ * ॥ इष्टविपत्तावुल्बणरुदिताराव आक्रन्दः । आक्रन्दन्त्यस्मिन्नित्याक्रन्दो देश आर्तशरणं वा । आक्रन्दिकः ॥ * ॥ जान्ययात्रिकः[९] ॥ * ॥ अन्येऽपि प्रयोगगम्याः ॥ ३७३ ॥ इति परदारादिः ॥

---

१ Raghuv. vi. 61.

२ Om. D.

३ सौखशायनिकः A.; सौखशयकः D.—Hem. and K. V. also have सौखशायनिक; Bö. सुखशयन.

४ माथोत्तरपदं A.

५ °जन्ययाचा B. F. K.; यनयात्राः C.; जन्ययात्र: D.

६ दांथमाथिकः° F.; दांडमाथिकः। शौल्कमासिकः° A

७ माथशब्दः पथिपर्यायः A.; A. B. C. K. place पाद्विकः before माथशब्दः; D. om. from माथशब्दः to आनुपदिकः —The other works om. these three words, as well as आक्रन्द & जन्ययात्रा; cf. P. iv. 4, 37-8, and K. V.; Hem. has गुरुदार, भ्रातृजाया and समर्तृका instead.

८ अनुत्तरात्मत्तर° F.; अनु--प्रत्युत्तरवक्ता° C.; A. om. वा.

९ यान्ययात्रिकः B. C. F. K.; om. A.

प्रभूतस्वागतस्वस्तिपर्याप्ता गमनं स्वरः।
नित्यमाकार्यतः शब्दः प्रभूतादिगणे मतः॥ ३७४॥

आह प्रभूतादिभ्य इत्यनेन ठञ्॥ * ॥ प्रभूतमाह। प्राभूतिकः। प्रभूतं भवतां धनधान्यादिकमभीष्टं स्यादिति[1] प्रियाशिषं वदन्नेवमुच्यते॥ * ॥ स्वागतिकः[2]॥ * ॥ सौवस्तिकः॥ * ॥ पार्याप्तिकः॥ * ॥ सौवर्गमनिकः॥ * ॥ नित्यशब्द इति ब्रुवाणः। नैत्यशब्दिकः॥ मा कृथाः पापमनाचारं वेति ब्रुवाणः। माशब्दिकः॥ कार्यशब्द इति ब्रुवाणः। कार्यशब्दिकः॥ माशब्दादिभ्यो[3] वाक्यात्प्रत्ययविधानम्॥ ३७४॥ इति प्रभूतादिः॥

पर्पाश्वत्थावाकषजालव्यासा रथाश्वघासाः स्युः[4]।
कृतपद्भावः पादो निर्दिष्टोऽर्थध्वनिः कैश्चित्॥ ३७५॥

पर्पादेष्ठङ् इत्यनेन तेन चरतीत्यर्थे ठङ्[5] भवति॥ * ॥ पर्पो[6] दारुनिर्मितः शकटप्राय उपकरणविशेषः। तेन चरति। पर्पिकः। पर्पिकी[7]॥ * ॥ अश्वत्थिकः। अश्वत्थिकी[8]॥ * ॥ आकषन्ति सुवर्णमत्र परीक्षार्थमित्याकषो निकषोपलः। आकषन्ति पिंषन्त्यस्मिन्नोषधीरित्याकषः[9] पाषाण इत्येके। आकषिकः। आकषिकी॥ आकर्षो[10]

१ स्यादिति A. B. K.; स्या--दिति C.; अभीष्टदिति D.

२ Bö., Yajñ., K. V. om. स्वागत, स्वस्ति and स्वर्गमन; Hem. adds निपुण, विचित्र and विपुल.

३ नित्यशब्दादिभ्यो A.—Hem. (as P. iv. 4, 1 vârtt. and K. V., where नित्यः शब्दः। कार्यः शब्दः।) has a special *gaṇa* माशब्द इत्यादिः for these three words.

४ °जालव्यासा° E.

५ पर्पादेष्ठञि° ठञ् MSS. (which would require vṛiddhi; cf. śl. 378); P. iv. 4, 10 ष्ठन्; Hem. इकट्.

६ पार्पो A.; पर्पा C. D.

७ पार्पिकः पार्पिकी (°का C.) B. C. F. K. (Hem. पर्पिकः).

८ आश्वत्थिकः। आश्वत्थिकी (°का C.) B. C. F. K.

९ °औषधानित्याकषः A. D.

१० ? आकर्षो B. C. F. K.—The other works give neither word.

लोष्टोपकरणविशेष इति वामनः ॥ * ॥ जालिकः ॥ * ॥ व्यासो महाजालम्[1]। व्यासिकः ॥ व्याल इत्यप्यन्यः[2] ॥ * ॥ रथिकः ॥ * ॥ अश्विकः ॥ * ॥ घासिकः ॥ * ॥ पदिकः । पदातिर्लेखवाहकादिर्वा[3] ॥ * ॥ अर्थिकः[4] : ३७५ ॥ इति पर्पादिः ॥

स्युर्वेतनप्रेषणशक्तिदण्ड-
वाहार्धवाहोपनिषत्सुखानि[5] ।
वेश्मोपवस्ती भृतिपादवेशो-
पवेशशय्याः स्फिगचालजालम् ॥ ३७६ ॥

वेतनादेर्जीवतीत्यनेन तेन जीवतीत्येतस्मिन्नर्थे ठञ् भवति ॥ * ॥ वेतनेन जीवति । वैतनिकः कर्मकरः ॥ * ॥ प्रैषणिकः ॥ * ॥ शाक्तिकः ॥ * ॥ दाण्डिकः ॥ * ॥ वहनं वाहनं वा वाहः । वाहिकः[6] ॥ * ॥ आर्धवाहिकः[6] ॥ * ॥ औपनिषदिकः ॥ * ॥ सौखिकः ॥ वैश्मिकः ॥ इयं वामनमतेन ॥ * ॥ औपवस्तिकः ॥ * ॥ भार्तिकः ॥ * ॥ पादिकः ॥ * ॥ वेशो दारिकावाटः । वैशिकः ॥ * ॥ औपवेशिकः ॥ * ॥ शाय्यिकः[7] ॥ अन्ये सुखशय्येति पठन्ति । त आहुः । सुखशय्यया जीवति किं सुखं शयितवन्तो[8] भवन्त इति यः परप्रश्नेन जीवति स सौखशय्यिक इति ॥ * ॥ चलनं चालः[9] । स्फिगस्य चालः । स्फिगचालः । स्फैगचालिकः[9] ॥ पुतचाल[9] इत्यन्ये ॥ * ॥ जालिकः ॥ ३७६ ॥

---

१ महाजलं A., महाज्यलं D.—व्यास Bö., Yajñ., K.V.ed.; व्यास Hem., K.V.*a*.

२ D. om. from व्याल.—All the other works have the word.

३ यादातिः। हलवाहकादिर्वे D.

४ अर्थ्य (or अर्घ्य) Hem.; om. others.

५ °प्रेचणशक्ति° B. C. K. (K. V. ed.)

६ वाह and अर्धवाह K. V., Hem ; वाहन and अर्धवाहन Bö., Yajñ.

७ शायिकः B. C. K.; शय्यिकः F.

८ शयितंतो A.; शापितवतो D.—Hem. has it both combined and separated; the others separated only (सुखशय्याः। इति केचित Yajñ.)

९ The MSS. waver between च and व here and in the text.—Hem. has स्फिगचाल and पुतचाल; both of which are omitted by the others.

उपदेशधनुर्दण्डोपनिजस्तधनुःस्फिजः ।
उपाच्च हस्तिवेषस्थस्थानान्युपास्तिरित्यपि[1] ॥ ३७७ ॥

उपदेशेन जीवति । औपदेशिकः ॥ * ॥ धानुर्दण्डिकः ॥ * ॥ उपनिजस्तं[2] किल पैशुनम् । औपनिजस्तिकः ॥ * ॥ धानुष्कः ॥ * ॥ स्फैजिकः ॥ * ॥ औपहस्तिकः[3] ॥ * ॥ औपवेषिकः[4] ॥ * ॥ औपस्थिकः[5] ॥ * ॥ औपस्थानिकः ॥ * ॥ औपास्तिकः[6] ॥ ३७७ ॥ इति वेतनादिः ॥

उत्सङ्गपिटकावुक्तावुट्टपोत्तुपसंयुतौ[7] ।
उडुपोऽथ पिटाकश्च स्यादुत्पुटोत्पुतौ तथा[8] ॥ ३७८ ॥

हरत्युत्सङ्गादेरित्यनेन तेन हरतीत्येतस्मिन्नर्थे ठञ् भवति ॥ * ॥ उत्सङ्गेन हरति । औत्सङ्गिकः कुमारः ॥ * ॥ पैटकिकः ॥ * ॥ उत्पूर्वात् तुप तुम्प हिंसायामित्यत इगुपान्तलक्षणे के[9] । अत एव निपातनात्तकारस्य पक्षे टकारः । औट्टुपिकः[10] ॥ औत्तुपिकः[11] ॥ * ॥ औडुपिकः ॥ * ॥ पैटाकिकः ॥ * ॥ औत्पुटिकः ॥ * ॥ उद्गतं[12] पुतम् उत्पुतम् । औत्पुतिकः ॥ ३७८ ॥ इत्युत्सङ्गादिः ॥

---

१ °वेश° E.; वेषस्थास्था° B. C. D.; °वेषस्थाः स्था° K.

२ Thus also Hem.; om. others.

३ उपहस्त Bö., Yajñ., Hem.; om. Kâṣ. V.

४ औपवेशिकः B. C. K. (preceding ṣloka).—Hem. उपवेश and उपवेष; the others उपवेश.

५ उपस्थेन जीवति औपस्थिकी वराङ्गना Yajñ.

६ औपास्थिकः A.—उपास्थि Hem.; om. by the others.

७ उट्टुपोत्तप° B.K.; उड्डुपोत्तप° C.; °उड्डुपो उत्तुप° D.; °उत्तुपोत्तुटसंयुतौ E.; उट्टुपोत्तु° F.

८ उद्पो थ° स्यादुत्पुत्पुतौ तथा B. C. K.; स्यत्पुरोथशुतो प्युतः D.; °ततः E.

९ Cf. Pâṇ. iii. 1, 135.

१० ठकारः° A. F.; औट्टुपिकः F. K.

११ औत्तूपिकः A.; औत्तपिकः B. C. K.—उत्तुप । उट्टुप Hem.; उट्टुप, उत्तुप Kâṣ. V. *a.*; om. by the others.

१२ उन्नतं° A.; उद्धतं F.; औद्धतं C.

प्रोक्ता भस्त्रा भरणं शीर्षभारः
शीर्षेभारो भरटश्चांसभारः[१]।
अंसेभारः करणं पङ्कभारो
ज्ञेयः प्राज्ञैः करटोऽन्येऽपि शब्दाः[२] ॥ ३७९ ॥

भस्त्रादेष्ठङ् इत्यनेन[३] तेन हरतीत्यर्थे ठङ्[४] भवति ॥ * ॥ भस्त्रया हरति । भस्त्रिकः । भस्त्रिकी ॥ * ॥ भ्रियते भरणम् । भरणिकः ॥ * ॥ शीर्षे भारः शीर्षभारः । शीर्षभारिकः ॥ शीर्षेभारिकः ॥ * ॥ भरटः शवविशेषः । भरटिकः[५] ॥ * ॥ अंसभारिकः ॥ अंसेभारिकः[६] ॥ * ॥ करणिकः ॥ * ॥

शनैः शनैरुपचितपङ्कभारिकाः
पयोधराः प्रययुरपेतवृष्टयः[७] ॥

करटिकः[८] ॥ एतौ वामनमतेन ॥ * ॥ वातोर्मीयं गदिता म्भौ तगौ ग इति वृत्तम्[९] ॥ ३७९ ॥ इति भस्त्रादिः ॥

अक्षद्यूतोऽथ जङ्घाप्रहतं हतं गतागतम् ।
पादस्वेदनं यातोपयातं कण्टकमर्दनम् ॥ ३८० ॥

---

१ चरटश्चांसभारः E.; °चांशभारः B. D. F. K.

२ अंशेभारः° D.; आंशभारः° F.

३ भस्त्रादिष्ठञि° A. (cf. śl. 375).

४ ठञ D.; तद्बु A.

५ ?सरटः° C.; भरतः° A.; भारटिकः A. D.—सरटः शवविशेषः सरटिकः । भरटेति केचित् Yajñ.; भरट Bö., Kâś. V., Hem.

६ अंशभारिकः। अंशेभारिकः MSS. —Hem. has the above two and अंगभार, अंगेभार.

७ Śiś. 17, 63 (पयोमुचः° eds.); D. om. from शनैः.

८ The other works omit करण, करट and पङ्कभार.

९ वातोर्म्मी स्भौ गदिता° A.; om. D.; °तगौ गुरुश्चेत् । इति° F.

निर्वृत्ते[1]ऽक्षद्यूतादेरित्यनेनैतस्मात् तेन निर्वृत्त इत्यर्थे ठञ् भवति ॥ * ॥ अक्षद्यूतेन निर्वृत्तम्। आक्षद्यूतिकम् ॥ * ॥ जाङ्घाप्रहृतिकम् ॥ * ॥ जाङ्घाप्रहृतिकम् ॥ * ॥ गतं च तद् आगतं च। गतागतम्। गातागतिकम् ॥ गतानुगतमित्यन्ये ॥ * ॥ पादयोः स्वेदनं पादस्वेदनम्। पादस्वेदनिकम् ॥ पादस्वेद इत्यन्ये ॥ * ॥ यातोपयातिकम् ॥ यातिकम् औपयातिकमित्यन्ये[2] ॥ * ॥ काण्टकमर्दनिकम् ॥ कण्टकमर्द इत्यन्ये ॥ ३८० ॥

**शर्करामर्दनं[3] सत्त्ववागङ्गानुगतानि च।**
**अन्येऽपि ध्वनयो लक्ष्या अक्षद्यूतादिनामनि ॥ ३८१ ॥**

शार्करामर्दनिकम्। शर्करामर्द[4] इत्यन्ये ॥ * ॥ सत्त्वं मनो गुणो वा। सात्त्विकः ॥ * ॥ वाचिकः ॥ * ॥ आङ्गिकः ॥ * ॥ आनुगतिकः ॥ * ॥ अन्येऽपीत्याकृतिगणत्वादिति शेषः ॥ ३८१ ॥ इत्यक्षद्यूतादिः ॥

**निकटो भिक्षुके वृक्षमूलमावसथस्तथा।**
**श्मशानाभ्रावकाशौ च निकटादौ बुधैर्मतौ ॥ ३८२ ॥**

निकटादेर्वसतीत्यनेनास्मात्तत्र[5] वसतीत्यर्थे ठञ् भवति ॥ * ॥ निकटे वसति। नैकटिकः। यो ग्रामसमीपे वसत्यारण्यको भिक्षुः स एवमुच्यते प्रसिद्धेः[6] ॥ * ॥ वार्क्षमूलिकः ॥ * ॥ आवसथिकः ॥ * ॥ श्मा-

---

१ निवृत्ते॰ throughout A. B. C. F. K.

२ Hem. combined and separate; the others combined only.

३ सर्करामर्दनं E.

४ शार्करामर्दन A.; सर्करामर्द D.—शार्करामर्दन Hem.; om. by the others.

५ निकटादीर्वं॰ A.; निकटादौ व॰ D.; cf. P. iv. 4, 73; 74.

६ नैकटिकः। आरण्यकेन नृणा। ग्रामात् कोशे (read क्रोशे) वस्तव्यमिति यस्य शाश्वतो वासः स एवोच्यते। Hem.

शानकः ॥ * ॥ आभ्रावकाशकः ॥ अभ्यवकाश[1] इति शकटाङ्गजः ॥ ३८२ ॥ इति निकटादिः ॥

महिषी मणिपाली प्रानोर्लेपिका पुरोहितः ।
प्रजापतिप्रजावत्यनुचारकविलेपिकाः ॥ ३८३ ॥

अमहिष्यादेरण् इत्यनेन अकारान्तान्महिष्यादेस्तस्य धर्म्यमित्यर्थेऽण् भवति ॥ * ॥ होतुर्धर्म्यम् । हौत्रम् ॥ * ॥ महिष्या धर्म्यं न्याय्यं युक्तमित्यर्थः । माहिषम् ॥ * ॥ मणीन्पालयतीति मणिपाली स्त्री । माणिपालम् ॥ * ॥ प्रलिम्पत्यनुलिम्पति वा । प्रलेपिका । अनुलेपिका । प्रालेपिकम् । आनुलेपिकम् ॥ * ॥ पुरो दधाति स्म । पुरोहितः । पौरोहितम् ॥ * ॥ प्रजानां पतिः । प्रजापतिः । प्राजापतम् ॥ * ॥ प्रजा अस्याः सन्ति । प्रजावती । प्राजावतम् ॥ * ॥ अनुचरति । अनुचारकः । आनुचारकम् ॥ * ॥ विलिम्पतीति विलेपिका । वैलेपिकम् ॥ ३८३ ॥

यजमानोऽनुवाकश्च नरो वर्णकपेषिका ।

यजते । यजमानः । याजमानम् ॥ होतृयजमानेति केचित्पठन्ति । तत्र होता च यजमानश्च । होतृयजमानम् । तस्य धर्म्यं[2] हौतृयजमानम् ॥ * ॥ आनुवाकम् ॥ * ॥ नारम् ॥ * ॥ पिनष्टीति पेषिका । वर्णानां पेषिका वर्णकपेषिका[3] । अकयाजकादिभिरित्यनेन समासे ।

---

१ अभ्यवाकाश B. C. F. K.—अभ्यवकाश Hem.; cf. St. Petersb. Dict s.v. अभ्रावकाशिक and अभ्यवकाशिक.

२ B. C. K. om. from हौतृयजमानं.—हौत and यजमान Bö., Yajñ., K. V.; यजमान and हौतृयजमान Hem., whose rule अनरादेरण् (नरादि = our महिष्यादि), as the one quoted by Vardh., includes होतृ; cf. P. iv. 4, 48-9.

३ वर्णपेषिका MSS. (D. orig. °क°).

वार्णकपेषिकम्[१] ॥ अन्ये तु वर्णक पेषिकेति[२] च्छिन्दन्ति ॥ * ॥ इति महिष्यादिः ॥

### शक्तियष्ट्यष्टमा दण्ड ईषेष्टी[३] कम्पनाम्भसी ॥ ३८४ ॥

शक्त्यादेष्टीकण् इत्यनेन[४] शक्त्यादेरस्य प्रहरणमित्यर्थे टीकण् भवति ॥ * ॥ शक्तिः प्रहरणमस्य[५]। शाक्तीकः। शाक्तीकी।

स्खलन्ती न क्वचित्तैद्दण्णादभ्यग्रफलशालिनी।
अमोचि शक्तिः शाक्तीकैर्लोहजा न शरीरजा[६] ॥ * ॥

याष्टीकः। यथा धनंजयस्य।

याष्टीकं ते स्मरव्यग्राः खेचरस्त्रीहृता वराः[७]।
याष्टीकं ते स्मरव्यग्रास्तं प्रतीच्छन्ति नाभितः ॥ * ॥

अष्टमः प्रहरणमस्य[८]। आष्टमीकः। अयं जिनेन्द्रबुद्धिमतेन ॥ * ॥ दाण्डीकः ॥ * ॥ ईषा प्रहरणमस्य। ऐषीकः ॥ * ॥ इष्टिः प्रहरणमस्य[९]। ऐष्टीकः ॥ * ॥ कम्पनं प्रहरणमस्य। काम्पनीकः ॥ * ॥ अम्भः प्रहरणमस्य। आम्भसीकः ॥ * ॥ अपरेषां मते ठञेव[१०]। दाण्डिकः। ऐष्टिकः। काम्पनिकः। आम्भसिकः ॥ ३८४ ॥ इति शक्त्यादिः ॥

---

१ वर्णेषिकं A.; वार्णपेषिकं B. F. K.; वर्णपेषिकं C.

२ वर्णकपिकेति B. C. K.; वर्णकापेषिकेति F.—Hem. has वर्णक। पेषिका २ (*i.e.* also combined); the others omit all three.

३ शक्तिषष्ठ्याष्ट° A.; इषेष्टी° A. E.; °यष्ट्यमदिडेदेषेष्टी D.

४ शक्त्यादेरकणित्य° B. K.; °देरकणिरित्य° C.

५ शक्तिप्रहरणमस्य A. B. C. K.

६ Śiśup. 19, 59.

७ ? खेचरः स्त्रीमृताचराः A.; (खेचरी स्त्री नृत्यचराः C.;) °नृताचराः B. K.; °तृतावराः D.; °मृतावराः F.; [? याष्टीकन्ते°; or खेचराः स्त्री°].

८ अष्टमप्र° B. C. K.; अष्टमा प्र° A.

९ इष्टिप्रहरण° A. B. C. K.

१०. Cf. P. iv. 4, 57 (शाक्तीक & याष्टीक *ib.* 59); Hem. has the rules vi. 4, (63) शक्तियष्टेष्टीकण्। (64) वेष्ट्यादिभ्यः। (ऐष्टिकः° की। ऐष्टीकः °की).

छत्त्रं चुराप्ररोहौ च विशिकाविशिखे[१] तथा ।
अनृतं स्यादुदस्थानं पुरोडा कृषिसंयुता[२] ॥ ३८५ ॥

छत्त्रादेर्ण इत्यनेन तदस्य शीलमित्यर्थे णो भवति ॥ * ॥ छादनाद्दावरणाच्छत्त्रम् । गुरुकार्येष्ववहितस्तच्छिद्रावरणप्रवृत्तः । छत्त्रशीलः शिष्यः । छात्त्रः ॥ अन्ये त्वाहुः । छत्त्रशीलश्छात्त्रः । छत्त्रस्येव शीलमस्येत्यर्थः । छत्त्रं यथा धार्यमाणं वातातपवर्षत्राणाय भवति पुरुषस्य । एवमुपाध्यायो धार्यमाणः शिष्यस्य रागद्वेषक्रोधमोहत्राणाय भवति । स शिष्यं धर्मं ब्रूते । एवमसावुपाध्यायश्छत्त्रमिव च्छत्त्रम् । तच्छीलानुकारिशीलः शिष्यश्छात्त्र इत्युच्यते । गुरुशील इत्यर्थः ॥ * ॥ चोरणं चुरा भिदादिः । चुराशीलश्चौरः ॥ * ॥ प्रारोहः ॥ * ॥ विशिका परहृदयानुप्रवेशः । वैशिकः[३] ॥ * ॥ बहुत्वमतया विशिखेव विशिखा । वैशिखः[४] ॥ * ॥ अनृतभाषणम् अनृतम् । आनृतः ॥ * ॥ उदके स्थानम् उदस्थानम् उदवासः । औदस्थानम् ॥ * ॥ पुरो दीयत इति पुरोडा । अत एव वचनादनुपसर्गादप्यङ्[५] । पौरोडः ॥ पुरोद इत्यन्ये[६] ॥ * ॥ कर्षणं कृषिः । कार्षः ॥ ३८५ ॥

भक्षाशिक्षाविश्वधाकर्मभिक्षा
विक्षाचुक्षामन्द्रसत्यास्तितिक्षा[७] ।
स्योपस्थानं वा तपः स्याद्बुभुक्षा
छत्त्रादिर्विज्ञायतामेष दक्षैः[८] ॥ ३८६ ॥

---

१ ०विशिषे A. B. F. K.; ०विशेषे C.

२ पुरोडाः कृ० D. F.; ०संयुतः F.

३ परहृदयप्रवेशरूपा विशिखक्रियापि विशिखेत्युच्यते । वैशिखः । वैशिकोऽपि अस्यैव पर्यायः । Yajñ.

४ विशिषैव विशिषा विशिखः । A.; विशिषेव विशिखा० B.; विशिखेव विशिखः । C.

५ Cf. Pâṇ. iii. 3, 106.

६ पुरोडा Bö., Yajñ., Hem.; पुरोह Kâś. V. ed.; पुरोड and पुरोडाश Kâś. V. MS. *a*.

७ A. C. om. विचा; त्वचानुचा० D.; ०विचावृचा० E.; चिचाचुचा० F. K.; वृचा० C.

८ धीरैः । D. E

भक्ष अदने भक्षणं भक्षा । भाक्षः ॥ * ॥ शैक्षः ॥ * ॥ विश्वं दधाति । विश्वधा सुधा[१] । वैश्वधः ॥ * ॥ कार्मः ॥ * ॥ भैक्षः ॥ * ॥ विक्षुक्षी[२] इत्यपरिपठितौ धातू । विक्षणं विक्षा । वैक्षी ॥ क्षुक्षणं क्षुक्षा शौचम् । चौक्षः[२] ॥ चोक्षा वस्त्रादिवेषपङ्क्तिरिति[३] वामनः ॥ * ॥ मन्द्रशीलः । मान्द्रः ॥ * ॥ सत्यभाषणं सत्यम् । तच्छीलमस्य । सात्यः ॥ * ॥ तैतिक्षः ॥ * ॥ स्थाशब्दोऽत्र पठ्यते । स प्रादिपूर्वो गृह्यते । आतो गोऽन्तः[४] प्रादेरित्यङ्प्रत्यये । आस्था नियतविषये प्रत्याशा । संस्था । व्यवस्था । आस्थः । सांस्थ इत्यादि[५] ॥ * ॥ औपस्थानः ॥ * ॥ तापसः ॥ * ॥ चौ- भुक्षः ॥ * ॥ शकटाङ्गजस्तु चौरी तापसीत्यादौ[६] ङीविधानार्थं क्षत्रा- देरञ् इत्यनेनाञमाह । अस्मन्मते तु गौरादिपाठाश्रयणाद् ङीप्र- त्ययः सिद्धः ॥ ३८६ ॥ इति क्षत्रादिः ॥

किशरस्तगरोशीरपर्णीहरिद्रुगुग्गुलु[७] ।
हरिद्रानलदावेतौ स्थगलो[८] नरदस्तथा ॥ ३८७ ॥

किशरादेष्ठङ् इत्यनेन किशरादेरस्य[९] पण्यमित्यर्थे ठङ् भवति । किशरादयो गन्धविशेषवचनाः ॥ * ॥ किशरं पण्यमस्य । किशरिकः । किशरिकी ॥ * ॥ तगरिकः । तगरिकी ॥ * ॥ उशीरिकः । उशीरिकी ॥ * ॥

---

१ Thus also Yajñ.; ब्रह्मा F.

२ The MSS. waver throughout between च and क्ष.—विक्षा and क्षुक्षा Bö., Yajñ.; चिक्षा and चुक्षा Hem.; विक्षा and चुक्षा Kâś. V. *a.*, om. ed.

३ वस्त्रादिपंक्तिरिति A.

४ अतो गोंतः° B. C. F. K.; °गोतः D.; cf. Pâṇ. iii. 3, 106 (? गो = उपसर्ग Vop. 26, 193).

५ Hem. excludes °स्थ from the gaṇa, his rule being अङ्स्थाक्षत्रादेरञ् ।.

६ चौरतापसीत्यादौ F.

७ °शीरयणी° E.; °गुग्गुलः B. C. K.; गुग्गुला: F.; गुग्युलाः D.

८ °स्थपलो° D.; क्षगलो B. C. F. K.

९ B. C. K. waver between किशर and किसर.—किसर Bö., Yajñ., K. V. *a.*; किशर K. V. ed., Hem.

पर्णिकः । पर्णिकी ॥ हरिद्रुकः ॥ हरिद्रुपर्णीत्यन्ये[1] ॥ * ॥ गुग्गुलुकः[2] ॥ * ॥ हरिद्रिकः ॥ * ॥ नलदिकः ॥ * ॥ स्थगलिकः । स्थगर[3] इति प्रकटाङ्गजः ॥ * ॥ नरदिकः ॥ ३८७ ॥ इति किशरादिः ॥

इति

श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितायां

स्वोपज्ञगणरत्नमहोदधिवृत्तौ करोत्याहतगच्छतिप्राप्तप्रभवति-

कार्यदीयतेप्रयोजनचरत्युत्पातसंयोगहरतिवहत्यावहति-

पृच्छतिगच्छत्याहतेनचरतिजीवतिहरतिनिर्वृत्तवसति-

धर्म्यप्रहरणशीलपण्यलक्षणार्थविहिततद्धितप्रत्यय-

गणनिर्णयो नाम षष्ठोऽध्यायः

समाप्तः ॥

---

१ Hem. has them both combined and separate; Bö., Yajñ. separate only; हरिद्रायणी K. V. ed., हरिद्रापाण (!) *a.*—Bö., Yajñ., K. V. also हरिद्रा, om. Hem.

२ Thus all MSS.—गुग्गुलु & गुग्गुल Hem.; गुग्गुलु Bö., Yajñ., Kâṣ. V. ed.; गुग्गुल *a.*

३ छगर A.; A. B. C. F. om. स्थगलिकः, suppl. K.—स्थगर Hem.; स्थागल Bö.; स्थगल (छगलिक इत्यन्ये) Yajñ.; स्थल K. V. *a.*, सुमङ्गल (!) ed.

अथ सप्तमोऽध्यायः ॥

तारकाकुसुमपल्लववेगाः
पुष्पगौरवविचारपिपासाः ।
मञ्जरीस्तबकवर्णकतन्द्रा
दुःखशास्त्रसुखमूत्रतरंगाः ॥ ३८८ ॥

संजातं तारकादेरित्यनेनैतस्मात् तदस्य संजातमित्यर्थ इतो भवति ॥ * ॥ तारकाः संजाता अस्य । तारकितं नभः ॥ तारकशब्दोऽप्यत्र ग्राह्यः ॥ * ॥ कुसुमितस्तरुः ॥ * ॥ पल्लवितः ॥ * ॥ वेगितः । वेगवान् ॥ * ॥ पुष्पितः ॥ * ॥ गौरवितः ॥ * ॥ विचारितः ॥ * ॥ पिपासितः ॥ * ॥ मञ्जरितः ॥ * ॥ स्तबकितः ॥ * ॥ वर्णकितः ॥ कर्णकितो[1] वेणुरित्यप्यन्यः ॥ * ॥ तन्द्रितः ॥ * ॥ दुःखितः ॥ * ॥ शास्त्रितः ॥ * ॥ सुखितः ॥ * ॥ मूत्रितः ॥ * ॥ तरंगितः ॥ ३८८ ॥

निद्रामुद्रापुलकतिलकाश्चन्द्रकाभ्रान्धकारा
गर्वोत्कण्ठामुकुलमुकुरद्रोहदोहा बुभुक्षा ।
हर्षोत्कर्षव्रणकुवलयव्याधिगर्धाः पुरीषं
सुत्सीमन्तज्वरभरगरा रागरोमाञ्चरोगाः ॥ ३८९ ॥

---

१ कर्णवितो A.; ॥ वर्णकितो वेणु॰ B. C. F., orig. K. (corr. ॥ वर्णकितः वर्णकितो वेणु).—कर्णक Bö., Yajñ., Hem., K. V. *a.*; वर्णक Bö., *v.l.* Kâṣ. V. ed.; पर्णक Hem., K. V. *a.* [कर्ण इव कर्णको दारुविकारः कर्णकितः स्तंभः । Yajñ.]

निद्रितः ॥ * ॥ मुद्रितः साधुवादः ॥ * ॥ पुलकिता तन्वी तवेयं तनुः[१] ॥ * ॥ तिलकितः ॥ * ॥ चन्द्रकितः ॥ * ॥

ददर्श काले दिवमभ्रितामिव[२] ॥ * ॥

अन्धकारितः ॥ * ॥ गर्वितः ॥ * ॥ उत्कण्ठितः ॥ * ॥ मुकुलितः ॥ * ॥ मुकुर आदर्शो मुकुलं च । मुकुरितः ॥ * ॥ द्रोहितः ॥ * ॥ दोहितः ॥ * ॥ बुभुक्षितः ॥ * ॥ हर्षितः ॥ * ॥ उत्कर्षितः ॥ * ॥ व्रणितः ॥ * ॥ कुवलयितः ॥ * ॥ व्याधितः ॥ * ॥ गर्धितः ॥ * ॥ पुरीषितः ॥ * ॥ क्षुधितः ॥ * ॥ सीमन्तितः ॥ * ॥ ज्वरितः ॥ * ॥ भरितः ॥ * ॥ गरितः ॥ * ॥ रागितः ॥ * ॥ रोमाञ्चितः ॥ * ॥ रोगितः ॥ ३८९ ॥

पण्डा कन्दलकज्जलं किसलयं तृट् कण्टकं[३] कोरकः
कल्लोलस्थपुटं कुतूहलफलं चाङ्गारकः कञ्चुकः ।
शृङ्गाराङ्कुरशैवलानि बकुलश्वभ्रप्रचारास्तथा
वर्मारालकलङ्ककर्दमयुतं श्रद्धा ऋजीषं[४] मतम् ॥ ३९० ॥

पण्डा बुद्धिः । पण्डितः ॥ * ॥ कन्दलितः ॥ * ॥ कज्जलं मषी । कज्जलितः ॥ * ॥ किसलयितः[५] ॥ * ॥ तृषितः ॥ * ॥ कण्टकितः ॥ * ॥ कोरकितः ॥ * ॥ कल्लोलितः ॥ * ॥ स्थपुटितः ॥ * ॥ कुतूहलितः ॥ * ॥ फलितः ॥ * ॥ अङ्गारकितः पलाशः[६] ॥ अथवा ।

अङ्गारितमिवोत्पाते वारिराशेरिवोदकम्[७] ॥ * ॥

---

१ तथेयं तनुः MSS., except F.—See com. on Kâvyapr. i. 4; on Sâhity. sl. 27.

२ Raghuv. iii. 12.

३ किशलयं॰ A. D.; चिप्कंटकं A.

४ चर्माराल॰ C. F.; अब्जजीर्षं E.

५ किशलयितः A.

६ पलाशठी D.—अत्रांगारकशब्दोंगारसदृशेषु पलाशकुसुमेषु लक्षणया वर्तते । Yajñ.

७ अंगारकितमिवो॰ MSS. [अङ्गार cf. next sloka]; वारिराशिरि॰ A. K.; वारिदोदकं B. C., orig. K.

कञ्चुकितः ॥ * ॥ शृङ्गारितः ॥ * ॥ अङ्कुरितः ॥ * ॥ शैवलितः ॥ * ॥ बकुलं मुकुलम्[१]। बकुलितस्तरुः। अयं शकटाङ्गजमतेन ॥ * ॥ श्वानो भ्रमन्त्यत्र । श्वभ्रं गर्तः । श्वभ्रितं भूतलम् ॥ * ॥ प्रचारितः ॥ * ॥ वर्मितः[२] ॥ * ॥ आरालमिति मूत्रपुरीषयोः[३] संज्ञा। आरालितः ॥ * ॥ कलङ्कितः ॥ * ॥ कर्दमितः ॥ * ॥ अङ्कितः ॥ * ॥ ऋजीषम् उपहतं मलं पिष्टपचनं च। ऋजीषितः[४] ॥ ऋचीषमित्यन्यः ॥ ३८० ॥

संज्ञाकुड्मलमूर्छानिष्क्रमणाङ्गारहस्तकोच्चाराः[५]।
प्रतिबिम्बविघ्नतन्त्रप्रत्ययदीक्षा[६] भवेद्गर्जा ॥ ३९१ ॥

संज्ञितः ॥ * ॥ कुड्मलितः ॥ * ॥ मूर्छितः ॥ * ॥ निष्क्रमणितः ॥ * ॥ अङ्गारितः ॥ * ॥ हस्तकितः[७] ॥ * ॥ उच्चारितः ॥ * ॥ प्रतिबिम्बितः[८] ॥ * ॥ विघ्नितः ॥ * ॥ तन्त्रं संजातमस्य। तन्त्रितः ॥ तन्द्रा । आलस्यमिति द्रमिडाः[९] पठन्ति ॥ * ॥ प्रत्यय आश्वासः। प्रत्ययितः। आप्तः ॥ यथा मुरारेः[१०]। ब्रवीति च प्रत्ययितो महर्षिः ॥ * ॥ दीक्षितः ॥ * ॥ गर्जितः। मत्तो गजः ॥

---

१ मकुलं B. C. K.; बकुलं कुड्मलम् Yajñ.—F. (and once corr. K.) and Yajñ. write बकुल; Bö., Hem. वकुल; om. K.V.

२ चर्मितः A. F.—Bö., Yâjñ. वर्मन्; om. Kâș. V., Hem.

३ पुंमूत्रपुरीषयोः A.—अरालमिति (!) मूत्रपुरीषयोः संज्ञेति वर्धमानः। अरालः कुटिले सर्जरसे समददंतिनीति मेदिनीकारः (ल 58) अरालितः। Yajñ.; आराल Bö.; om. Kâș. V., Hem.

४ ऋजीष उपहतमलं पिष्टपवनं च Yajñ.—All others have ऋजीष only.

५ °कुड्मल° A. E.; कु-ल° D.

६ प्रतिबंधविघ्न° B. C. K.; इतिविम्बविघ्न° D.

७ हस्तको हस्तावलंबः° Yajñ.

८ प्रतिबंधितः B. C. K.—प्रतिबिम्ब Bö., Yajñ.; om. Kâș. V., Hem.

९ तंचा आल° द्रमिडाः A.; तंचा आलस्य इति प्रामिडाः D.—तंत्र Yajñ.; विघ्नतन्त्र Bö.; तन्द्रा K. V. ed., MSS.; Hem.

१० Anarghar. iii. șl. 29 (ed. Calc. Ș. 1782 p. 71).

ननु क्तप्रत्यये भुजेः पिबतेश्च सनन्तस्य विहिते सिद्धं बुभुक्षितः पिपासित इति । तथा पुष्प विकसन[1] इति दैवादिकधातोः पुष्पित इति । सुखितो दुःखित इति चुरादिण्यन्ताद्धातोः । नैवम् । अर्थवैषम्यात् । तथा हि । भोक्तुमिष्टो बुभुक्षित ओदनो नरेण । पातुमिष्टं पिपासितं चीरमिति कर्मणि क्तप्रत्यये बुभुक्षितादिशब्द ओदनादौ कर्मणि वर्तते न तु नरि कर्तरि[2] । इतप्रत्ययान्तस्तु भोक्तृपुरुषवृत्तिः ॥ पुष्पितशब्दोऽपि क्तान्तः । पुष्पिता कलिका । पुष्पितं कमलमिति वा विकासक्रियोपेतेऽर्थे प्रतीत इतप्रत्ययान्तस्तु[3] प्रसवोपेते चम्पकादौ वर्तते । सुखितदुःखितशब्दयोस्त्वपेक्षितापरकर्तृव्यापारः सुखादिसंवित्तिमांश्चैत्रादिः प्रतीयते । इतप्रत्यये त्वनपेक्षितपरव्यापारः सुखाद्यनुभवयुक्त इति ततो युक्तोऽमीषामत्र पाठः । एवमन्येषामपि फलं दर्शनीयम् ॥ * ॥ आकृतिगणोऽयम् । तेन शिक्षाजिगीषाच्छिद्रारोहप्रभृतयो द्रष्टव्याः[4] ॥ ३८१ ॥ इति तारकादिः ॥

पृथ्वाम्रप्रियपाण्डुचण्डपटवः खण्डूरुखण्डार्णवः[5]
साधुः स्वादुमृदू महल्लघुतनुक्षिप्राणि वृद्धो गुरुः ।
वक्राकिंचनचारुपाकबहवो वत्सर्जुतृप्राणि[6] च
क्षुद्रः कालवृषौ महिष्ठ[7] बहुलं ह्रस्वोऽथ होडः कृडुः[8] ॥३९२॥

पृथ्वादेरिमन् इत्यनेन तस्य भाव इत्यर्थ इमन् वा भवति । पक्षे

[1] Dhâtup. 26, 15.

[2] ननु रि क॰रि D.; F. om. नरि.

[3] D. om. from भोक्तृपुरुषवृत्तिः.

[4] ? °जिगीषानिह्नारोह° A.; °जिगीषाच्छिद्ररोह्रप्रभृतयो K. (suppl.); B. C. F. and orig. K. om. from एवमन्येषामपि.

[5] पृथ्वासु° पटवर्धदूरखंडार्णवः A.; °पटवो खंडूरु° (!) B. C. E. F. K.; °चंद्रपटवः° D.

[6] °तप्राणि E.; तृप्ताणि A. D.

[7] महस्व° E.

[8] ? कृदुः C. K. (? B.); कडुः D. E.; कडुः F.

यथाप्राप्तम् ॥ * ॥ पृथोर्भावः । प्रथिमा । पार्थवम् । पृथुत्वम् । पृथुता ॥ * ॥ म्रग्रिमा ॥ * ॥ प्रेमा ॥ अयमिमन्नन्तः[१] पुंलिङ्गः सर्वत्र व्याकरणग्रन्थे पटिमा लघिमेत्युदाह्रियमाणो दृश्यते । भर्त्तृस्वरेणापि[२] वारणार्थानामित्यत्र पुंलिङ्ग एव प्रयुक्तः । सत्त्वेन परिगृहीतः[३] प्रेमा संनिविश्यते ॥ लिङ्गकारिकास्वप्ययं नित्यं पुंलिङ्ग एव । ततस्तार्धचांद्यन्तर्भावप्रसारिकापि[४] कर्तुं न युज्यते ।

भवतोऽपजनोपपदे अङ्गपदे[५] पुंसि नित्यमिमनिच्च ।

अपशब्दजनशब्दोपपदे यथासंख्यमङ्गपदे नित्यं पुंसि भवतः । अयमपाङ्गः । अयं जनपदः । इमनिच्च नित्यं पुंसीति वर्तते । पटिमा लघिमेत्ययमर्थोऽस्याः । एवं य एते काव्यनाटकप्रयोगाः ।

प्रेम कारयति वा निरन्तरम्[६] ।

प्रेम पश्यति भयान्यपदेऽपि[७] ।

प्रेम मानमवधूय वधूः स्वाः[८] ।

सामर्थ्यं च तवार्जुनस्य[९] च समं दुर्योधने प्रेम च ।

इत्येकवाक्यतया नपुंसकेन दृश्यन्ते । तेष्वियं गतिः । स्नेहपर्याय औणादिको मनिन्प्रत्ययान्तः प्रातिपदिको वाव्युत्पन्नः[१०] प्रेमन्शब्दोऽस्तीति ॥ * ॥ पाण्डिमा । अयं श्रीभोजमतेन[११] ॥ * ॥ चण्डिमा ॥ * ॥ पटिमा

---

१ °इनंतः A.; इनंनतः B.; अनंतः D.

२ भर्त्तास्वरेणापि A.; भर्त्तृस्वरेणापि D.—[? °वर्णार्थानामित्यत्र].

३ स्वत्वेन° B. C. F. K.; सत्वेन परिगृहीत। A.; सत्वेन परिगृहीते D.

४ ? °द्यन्तर्भावः । प्रसारिकापि A.; °र्भावः पादप्रसारिकापि B. C. F. K.

५ भवतोंगजनोपपदांगपदे B. C. K.; भवतो जनो° A.; लिंगानुशासनेऽपि अपजनोपपदांग° इमनिच्चेति स्मर्यते । Yajñ.; cf. Siddh. K. 4°. p. 249*b*. l. 13.

६ Kirât. 13, 61.

७ Kirât. 9, 70.

८ Śiśup. 10, 2.

९ तथार्जुनस्य B. C. F. K.

१० वा अव्युत्पन्नः D.; cf. Uṇ. S. iv. 144.

११ Hem. alone has the words पांडु, वृद्ध, चारु, काल.

॥ * ॥ खण्डोर्भावः । खण्डिमा । दण्ड इत्यन्यः[१] ॥ अयं शकटाङ्गजमतेन ॥ * ॥ वरिमा । उरुत्वम् ॥ * ॥ खण्डस्य भावः । खण्डिमा ॥ * ॥ अणिमा ॥ * ॥ साधिमा ॥ * ॥ स्वादिमा ॥ * ॥ म्रदिमा ॥ * ॥ महिमा । महत्त्वम् । महत्ता ॥ * ॥ लघिमा ॥ * ॥ तनिमा ॥ * ॥ चेपिमा । चिप्रत्वम् ॥ * ॥ वर्षिमा । वृद्धत्वम्[२] ॥ * ॥ गरिमा । गुरुत्वम् ॥ * ॥ वक्रिमा ॥ * ॥ अकिंचनिमा । आकिंचन्यमिति ब्राह्मणादित्वात्[३] ॥ * ॥ चारिमा । चारुत्वम् । अयं श्रीभोजमतेन[२] ॥ * ॥ पाकिमा ॥ वयोऽर्थलक्षणेऽणि[४] । पाकम् ॥ * ॥ बहोर्भावः । भूमा । यथा । परं भूमानमातन्वते[५] ॥ बाहवम् ॥ * ॥ वत्सिमा । वात्सम् ॥ * ॥ ऋजिमा[६] । आर्जवम् ॥ * ॥ तृप्रिमा[७] । अयं श्रीभोजमतेन ॥ * ॥ चोदिमा । चुद्रत्वम् ॥ * ॥ कालिमा । कालत्वम् । अयं श्रीभोजमतेन[२] ॥ * ॥ वृषिमा ॥ * ॥ महिमा । महित्वम्[८] । अयं शकटाङ्गजमतेन ॥ * ॥ बंहिमा । बाहुल्यं ब्राह्मणादिपाठात् ष्यट्[३] । मनोज्ञादिपाठाद् बाहुलकम्[९] ॥ * ॥ ह्रसिमा । ह्रस्वत्वम् ॥ * ॥ होडिमा[१०] । वयोऽर्थलक्षणेऽणि प्राप्ते । ब्राह्मणादित्वाद् हौड्यम्[११] ॥ * ॥ कडुर्मन्तुः । कडिमा । कडुत्वम् । कार्डवम्[१२] ॥ ३८२ ॥ इति पृथ्वादिः ॥

---

१ षंडो । भाव षंडिमाः ।° A.; °डंड इत्यन्यः D.—खंडु Hem.; दण्ड Bö., Yajñ.

२ See note ११, preceding page.

३ *Not given in* (*âkritigaṇa*) ब्राह्मणादि șl. 395-404.

४ Cf. șl. 405 com.; & P. v. 1, 129.

५ Mahâvîrach. ii. șl. 45.

६ Om. A. D. F.; °चिप्रिमाः° B.; तृप्तिमा D.

७ तृप्तिमा D. (cf. page 416, note 6); Hem. apparently तृप्र; *om. by the others.*

८ महत्त्वं F.—Hem. महत् and महि; the others महत् only.

९ See șl. 410.

१० होडबालशब्दौ समानार्थौ Yajñ.

११ See șl. 401.

१२ ? कडुर्मंतु कडिमा° कार्डुवं A.; कडु° कद्मिा कडुत्वं कार्द्वं C. K.; कटु° कटिमा । कटुत्वं । काटवं F.; कडुर्मंभुस (or कटु?) कटिमा कटुत्व । कार्वत्वं । D.; Hem. कडु (corrected from कजु); *om. by the others.*

दृढपरिवृढौ मूकश्चुक्रो विशारदसंमती[1]
बधिरमधुरौ बालो मूलं कलो जडपण्डितौ।
लवणतरुणावुष्णः शीतः स्थिराम्लकृशा वृढो[2]
विमतिविमनोमन्दा मूर्खो वियातभृशं तथा ॥ ३९३ ॥

वर्णदृढादेर्ष्यञ्देत्यनेन वर्णवाचिनो[3] दृढादेश्चास्य भाव इत्यर्थे ष्यञ् भवति। इमन् च वा ॥ शौक्ल्यम् ॥ * ॥ दृढस्य भावः। दार्ढ्यम्। द्रढिमा। दृढता। दृढत्वम् ॥ * ॥ परिवृढस्य भावः। पारिवृढ्यम्। परिव्रढिमा[4] ॥ * ॥ मौक्यम्। मूकिमा ॥ * ॥ चुक्रम् अम्लम्[5]। चौक्यम्। चुक्रिमा ॥ * ॥ वैशारद्यम् ॥ शारदशब्दः प्रत्यग्रवाची। यथा। रज्जुशारदमुदकम्। दृषच्छारदाः सक्तवः। सद्यो हि रज्ज्वोद्धृतमुदकं प्रत्यग्रमनुपहतं रज्जुशारदमुच्यते। सद्यश्च दृषदा पिष्टाः सक्तवो दृषच्छारदाः। तत्रायं गुणप्रधानः। शारदं प्रत्यग्रत्वम् अभिनवत्वम्। तद्विगतमस्य। विशारदः प्रवीणः। प्रवीणो लक्षणया। तथा हि। यो यत्र नवः स तत्र मूढः। यस्तु पुराणः स सर्वं जानाति ॥ अथवा। व्युत्पत्तिशून्यः प्रवीणवाची विशारदशब्दः ॥ * ॥ संगता मतिर्यस्यासौ संमतिः। तस्य सांमत्यम्। संमतिमा ॥ शकटाङ्गजमते तु सांमतमित्यपि। स हि लघ्वादेरिक इत्यस्य सूत्रस्यैवंविधमर्थमाह[6]। तथा हि। लघुरादिः समीपभूतो यस्यैकस्तदन्तात्तस्य भावे कृते वाणप्रत्ययः[7]। वामनादीनामप्येतत्संमतम् ॥ केचिल्लघ्वादेरिति प्रकृतेर्विशेषणमिच्छ-

---

१ दृढपरिद्रढौ A.D.E.; विसारद E.
२ °सीतः E.; शीतः स्थरा° D.; कृशादृपेर्विमति° A.
३ वर्णादिवाचिनो B. C. F. K.
४ परिदृढस्य° दृढ्यं° द्रढिमा A.
५ चुक्रोऽम्लवेतसः Yajñ.
६ सूत्रस्यैवंविधस्तमर्थमाह B.C.D.K.
७ भावो कृते नाणप्रत्ययो भवति A.; कृते वा° K.; कृत्पयाणप्रत्ययः B.; भावे कप्रत्ययाण्प्रत्ययः C.

न्ति। कार्श्यानवम् आरातमित्यप्युदाहरन्ति। सांमतमिति च नेच्छन्ति ॥ * ॥ बाधिर्यम् ॥ * ॥ माधुर्यम् ॥ * ॥ बाल्यम् ॥ * ॥ मौल्यम् ॥ * ॥ काल्यम् ॥ * ॥ जाड्यम् ॥ * ॥ पाण्डित्यम् ॥ * ॥ लावण्यम्। लवणिमा ॥ * ॥ तारुण्यम्[१] ॥ * ॥ औष्ण्यम् ॥ * ॥ शैत्यम् ॥ * ॥ स्थैर्यम् ॥ * ॥ आम्ल्यम्। अम्लिमा ॥ * ॥ कार्श्यम्। क्रशिमा ॥ * ॥ वार्ढ्यम्। ब्रढिमा। रत्नविधौ परिवृढशब्दे[२] परिरतन्त्रः। अन्ये तु परिशब्दं विना दृढशब्दं पठन्ति। अयं शकटाङ्गजवामनमतेन ॥ * ॥ विविधा मतिर्यस्यासौ विमतिः। वैमत्यम्। वैमतम् ॥ * ॥ विविधं मनो यस्यासौ विमनाः। वैमनस्यम् ॥ * ॥ मान्द्यम्। मन्दिमा ॥ * ॥ मौर्ख्यम् ॥ * ॥ वैयात्यम्[३] ॥ * ॥ भार्शम्। भ्रशिमा ॥ ३९३ ॥

विलातः स्यात्तथा शुक्रदीर्घसंमनसो[४] मताः।
ताम्रमाम्रं तथा तृष्णां प्राह श्रीशाकटायनः ॥ ३९४ ॥

विलातो विलासी वयोवचनश्च। वैलात्यम्। विलातिमा[५] ॥ वयोऽर्थलक्षणेऽणि। वैलातम् ॥ * ॥ शुक्रं वीर्यम्। शौक्र्यम्। शुक्रिमा[६] ॥ * ॥ दैर्घ्यम्। द्राघिमा। वामनादयस्तु दीर्घमन्दबालशब्दान्पृथ्वादिगणे पठन्ति ॥ * ॥ सामनस्यम्। समनिमा[७] ॥ * ॥ ताम्रं शुल्वम्। ताम्र्यम्। ताम्रिमा ॥ * ॥ आम्र्यम्। आम्रिमा। अयं वामनमतेनापि ॥ * ॥ तार्ष्ण्यम्। तृष्णिमा ॥ ३९४ ॥ इति दृढादिः ॥

---

१ Bö., Yajñ., K. V. *a.* (ed.) have अवन instead [तरुणेति पाठांतरं Yajñ.]

२ परिदृढशब्दे A.—See comms. on P. vi. 4, 161.—Bö., Yajñ., Hem., दृढ and वृढ; also K. V. *a.* (वृद्ध *β.*); ed. only दृढ.

३ विरुद्धं यातं चेष्टितमस्येति वियात उद्धतः Yajñ.

४ °समनसो D. E.

५ विलातशब्दः प्रथमवयोवाची। विलासिपर्याय इति केचित् Yajñ.—K. V. ed., *a. β.* read विलाभ.—For वयोऽर्थ° see p. 418, note 4.

६ शुक्लं वैर्यं° B. C. K.; शुक्लिमा C.

७ सामनस्यां समानिमा D.

ब्राह्मणो वाडबो धूर्तः कुशलालसबालिशाः ।
सममध्यपुरोभ्यः[1] स्थः कविर्नुम् चार्हतो[2] मतः ॥ ३९५ ॥

ब्राह्मणादिपत्यन्तगुणवचनात्कर्मणि वेत्यनेन ब्राह्मणादेः पत्यन्ताद्गुणवचनाच्चास्य भावः कर्म वेत्यर्थे ण्यट् वा भवति । पक्षे यथाप्राप्तं च ॥ * ॥ ब्राह्मणस्य भावः कर्म वा । ब्राह्मण्यम् ॥ * ॥ वाडब्यम् ॥ * ॥ धौर्त्यम् ॥ * ॥ कौशल्यम् ॥ * ॥ न विद्यते लसः क्रीडनं यस्य सोऽलसः । न लसोऽलस इति वा । आलस्यम् ॥ * ॥ बालिश्यम् ॥ * ॥ सामस्थ्यम् ॥ * ॥ माध्यस्थ्यम् । दृष्टेऽप्यवलम्बितेऽर्थे ॥ * ॥ पौरःस्थ्यम्[3] ॥ * ॥ काव्यम् ॥ * ॥ आर्हन्त्यम् आर्हन्ती ॥ ३९५ ॥

निपुणचपलचोरास्तत्परेदंपरौ स्तः
सुहितपिशुनदीना माणवोऽथ प्रकामम् ।
उचितगडुलशीला निष्कुलो दुष्कुलः[4] स्यात्
तरतमविषमस्थावेकभावान्यभावौ ॥ ३९६ ॥

नैपुण्यम् ॥ * ॥ चापल्यम् ॥ * ॥ चौर्यम् ॥ * ॥ तात्पर्यम् ॥ * ॥ ऐदंपर्यम् । यथा भवभूतेः ।

इदं त्वैदंपर्यं यदुत नृपतेर्नर्मसचिवः ।
सुतादानान्मित्रं भवतु स भवान्नन्दन इति[5] ॥ * ॥

---

१ ॰पुरेभ्यः॰ A. D. E. K.; C. om. the second half-śloka.

२ कविर्नुम्वार्हतो A. B. C. E. F. K.; ॰र्नुश्चा॰ D.; see vârtt. on Pâṇ. v. 1, 124.

३ पौरस्थ्यं A. B. K. F.; पौरस्थं D.; पौरव्यं C.

४ दुष्कलः B.E.; दुःखल A.; D. om. from ला निष्कुलो to śl. 399.

५ Mâlatîm. ii. śl. 7 [ed. Bhandarkar, p. 91 reads ॰भवतु स हि नो (v.l. MS. सचिवान्; ed. Calc. 1866, p. 37 स हि मे) नन्दन इति].

सौहित्यम् ॥ * ॥ पैशुन्यम् ॥ * ॥ दैन्यम् ॥ * ॥ माणव्यम् ॥ * ॥ प्रकाममित्यस्य भावः प्राकाम्यम् ॥ प्राकाम्यं ते विभूतिषु[१] ॥ * ॥ औचित्यम् । औचिती ॥ * ॥ गडुरस्यास्तीति गडुलः । गाडुल्यम् ॥ * ॥ शैल्यम् । शैली ॥ * ॥ नैष्कुल्यम् ॥ * ॥ दौष्कुल्यम् ॥ * ॥ तरतमेत्यस्य भावः । तारतम्यम् । द्विबह्वपेक्षः प्रकर्षः ॥ * ॥ वैषमस्थ्यम् ॥ * ॥ एको भावो यस्य तस्य भाव ऐकभाव्यम् ॥ * ॥ आन्यभाव्यम् ॥ ३९६ ॥

विदग्धदायादयथापुरद्विभावा
यथाकामयथातथौ च ।
विराधयः कापुरुषस्वभावाभीक्ष्णं
समयाधिपतित्रिभावाः[२] ॥ ३९७ ॥

वैदग्ध्यम् । वैदग्धी ॥ * ॥ दायमादत्ते । दायादः । दायाद्यम् ॥ * ॥ यथापुरं पुरातनमित्यर्थः । यथापुरमित्यस्य भावः । याथापुर्यम् ॥ * ॥ द्वैभाव्यम् ॥ * ॥ यथाकाममित्यस्य भावः । याथाकाम्यम् । याथाकामी ॥ * ॥ यथातथं सत्यम् । याथातथ्यम् ॥ यथातथेत्यन्यः[३] ॥ * ॥ विपूर्वाद् राधयतेरचि णेर्लुग् न भवति गणपाठात्[४] । जनपदसमाननामा चत्रियः । तस्मादपत्यार्थे विहितस्याञः कम्बोजादित्वात् लुकि[५] । वैराधय्यम् । एवम् उपराधयापिराधयाराधयशब्देषु[६] द्रष्ट-

---

१ Kumâras. ii. 11.

२ विधारय:° E., cf. note ५; D. om. śloka and comment.

३ ? याथातथेत्य° A.—Hem. has यथा । तथा । यथातथ among the बुधादि, which take य, (also?) when नञ्तत्पुरुष cf. śl. 404.

४ गणपाठसामर्थ्यात् C.

५ See śl. 201 where राधय should be read for धारय (see note २).

६ °उपराधयापराधयाराधय° B. F.; उपराधयाराधयाराधय° C. K. (the second रा suppl. in K.); for अपिराधय see śl. 401.

व्यम् ॥ * ॥ कापुरुष्यम् ॥ * ॥ स्वाभाव्यम् ॥ * ॥ अभीक्ष्णमित्यस्य भावः । आभीक्ष्ण्यम् ॥ * ॥ सामग्र्यम् । सामग्री ॥ * ॥ आधिपत्यम् ॥ * ॥ त्रैभाव्यम् ॥ ३९७ ॥

ज्येष्ठश्रेष्ठप्रकटनिकटा विश्वरूपाभिरूपौ
साक्षी तत्स्थश्चतुरपरमस्थेतिहाः शीर्षघाती ।
ऋत्विक् सम्राड् गणपतिमहाराजसंवादिदूताः
सात्मस्तेनौ[१] सुकरसदृशौ मानुषाराधयौ च ॥ ३९८ ॥

ज्यैष्ठ्यम् ॥ * ॥ श्रैष्ठ्यम् ॥ * ॥ प्राकट्यम् ॥ * ॥ नैकट्यम् ॥ * ॥ वैश्वरूप्यम् ॥ * ॥ आभिरूप्यम् ॥ * ॥ साक्ष्यम् ॥ * ॥ तस्मिंस्तिष्ठतीति तत्स्थः । तात्स्थ्यम् ॥ * ॥ चातुर्यम् । चातुरी ॥ * ॥ पारमस्थ्यम् ॥ * ॥ ऐतिह्यम् ॥ * ॥ शैर्षघात्यम् ॥ * ॥ आर्त्विज्यम् ॥ * ॥ साम्राज्यम् ॥ * ॥ गाणपत्यम् ॥ * ॥ माहाराज्यम् ॥ * ॥ सांवाद्यम् ॥ * ॥ दौत्यम् ॥ लिङ्गग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायाद् दूतीशब्दादपि भवति । दूतीनां कर्म दौत्यम् । आगतप्रियकथैरपि दौत्यम्[२] । वणिक्सखिदूताद्य दूत्यनेन ये[३] । दूत्यम् । दूतता । दूतत्वम् ॥ * ॥ सहात्मना वर्तते । सात्म शरीरम् । तस्य कर्म भावो वा । सात्म्यम् । सात्मी ॥ * ॥ स्तेनश्चौरः । तस्य भावः कर्म वा । स्तैन्यम् । आगमिकोऽयं शब्दः । स्तैन्याशयेनाभिमतं[४] यदेवेति किमस्य लक्षणचिन्तया लोके[५] ।

---

१ आत्मस्तेनौ B.; सत्यस्तेनौ E.; D. om. text and comment.

२ Kirât. 9, 34 (eds. Calc. दूत्यम्).

३ Cf. Pâṇ. v. 1, 126 with Kâś. V.—Hem. also has the rule vii. 1 (62) सखिवणिग्दूताद्यः॥ °वणिज्या। वणिज्यम्।° दूत्यम्। राजादेराकृतिगणत्वात् ष्यञपि। वाणिज्यम्। दौत्यम्॥ cf. p. 428, note 5.

४ °येनाभिगतं A.

५ लक्षणे चिंतया लोके B. C. K.; cf. Pâṇ. v. 1, 125.

स्थेयमित्येव भवतीति कश्चित्सचेताः ॥ * ॥ सौकर्यम् ॥ * ॥ सादृश्यम् ॥ * ॥ मानुष्यम् ॥ * ॥ आराधय्यम् ॥ ३९८ ॥

पूर्वापरं दूष्पुरुषो विशायो[१]
विशालसंवेशिविघातिनश्च ।
स्वाराजसंभाषिविशस्तयो[२]ऽपी-
श्वराभिजातौ परिमण्डलं च ॥ ३९९ ॥

पौर्वापर्यम् ॥ * ॥ दौष्पुरुष्यम् ॥ * ॥ वैशाय्यम् ॥ * ॥ वैशाल्यम् ॥ * ॥ सांवेश्यम् ॥ * ॥ वैघात्यम् ॥ * ॥ स्वाराज्यम्[३] ॥ * ॥ सांभाष्यम् ॥ * ॥ वैशस्त्यम्[४] । विशायविशस्तिभ्यां त्वतलौ त्वनभिधानान्न भवतः ॥ * ॥ ऐश्वर्यम् ॥ * ॥ आभिजात्यम् ॥ * ॥ पारिमाण्डल्यम्[५] ॥ ३९९ ॥

परिशेषराजपुरुषौ युगपत्
प्रतिकूलनास्तिकपुनःपुनरः ।
प्रतिभूसुराजबहुभाषिपरं-
परमुत्तराधरसधर्मवणिक्[६] ॥ ४०० ॥

पारिशेष्यम् ॥ * ॥ राजपौरुष्यम्[७] ॥ * ॥ यौगपद्यम् ॥ * ॥ प्रातिकूल्यम् ॥ * ॥ नास्तिक्यम् ॥ * ॥ पौनःपुन्यम् ॥ * ॥ प्रातिभाव्यम्[५] ॥ * ॥

---

१ विसाय A. E.

२ स्वराज॰ (right?) A., cf. next note. —D. om. text and comment.

३ स्वराज *v.l.* K. V. ed.; om. by the other works.—Hem. has the rule पतिराजान्तगुणाङ्गराजादिभ्यः (cf. p. 428, note 5; P. v. 1, 128).

४ वैशस्थ्यं A.—विशस्ति Bö., Kâṣ. V.; विशस्त Hem.

५ Cf. ṣl. 166;—om. by the others, except Kâṣ. V. $\beta$.; *v.l.* ed.

६ ॰सुराजिवक्रभाषि॰ A. D. E.; ॰उत्तरावर॰ E.

७ राजपुरुष्यं A. D.; cf. ṣl. 166.

सुराज्ञो भावः कर्म वा । सौराज्यम् ॥ * ॥ बाङ्गभाग्यम् ॥ * ॥ पारंपर्यम् ॥ * ॥ औत्तराधर्यम् ॥ * ॥ साधर्म्यम् ॥ * ॥ वणिजो भावः कर्म वा । वाणिज्यम् । अयं शकटाङ्गजमतेन ॥ वणिज्या वणिज्यमिति वामनः[1] ॥ * ॥ प्रमिताचरा सजयुतावथ सौ ॥ ४०० ॥

जनराजसमाचारपरिख्यातोपराधयः ।
युवराजयथात्मानुपूर्वहोडनिघातिनः ॥ ४०१ ॥

जानराज्यम् ॥ * ॥ सामाचार्यम् । सामाचारी ॥ * ॥ पारिख्यात्यम् । पारिख्याती ॥ * ॥ औपराधय्यम् ॥ अपिराधय इत्यपि[2] । अपि भ्रशार्थे ॥ * ॥ यौवराज्यम् ॥ * ॥ याथात्म्यम् ॥ * ॥ आनुपूर्व्यम् । आनुपूर्वी ॥ * ॥ हौड्यम् ॥ * ॥ नैघात्यम् ॥ ४०१ ॥

पुरोहितग्रामिकचर्मिकास्तिकाः[3]
स्वस्थोऽथ[4] शौण्डीरविधर्मकर्मिकाः[5] ।
बालानुकूलं[6] शिलिकोऽथ सूचिकः[7]
संरक्षसारथ्यधिराजदण्डिकाः[8] ॥ ४०२ ॥

पौरोहित्यम् ॥ * ॥ ग्रामोऽस्यास्तीति ग्रामिकः । ग्रामिक्यम् ॥ * ॥

---

१ वाणिज्यमिति° A.;—B. C. F. and orig. K. omit from वणिज्या.—Cf. Kâs. V. v. 1, 126; and above p. 423, note 3.

२ अपराधय° B. F. K.; अराधय C.; cf. page 422, note 6.—Hem. अपिराधय; the others अपराधय.

३ °चार्मिकास्तिकाः B. C. K.; वर्मिकास्तिकाः F.

४ स्वस्थो पि D. E.

५ सौडीर° A.; शौडीर° D.; शौंडार° C.; सौंडीर° E.

६ तथानुकूलं E.; ताऽनुकूलं D.

७ Thus A. E.; सूलिकः B. C. F. K.; सचिकः D.

८ संरक्ष्य° A. B. C. F. K.; सरक्ष° D.—Bö., Yajñ. have संरक्ष; om. by Kâs. V., Hem.

चर्मास्यास्तीति चर्मिकः। चार्मिक्यम्[1] ॥ * ॥ आस्तिक्यम् ॥ * ॥ स्वस्मिन्नात्मनि तिष्ठति। स्वस्थः। तस्य स्वास्थ्यम् ॥ * ॥ शौण्डीरो गर्ववान्। शौण्डीर्यम्[2] ॥ * ॥ वैधर्म्यम् ॥ * ॥ कर्मास्तित्वात् कर्मिकः[3]। कार्मिक्यम् ॥ * ॥ बाल्यम्। यथा।

अवाप बाल्योचितनीलकण्ठपिच्छावचूलाकलनामिवोरः[4] ॥ * ॥

आनुकूल्यम् ॥ * ॥ शिलम् उञ्छम्। तदस्तित्वात्। शिलिक[5] उञ्छवृत्तिकः। शैलिक्यम् ॥ * ॥ सौचिक्यम्[6] ॥ * ॥ सांरक्ष्यम् ॥ * ॥ सारथ्यम् ॥ * ॥ आधिराज्यम् ॥ * ॥ दण्डास्तित्वाद् दण्डिकः। दाण्डिक्यम् ॥ ४०२ ॥

**पर्षिकवर्मिकचौक्ष्योदासीनाः[7] खण्डिकस्तथाञ्जनिकः।**
**प्रविकाञ्जलिकच्छन्त्रिकसूचकविश्वस्तविफलाश्च[8] ॥ ४०३ ॥**

पार्षिक्यम्। परिषद्धिक[9] इति वामनः। अयं भोजमतेन ॥ * ॥ वर्मास्यास्तीति वर्मिकः। वार्मिक्यम्[10] ॥ * ॥ शुचाशीलश्चौक्षः। चौक्ष्यम् ॥ * ॥ औदासीन्यम् ॥ * ॥ खण्डोऽस्यास्तीति खण्डिकः। खा-

---

१ चार्मिकः॰ B. K.; वर्मा॰ वार्मिकः वार्मिक्यं C. F.; वर्मा॰ वार्मिक्यं D.; cf. note १०.

२ शौडीरो॰ A.; शौडीर्यं A. D.—Bö., Yajñ. शौटीर; om. by Kâś. V., Hem.

३ का। र्मकः D.; om. B. C. K.

४ Śiś. 3, 5; D. om. from बाल्यं.

५ शिलकः A. D.

६ शौचिक्यं A.; शौलिक्यं B. F. K.; शैलिक्यं C.—सूचिक Bö., Yajñ., K. V.; twice सूचक (see next sl.) Hem.

७ ॰धर्मिक॰ A. D.; चर्मिक॰ F.

८ अविकांजलिक॰ E.; प्रचिकांजलि॰ F.; ॰भूचक॰ A. D.

९ पारिषद्दिक॰ D.; परिषकद्दिति A.—पर्षिक Bö., Yajñ.; om. K. V., Hem. [पर्षः सेकोऽस्यास्तीति पर्षो अभिषिक्तः स एव पर्षिकः Yajñ.]

१० धर्मोऽस्यास्तीति धर्मिकः। धार्मिक्यं A. D.; चर्मा॰ चर्मिकः चार्मिक्यं F.; वार्मिकः॰ B. C.—वर्मिक & धर्मिक Bö., Yajñ., K.V. *a.* (वर्मित ed.); वर्मिक Hem.

ण्डिक्यम् ॥ * ॥ अञ्जनमस्यास्तीति । अञ्जनिकः । आञ्जनिक्यम्[१] ॥ अञ्जनक[२] इत्यपि शकटाङ्गजः ॥ * ॥ प्राविक्यम्[३]। अयं भोजमतेन ॥ * ॥ अञ्जलिरस्यास्तीति । अञ्जलिकः । आञ्जलिक्यम् ॥ * ॥ क्वाचित्क्यम् ॥ * ॥ सूचयतीति सूचकः । सौचक्यम् ॥ सूतक[४] इत्यन्यः ॥ * ॥ वैश्वस्त्यम् ॥ * ॥ विगतं फलमस्य । विफलः । वैफल्यम् ॥ ४०३ ॥

**क्षेत्रज्ञोऽथ यथातथपिशुनविदूरा यथापुरनृशंसौ ।**
**कुशलेश्वरनिपुणा अपि नञ्पूर्वाः सूरिभिः कथिताः ॥ ४०४ ॥**

अक्षेत्रज्ञस्य भावः कर्म वा । आक्षेत्रज्ञ्यम् । नञः क्षेत्रज्ञेश्वरकुशलशुचिनिपुणानामित्यनेन[५] नित्यमुत्तरस्यारैच् । पूर्वपदस्य वा ॥ * ॥ आयथातथ्यम् । यथा । गुणानामायथातथ्यात्[६] ॥ अयाथातथ्यम् । यथातथायथापुरयोः पर्यायेणेत्यनेनारैच्[७] । अन्येषां मतमेतत् ॥ * ॥ आपिशुन्यम्[८] ॥ * ॥ आविदूर्यम् ॥ * ॥ आयथापुर्यम् । अयथापुर्यम् ॥ * ॥ आनृशंस्यम् ॥ * ॥ आकौशल्यम् । अकौशल्यम् ॥ * ॥ आनैश्वर्यम् । अनैश्वर्यम् ॥ * ॥ आनैपुण्यम् । अनैपुण्यम् ॥ * ॥ भाष्यकारस्य त्वक्षेत्रज्ञानीश्वरशब्दावेव संमतौ । नञस्तत्पुरुषादित्यनेनैतेषां त्वतलोरेव

---

१ आंजनक्यं A.; अमनक्यं D.

२ अंजनिक A. C.; अजनिक B.—अजानिक and अज्ञनिक (*v.l.* अन्तनिक) Bö.; अजानिक (अजनीकं केचित्) and अंजनिक Yajñ.; अजानिक. *v.l.* अञ्जत्निक K. V. ed., आंजनिक β., om. *a.*; अर्जिनिक and अंजनिक Hem. [जनादागतं जानं न जानमजानं तद्वान् अजानिकः । अंजनिको अंजनवान् । Yajñ.]

३ प्राचिक्यं F.—K. V. ed. gives the *v.ll.* प्रचिक and प्रविक; प्रतिक Bö., Yajñ. [प्रतिगतं कं सुखं यस्मिन्स प्रतिकः सुखी Yajñ.]

४ सूचक A.—सूचक and सूतिक Bö., Yajñ. [सूतिकायाः सौतिक्यं], K. V.; सूचक and सूतक Hem.

५ Cf. Pâṇ. vii. 3, 30.—Hem. has the rule (vii. 4, 23) नञः क्षेत्रज्ञेश्वरकुशलचपलनिपुणशुचेः ।; cf. p. 429, l. 10.

६ Śiśup. 2, 56.

७ See Pâṇ. vii. 3, 31.

८ आपिशून्यं MSS.

प्राशयोः पाठः[१] । शकटाङ्गजस्तु नञ्पूर्वाणां संवादिन्संवेशिन्बहुभाषिन्शीर्षघातिन्समस्थविषमस्थपुरःस्थपरमस्थमध्यस्थदुष्पुरुषकापुरुषविशालशब्दानामेतेषां ष्यणमाह[२] । ब्राह्मणबालिशशब्दौ प्राणिजातिवयोऽर्थौ ताभ्यामण्बाधनार्थम् । माणववाडवशब्दौ चरणवचनौ ताभ्यामकञ्बाधनार्थम् । तत्स्थसमस्थविषमस्थपरमस्थमध्यस्थशब्दानां नञ्समासेऽपि पाठः । विराधयाराधयोपराधयापिराधयशब्दानामपत्यलक्षणस्याकणो[३] बाधनार्थः । गणपत्यधिपत्योः पाठः परप्रसिद्धा । गडुलदायादविशस्तिविशंपुरशब्देभ्यस्त्वतलौ[४] न भवत इति वृद्धाः । शकटाङ्गजस्तु बालिशसंवादिन्बहुभाषिन्शब्दानामपि नेच्छति । भोजः पुनर्विशस्तिविशायवर्जितेभ्यः सर्वेभ्योऽपि त्वतलाविच्छति ॥ * ॥ आकृतिगणोऽयम् । तेन यथादर्शनमन्येऽपि द्रष्टव्याः ॥ ४०४ ॥ इति ब्राह्मणादिः[५] ॥

युवमिथुनकुलीनभ्रातृसुस्त्रीप्रशास्तृ-
स्थविरचपलदुःस्त्रीदुष्टवो होतृसुष्ठु ।

---

१ Cf. Mahâbh. on P. v. 1, 121.

२ Hem. also includes असंवादिन् etc. in the gaṇa बुधादि.

३ अपराधय for अपिराधय F.

४ ? °दायादविश[स्ति suppl. K.]पुर° B. K. F.; °विशपुर° C.; ? K. V. विष (विप्र a.; विप्र Bö., Yajñ.) and पुरः; Hem. विशंप.

५ This gaṇa includes ब्राह्मणादि and पुरोहितादि to Pâṇ. v. 1, 124; 128. Also Hem.'s राजादि, गडुलादि and बुधादि (i.e. अबुध etc.) in the rules vii. 1 (50-55) भावे त्वतल्॥ प्राक्त्वादगडुलादेः [गाडुल्यं etc. only.] ॥ नञ्तत्पुरुषादबुधादेः [°गडुलादीनामपि पाठं केचिदिच्छन्ति । अन्ये तु बुधादीनामष्टानामेव (i.e. बुध । चतुर । संगत । लवण । वंड । कत । रस । लस) प्रतिषेधमिच्छन्ति । एषामेव विकल्पमपरे । अथ अणन्तानामेषां नञ्समासो भवति वा न वा । बुधस्य भावः कर्म वा बौध्यं । न बौध्यमबौध्यमिति भवतीत्येके । न भवतीत्यन्ये] ॥ पृथ्वादेरिमन्वा ॥ वर्णदृढादिभ्यष्ट्यण्वा ॥ पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च ॥. Hem. om. many of the words given above.

कुतुककितवकुस्त्रीकर्तृसब्रह्मचारि-
श्रमणनिपुणवध्वध्वर्यवः कन्दुकश्च[१] ॥ ४०५ ॥

प्राणिजातिवयोऽर्थहायनान्तयुवादिलघ्वादीकोऽण्[२] इत्यनेन युवादेस्तस्य भावः कर्म वेत्यर्थेऽण् भवति । पक्षे यथाप्राप्तम् ॥ * ॥ यूनो भावः कर्म वा । यौवनम् । युवत्वम् । युवता ॥ यौवनिकेत्यपि मनोज्ञादिपाठात्[३] ॥ एवं युवतिशब्दस्यापि लिङ्गग्रहणे[४] लिङ्गविशिष्टस्यापि ग्रहणमिति न्यायात् ॥ * ॥ मैथुनम् ॥ * ॥ कौलीनम् ॥ * ॥ भ्रात्रम् ॥ * ॥ सौस्त्रम् ॥ * ॥ प्रशास्ता ऋत्विक् । प्राशास्त्रम् ॥ * ॥ स्थविर इव स्थविरः । स्थाविरम् ॥ स्थाविर्यमित्यपि ब्राह्मणादित्वात्[५] ॥ * ॥ चापलम् ॥ केचिन्नञ्पूर्वस्याप्यस्य पाठं मन्यन्ते । तन्मत आचापलम् अचापलम्[६] । एवं क्षेत्रज्ञकुशलनिपुणानामपि ॥ अभ्यघाति मुनिचापलात्त्वया[७] ॥ * ॥ निन्दिता स्त्री । दुःस्त्री । दौःस्त्रम् ॥ * ॥ दुष्टु निन्दितम् । दौष्टवम् ॥ * ॥ होता ऋत्विक् । हौत्रम् ॥ होतुरित्यपि भोजः । हौतवम् ॥ * ॥ सुष्ठु शोभनम् । सौष्ठवम् ॥ * ॥ कुतुकं कुतूहलम् । विवाहवाचीत्यन्ये । कौतुकम्[८] ॥ * ॥ कैतवम् ॥ * ॥ कुत्सिता स्त्री कुस्त्री । कौस्त्रम् ॥ * ॥ कार्त्रम् । अयं भोजमतेन[९] ॥ * ॥ समानो ब्रह्मचारी । सब्रह्मचारी । साब्रह्मचारम् । ब्रह्मादीनामित्यनेनान्त्याजादिलुकि[१०] ॥ सुब्रह्मचारिन्निति वामनः । तन्मते सौब्रह्मचारिणम् ॥

---

१ ०वंध्वध्वर्यवः० A.; पटुध्वर्यवः० C.; वध्वध्वर्यवः D.; वद्वध्वर्यवः कुंदुकश्च B.

२ ०युवादिशब्दादीकोण् F.; cf. P. v. 1, 129-131.

३ Cf. ṣloka 409.

४ B. C. K. om. लिङ्गग्रहणे.

५ Not given in that (âkṛiti) gaṇa.

६ Om. B. C. F. K.; see p. 427, n. 5.

७ Kirâtârj. 13, 63; D. om. from केचिन्नञ्पूर्व०.

८ कुतुकं कौतुकं कुतू० अन्ये । कौतवं । B. C. K.

९ कर्तृ Hem., K. V. MS. $\beta$, *v.l.* ed.; हर्तृ MS. *a.*, Bö., Yajñ.

१० See ṣloka 163.—Yajñ. forms साब्रह्मचारिणं in accordance with Pâṇ. vi. 4, 134 (इनण्यनपत्ये).

ब्रह्मचारिन्निति चन्द्रः। तन्मते ब्राह्मचारिणम्। अनपत्ये चेति प्रतिषेधाद् इनोऽनोऽणादाविति[1] नान्त्याजादिलोपः ॥ * ॥ श्राम्यतीति श्रमणः। श्रामणम् ॥ कथं श्रामण्यं प्रतिपेदिर इति प्रयोगो ब्राह्मणादित्वाद्भवति ॥ शृणोति तथोपदेशं[2] श्रवण इति वामनादयः ॥ * ॥ नैपुणम् ॥ * ॥ वाधवम्[3] ॥ * ॥ अध्वर्युर्ऋत्विग्विशेषः। आध्वर्यवम् ॥ * ॥ कान्दुकम्[4] ॥ ४०५ ॥

कुशलवृषलौ क्षेत्रज्ञोऽथानृशंसकुतूहलं[5]
पिशुनसुहृदावुन्नेताऽथो सहस्र[6] कमण्डलुः।
अपि च हृदयं दुःसोः पत्ते रथाङ्गणकस्तथा[7]
हृदयपुरुषौ ज्ञेयावेतौ समासविपर्यये ॥ ४०६ ॥

कौशलम् ॥ * ॥ वार्षलम् ॥ * ॥ क्षैत्रज्ञम् ॥ * ॥ आनृशंसम् ॥ * ॥ कौतूहलम् ॥ * ॥ पैशुनम् ॥ * ॥ शोभनं हृदयं यस्य सुहृन्मित्रम्। निन्दितं हृदयं यस्य दुर्हृद् अमित्रः। सुहृद्दुर्हृन्मित्रामित्र[8] इति हृदादेशः ॥ वामनमतेन हृच्छब्देनैतयोः सिद्धिः। सौहार्दम्। दौर्हार्दम्[9]।

---

१ इनोनोणादाविति A. F.; इनोनोणाः दाविति B. C. K.; अपत्य वेति° इनोणादाविति D.—The other works have सब्रह्मचारिन् only.

२ तलोपदेशमिति F.; तच्चोत° B. C. K.—श्रवण K. V.; श्रमण Yajñ.; श्रणम (v.l. श्रमण) Bö.; श्रमण। श्रमणक। श्रवण। Hem.

३ वांधवं A.; वाटवं B. K.; पाटवं C.; वाधकं D.—वधू Bö., Yajñ., K. V.; om. Hem. (? rightly, as it falls under the general category of लघ्वादीक्;—or बन्धु with A.?).

४ कांडुकं B. C. K.—कांडुक Hem.; कन्दुक K. V. β., v.l. ed.; कतक α.; om. Bö., Yajñ.

५ चेत्रज्ञो वानृशंस° all MSS.

६ °उन्नेतासौ° A. D.; उन्नेता साहस्र E.

७ पात्ते कुबषाङ्गणस्तथा A.; रथान्गण° B. C. D. E. K.

८ Cf. Pâṇ. v. 4, 150.

९ दौहार्द° दौहार्द्य etc. A. throughout, D. mostly, other MSS. occasionally; cf. दुहृद् in next śloka, and the comment. p. 433, l. 6.

हृल्लगसिन्धूनामित्यनेनोभयपदारैच्[१]। शोभनं हृदयं यस्य स सुहृदयः साधुः। दुष्टं हृदयं यस्य स दुर्हृदयः क्रूरः। तयोरणि हृदयस्य हृल्लासलेखाण्य[२] इति हृदयस्य हृदादेशः। सौहार्दम्। दौर्हार्दम्। ब्राह्मणादित्वमप्येषाम्। तेन दौर्हार्द्यं सौहार्द्यम्। सौहृदय्यं दौर्हृदय्यमित्यपि। इह सुहृदयदुर्हृदयशब्दावेव पठितव्यौ सुहृद्दुर्हृच्छब्दावेव वा न तु चत्वारः। अन्यतरपाठेऽपि हि सौहार्दं दौर्हार्दमिति सिध्यति। उच्यते। अर्थभेदात् सुहृद्दुर्हृच्छब्दौ मित्रामित्रवाचिनौ सुहृदयदुर्हृदयशब्दौ तु नैवम्। तौ हि प्रशस्तनिन्दितहृदयसंबन्धमात्रे वर्तेते। उभयत्रापि च सौहार्दं दौर्हार्दमित्युभयपाठः॥ सौहृदं दौर्हृदमिति च प्रयुज्यते। यथा। तत्सौहृदं यत्क्रियते परोक्षे[३]। कुसुमं कृतदौहृदस्त्वया[४]। तदर्थमेकत्रोभयपदारैज्[५] मा भूत्। अन्यथोभयत्राप्येकरूपत्व उभयपाठानर्थक्यं स्यादित्युभयपाठः। अयं पक्षो वामनस्यापि हृल्लगेत्यत्र सुहृदो भावः सौहार्दमिति दर्शयतः संमतो लक्ष्यते। जयादित्यस्तु सुहृदयदुर्हृदयशब्दौ सुहृद्दुर्हृच्छब्दौ च[६] पपाठ। स चैवं मन्यते। ब्राह्मणादौ प्रयोगदर्शनादनयोः[७] पाठाङ्गीकरणे वचनसामर्थ्यादेवाण् ष्यञ् भविष्यतः। असाक्षात्पठितोऽपि हि साक्षात्पठितवत्कल्प्यत आकृतिगणेष्विति॥ सौहृदेनापि भाषे त्वामि-

---

१ See Pâṇ. vii. 3, 19.

२ हृल्लासण् लेखाणे A.; cf. Pâṇ. vi. 3, 50.

३ Vriddha-Châṇ. 15, 8, in Böhtl.'s Ind. Spr. (2nd ed.) 2483 (ed. °यत्क्रियते परस्मिन्॥).

४ Raghuv. 9, 61 (कृतदोहदस्त्वया eds.).

५ तदत्रमेक° B. C. F.

६ B. C. K. om. सुहृद्दुर्हृच्छब्दौ; °दुर्हृदयशब्दावेव C.—For Vâmana's view see Kâṣ. V. vii. 3, 19; as to Jayâditya, Vardh. seems to refer to the *gaṇa* in Kâṣ. V. v. 1, 130 (? v. 4, 150), though only the first four adhyâyas are generally ascribed to Jayâditya. See next page, note 9.

७ ण्योगदर्शनयोः A.

त्यादयस्तु[1] कविप्रवाहे छन्दोवत्कवयः प्रयुञ्जत इत्युक्तम् ॥ चन्द्रस्तु सौहृदमिति हृदयस्याणि[2] हृदादेशो न हृदुत्तरपदं हृद्भगेत्युत्तरपदारैजभावमाह[3] ॥ भोजस्तु सुहृद्दुर्हृदौ मित्रामित्रयोरित्यत्र निपातनसामर्थ्यादवयवानर्थक्ये[4] सौहृदं दौर्हृदमिति हृद्भगसिन्ध्वोः पूर्वपदस्य चेत्युत्तरपदारैज् न भवति[5] ॥ * ॥ उन्नेता गवेषणशील ऋत्विग्वा । औन्नेत्रम् ॥ * ॥ साहसम् ॥ * ॥ कामण्डलवम् । लघ्वादीक इत्यनेन[6] सिद्धे लतलोर्निवृत्त्यर्थः पाठः ॥ कमण्डलुकमित्यन्ये ॥ * ॥ पाङ्क्तिगणकम् ॥ * ॥ राथगणकम् ॥ * ॥ हार्दम् ॥ पौरुषम् ॥ समासे तु सहृदयता । सहृदयत्वम् । सत्पुरुषता । सत्पुरुषत्वम् ॥ ४०६ ॥

परिव्राजकसुभ्रातृसुभगोन्नातृहायनाः[7] ।
यजमानोऽथ भर्ता च दुर्भ्रातृविपुलौ दुहृत्[8] ॥ ४०७ ॥

पारिव्राजकम् । अयं शकटाङ्गजमतेन[9] ॥ * ॥ सौभ्रात्रम् । यथा ।
समानेऽपि हि सौभ्रात्रे यथा तौ रामलक्ष्मणौ[10] ॥ * ॥
सुभगस्य भावः कर्म वा । सौभागम् । हृद्भगसिन्ध्वोः पूर्वस्य चेत्युभयपदारैच् ॥ अयं चन्द्रमतेन । जयादित्यस्तु सुभग मन्त्र[11] इति पठति । यथा । महते सौभगाय[12] । सर्वे विधयश्छन्दसि विकल्पन्त इत्युभय-

---

१ भाषत्वानित्य° A.
२ चंद्रस्त सौ° D.; चंद्रस्तु सौहृदयस्याणि B. C. K.
३ °जभावनामाह A.; °पदारैजमाह B. C. K.
४ °सामर्थ्यादेवानर्थक्ये B. C. F. K.; श्रीभोजस्तु° D.
५ °पदारैच् भवति A.
६ लघ्वादी इत्यनेन B. C. F. K.
७ °सुभ्रातृश्रमणोन्नात्रहायनाः E.
८ दुर्हृत् B. C. D. E. F. K.
९ शकटांगजादिमतेन A.
१० Raghuv. 10, 82.
११ ? Kâṣ. V. v. 1, 130; cf. preceding page, note 5.
१२ Ṛigv. i. 164, 27.

चारैज् न भवति । मन्त्र इति किम् । सौभाग्यं ब्राह्मणादित्वात् ष्यञेव भवति । वामनस्यापि संमतमेतत् ॥ * ॥ उद्गतो गायत ऋत्विग्वा । उद्गाता । औद्गात्रम् ॥ * ॥ हायनस्य[1] । हायनम् । अयं वामनमतेन ॥ * ॥ याजमानम् ॥ * ॥ भर्तुः । भार्त्रम् ॥ * ॥ निन्दितो भ्राता दुर्भ्राता । तस्येदं दौर्भ्रात्रम् ॥ * ॥ वैपुल्यम्[1] । अयं वामनमतेन ॥ * ॥ दुहृदुदाहृत एव ॥ ४०७ ॥

प्रतिहर्ता तथा पोता यलोपः श्रोत्रियस्य च ।
वृषपूर्वं गणं प्राह वामनस्तु तपस्विनि ॥ ४०८ ॥

प्रतिहर्ता ऋत्विक् । प्रातिहर्त्रम् । ये तु लघ्वादीक इत्यत्र लघ्वादेरिगन्तस्य[2] विशेषणं मन्यन्ते तेषां मते तेनैव सिद्धं प्रातिहर्त्रम् ॥ परत्वात् त्वतल्भ्यां बाध्यत इत्यणिधानम् ॥ * ॥ उद्गातृ । उन्नेतृ । होतृ । पोतृ । प्रशास्तृ । अध्वर्यु । इत्येतेषां यदा ऋत्विग्वचनत्वं तदा होत्राभ्यश्छ इति[3] छे प्राप्ते पाठः ॥ ४०८ ॥ इति युवादिः[4] ॥

मनोज्ञमेधाव्यभिरूपवृद्धाः
कल्याणचोरप्रियरूपधूर्ताः
आढ्यस्तथा श्रोत्रियसारपत्राप्
छात्त्रो युवच्छान्दसविश्वदेवाः[5] ॥ ४०९ ॥

---

1 Not given in the other works.—For हायनान्त cf. Pâṇ. v. 1, 130; and above, p. 429, l. 3.

2 लघ्वादिरिगंतस्य B. C. D. K.; लघ्वादिरितिगंतस्य A.; cf. p. 429, l. 3; Pâṇ. v. 1, 131.

3 Pâṇ. v. 1, 135. — वृषगण is not given by any of the other works.—For श्रोत्रिय (श्रौत्रम्) see P. v. 1, 130 vârtt.

4 This *gaṇa* includes उद्गात्रादि & युवादि to Pâṇ. v. 1, 129, 130.—Hem. only युवादि.

5 युवा छ° B. C. D. E. K.; सारपुत्रा° वैश्वदेवाः F.

मनोज्ञादिगुरूपोत्तमयोपान्तादकञ् इत्यनेन मनोज्ञादेस्तस्य भावः कर्म वेत्यर्थेऽकञ् वा भवति ॥ * ॥ मनो जानाति परितोषयतीति मनोज्ञं वस्तु । तस्य भावः कर्म वा । मानोज्ञकम् ॥ * ॥ मैधावकम् ॥ * ॥ शोभनं रूपमस्य रूपमभिगत[1] इति वा । अभिरूपः । तस्य । आभिरूपकम् ॥ * ॥ वार्द्धकम् । यथा ।

वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्[2] ॥

अन्ये तु वयोऽर्थलक्षणेऽणि स्वार्थिकेऽके च वार्द्धकमित्याहुः[3] ॥ * ॥ काल्याणकम् ॥ * ॥ चौरिका । स्वभावात्स्त्रीत्वम् । अन्यस्तु चौरकं धौर्तकमिति[4] नपुंसकलिङ्गे ददर्श ॥ * ॥ प्रियं रूपं यस्य तस्य प्रैयरूपकम् ॥ * ॥ धौर्तिका ॥ * ॥ आ पूर्णं ध्यायतीत्याढ्यः । आढ्यकम् ॥ * ॥ औत्रियकम् ॥ * ॥ साराणि पत्त्राण्यस्य । सारपत्त्रः । सारपत्त्रिका[5] । सारपत्त्रकम् इत्यन्यः[6] ॥ सरप्रयुक्तं पत्त्रं वाहनं सरपत्त्रम्[7] इत्यन्यः ॥ सारपुत्त्र[8] इति भोजः ॥ * ॥ क्षत्त्रशीलः क्षात्त्रः । क्षात्त्रकम् ॥ * ॥ यौवनिका । अके राजन्यमनुष्ययूनामित्यनेनान्याजादिलुगभावः[9] । यथा ममैव ।

---

१ रूपमभिगच्छत A.; रूपमपि गत D.

२ Raghuv. i. 8.

३ Bö. and Kâṣ. V. omit वृद्ध; cf. Pâṇ. iv. 2, 39 vârtt.

४ श्रौर्त्तमिति B. C.—Yajñ. also has श्रौत्रिका । चौरिका । धौर्तकं चौरकमिति केचित्. — For Hem. see page 436, n. 3.

५ सारपत्त्रं सा॰ B. C. K.; ॰सारपत्त्रका A.

६ सारपत्त्रिकम्॰ B. C. K.; सारपत्त्रम्॰ F.—Yajñ. has the same passage from साराणि॰.

७ शरपत्त्रम् A.

८ ? Thus F.; सरपुत्त्र D.; सरपत्त्र A. B. C. K.—Bö., Yajñ. has सारपत्त्र and शतपुत्त्र; Kâṣ. V. शतपुत्त्र; Hem. शरपत्त्र, शारपत्त्र and सारपुत्त्र.

९ ॰लुगभावः B. C. K.; लुग्भवति F.; see vârtt. on Pâṇ. vi. 4, 163 (Böhtl., ib. 151).

नवे यौवनिकोद्भेदे यस्य न स्खलितं मनः ।
बृंहितं नापि सिद्धेशप्रसादेन मनीषिणः[१] ॥

यथा वा धनंजयस्य ।

क्षणभङ्गुरमङ्गमङ्गिनां[२]
न गता यौवनिका निवर्तते ।
विभवास्तृणवारिचञ्चला
निचया मर्मरपत्रसंनिभाः ॥

छान्दसकम् ॥ * ॥ वैश्वदेवकम्[३] ॥ ४०८ ॥

**बहुलामुष्यकुलादोरूपावश्यंकुपुत्रकुलपुत्राः ।**
**पुत्रकुमारकुलाला ग्रामात्सरडश्च सुकुमारः ॥ ४१० ॥**

बाहुलकम् । दृढादिपाठाद् बंहिमा । बाहुल्यमित्यपि[४] ॥ * ॥ आमुष्यकुलिका । आमुष्यकुलकमित्यन्ये ॥ अमुष्यपुत्र इत्यपि ॥ * ॥ अदो रूपम् । अदो रूपमस्येति वा । अदोरूपम् । तस्य । आदोरूपकम् । अदोरूपशब्दो रूपप्रशंसायाम्[५] ॥ * ॥ आवश्यकम् ॥ * ॥ कौपुत्रकम्[६] । अयं वामनमतेन ॥ * ॥ कौलपुत्रकम् ॥ * ॥ ग्रामपुत्रिका ॥ * ॥ ग्रामकुमारिका ॥ * ॥ ग्रामकुलालिका । ग्रामकुलमित्यप्यन्यः[७]

---

१ बृहितेनापि° A.

२ क्षणभं गुरमंगम° A.; क्षणभंगुरसंग° D.

३ विश्वदेव Bö., Yajñ., Hem., K. V. $\beta$.; वैश्वदेव Kâṣ. V. ed., $a$.

४ बहुल is not given in the *gaṇa* दृढादि ṣl. 393-4 (except by Kâṣ. V. $\beta$.; *v.l.* ed.) but in पृथ्वादि ṣl. 392; see also page 518, note 3.

५ Thus also Yajñ.; Hem. has the same word; om. Bö., Kâṣ. V.—[अहोपुरुष Yajñ., K.V. $\beta$.; *v.l.* Bö., K.V. ed.]

६ कुपुत्र Bö., Yajñ.; omitted by Kâṣ. V., Hem.

७ ग्रामकुलमि° F.; ग्रामकुलमि° D.; °इत्यन्यः A. F.—Hem. has both words; Bö., Yajñ. ग्रामकुलाल only; Kâṣ. V. ed., $a$. $\beta$. give neither.

॥ * ॥ षण्डो वृषः । ग्रामस्य षण्डो ग्रामषण्डः । तस्य ग्रामषण्डिका ॥ पूरुषादिवद्दीर्घत्वे ग्रामषाण्ड इत्यन्ये[1] ॥ ग्रामषण्ड[2] इति जयादित्यादयः ॥ एते चत्वारो नपुंसकलिङ्गा इत्यन्ये[3] ॥ * ॥ सुष्ठु कुमारः सुकुमारः । सौकुमारकम् ॥ ४१० ॥ इति मनोज्ञादिः ॥

इष्टार्चितौ निपठितागणितावकीर्ण-
पूर्तोपसादितगृहीतनिराकृताश्च ।
संरक्षितानुपठितोपकृतानुयुक्ता-
म्नातश्रुतानुगणितास्त्ववकल्पितं च ॥ ४११ ॥

इष्टादिभ्योऽनेनेत्यनेनेष्टादेः प्रथमान्तादनेनेति तृतीयार्थ इन् भवति ॥ * ॥ इष्टोऽनेन यज्ञः । इष्टी यज्ञे ॥ इष्टमनेन वा । इष्टी यज्ञे ॥ * ॥ अर्चिती सिद्धराजे ॥ * ॥ निपठिती मीमांसायाम् ॥ * ॥ अगणिती मदने ॥ * ॥ अवकीर्णी दुर्नये ॥ * ॥ पूर्ती दाने ॥ * ॥ उपसादिती सदसि ॥ उपासितमित्यन्ये । उपासिती गुरुकुले[4] ॥ * ॥ गृहीती विद्यासु ॥ * ॥ निराकृती कुकाव्ये ॥ * ॥ संरक्षिती प्रजासु ॥ * ॥ अनुपठिती वेदे ॥ * ॥ उपकृती मन्त्रे ॥ * ॥ अनुयुक्ती शास्त्रे ॥ * ॥ आम्नाती

---

१ पुरुषाद्विवद्दीर्घत्वे (om. rest) A.; पुरुषाद्दिव दीर्घत्वे ग्रामसाड० D.; पूरुषाद्दिव दी० B. C. F. K.

२ ग्रामखंड B. C. K.—ग्रामसंड and ग्रामसांड Hem.; ग्रामषण्ड Bö., Yajñ., Kâś. V. *a.*; ग्रामखण्ड Kâś. V. ed.

३ According to Hem., who calls this *gaṇa* चौरादि, the words from मनोज्ञ to the end of his *gaṇa* form neuter abstract nouns in अकञ् only [मानोज्ञकम्], whereas *those preceding* मनोज्ञ make both neuter and feminine nouns [चौरिका । चौरकम् ॥ धौर्तिका । धौर्तकम् ।]. Cf. मनोज्ञादि in list of *gaṇas*.

४ उपसिनी० C.; कुरुकुले A.; युरुकुलो D.—Hem. has both words; Yajñ., Kâś. V. ed., *β*. उपसादित; Bö., Kâś. V. *a*. उपासादित.

छन्दसि ॥ * ॥ श्रुती । इतिहासे ॥ * ॥ अनुगणिती निरुक्ते ॥ * ॥ अवकल्पिती जल्पे ॥ ४११ ॥

आसेवितपरिरचितनिकथितगणितोद्गृहीतपरिकलिताः ।
उपपादितपरिगदितौ[1] संकलिताधीतपरिगणिताः ॥ ४१२ ॥

आसेविती सिद्धपतौ[2] ॥ * ॥ परिरचिती परिजने[3] ॥ * ॥ निकथिती कथासु । निकठित इत्यन्यः[4] ॥ * ॥ गणिती ज्योतिषि ॥ * ॥ उद्गृहीती । उद्योगे ॥ * ॥ परिकलिती कलासु ॥ * ॥ उपपादिती धने[5] ॥ * ॥ परिगदिती परेषु ॥ * ॥ संकलिती पदार्थेषु ॥ * ॥ अधीती व्याकरणे ॥ * ॥ परिगणिती याज्ञिक्ये ॥ ४१२ ॥

अवगणितव्याकुलितौ निषादितोपाकृतावमुक्ताश्च ।
अवधारितपठितकृता निगदितमनुगुणितमायुक्तम्[6] ॥ ४१३ ॥

अवगणिती वादिनि ॥ * ॥ व्याकुलिती रिपुजने ॥ * ॥ निषादिती हास्तिके[7] ॥ * ॥ उपाकृती पशौ ॥ * ॥ अवमुक्ती पापे ॥ * ॥ अवधारिती शास्त्रार्थे ॥ * ॥ पठिती वेदे ॥ * ॥ कृती धर्मे ॥ * ॥ निगदिती नयेषु ॥ * ॥ अनुगुणिती[8] । अनुपदे ॥ * ॥ आयुक्ती युद्धे ॥ * ॥ मत्वर्थीयेनेनासिद्धे ठन्निवृत्त्यर्थमिन्विधानम्[9] ॥ ४१३ ॥ इष्टादिः ॥

---

१ उपवादित° A.

२ सिद्धिमतौ D.

३ वारिजने B. C. K.; (आर्त्ते Yajñ.)

४ Hem. both and कथित besides, the others निकथित.

५ उपमादिती वने A.; °ध्वने D.—Hem. alone has this word.

६ °अनुगणितमायुक्तं A. D. E. (cf. śloka 411, and note ८.)

७ निषादित Bö., Hem.; om. Kâś. V.; निवादित [निवादिती वाद्येषु] Yajñ.;—Bö., Yajñ., Kâś. V. have also परिवादित [परिवादिती दृष्टेषु Y.].

८ अनुगणिती A.D.—Hem. has both अनुगणित and अनुगुणित; Bö., Yâjñ., Kâś. V. *a.* अनुगणित; Kâś. V. ed., *β.* अनुगुणित only.

९ ठन्निर्वृत्त्य° B. K.; ठेन्निवृ° A. तन्निवृ° C.; अन्यनिवृ° D.

यवोर्मिवासाकृमिभूमिबन्धवः[1]
कुञ्चाककुत्कान्तिहरीन्दुबिन्दवः ।
हनुस्तिमीक्षू मधुसानुभानवो[2]
द्राक्षाहरिच्छिम्बिगरुद्दुचारवः[3] ॥ ४१४ ॥

झय्मान्मोपान्तान्मो[4] वोऽयवादेरित्यनेन झयन्तान्मकारान्तादवर्णान्तान्मोपान्तादवर्णोपान्ताच्च[5] यवादिवर्जितान्मतोर्मकारस्य वकारो भवति ॥ * ॥ यवा अस्यात्र वा सन्ति । यवमान् ॥ * ॥ ऊर्मिमान् ॥ * ॥ वासामान् । वासाशब्दः[6] स्त्रीलिङ्गः ॥ * ॥ कृमिमान् ॥ * ॥ भूमिमान् ॥ * ॥ बन्धुमती । बन्धुमान् ॥ * ॥ कुञ्चामान्[7] ॥ * ॥ ककुद्मान् । ककुद्मानेष हेषते ॥ * ॥ कान्तिमान् ॥ * ॥ हरिमान् ॥ * ॥ इन्दुमती ॥ * ॥ बिन्दुमती ॥ * ॥ हनुमान्[8] ॥ * ॥ तिमिमान्[9] ॥ * ॥ इक्षुमती ॥ * ॥ मधुमान्पर्वतः ॥ * ॥ सानुमान् ॥ * ॥ भानुमान् ॥ * ॥ द्राचामान् ॥ भ्राचेत्यपि[10] भोजः ॥ * ॥ हरिन्मान् ॥ * ॥ शिम्बिमान्[11] ॥ शिम्बीमानित्यन्यः[12] ॥ * ॥ गरुत्मान् । गरुडः ॥ * ॥ द्रुमती । अमती-

१ ॰क्रिमि॰ D. E. (D. also in comm.)

२ हनुस्तीमीचू॰ E.; हनुस्तिमा इचु-मधुसाधुमानवो C.; मधुनान॰ B. E.

३ ॰हारिः॰ D.; शिविगरुद्रु॰ A. D.; हरिंनशंबि॰ C.; हरित्शंबि॰ F.; सिंजि-गरुद्रु॰ E.; चारवः B.

४ ह्रष्मामोपांतान्मो B. C. F. K.; ऋष्मामोपां॰ A.; ऋप्यामो॰ D.

५ चयंतान्म॰ B. C. F. K.; ऋयंता॰ A.; ऋंयताहंमका॰ D.

६ Thus also Hem.; वशा others [वशामान् बन्ध्यापतिः Yajñ.].

७ कुंचामान् कुंवामान् । A.

८ हनूमान् B. C. D. K.

९ तिमि Hem.; स्तिमि Yajñ.; om. others.

१० ध्वाचेत्यपि B.; धाचेत्यपि श्री-भोजः D.; द्राचामान् । द्राचाधाचे॰ A. —द्राचा and ध्राचा Bö., Yajñ., Hem.; द्राचा K. V.

११ ? शिंविमान् A.; शंबिमान् B. C. F. K.; सिंधिमान् D.

१२ ? शिंवीमानि॰ A.; शंबीमानि॰ F. K.; शांबीमानि॰ B.; शबीमा॰ C.; सिंधीमा॰ D.—शिंवी Hem.; सञ्जि and सिजि Bö., Yajñ.; सञ्जि (*v.l.* शञ्जि) Kâs. V. ed.; सिजि K. V. *a*.

त्यपि भोजः[१] ॥ * ॥ चारुमती ॥ * ॥ केषांचिद्वर्णान्तात्प्राप्तः । केषांचिद्योपान्तादिति[२] । केषांचिज्झय[३] इति । केषांचित्संज्ञायामिति ॥ * ॥ आकृतिगणश्चायम् । तेन दल्मिमदंशुमती श्रीमती[४] गोमती ध्वजित्मत्प्रभृतयो[५] ज्ञेयाः ॥ ४१४ ॥ इति यवादिः ॥

वत्वन्तमुदन्वष्ठीचक्रीकक्षीरुमण्विवो ज्ञेयम् ।
राजन्वान्सौराज्ये ज्योत्स्ना चर्मण्वती नाम्नि ॥ ४१५ ॥

उदन्वदादिरित्यनेनोदन्वदादयः शब्दा निपात्यन्ते संज्ञायाम् ॥ * ॥ उदकमस्मिन्नस्तीति । उदन्वान् उदधिः । उदन्वान्नाम ऋषिः । उदन्वान्नामाश्रमः ॥ अन्यस्तु धारणक्रियासंबन्धाद्[६] उदन्वान्घट[७] उदन्वान्मेघ इत्यपि मन्यते[८] ॥ * ॥ अष्ठीवान्नाम जङ्घोरुसंधिः । अत्रास्थिशब्दस्याष्ठीभावो निपात्यते ॥ * ॥ चक्रीवान् रासभः । चक्रीवान्नाम राजा । अत्र चक्रशब्दस्य चक्रीभावः ॥ * ॥ कक्षीवान्नाम ऋषिर्लौकिकः । अत्र कक्षाशब्दस्य कक्षीभावः ॥ * ॥ रुमण्वान्नाम पर्वतः । रुमण्वान्नाम मन्त्री । अत्र लवणशब्दस्य रुमणभावः ॥ रुमन्निति प्रकृत्यन्तरमस्तीत्येके ।

---

१ ?अमतीत्यपि° B.; श्रुतिमती° श्रीभोजः D.—द्रु Bö., Yajñ., Hem.; द्रुम *Kâṣ*. V. ed., *a*.; cf. ṣl. 252 comm.; Pâṇ. v. 3, 118.

२ केषांचितमोऽपान्तादिति A.; om. D.

३ केषांचित् भय A.; °क्रय K.; °च्चय F.; om. D.

४ स्त्रीमती for श्रीमती B. K.; स्त्रिमती C. (cf. ṣl. 252 comm., and 418).—Not given by the other works.

५ ?Thus B. C. F.; ध्वजिन्मत्° K.; ध्वर्जत्मत्° A.; D. om. from आकृतिगण° to end.—ध्वजित् Hem.; ध्वजि and भ्रजि Bö., Yajñ., Kâṣ. V.

६ D. om. from उदन्वान्नाम ऋषिः.

७ उदकवान् घटः D.; उदकन्वान् घटः B.; उदलन्वान्घट A.—Hem. has °उदन्वान्घटः। उदन्वान्मेघः। यस्मिन्नुदकं धीयते स एवमुच्यते॥ नाम्नि। उदन्वान्समुद्रः।°. Cf. Kâṣ. V. viii. 1, 13.

८ °इत्यप्यन्यः D.

तस्य वा णत्वम्[१] ॥ * ॥ विशिष्टा वसवः किरणा यस्य । विवस्वान् आदित्यः ॥ * ॥ राजन्वान् देशः ।

राजन्वतीमाहुरनेन भूमिम्[२] ॥

सौराज्य इति किम् । राजवान् ॥ * ॥ ज्योतिरस्यास्तीति ज्योत्स्ना[३] । चन्द्रप्रभा ॥ * ॥ चर्मण्वती नाम नदी ॥ * ॥ नाम्नीति किम् । उदकवान् । अस्थिमान् । चक्रवान् । कच्चावान् । लवणवान् । वसुमान् । ज्योतिष्मान् । चर्मवान् ॥ ४१५ ॥ इत्युदन्वदादिः[४] ॥

**ज्योत्स्नाशब्दस्तमिस्रा[५] च कुतुपः स्याद्विपादिका ।**
**विसर्पो नखरश्चापि कुण्डलोऽपि मतो बुधैः ॥ ४१६ ॥**

प्रज्ञाज्योत्स्नापिच्छसिध्मलोमपामादेर्णाणिललशना[६] इत्यनेनैतेभ्यस्तदस्यात्र वास्तीत्येतस्मिन्नर्थे ण अण् इल ल श न[७] इत्येते प्रत्ययाः क्रमेण भवन्ति मतुश्च ॥ * ॥ ज्योत्स्नाऽस्मिन्नस्तीति ज्यौत्स्नः पक्षः । ज्यौत्स्नी रात्रिः ॥ * ॥ तमोऽस्यामस्तीति तमिस्रा रात्रिः । साऽस्यास्तीति तामिस्रः[८] पक्षः ॥ * ॥ कौतुपं[९] गृहम् ॥ * ॥ वैपादिकं कुष्ठम्[१०]

---

१ See p. 339, l. 13 (? read रुमण् लवण॰ instead of रुमौँल्लावण॰); p. 340, note 1.—Hem. also has लवणस्य रुमणभावः । रुमण्वान्नाम पर्वतः । अन्ये त्वाहुः । रुमन्निति प्रकृत्यन्तरमस्ति तस्यैव तन्निपातनं नकारलोपाभावार्थं च । णत्वं तु यथायोगमस्त्येव ॥.

२ Raghuv. 6, 22.

३ See Pâṇ. v. 2, 114.

४ For this *gaṇa* cf. Pâṇ. viii. 2, 12-14; Hem. ii. 1, 92-95.

५ ॰तमिश्रा A. B. D. K.

६ ॰पामणादेर्णाणि॰ A.; ॰पामादेनाणिलशना B. C. K.

७ B. C. F. K. om. ण; cf. p. 209, l. 15; Pâṇ. v. 2, 101.

८ तमिश्रा॰ तामिश्रः B. C. K.; तमिश्रः A.—Hem. also writes तामिश्र.

९ कुतप ed. Pâṇ.; कौतप Kâṣ. V.; कौतुप Hem.; cf. कुतप ṣl. 66.

१० कुष्टं B. C. F. K. (Hem.); कुष्ठं A.; कुच्छा D.

॥ * ॥ वैसर्पो व्याधिः ॥ * ॥ नाखरः श्वापदः ॥ * ॥ कौण्डलः ॥ * ॥ पचे ज्योत्स्नावान् । तमिस्रावान्[1] ॥ ४१६ ॥ इति ज्योत्स्नादिः ॥

पिच्छोदरव्रीहिगुहाः पिचण्डस्
तुन्दोदकोरोयवचूर्णपक्षाः ।
वर्णग्रहौ पङ्ककले च काक-
प्रज्ञे[2] तु फेनो ध्रुवका[3] च पर्णम् ॥ ४१७ ॥

पिच्छादेरिलः ॥ * ॥ पिच्छान्यस्य[4] सन्ति । पिच्छिलः ॥ * ॥ उदरिलः ॥ * ॥ व्रीहिलः । दिगम्बरस्तु व्रीहिग्रहणं स्वरूपार्थमर्थनिर्देशार्थं चेति[5] ब्रुवाणः शालिलो व्रीहिल इत्याह ॥ * ॥ गुहिलः ॥ * ॥ पिचण्डिलः ॥ * ॥ तुन्दिलः ॥ * ॥ उदकिलः ॥ * ॥ उरसिलः ॥ * ॥ यविलः चूर्णिलः ॥ * ॥ पक्षिलः ॥ * ॥ वर्णिलः ॥ * ॥ ग्रहिलः ॥ * ॥ पङ्किलः ॥ * ॥ कलिलः ॥ * ॥ काकिलः[6] ॥ * ॥ प्रज्ञिलः ॥ * ॥ फेनिलः ॥ * ॥ ध्रुव-

---

1 तमिश्रावान् A. B. C. K.

2 ? Thus A. D. E.; कालप्रज्ञे B. C. F. K.

3 ध्रुवका B. C. F. K.; विवका A.

4 Thus all MSS. and Yajñ.—पिच्छा Bö.; पिच्छ Kâs. V., Hem.

5 व्रीहिग्रहणस्वरूपा॰ B. C. K.; व्रीहिग्रहणं स्वरूपं चेति A.—Cf. Kâṣ. V. v. 2, 116 (व्रीह्यादिभ्यश्च ॥) ॰व्रीहिग्रहणं किमर्थम् । यावता तुन्दादिषु व्रीहिशब्दः पठ्यते तत्र इनिठनौ चकारेण विधीयेते । एवं तर्हि तुन्दादिषु व्रीहिग्रहणमर्थग्रहणं विज्ञायते । शालयोऽस्य सन्ति । शालिलः (ed. शालिनः) । शाली । शालिकः । शालिमानिति ॥—Hem. has the sûtras vii. 2, 5: व्रीह्यादिभ्यस्तौ (viz. इकइनौ) ॥; 9: व्रीह्यर्थतुन्दादेरिलश्च ॥॰ व्रीह्यर्थे । कलमा अस्य अस्मिन्वा सन्ति । कलमिलः । कलमिकः । कलमी । कलमवान् । शालिलः । शालिकः । शाली । शालिमान् । व्रीहिशब्दोऽपि व्रीह्यर्थो भवति । किं तु तस्य पूर्वचोपादानादिलो न भवति । भावे हि तत्रोपादानमनर्थकं स्यात् । भवतीत्येके । व्रीहिलः ॥ तुन्दादिः॰ see next page, note 3.

6 ? कालिलः B. C. F. K.—Hem. has कला (!) काक ।; Bö., Yajñ. काला (क्षेपे); Kâṣ. V. काल (क्षेपे).—See also comm. on śl. 420, where Vardh. refers काला, घाटा (घटा Bö., Yajñ., K. V.) and जटा to this *gaṇa*.

किलः । ध्रुवकेत्यपि[1] वामनः ॥ * ॥ पर्णिलः ॥ * ॥ पक्षे पिच्छवानित्याद्यपि[2] भवति ॥ तुन्दोदरपिचण्डप्रभृतीनां तुन्दादावपि पाठाद्देनौ[3] भवतः । भोजमतेन लविषयेऽपि बीजप्रभृतीनां केषांचित् ॥ ४१७ ॥
इति पिच्छादिः ॥

सिध्मस्नेहौ पांसुपृथुश्यामचटूनि[4]
प्रज्ञाग्रन्थी बीजकपी पिङ्गमृदू च ।
कर्णः शीतं मांसहनू मञ्जुगडू स्तः
पत्रं नाभिः श्रीमणिकण्डूदककृष्णाः ॥ ४१८ ॥

सिध्मादेर्लः ॥ * ॥ सिध्मान्यस्य सन्ति ॥ * ॥ सिध्मलः ॥ * ॥ स्नेहलः ॥ * ॥ पांसुलः[5] ॥ पृथुलः ॥ * ॥ श्यामलः ॥ * ॥ चटुलः[6] ॥ * ॥ प्रज्ञालः । पिच्छादिपाठात् प्रज्ञिलः ॥ * ॥ ग्रन्थिलः । यथा मुरारेः[7] ।

इयमेभिरालवालैः पदे पदे ग्रन्थिलासु कुल्यासु ॥ * ॥

बीजलः ॥ * ॥ कपिलः ॥ * ॥ पिङ्गलः ॥ * ॥ मृदुलः ॥ * ॥ कर्णलः ॥ * ॥ शीतलः ॥ * ॥ मांसलः ॥ * ॥ हनुलः । हनूल इत्यपि ॥ * ॥ मञ्जुलः ॥ * ॥ पृष्ठग्रन्थिर्गडुः । गडुलः । कुब्जः ॥ * ॥ पत्रलः ॥ * ॥ नाभिलः ॥ * ॥ श्रीलः । श्रीमान् ॥ * ॥ मणिलः ॥ * ॥ कण्डूलः ॥ * ॥ उदकलः । पिच्छादिपाठाद् उदकिलः ॥ * ॥ कृष्णलः ॥ ४१८ ॥

---

१ ध्रुवकिलः । द्रुवकेत्यपि B. C. F. K. — ध्रुवक and ध्रुवक Bö., Yajñ.; ध्रुवका and ध्रुवका Hem.; ध्रुवका and चुवका Kâś. V. ed., β. (α. ध्रुवका only).

२ पिच्छावानित्य° B. C. F. K. and orig. A.; पिच्छवान् Hem.

३ पाठस्थेलो A.; पाठाच्छेनौ B. C. F. K.; पाठच्चिनौ° श्रीभोज° D. — Vardh.'s पिच्छादि includes both पिच्छादि and तुन्दादि of Pâṇ. and Hem.

४ पांशु° A. B. C. D. E. K.

५ पांशुलः A. B. C. D. K.

६ चदुलः B. K.; बडुलः C.

७ Anarghar. (Calc. S. 1782) p. 36.

सक्थि श्लेष्मा पित्तनिष्पाड्धमन्यः
पेशः पार्ष्णि वातनिष्पावपुष्काः।
पार्श्वस्तुण्डिः पक्ष्मपर्शू कुशः स्याद्
धारासक्तू वर्ध्मफेनोष्मपर्णम्[1] ॥ ४१९ ॥

सक्थिलः ॥ * ॥ श्लेष्मलः। कफी ॥ * ॥ पित्तलः ॥ * ॥ निष्पादयतीति निष्पात् क्विप्। निष्पालः[2] ॥ निष्पदनं निष्पत्। निष्पल[3] इत्यन्ये ॥ निष्पाद्वान् ॥ अयं शकटाङ्गजमतेन ॥ * ॥ धमनीलः ॥ * ॥ पेशलः ॥ * ॥ पार्ष्णिलः ॥ धमनीपार्ष्णिशब्दौ दीर्घान्तावेव गणे पठ्येते। तेन दीर्घान्ताभ्यामेव लः। ह्रस्वान्ताभ्यामेव मतुः ॥ * ॥ वातलः ॥ * ॥ निष्पावलः ॥ निष्पानं निष्पा। निष्पाल[4] इत्यन्यः ॥ * ॥ पुष्कलः ॥ * ॥ पार्श्वलः ॥ * ॥ तुण्डिलः ॥ तुण्डिवटिवलेर्भ[5] इति भप्रत्यये तुण्डिभ इत्यपि ॥ * ॥ पक्ष्मलः ॥ * ॥ पर्शुलः। पर्शूल इति भोजराजः[6] ॥ * ॥ कुशलः ॥ * ॥ धारालः। यथा मुरारेः[7]।

प्रेङ्खाधारालवैरप्रस्टमरसमरोड्डामरौजा बिडौजाः ॥

सक्तुलः ॥ * ॥ वृधेर्मन्। वर्ध्मलः। पामादिपाठाद् वर्ध्मन[8] इत्यपि ॥ * ॥

---

१ वर्म्मफेनो° A.; ब्रध्मफे° B. K.; ब्रध्मफेनो° F.; °ब्रध्माफे° C.; °फेनो व पत्ता D.; वर्धकेनो चपवर्ण E.

२ निष्पालः A. C. D.

३ निष्पलः A. C.; B. C. K. om. निष्पत्.—Hem. has both; Bö., Yajñ. निष्पाद्; om. Kâṣ. V.

४ निष्पाणं° MSS.; B. F. K. om. निष्पा; C. om. निष्पाल.— Hem. निष्पा; the others निष्पाव.

५ ? तुंटिवटि° B. C. K.; तुडि° D.—तुंडि Hem. both in the gaṇa, and in sûtra vii. 2, 16 वलिवटितुंडेर्भः। (प्रवृद्धा नाभिस्तुंडिः comm.); om. by the others, but Pâṇ. and Kâṣ. V. v. 2, 139 तुन्दि (तुण्डि इति माधवः Calc. ed.).

६ A. om. पर्शुलः; श्रीभोजराजः D.; भोजः F.—पर्शू Bö.; पर्शु Yajñ., Hem.; परशु Kâṣ. V.

७ Anarghar. (Calc., S. 1782) p. 143.

८ धर्मन A.; वर्द्धान F.; वर्ध्मलः पामादिपाठात्। धर्मन् इत्यपि B. C. K.—Bö., Yajñ. have वर्ष्मन्, om. K. V.—In the पामादि Hem. alone gives वर्ध्मन्.

फेनलः । यथा ।

वैदेहि पश्या मलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम्[१] ॥ * ॥

ऊष्मलः । यथा ।

धनुष्मन्तौ वत्सौ दग्धमुखभुजैरूष्मलतमाः[२] ॥ * ॥

पर्णलः । पर्णिल[३] इत्यपि । यथा भट्टेः ।

अभ्यर्णेऽम्भःपतनसमये पर्णलीभूतसानुं
किष्किन्धाद्रिं न्यविशत मधुचीवगुञ्जद्विरेफम्[४] ॥ ४१९ ॥

**क्षुद्रजन्तूपतापाभ्यां प्राण्यङ्गादात एव च[५] ।**
**कालाघाटाजटाः क्षेपे वातादेरूङपि स्मृतः ॥ ४२० ॥**

क्षुद्रजन्तुर् आ नकुलात्[६] । यूकालः । मक्षिकालः ॥ * ॥ उपतापो रोगः । मूर्छालः । विचर्चिकालः । विपादिकालः ॥ * ॥ प्राण्यङ्गादाकारान्तादित्यर्थः । चूडालः । जङ्घालः ॥ * ॥ कालादयः क्षेपे प्रत्ययार्थस्य निन्दायां गम्यमानायां लभाजः । काला कूर्चम् । कालालः[७] ॥ घाटा[८] ग्रीवावयवः । घाटालः ॥ जटालः ॥ पिच्छादिपाठात्[९] कालिलः । घाटिलः । जटिलः । यथा ।

---

१ Raghuv. 13, 2; D. omits from यथा; A. B. C. K. omit the first pâda.

२ Anarghyar. iv. last sl. (ed. Calc. S. 1782, p. 117) D. om. from ऊष्मलः ।.

३ फेनलः । पर्णलः । फेनिलः । पर्णिलः D.; om. F.

४ Bhaṭṭik. vi. 143 (किष्किन्ध्याद्रि° ed.).—अभ्यर्णेभ्यः पतन°. B. C. D. F. K.; A. om. from पर्णलः.

५ प्राण्यंगा स्यादकारतः E.; प्रा । प्यगात स्यादाकारतः D.; A. om. this half-śloka and काला.

६ आनुकुलात् A.; आनकुलात् वा D.; ॥ आ नकुलात्क्षुद्रजंतवः । F.

७ Hem., on vii. 2, 23 कालाजटाघाटाभ्यः, remarks कालेति डोपान्त्यं केचित्पठन्ति । काडालः । काडिलः ।.

८ Thus also Hem.; घटा Bö., K. V. [घटा सभा संलापो वा घटालः । घाटा ग्रीवा घाटाल इति वर्धमानः Yajñ. comm.].—Bö., Yajñ. have also कटा क्षेपे [कटालो गर्हितगण्डस्थलो गजः Yajñ. comm.].

९ See p. 441, note 6.

विवेश कश्चिज्जटिलस्तपोवनम्[1] ॥

कालाशब्दस्य लप्रत्ययं चन्द्राद्या न मन्यन्ते ॥ क्षेप इति किम् । कालावान् । घाटावान् । जटावान् । क्षेपोऽत्र मतुना न गम्यत इति क्षेपे मतुर्न भवति ॥ * ॥ वातादेरूङपि स्मृत इति वातदन्तबलललाटानां लो भवति तत्संनियोगेनोङागमस्य । वातूलः । दन्तूलः । बलूलः । ललाटूलः ॥ गलशब्दस्यापि गलूल इति मन्यते भोजः ॥ * ॥

पक्षे सिध्मवानित्यादि ॥ आकृतिगणोऽयम् । तेन वर्णप्रभृतयो द्रष्टव्याः ॥ ४२० ॥ इति सिध्मादिः ॥

**लोम वल्गु मुनिः[2] कर्को गिरिबभ्रू हरिः कपिः ।**
**लोमादौ विबुधैर्ज्ञेया रुरू रोम तथा भुरुः[3] ॥ ४२१ ॥**

लोमादेः शः[4] ॥ * ॥ लोमान्यस्य सन्ति । लोमशः ॥ * ॥ वल्गुशः[5] ॥ * ॥ मुनिशः ॥ * ॥ कर्कशः ॥ * ॥ गिरिशः ॥ * ॥ बभ्रुशः[6] ॥ * ॥ हरिशः ॥ * ॥ कपिशः ॥ * ॥ रुरुशः[7] ॥ * ॥ रोमशः ॥ * ॥ भुरुशः[8] ॥ * ॥ पक्षे लोमवानित्याद्यपि ॥ ४२१ ॥ इति लोमादिः ॥

**पामा वामा वलिः श्लेष्मा सामहेमोष्मकद्रवः ।**
**कल्याणादङ्गशब्दाच्च लक्ष्म्या अत्र कृमिस्तथा[9] ॥ ४२२ ॥**

पामादेर्नः ॥ * ॥ पामनः ॥ * ॥ वामनः ॥ * ॥ वलिनः ॥ * ॥

---

१ Kumâras. 5, 30.

२ °वल्गुर्मुनिः A.; °वभ्रुर्मुनिः D. E.

३ चुरुः E.; नुरुः C.; A. om. this half-sloka.

४ A. om. लोमादेः शः.

५ वनुशा A.; व⁻शः D.—वस्तु Hem.; om. by the others, (cf. वल्गु next note).

६ बभ्रु Bö., Yajñ., Kâs. V. ed., $a$. $\beta$.; वल्गु Hem.; also K. V. ed., वलु $\beta$.

७ रुरु चेच्छंति केचन Yajñ.; om. by the others.

८ भुरु Hem.; तरु Bö., Yajñ., Kâs. V. ed. $a$. $\beta$.

९ अथ क्रिमि° C.F.K.; B. om. from लक्ष्म्या.

श्लेष्मणः ॥ * ॥ सामनः ॥ * ॥ हेमनः ॥ * ॥ ऊष्मणः ॥ * ॥ कद्रुणः[1] ॥ * ॥ कल्याणमङ्गमस्या अस्ति । अङ्गना ॥ कल्याण इति किम् । अङ्गवती ॥ * ॥ लक्ष्मीरस्यास्ति । लक्ष्मणः । लक्ष्मीवान् ॥ * ॥ क्रमिणः ॥ ४२२ ॥

विष्वचोऽकृतसंधिः[2] स्याल्लुक् पदस्योत्तरस्य च ।
शाकीदद्रूपलालीनां ह्रस्वत्वं च स्मृतं बुधैः[3] ॥ ४२३ ॥

विष्वक्शब्दान्नो भवति । तत्संनियोगेन चाकृतसंधिरुत्तरपदलोपः । विष्वञ्चोऽर्थास्ते दिवसा वा रश्मयो वा गतिविशेषा वाऽस्य सन्ति । विषुणः सूर्यः ॥ विष्वञ्चन्तीति विष्वञ्चो गतिविशेषा अस्य सन्ति । विषुणो वायुः । विष्वग्वान् ॥ विषुशब्दस्यादिर्नानात्वे वर्तते[4] ॥ * ॥ महच्छाकं शाकसमूहो वा शाकी । शाक्यस्मिन्नस्ति । शाकिनम् ॥ * ॥ दद्रूर्नाम व्याधिः । दद्रुणः ॥ भोजस्तु प्राक्सूत्रे दद्रुशब्दम् अस्मिन्सूत्रे च नागमाद् गृहगोधापर्यायं[5] कद्रुशब्दमाह[6] ॥ * ॥ पलालिनम्[7] ॥ ४२३ ॥ इति पामादिः ॥

बलफलपरिणाहोद्दामभालावलाका
ध्रतनिचुलमनीषामेखलामानशाखाः ।
कुलमुकुलपताकाकर्मचर्मप्रयामाः[8]
स्तबकवडवचूडायामवीणोपयामाः ॥ ४२४ ॥

---

१ कद्रूणः A.; कद्रुणः C.; क। कः D. —Yajñ. makes कद्रूणः; कद्रू Bö.; कद्रु Hem., Kâś. V.

२ विपूचो E.; कृतसंधि A.

३ च समं बुधैः B. C. K.

४ °शब्दस्य नानात्वे° B. C. K.; च वर्तते B. C. F. K.—Cf. चादि śl. 8 (विषु सर्वतोभावे page 21, l. 14).

५ नागमात्स्वगृह° A.; च मातृगृहगोधावर्यायं D.

६ कद्रू° D.; कद्रु B. C.; कादु° K.

७ All MSS. om. पलालिनम्.—महत्पलालं पलालसमूहो वा पलाली तद्वत् पलालिनम् Yajñ.—Hem. has पलालिन् and पलाशिन्; the others पलाली.

८ कुलमकुल° B. C. K.

बलादेरिन् इत्यनेन[१] तदस्यात्र वास्तीत्यर्थ इन् भवति मतुश्च ॥ * ॥ बलमस्यास्तीति । बली । बलवान् ॥ * ॥ फली । फलवान् ॥ * ॥ परिणाही । परिणाहवान् ॥ एवं सर्वत्र ॥ * ॥ उद्दामी ॥ उद्दास[२] इत्यन्यः ॥ * ॥ माली ॥ * ॥ बलाकी ॥ * ॥ व्रती ॥ * ॥ निचुली ॥ * ॥ मनीषी ॥ * ॥ मेखली ॥ * ॥ मानी ॥ * ॥ शाखी ॥ * ॥ कुली[३] । दुर्गमतेन ॥ * ॥ मुकुली[४] ॥ * ॥ पताकी ॥ * ॥ कर्मी ॥ चर्मी ॥ कर्मिकश्चर्मिक इत्येके[५] ॥ * ॥ प्रयामी ॥ * ॥ स्तबकी ॥ वडवी ॥ स्तबकश्च वडवा च स्तबकवडवम् । पश्चाच्छेषैः सह द्वंद्वः ॥ * ॥ चूडी ॥ * ॥ आयामी ॥ * ॥ वीणी । यथा ।

सिद्धद्वंद्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः[६] ॥ * ॥

उपयामी ॥ ४२४ ॥

कूलं जरोत्साहघृणोलदंष्ट्रा
व्यायामधन्वोद्यमवर्मकेकाः[७] ।
संज्ञाशिखारोहगदावरोहाः
पुलाष्टकायासमुलानि[८] सूना ॥ ४२५ ॥

---

१ बलादेरित्य° B. C. F. K.

२ उद्दामी° *D.*; उद्दास B. C. K.—उद्दास and उद्दास Bö., Yajñ.; उद्दास Hem.; उद्दास and उद्दाम K.V. ed., *β.*; उद्दास and उद्दाम *α.*

३ Thus also Bö., Yajñ., K.V. ed. *β.*; om. K. V. *α.*, Hem.

४ मकुली° B. C. K.—मुकुल Hem.; om. by the others.

५ इत्यन्ये A.—Kâs. V. v. 2, 116 forms only कर्मी । चर्मी । वर्मी (*α. β.*, om. ed.); Hem. remarks केचित्तु । वडवा । अष्टका । कर्मन् । चर्मन् । वर्मन् । इत्येतेभ्य इकमपीच्छन्ति ॥ Yajñ. states that the व्रीह्यादि have both इन् and इक with the exception of शिखा । माला । संज्ञा । वडवा । वीणा । बलाका which have इन् only, not इक; and यवखद । अशीर्ष [K. V. यवखद । कुमारी । नौ, but not अशीर्ष; Hem. नौ । कुमारी । यवखदा । सभा (!) करण (? सभा करणे)] which have इकन् only, not इन्.

६ Meghad. 45; om. A. D.

७ °धर्मकेकाः A.; चर्मकेकाः F.

८ °यामसुलानि° D. E.; यामसुलानि C. F. K.; यामतुलानि B.

कूलिनी ॥ कूलस्थाने मूलमिति[१] पठन्ति ॥ * ॥ जरी ॥ * ॥ उत्साही ॥ * ॥ घृणी ॥ * ॥ उली । यस्य कस्यचित्संज्ञा ॥ * ॥ दंष्ट्री ॥ * ॥ व्यायामी ॥ * ॥ धन्वी । यथा ।

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले[२] ॥

उद्यमी ॥ * ॥ वर्मी ॥ वर्मिक इत्यप्यन्ये[३] ॥ * ॥ केकी ॥ * ॥ संज्ञी ॥ * ॥ शिखी । वह्निर्मयूरश्च ॥ * ॥ आरोही ॥ * ॥ गदी । गदावान् ॥ * ॥ अवरोही ॥ * ॥ पुली[४] । यस्य कस्यचित्संज्ञा ॥ * ॥ अष्टकी ॥ अष्टकिक इति केचित्[५] ॥ * ॥ आयामी ॥ * ॥ मुली[६] ॥ * ॥ सूना घातनस्थानम् । सूनी[७] ॥ * ॥ उद्भास[८] इत्यपि केचित् ॥ * ॥ इन्नात्यये सिद्धे ठबाधनार्थम्[९] ॥ ४२५ ॥ इति बलादिः[१०] ॥

मणिर्विपुर्बिम्बहिरण्यराज्यो[११]
मताः कुमारः कुरेष्टकार्णाः ।
गाण्डी ध्वनिर्गाण्डध्रजके च नाम्नि
पतञ्जलिर्नेच्छति गाण्डिशब्दम् ॥ ४२६ ॥

---

१ मूलमिति C.; cf. şl. 299 comm.—Hem. has मूल; Bö., Yajñ. कूल; Kâş. V. both.

२ Şâkunt. şl. 38.

३ धर्मी । धर्मिक इत्यपत्ये A.; cf. preceding page, note 5.

४ फुल Hem.; om. by the others, cf. şl. 299.

५ See preceding page, note 5.

६ Om. D.—मुल Hem.; सुल Bö. (cf. preceding page, note 8); शूल K.V. *a.*; om. ed., *β.*; for Yajñ. see next note.

७ सूना Hem.; सूना घातस्थानम् । सुलेति क्वचित्पाठः ॥ Yajñ.

८ Thus Bö., Yâjñ., Hem.; also Kâş. V. *a.* उद्भाव ed. *β.*

९ ?चबाधनार्थं B. C. F.; छबाधनार्थं D.

१० This corresponds to शिखादि Hem. vii. 2, 4; and to बलादि to Pâṇ. v. 2, 136, but our *gaṇa* includes nearly all the व्रीह्यादि to P. v. 2, 116.

११ °हरिण्यराज्यो B. C. K.; °हिरिण्यराज्यो D. E.

मण्यादेर्व इत्यनेनैतस्मात्तदस्यात्र वास्तीत्यर्थे वो भवति मतुश्च ॥ * ॥ मणयोऽस्य सन्ति । मणिवः । मणिमान् ॥ मणिव इति कस्यचिन्नागस्य संज्ञा[१] ॥ * ॥ विषु साम्ये चादिः[२] । तद्विद्यतेऽस्य । विषुवम् । विषुवत् । यथा ।

समरात्रिंदिवे काले विषुवद्विषुवं च तत्[३] ॥

विषुवानित्यमरमालाकारः[४] ॥ मतोर्वलं लच्यात् ॥ विषुर्नाम मुहूर्तः । सोऽस्यास्तीति विषुमान् अहोरात्रप्रविभाग[५] इति तु शाकटायनः ॥ * ॥ बिम्बान्यस्यास्मिन्वा सन्ति । बिम्बावम्[६] । ज्याट्लेऽच् ह्रस्वस्य[७] बहुलमिति बहुलवचनाद्दीर्घः ॥ बिम्बव इति भोजः ॥ * ॥ हिरण्यम् । हिरण्यवान् । हिरण्यवो नाम निधिः । कुबेर इत्यपरे ॥ * ॥ राजीवम् । राजिशब्दस्यापि ॥ * ॥ कुमारवम् ॥ * ॥ कुररावम्[८] ॥ * ॥ इष्टकावम् ॥ * ॥ अर्णशब्दः कृतसलोपो द्रष्टव्यः । अर्णवः । समुद्रः ॥ * ॥ गाण्डी गाण्डिर्वा दारुखण्डम्[९] । दात्रादिग्रहणे मुष्टिस्थानभूतं[१०] ग्रन्थिव्यवच्छिन्नं[११] मध्यपर्व वा । गाण्डीवं गाण्डिवं वा । पार्थधनुः । यथा ।

गाण्डीवधन्वनः खेभ्यो निश्चचार हुताशनः[१२] ॥

---

१ कस्य संज्ञा B. K.; कस्या संज्ञा C.; °नागसंज्ञा A.; °ना-- संज्ञा D.

२ See page 21, l. 14 (सर्वतोभावे); p. 446, l. 9 (नानात्वे).

३ Amarak. i. 1, 3, 14.

४ °अमरमालाधरः D.

५ °रात्रः प्र° D.; °प्रतिभाग B.C.K.

६ बिंबावान् B. C. K.

७ ? ज्याड्ले (or ज्याट्ले) ऽबह्रस्वस्य cf. p. 318, l. 15 and note 10. (? P. vi. 3, 111 seq.)

८ कुररवं F.; कुमाररावं A.—Hem. remarks बिम्बावं । कुररावं । कुरयावं । घञ्युपसर्गस्य बहुल इति बाहुलका-द्दीर्घः ॥.

९ दारुषंडं A.

१० मुनिस्थानभूतं B. C. K.

११ ग्रंथिव्यावच्छिन्नं A. B. K.; ग्रंथिं व्यावच्छिन्नं C.

१२ Kirât. 15, 46. [all MSS. read गांडीवधनुषः;—गाण्डीवधन्वनः °विच-क्राम° eds.].

यथा वेणीसंहारे[1] ।

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रपुरतो[2] गौर्गौरिति व्याहृता ।
तस्मिन्नव स किं नु[3] गाण्डिवधरो नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ॥

ह्रस्वादपि भवति । गाण्डिवं धनुरिति[4] । तुल्या हि संहिता ह्रस्वदीर्घयोरुभयथा सूत्रं प्रणीतमित्येतन्न संगतम् । कुतः । न आगमो न युक्तिः । आगमस्तावन्नास्ति वार्त्तिकभाष्ययोरभावात्[5] । यदि च ह्रस्वसूत्रे गाण्डिशब्द उपात्तो दीर्घस्य न प्राप्नोति[6] नापि गाण्डिगाण्डीशब्दयोरेकशेषोऽस्तीति भाष्यकारमतानुसारिणा केनाप्येतद्विचारितम् ॥ * ॥ अजकावम् । पिनाकम् ॥ अजकवमिति वामनः । यत्तु पिनाकोऽजगवं धनुरिति पाठो दृश्यते तत्राजगवोऽस्थिविशेषो विद्यतेऽस्य । अर्शआदित्वादच्प्रत्ययेऽजगवमिति सिद्धम् ॥ * ॥ मण्यादयः प्रयोगतो गम्याः ॥ ४२६ ॥ इति मण्यादिः[7] ॥

सुख[illegible]ढात्[8]
तृप्रास्रकृच्छ्रा दलशीलकक्षाः ।
अलीकदुःखे कृपणं हलं स्यात्
क्षेपे तु माला करुणाश्च शोकः[9] ॥ ४२७ ॥

---

१ Veṇîs. śl. 51 (ed. Calc. Saṃv. 1924, p. 60); cf. Grill, Noten, p. 138.

२ The Devanâg. recension reads राजचक्रमभितो.

३ तस्मिन्नंवसु° B. K.; तस्मिन्नेव तु° C.; किंतु F.—तस्मिन्नेव स किं नु Dev. rec.

४ धनमिति A.; गाण्डिवं गांडीवं धुरिति D.

५ वार्त्तिकाभावात् B. C. & orig. K.

६ उपात्तदीर्घस्य° F.; B. C. K. om. न; प्राप्नोत्विति D.

७ Hem. has the same gaṇa; cf. Pâṇ. v. 2, 109 vârtts.; 110.

८ °प्रणयास्र° B. C. D. E. F. K.; °प्रणयास्व° A.

९ शापः A.; शोकः D

सुखादिधर्मशीलवर्णान्तादित्यनेन तदस्याच वास्तीत्यर्थे इन्नेव भवति ॥ * ॥ सुखमस्यास्तीति सुखी ॥ * ॥ प्रतीपी ॥ * ॥ प्रणयी ॥ * ॥ अस्त्री[1] ॥ * ॥ सोढी ॥ * ॥ तृप्री[2] ॥ * ॥ आस्त्री[3] ॥ * ॥ कच्छ्री ॥ * ॥ दली ॥ * ॥ शीली ॥ * ॥ कची ॥ * ॥ अलीकी ॥ * ॥ दुःखी ॥ * ॥ कृपणी ॥ * ॥ हली ॥ * ॥ माली । निन्दायाम् । अन्यत्र मालावान् ॥ * ॥ करुणी ॥ * ॥ शोफी[4] ॥ * ॥ बलादिषु[5] मालाशब्दः पठ्यते । इह त पाठः क्षेपे मतुर्मा भूत् ॥ ४२७ ॥ इति सुखादिः ॥

पुष्करो नडतमालहिरण्य-
कैरवाणि कुमुदं च शिरीषम् ।
कर्दमस्तटतरंगकपित्था
पङ्कजोत्पलकरीषसरोजम् ॥ ४२८ ॥

पुष्करादेरिन् इत्यनेन पुष्करादेरस्त्यर्थे देशेऽभिधेय इन् भवति ॥ * ॥ पुष्कराणि विद्यन्तेऽस्यामस्या वा । पुष्करिणी भूमिः ॥ * ॥ नडिनी ॥ * ॥ तमालिनी ॥ * ॥ हिरण्यिनी[6] ॥ * ॥ कैरविणी ॥ * ॥ कुमुदिनी ॥ * ॥ शिरीषिणी ॥ * ॥ कर्दमिनी ॥ * ॥ तटिनी ॥ * ॥ तरंगिणी ॥ * ॥ कपित्थिनी ॥ * ॥ पङ्किनी ॥ * ॥ उत्पलिनी ॥ * ॥ करीषिणी ॥ * ॥ सरोजिनी ॥ ४२८ ॥

---

१ अश्री F.; lac. D.; cf. note 3; and sl. 444 comment. [अस्तिऽनेन । अस्त । अस्रु].

२ Thus Yajñ., Hem., Kâs. V. ed.; तृप्त Bö., K. V. a. (तृप्य β.).

३ आश्री B. C. K.; आ । शी D.—अश्र and आस्त Hem.; अश्र and अस्र Yajñ.; अस्र (v.l. आस्र) and आश्र (v.l. अस्र) Bö.; आश्र Kâs. V. ed., α. β.—See also kârikâ 9 on Kâtantra ii. 6, 15 [तृप्री कच्छ्री प्रतीपी च सोढाम्यस्त्रीत्युदाहृतम्] with var. readings.

४ शाफी A.; शौकी D.—Not given by the other works.

५ See sloka 424.

६ हरिण्यिनी B. C. K.

राजीवनालीकसरोरुहाणि
मृणालपद्मं पुटकारविन्दम्।
अम्भोजमब्जं कमलं विगर्हः
कल्लोलशालूकबिसं यवासः ॥ ४२९ ॥

राजीविनी ॥ * ॥ नालीकिनी ॥ * ॥ सरोरुहिणी ॥ * ॥ मृणालिनी ॥ * ॥ पद्मिनी ॥ * ॥ पुटकिनी ॥ * ॥ अरविन्दिनी ॥ * ॥ अम्भोजिनी ॥ * ॥ अब्जिनी ॥ * ॥ कमलिनी ॥ * ॥ विगर्हिणी । अयं जयादित्यमतेन । विवर्ह[1] इत्यन्यः ॥ * ॥ कल्लोलिनी ॥ * ॥ शालूकिनी ॥ * ॥ बिसिनी ॥ * ॥ यवासिनी[2] ॥ वामनस्तु बृहद्वृत्तौ यव माषेति पठति । ततो यविनी माषिणी[3] । दुर्गस्तु पय इति पठति[4] ॥ * ॥ देश इति किम् । पुष्करवान् हस्ती । कमलवान् । बिसवान् । पुष्कराणि तीर्था- [illegible] देशे सन्ति । अनभिधानादिन्न भवति ॥ एते च नियतार्थविषया एव शब्दा द्रष्टव्याः ॥ ४२८ ॥ इति पुष्करादिः[5] ॥

कृष्णासुती भ्रातृशिखा पितास्वृ
[illegible]ौ परिषच्च माता ।
[illegible]र्पि[illegible]स्लोऽथ दन्तः
[illegible]संज्ञे गदिता[6] गणेऽस्मिन् ॥ ४३० ॥

---

१ [illegible] विगर्हे A.; विवर्हा [illegible] B. C. K.—The other works [illegible]

३ [illegible] B. C. K.

२ [illegible], यवास, यव, माष Hem.; यवास and [illegible] (cf. next note) Bö., Yajñ.; यवास Kâs. V. ed., $\beta$., अवस $a$. ($v.l.$ ed. वयस).

४ Kârikâ 14 in Durgasiṁha's vṛitti on Kât. ii. 6, 15 has पयस only.

५ Hem. makes two gaṇas of this, पुष्करादि and अब्जादि; the former taking इन् when देशे; the latter (with those in Pâṇ. v. 2, 137) when नाम्नि. Cf. Index.

६ ॰संज्ञो गदितो B. C. F. K

कृष्यूषाग्र्यादेर्वलरात इत्यनेन कृषीत्यादेरस्त्यर्थे वलः[१]। ऊष इत्यादे रः। अग्र इत्यादेरकारो भवति ॥ * ॥ कृषिरस्यास्तीति कृषीवलः। कुटुम्बी ॥ रूढिशब्दोऽयम्। अन्यत्र कृषिमत् क्षेत्रम्। ङ्याङ्ले ऽच् ह्रस्वस्य[२] बहुलमिति दीर्घभावः ॥ * ॥ आसुतिः सुरापानम्। आसुतीवलः। शौण्डिकः ॥ नाममालायामासुतीवलो यज्वोच्यते ॥ * ॥ भ्रातृवलः ॥ * ॥ शिखावलो मयूरः। शिखावलं नगरम्। शिखावला स्थूणा ॥ * ॥ पितृवलः ॥ * ॥ उत्साहवलः[३] ॥ * ॥ पुत्रावलः[४] ॥ * ॥ परितः सीदति। परिषत्। परिषद्वलो राजा ॥ परिषदनं परिषत् पङ्कः सर्वतोऽवतारो[५] वा। सोऽस्यास्तीति परिषद्वलं तीर्थमित्यन्ये ॥ * ॥ मातृवलः ॥ * ॥ उत्सङ्गावलः[६] ॥ * ॥ पर्षद्वलो राजा। यथा सिद्धनागार्जुनस्य।

लोकातीतामचिन्त्यां शमसुकृतफलामात्मनो यो विभूतिं[७]
पर्षन्मध्ये विचित्रां कथयति महतीं धीमतां प्रीतिहेतोः ॥ * ॥

रजस्वला स्त्री ॥ * ॥ दन्तावलो नाम राजा गजश्च ॥ * ॥

आसुतिपर्षद्रजःशब्दानां यौगिकत्वं केचित्प्रतिपन्नाः[८]। तन्मत आसुतिमान् परिषद्वान् रजस्वान् ग्राम इत्यपि भवति ॥ परिषच्छब्द एव

---

१ B. K. & Hem. बल throughout.

२ See p. 449, note 7; P. vi. 3, 118.

३ Thus also Hem., Kâṣ. V. ed., β. (v. 2, 112); उत्साहावलः K. V. *a*.

४ ? Thus MSS.; K. V. *a*.; पुत्रबलः Hem., K. V. ed., β.

५ पंकसर्वतोवतारो B.; पंकसर्वतोरो C. K.—परिषद्वलः। पर्षद्वान्। परिषद्वलं तीर्थं पङ्किलमित्यर्थः। परिषद्वत्। Hem.

६ Thus also Hem., K. V. *a*.; उत्सङ्गवलः Kâṣ. V. ed., β.

७ ? समसुकृत° यो विभूतिं A.; या विभूतिं D.; नावि भूतिः F.; नावि भूतिं K.; नो विभूतिं B. C. (? copied from K., where त् over ना in preceding line).

८ योगिकत्वं A.; यौगित्वे° D.; °प्रपन्नाः A. F.

श्यते। यच्चिदानींतनपुस्तकेषु संयोगः परिषच्छब्दो दृश्यते स प्रमादपाठ एव। पुराणेषु हि भाष्यपुस्तकेषु परिषदो वलच्। काव्येषु।

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी[१]।

इत्यादिष्व परिषच्छब्द एव दृश्यते। कथं तर्हि

परिषदलाम्भहाब्रह्मीराट नैकटिकाश्रमान्[२]।

इत्यनुष्टुप्। अत्र हि रिशब्दे पृथगवस्थिते नवाक्षरः पादो भवति। न चैतद्युक्तम्।

त्रयः पादा अष्टाक्षरा अनुष्टुब् एको नवाक्षरः[३]।

इत्युच्यते। अयमप्यस्ति वृत्तप्रभेदो यत्रैकः पादो नवाक्षरोऽन्येऽष्टाक्षराः। यथा।

प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम्।

अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः॥

इति। अत्र ह्याद्य एव पादो नवाक्षरः परिशिष्टा अनुष्टुभ एवेति[४] कश्चिद्ब्रूते। तत्त्वतिसूक्ष्मेक्षिकयोच्यते[५] यतो व्याकरणलक्ष्यं च[६] द्वाभ्यामपि शब्दाभ्यां व्याप्तम्। चीरस्वामिनापि मार्ष मारिष इत्यपि यथा पर्षत्परिषदिति[७] टीकायां विवृतम्॥ किं च। यो नवाक्षरः पाद उदाहरणीकृतः सोऽपि न संगच्छते। प्रधाने कर्मण्याख्येय इति दर्शनात्[८]॥ ४२०॥ इति कृश्यादिः[९]॥

---

१ Ratnâv. şl. 6.

२ Bhaṭṭik. 4, 12; °ब्रह्मीराप नै° B. C. D. K.; °ब्राह्मीरापन्नै° A.

३ अनुष्टुभ एको° D.

४ अनुष्टुप् ए° A.; °ष्टुपभवेति D.

५ अनु अति° B. C. K.; स तु अति° F.; °क्षिकया उच्यते MSS.

६ व्याकरणं लक्ष्यं च A.; व्याकरणं। लक्ष्यं चेद्द्वा° B. C. K.

७ मर्षणात्सहनान्मारिषः। मार्षोऽपि यथा परिषत्॥ MS. Kshîr. on Am. K. i. 1, 7, 14.

८ कर्मण्यापरे इति° A.; °कर्मण्याराध्यय इति B. C. K.; D. omits from किं च.

९ Hem. has the same *gaṇa*; cf. Pâṇ. v. 2, 112; 113.

ऊषनखपांसुकुञ्जाः खपाण्डुमधुसिन्धु[बन्धु]नगमुष्काः[१] ।
पुष्कं कण्डूमुखशुषिनिर्मित[२] ह्रस्वा तथा कच्छूः ॥ ४३१ ॥

ऊषादे रः ॥ * ॥ ऊषोऽस्मिन्नस्तीति । ऊषरं चेत्रम् । ऊषवद् अन्यत् ॥ * ॥ नखरः ॥ * ॥ पांसुरः[३] ॥ * ॥ कुञ्जावस्य स्तः । कुञ्जरः करी । कुञ्जशब्दोऽस्मिन् हनुपर्यायः । कुञ्जवान् अन्यः ॥ * ॥ खं महत्कण्ठे विवरमस्यास्ति । खरो गर्दभः । खवान् अन्यः ॥ * ॥ पाण्डुरः ॥ * ॥ मधुरो रसः । मधुरं मधु । मधुशब्दः स्वादुत्वलक्षणे[४] गुणसामान्ये गुणे च वर्तमानो गृह्यते । न तु द्रव्यवृत्तिः । तत्र मधुमान्घटः ॥ * ॥ सिन्धुरो हस्ती । सिन्धुमान् अन्यः ॥ * ॥ [बन्धुरं नगरम्[५] ॥ * ॥] नगा वृक्षाः पर्वता वाऽस्मिन्सन्ति । नगरम् ॥ * ॥ मुष्कौ वृषणावस्य स्तः । मुष्करः पशुः । मुष्कवान् अन्यः ॥ * ॥ पुष्करः ॥ * ॥ कण्डूरः पुरुषः ॥ * ॥ मुखं सर्वस्मिन्वक्तव्येऽस्यास्ति । मुखरो वाचालः ॥ अथवा । मुखविषया वाग् मुखम् । मुखवान् अन्यः ॥ * ॥ शुषिश्छिद्रम् । शुषिरं[६] काष्ठम् ॥ * ॥ कच्छुरः ॥ ४३१ ॥ इत्यूषादिः[७] ॥

---

१ A. D. E. omit बन्धु. See note ५.

२ लक्ष्यं कद्रूमुखमुखि॰ E.; ॰मुषसुषि॰ A.; लक्षं (corr. लक्ष्यं) कद्रूमुखसुखिनि॰ D.

३ पांसुरः A. B. C. K.; पांसु विद्यते अस्मिन्निति पांसुरो मार्गः D. [herewith begins the spurious portion of the commentary mentioned in the description of MS. D. (Preface to Part I., p. v.-vi.), and only occasionally referred to in these notes].

४ स्वादुत्वलक्षणे B. C. F. K.—अत्र मधुशब्दः स्वादुत्वे गुणसामान्ये वर्तते।॰ क्षौद्रादिद्रव्यवृत्तेस्तु मतुरेव। Hem.

५ A. om. from बन्धुरं; D. & Hem. also omit the word.

६ Hem., Kâs. V. *a.* write शुषिर; eds. Pân. Kâs. V. सुषिर.

७ Hem. (vii. 2, 26) calls this *gaṇa* मध्वादि; cf. Pân. v. 2, 107 and vârtts. —Hem. omits the word सिन्धु and has a special rule (vii. 2, 39) for कच्छू.

अर्शोऽभ्रतुन्दचतुरा बलकर्दमोर:
कामाम्लतुण्डलवणाः पलितं जटा च ।
घाटाघटे अघसुरे अपि शुक्रपद्मे
स्वाङ्गाच्च हीनगुणतः परतश्च वर्णात् ॥ ४३२ ॥

अर्शआदेरत् ॥ * ॥ अर्शो गुदकीलकः । तदस्तित्वाद् अर्शसः पुमान् । विनि प्राप्ते ॥ * ॥ अभ्रं नभः[1] । ठेनोः प्राप्तौ ॥ * ॥ तुन्दः । तुन्दिलः ॥ * ॥ चतुरा अस्य सन्ति । चतुरः । सिद्धराजः ॥ * ॥ बलः । बली बलवानित्यपि ॥ * ॥ कर्दमः प्रदेशः ॥ * ॥ उरसा बलं लक्ष्यते । उरसः ॥ उरसिल इत्यपि ॥ * ॥ कामः । कामीत्यपि ॥ * ॥ अम्लो रसो ऽस्यास्तीति । अम्लः ॥ * ॥ तुण्डः । वाचाटः[2] ॥ * ॥ लवणो रसोऽस्यास्तीति लवणः सूपः । लवणा यवागूः ॥ * ॥ पलितः ॥ * ॥ जटनं जटा । साऽस्यास्तीति जटा केशविन्यासः । जटास्तित्वाज्जट इत्यन्यस्य मतम् ॥ * ॥ घाटे अस्य स्तः[3] । घाटः । निन्दाया अन्यत्र ॥ * ॥ घटनं घटा । सास्त्यस्मिन् । घटा व्यूहविशेषः ॥ * ॥ अघः पापी । यथा ।

अविमृश्य गोवधसमुत्थमघमयमसीसरद्रुषा ॥ * ॥

सुरैषामस्ति । सुरा देवाः । यतोऽब्धिजा सुरा तैः पीता ॥ * ॥ शुक्रं तेजोऽस्यास्ति । शुक्रो दैत्यगुरुः ॥ * ॥ पद्ममस्या अस्ति । पद्मा लक्ष्मीः ॥ * ॥ हीनगुणत इति हीनोपाधिकादित्यर्थः । खण्डः कर्णोऽस्यास्ति । कर्णः । छिन्ना नासिकाऽस्यास्तीति नासिकः ॥ हीनगुणादिति किम् । कर्णवान् । नासिकावान् ॥ अन्ये तु काणमस्याच्यस्तीति काणः । खञ्जः पादोऽस्यास्तीति खञ्जः । कुण्ठः पाणिरस्यास्तीति कुण्ठः ।

---

१ अर्शं नभः । अभ्रः F.
२ वाचालः A.
३ घाटेः शस्तः A.; घाटा ग्रीवा तद्वान् घाटः Yajñ.

खल्वाटं शिरोऽस्यास्तीति खल्वाट इत्याद्युदाहरणान्याहुः ॥ * ॥ शुक्लो वर्णोऽस्यास्ति । शुक्लः पट इत्यादि ॥ * ॥ आकृतिगणश्चायम् । यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं[1] तत्सर्वमिह द्रष्टव्यम् ॥ ४३२ ॥
इत्यर्शआदिः[2] ॥

विमुक्तदेवासुरसत्वदग्नाविष्णूर्वशीडामरुतो महित्री ।
सुपर्णरक्षोवसुवृत्रहन्तृदशार्णरक्षोऽसुरवर्हवन्तः[3] ॥ ४३३ ॥

विमुक्तादेरण् इत्यनेन विमुक्तादेरस्त्यर्थेऽध्यायानुवाकयोरभिधेययोरण् ॥ * ॥ विमुक्तशब्दो[4]ऽस्मिन्नस्ति । वैमुक्तोऽध्यायोऽनुवाको वा ॥ * ॥ देवासुरशब्दोऽस्मिन्नस्ति । दैवासुरः ॥ अपरे विगृहीतादप्युदाहरन्ति । दैवः । आसुरः[5] ॥ * ॥ एवं सात्वतः ॥ सत्वन्तुरित्यपि केचित् । तन्मते सात्वन्तवः[6] ॥ * ॥ अग्निश्च विष्णुश्च । अग्नाविष्णू[7] । अग्नाविष्णुशब्दोऽस्मिन्नस्ति । आग्नाविष्णवः ॥ भोजस्तु देवताद्वन्द्वे चेत्युभयपदारैचि । आग्नावैष्णव इत्युदाहरति[8] ॥ * ॥ उर्वशीशब्दोऽस्मिन्नस्ति । और्वशः ॥ * ॥ ऐडः । लत्व ऐल इत्यपि ॥ * ॥ मारुतः ॥ * ॥ महयतीति महित्री । त्रप्रत्ययेऽस्येडभावो[9]ऽनुकार्ये तदनुकरणादण् । माहित्रः ॥ * ॥ सौपर्णः[10] ॥ * ॥ राक्षसः ॥ * ॥ वासवः ॥ * ॥ वार्त्रहन्त्रः ।

१ शब्देन न तद्धितोऽभिधानं° B. C. K.; A. also corr. तद्धितो.—Yajñ. as above.

२ Hem. (vii. 2, 46) calls this *gaṇa* अभ्रादि.

३ सुवर्णरक्षो° E.

४ विमुक्तः शब्दो B. C. F. K.

५ Thus also Yajñ.; the other works give only the compound form.

६ सत्त्वत् Bö.; सत्वत् Yajñ.; K. V. ed., *a.*; सत्वंतु *β.*; सत्वतु Hem.

७ अग्माविष्णु: A.; om. B. C. K.

८ Yajñ. makes only आग्मावैष्णव; cf. Pâṇ. vii. 3, 21.

९ महत्री त्रिप्रत्ययस्य इड° A.; इडभावे F. [? इड् = P. णि].

१० सुवर्ण Bö., Yajñ., K. V. *β.*; सुपर्ण Hem., K. V. ed. *v.l.*

वृत्रहन्निति वामनः[1] ॥ * ॥ दाशार्णः ॥ * ॥ राचोऽसुरः ॥ * ॥ वार्हवतः[2] ॥ ४३३ ॥

उपसद्वयोऽस्यहत्याः सोमापूषा पतत्रिवसुमन्तौ ।
परिसारको दशार्हः पत्नीवानथ हविर्धानः ॥ ४३४ ॥

औपसदः ॥ अकारान्तोऽप्यन्येषां मतेन[3] ॥ * ॥ वायसः ॥ * ॥ अस्यहत्यशब्दोऽस्यहत्याशब्दो वाऽस्मिन्नस्ति । आस्यहात्यः[4] ॥ * ॥ सोमस्य पूषा च । सोमापूषाणौ । देवताद्वन्द्व इति[5] दीर्घत्वम् । सोमापूषन्शब्दोऽस्मिन्नस्ति । सौमापूष्णः ॥ सौमापौष्ण इति भोजः ॥ * ॥ पातत्रिणः ॥ * ॥ वासुमतः[6] ॥ * ॥ परिधावतीति परिसारकः । स शब्दोऽस्मिन्नस्ति । पारिसारकः ॥ * ॥ दाशार्हः ॥ * ॥ पात्नीवन्तः । पात्नीवतः[7] इति शाकटायनः ॥ * ॥ हाविर्धानः[8] ॥

विमुक्तादयः स्वरूपनिष्ठा अनुकरणभूताः प्रत्ययभाजो द्रष्टव्याः ॥ ४३४ ॥ इति विमुक्तादिः ॥

गोषद्देवस्यत्वादेवीरापस्तदेवकृष्णोऽस्यौ ।
देवींधियप्रतूर्त्तेषेत्वारक्षोहणोशानाः[9] ॥ ४३५ ॥

---

१ वार्त्रहत्रः A. C.; वृहन्निति° A.—वृत्रहन् Bö., Yajñ. (वार्त्रघ्नः); वृत्रहंतृ Hem.; वृत्रहतृ K. V. *a.* *β.*, वृत्रहति ed.

२ राचसोसुरः । वार्हवन्तः A.; बार्हवंतः F.—Hem. has बर्हवन्तु; Bö., Yajñ. बर्हवत्; om. Kâś. V.

३ Hem. has both forms; the others उपसद् only.

४ Thus A.; cf. śl. 164 and comm. (where अस्यहत्या, and Bhoja's reading अस्यहत्य); आस्यहत्यः B. C. F. K.

५ Pâṇ. vi. 3, 26.—Yajñ. forms सोमापूष्णः (!), cf. p. 457, note 8.

६ वासुमंतः (or °मन्तः) A. B. C. K.; वसुमत् Bö., Yajñ., K. V. ed.; वसुमतु Hem.; वसुवंतु K. V. *β.*

७ पात्नीवंतः पात्नीवंत A. F.; पत्नीवंतः पत्नीवत B. C.—Hem. पत्नीवंतु, the others पत्नीवत्.

८ हाविर्द्धायनः A.

९ देविंधिय° B. C. F. K.; देवींधिप° E.; प्रतूर्त्तेषेत्वारचोहणोंजाना: D.; °हणोसानाः B. E. K.; °सोनाः C.

गोषदादेरक इत्यनेन गोषदित्यादेरस्त्यर्थेऽध्यायानुवाकयोरको भवति ॥ * ॥ गाः सीदति[१]। गोषत्। सुषामादित्वात्षत्वम्। गोषदस्मिन्नस्ति[२]। गोषदकोऽध्यायोऽनुवाको वा ॥ * ॥ देवस्येति षष्ठ्यन्तं त्वेति युष्मदादेशः। तत्समुदायानुकरणादकः। देवस्यत्वकः ॥ * ॥ देवीरिति छान्दसो जसन्तः। दीर्घाज्जसि च वा छन्दसीति हि छान्दसं सूत्रम्[३]॥ आप इति च जसन्तः। तत्र देवीराप इत्यकारान्तभागानुकरणादकः। देवीरापकः ॥ * ॥ तद्देवकः[४]। अयं भोजमतेन ॥ * ॥ कृष्णोऽस्यकः। कृष्णोऽस्याखरेष्ठक[५] इत्यन्ये ॥ * ॥ देवींधियशब्दयोर्यो[६]ऽकारान्तसमुदायस्तदनुकरणादकः। देवींधियकः[७]॥ * ॥ प्रतूर्णकः[८]॥ * ॥ इषे। इतीच्छतेः क्विबन्ताच्चतुर्थी। त्वेति युष्मदस्त्वामौ द्वितीयाया[९] इति त्वादेशः। तत्समुदायस्य। इषेत्वा। इत्यखण्डमिदमनुकरणम्। इषेत्वाशब्दोऽस्मिन्नस्ति। इषेत्वकः ॥ * ॥ रक्षांसि हन्तीति रक्षोहा। बहुत्वे जसि। रक्षोहणः। तत्राकारान्तभागानुकरणादकः। रक्षोहणकः ॥ * ॥ उशानकः[१०]॥ ४३५ ॥

---

१ गाः सादयति Yajñ.—गोषद् is not given in the (âkṛiti) gaṇa सुषामादि śl. 158-9.

२ गोषदोऽस्मिन्संति F.—गोषद् Bö., Yajñ., Hem.; गोषद K. V. ed., *a.* *β.*; Bö. *v.l.*

३ Pâṇ. vi. 1, 105-6.

४ Not given by the others.

५ कृष्णोस्यखरेष्टक A. D.; कृष्णोस्याखरेष्ठक B. C. F. K.; कृष्णोऽस्यकः। खरेष्ठकः। कृष्णोऽस्याखरेष्ठक इत्यन्ये Yajñ.

६ देविय इति पदयो यो A.; देविंवियशब्द° B. F. K.; देविश्ययश° C.

७ देविंधियकः A.; देविंवियकः B. C. F. K.—देवींधिय Yajñ. and (*v.l.* °धिया) Bö.; दैवींधियम् K. V. ed. *β.* (देवाधिया *a.*); देविंधिया Hem.

८ प्रतूर्तकः D.—The other works read प्रतूर्त.

९ Pâṇ. viii. 1, 23.

१० ? उशीनक C.; उंआनकः D.—उशानु Hem.; इशान Kâś. V. ed.; om. others. [? उषा न cf. Ṛigv. ii. 34, 12.]

वाचस्पतिः कृशानुश्च स्वाहाप्राणो ऽञ्जनं तथा[1]।
पत्त्वा सहस्रशीर्ष[2] च मातरिश्वा च घोषदा[3] ॥ ४३६ ॥

वाचस्पतकः[4] ॥ * ॥ कृशानवकः ॥ * ॥ स्वाहाप्राणकः[5] ॥ * ॥ अञ्जनकः ॥ * ॥ पदेः क्ता । पत्त्वकः[6] ॥ * ॥ सहस्रशीर्षकः[7] ॥ * ॥ मातरि श्वयति गच्छति । मातरिश्वा वायुः । तदनुकरणादकः । मातरिश्वकः ॥ * ॥ घोषदकः[8] ॥ ४३६ ॥ गोषदादिः[9] ॥

इति

श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितायां स्वीय-
गणरत्नमहोदधिवृत्तावस्य संजातमस्य भावः कर्मं वानेना-
स्याच्च वास्त्यर्थविहितप्रत्ययगणनिर्णयो नाम
सप्तमो ऽध्यायः समाप्तः ॥

---

१ प्राणोंजनस्तथा B. C. D. F. K.

२ एत्वासह॰ B. C. F. K.; यथा सहस्र॰ D. E.; सहस्रशीर्षं B.; सहस्र दीर्घं C.

३ गोपदा A.; मातरिश्वावघोषदाः D. E.

४ वाचस्पत Hem.; वातस्पते Kâs. V. $\beta$., v.l. ed.; om. others.

५ स्वाहकः । प्राणकः D.—स्वाहाप्राण Hem., K. V. $\beta$., v.l. ed., om. others.

६ पदे क्ता पत्वकः A.; पादका पत्वकः B.; पदे का पत्वकः C. K.; ॥ एत्वकः ॥ F. (om. D.).—पत्ता Hem.; omitted by the others.

७ सहस्रशीर्षन् Hem., K. V. ed. *v.l.*; सहस्रशीर्षा $\beta$.

८ अवघोषदकः C.—घोषद् Hem.; omitted by the others.

९ Hem. (vii. 2, 74) calls this *gaṇa* घोषदादि.

अथाष्टमोऽध्यायः ॥

येभ्यस्तद्धितसिंहेभ्यः शाब्दिकेभैः पलायितम् ।
गव्येनापि मया दत्तं पदं तद्गणमूर्धसु[१] ॥

**कण्डूञ्मेधातुरणभुरणा[२] गद्गदो दुःखवेदौ[३]**
**केलालाटौ समरभिषजौ तन्तसो मन्तुवल्गू ।**
**एलावेलासपरमगधाः पम्पसेरोमहीङः**
**खेलालोटावुरणचरणासूषसो वेड्हृणीङौ[४] ॥ ४३७ ॥**

कण्ड्वादेर्यगित्यनेन कण्डूञित्यादेर्गणात्स्वार्थे[५] यग्भवति ॥ * ॥ कण्डू अङ्गघर्षणे । कण्डूयति । कण्डूयते । नखादिना गात्रं घर्षति[६] ॥ * ॥ मेधा आशुग्रहणे । मेधायति ॥ * ॥ तुरण त्वरायाम् । तुरण्यति । त्वरत इत्यर्थः ॥ तुरण धारणपोषणयोरित्यन्ये[७] ॥ * ॥ भुरण प्रहरणधारणयोः[८] । भुरण्यति[९] । युध्यते धारयतीति वा ॥ * ॥ गद्गद[१०]

---

१ This couplet is omitted in D. (and E.), and is numbered as part of the text in F. K.

२ कंडूमेधा तुरणचुरणा B. C. F. K.; कंडुञ्मेधा° E.; °तुरणभूरणा D.

३ दुःखवेटौ E. F. K.

४ वेट्ट for वेड् A.; लड् D.; वेद् E. F.; चेट C.; वेट् K.

५ कंडूञित्या° A. B. C. K.

६ घर्षयति A.

७ ? Thus MSS.—चुरण चौर्ये । तुरण त्वरायाम् । भुरण धारणपोषणयोः । Siddh. K.; Yajñ. om. भुरण; cf. next note; also चुरण sl. 438, भरण 439.

८ चुरण प्र° B. C. F. K.; भुरण रणधारणयोः A.—चुरण चौर्ये । प्रहरणधारणयोरिति वर्धमानः Yajñ. (from a MS. related to B. C. F. K.?).

९ चुरण्यति B. C. F. K.

१० गद्गदा A.

वाक्यस्खलने। गद्गद्यति ॥ अन्य तु गद्गदङिति[1] पठन्ति। तन्मते गद्गद्यते। ङित्वात्तङ्[2] ॥ * ॥ दुःख तत्क्रियायाम्। दुःख्यति ॥ * ॥ वेद्यति[3]। मायाप्रपञ्चमाचरति ॥ वेटलाञित्यन्ये। वेटलायते। वेटलाङिति भोजः ॥ * ॥ केला विलासे। केलायति। विलसतीत्यर्थः ॥ * ॥ लाट् जीवने। लाट्यति[4] ॥ * ॥ समर रणक्रियायाम्। समर्यति[5] ॥ * ॥ भिषज कुत्सायाम्। भिषज्यति[6]। कुत्सयत इत्यर्थः ॥ चिकित्सायामित्यन्ये ॥ * ॥ तन्तस दुःखे। तन्तस्यति। दुःखी भवतीत्यर्थः ॥ * ॥ मन्तु रोषे वैमनस्ये च। मन्तूयति ॥ मन्तूञ्[7] मन्तूयति मन्तूयत इति चन्द्रः ॥ * ॥ वल्गु माधुर्ये पूजायां च। वल्गूयति ॥ * ॥ एला विलासे। एलायति ॥ इलाशब्द[8] इत्यन्ये ॥ * ॥ वेला कालविशेषे। वेलायति ॥ * ॥ सपर पूजायाम्। सपर्यति। पूजयतीत्यर्थः। सपर्यया साधु स पर्यपूपुजत्[9] ॥ * ॥ मगध परिवेष्टने। मगध्यति। परिवेष्टत इत्यर्थः ॥ नीचदास्यादिवृत्तिमनुतिष्ठतीत्यपरः[10] ॥ * ॥ पम्पस दुःखे। पम्पस्यति। दुःखायत इत्यर्थः ॥ * ॥ इरस् ईर्ष्यायाम्। इरस्यति ॥ * ॥ महीङ्

---

१ गद्गद्ङिति A. B. C. K.—गद्गद्। गद्गडित्येके Hem.; गद्गद् वाक्स्खलने Siddh. K., Yajñ.

२ ञित्वात्तङ् A.; ङित्वात्तङ् B.; ङिद्वात्तङ् C. K.; ङित्वात्तङ् F.

३ ? वेद्यति F. (and perhaps others); cf. वेट् further on.—वेद धौर्त्ये स्वप्ने च Siddh. K.; वेद धौर्त्ये Yajñ.; वेट् & वेद् Hem.; वेट् K. V. α. β., om. ed.

४ A. B. C. K. insert the passage from केला after चिकित्सायामित्यन्ये.

५ समरायति F.; समर Hem.; om. by the other works.

६ ? That is = अभिषजति "he reviles, casts aspersions on."—भिषज चिकित्सायां Siddh. K., Yajñ.

७ मंतूञ् B. C. K.—मन्तु अपराधे। रोष इत्येके। मन्तूयति। चन्द्रस्तु ञितमाह। मन्तूयते ॥ Siddh. K., Yajñ.

८ ? इला शब्दे; यलाशब्द A.—एला Hem., Yajñ.; एला (केला वेला) विलासे। इलेत्यन्ये Siddh. K.

९ Śisup. I, 14.

१० °धृतिमनु° C.; धृत्ति° K.—मगध परिवेष्टने। नीचदास्य इत्येके Siddh. K., Yajñ.

ह्लृद्धौ पूजायां च। मह्लीयते। ङित्वात्तङ्॥*॥ खेला स्खलनविलासयोः। खेलायति॥ खेल इत्यकारान्तमित्यन्ये[1]। तन्मते खेल्यति॥*॥ लोट्यति बटुः। भूमौ विपरिवर्तत इत्यर्थः॥ लेट् दीप्ताविल्यन्ये[2]॥*॥ उरणति मादिनम्[3]॥*॥ चरण[4] गतौ। चरणति॥ वरण[4] इति भोजः। यथा।

चरण्वारणैर्वेलां तरण्नौभिरर्णवम्[5]॥*॥

असु मानस उपतापे च। असूयति॥ अन्ये तु। असूङिति ङितं दीर्घान्तं पठन्ति। तन्मते। असूयते[6]॥*॥ उषस्यति रात्रिः। प्रभातीभवतीत्यर्थः॥*॥ वेडिति धौर्त्ये स्वप्ने च। वेय्यति[7]॥*॥ हृणीङ् रोषे लज्जायां च। हृणीयते वीरवती न भूमिः[8]॥ ४३७॥

रेखाश्वरेयोद्रवसः[9] मुखेरजौ
भिष्णक्तिरोलाडिषुधेरधो[10]ऽगदः।
लेखालिटौ लेटचुरण्यारसो[11]
वेटाऽथ लोटातरणौ तथा पयः॥ ४३८॥

---

१ खेला। खल इत्यन्ये Hem.; खेला विलासे Siddh. K., Yajñ.

२ लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च। दीप्तावित्येके Siddh. K.; लेट् लोट् Kâś. V., Yajñ.; लोट् only Hem.

३ उरण Hem.; om. by others.

४ चरण वरण गतौ Siddh. K., Yajñ.; चरण Hem., K. V. ed.

५ चरण्नुवारणैर्वेलाम्नरण्वं॰ A.; यथा चरणैर्वेलांतरप्यनोभिरर्णवं B.; यथा वरणैर्वेलांतरण्यनौ॰ C. K.

६ असु उपतापे। अस् असूञ् इत्येके। Siddh. K., Yajñ.: अस & असु Hem.; अस् & असूञ् K. V. *a.*; अस & असुञ् Kâś. V. ed.

७ ? वेय्यति धौर्त्ये॰ वेय्यति B. C. K.; वेड्यति A.; वेयति। धूर्त्ते स्वप्ने वा। वेय्यति F.—Cf. page 462, note 3.

८ Bhaṭṭik. 2, 38 (MSS. च or व for न).

९ रेखाश्वरेयोद्रवसः B. C. F. K.; रेखास्वरेयो॰ E.; रेखात्वरायोद्रवतः॰ D.

१० भिष्णुक्ति॰ A. B. C. E. F. K.

११ लेट्चर॰ A.; ॰लेङ्कुरण्यारसो E.; लेटवरणा॰ D.

रेखायति। श्लाघामासादयति[१]। रेखाकर्माचरंश्चित्रकरादिर्वोच्यते ॥ * ॥ अम्बर्यति ॥ सम्बर[२] इति वामनः ॥ * ॥ इयस्[३] ईशैश्वर्ययोः। इयस्यति। अयं दुर्गमतेन ॥ * ॥ द्रवस्[४] परितापे परिचरणे च। द्रवस्यति ॥ * ॥ सुख तत्क्रियायाम्। सुख्यति। सुखी भवतीत्यर्थः ॥ * ॥ इरज् ईर्ष्यायाम्। इरज्यति ॥ * ॥ भिष्णज् उपसेवायाम्। भिष्णज्यति[५]। उपसेवत इत्यर्थः ॥ * ॥ तिरस्यति। अन्तर्हितो भवतीत्यर्थः ॥ * ॥ लाडिति वेट्वत्। लाड्यते[६] ॥ * ॥ इषुध शस्त्रधारणे। इषुध्यति ॥ * ॥ इरध्यति। अगद्यति। इयं भोजमतेन[७] ॥ * ॥ लेखार्थो रेखार्थवत् ॥ * ॥ लिट् अल्पार्थे कुत्सायां च। लिट्यति ॥ * ॥ लेट्यति[८]। भूमौ विपरिवर्तत इत्यर्थः ॥ * ॥ चुरण[९] गतौ चौर्ये च। चुरण्यति। गच्छति। चोरयति ॥ * ॥ अरर आराकर्मणि। अरर्यति ॥ अररेति नाम। आरापर्यायवाचि।

स राक्षसेन्द्रस्य निशाचरेन्द्रो बिभेति चर्मारर एव चर्मा[१०] ॥

अररो यज्ञाङ्ग[११] रणस्येत्यन्यः ॥ * ॥ उरस्यति ॥ * ॥ वेटायति। लोटायति। एतौ वामनमतेन ॥ वेटालाटेति[१] केचित्पठन्ति। तेषां मते

---

१ रेखा श्लाघासादनयोः Siddh. K., Yajñ.

२ अम्बर्यति। अम्बर B. C. F. K.—कम्बर सम्बर संभरणे Siddh. K.; संवर अंबर संवरणे Yajñ.; om. Kâś. V., Hem.

३ Thus also Hem.; om. others.

४ Hem. has दुवस्; Siddh. K. also adds दुवस्‌ इ संदीपने.

५ भिष्णुज॰ भिष्णुज्यति A. B. C. F. K.; Hem.

६ वेत्वद्॰ B.; वेन्वत॰ C.; लाडिति वेदवत्। वेट् लायते इत्यन्ये A.—लाट (लाट्) जीवने Siddh. K., Yajñ.

७ Hem. has both; Siddh. K., Yajñ. अगद नीरोगत्वे and इरज् ईर्ष्यायां (इर्यति, ॰ते Yajñ., ईर्यति, ॰ते Siddh. K.)

८ See note २, preceding page.

९ See page 461, notes ७ and ८.

१० ? धर्मारर एव वर्मा (चर्मा?) A.

११ यजागं A.—अरर आराकर्मणि Siddh. K., Yajñ. [अररेति प्रातिपदिकमारापर्यायवाचि Yajñ.].

वेटालाय्यति[१] ॥ * ॥ तरण गतौ । तरण्यति ॥ * ॥ पयस्यति गौः । पयः प्रसूत इत्यर्थः ॥ ४३८ ॥

संभूयोभरणौ नन्दपुरणौ कुषुभेमसौ ।
ईयस्पुष्यौ तथा गोधा चित्रङ् आश्चर्ये इष्यते[२] ॥ ४३९ ॥

संभूयस्यति सस्यं । वर्षति पर्जन्ये प्रभूतं भवतीत्यर्थः ॥ * ॥ भरण धारणपोषणयोः । भरण्यति ॥ * ॥ नन्द समृद्धौ । नन्द्यति ॥ * ॥ पुरण[३] गतौ । पुरण्यति । गच्छतीत्यर्थः ॥ * ॥ कुषुभ क्षेपे । कुषुभ्यति । क्षिपतीत्यर्थः ॥ कुसुभ्यति स्वदेहाश्रयां परकर्तृकां निरोधक्रियामनुभवतीत्यर्थ इत्यन्ये ॥ * ॥ इमस् ईयस्[४] ईर्ष्यायाम् । इमस्यति । ईयस्यति[४] ॥ * ॥ पुष्य संतोषे । पुष्यति[५] ॥ * ॥ गोधायति । अयं चन्द्रमतेन ॥ * ॥ चित्रीयते । आश्चर्यमुत्पादयति ॥ * ॥

कुसुभादीनामकारलोपश्च । द्विविधाः कण्ड्वादयः सर्यन्ते भ्वादयश्च नामानि च । तत्र भ्वाद्यधिकाराद् भ्वादिभ्यः प्रत्ययः । तदुक्तमुभयम् । कण्ड्वादीनि धातवश्चैव[६] प्रातिपदिकानि च । आतश्चोभयम् । कण्डूयतीति त्वङ्गघर्षणे प्रयुज्यते । अस्ति मे कण्डूरिति वेदनामात्रे ॥ अपरो धातुत्वस्य विकल्पे युक्तिमाह धातोरित्यधिकारात् । ककारस्य[७] च गुणप्रतिषेधार्थस्यासञ्जनादवसीयते । धातवस्तावत्कण्ड्वादय इति । कण्डूञ् हणीङ्[८] इति च दीर्घं गणे पठति । यदि च नित्यः प्रत्ययः स्याद्

१ वेटालोटेति °वेटालोय्यति F.—The other works omit all three forms.

२ इरजपुष्यौ तथा गोधा अंबराश्चर्यमिष्यते D.; A. om. text and beginning of comm. to भवतीत्यर्थः.

३ Thus also Hem., *v.l.* K. V. ed.

४ इयस्° इयस्यति A. B. C. K. (cf. preceding śloka); Hem. has इमस्; the others omit both.

५ संतापे° C. [विकसने D.]; पुष्यति A. B. C. F. K.—Not given by the others.

६ °चैवं A.

७ Viz. of the pratyaya यक्; cf. Pâṇ. i. 1, 5.—A. om. च.

८ कंडूञ् हणीञ् A.; कंडूङ् हणीङ B. C. F. K.

व्यप्रेगित्यनेनैव[१] दीर्घत्वस्य सिद्धत्वादनर्थकं दीर्घोच्चारणं स्यात् कृतं च तस्मादवसीयते धातुत्वमेव कण्ड्वादिषु विभाषितमिति । तदुक्तम् ।

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः[२] ॥

स्वाद्यधिकारः किम् । कण्डूनाम्नः स्वादयो भवन्ति । नदीसंज्ञकस्यायं स्याख्यत्वात् । तेन नित्याङ् भवन्ति । रणेन कण्ड्वास्त्विदस्रैः समं पुनः[३] । मन्तुः । वल्गुः ॥ पाणिनिशकटाङ्गजदिग्वस्त्रवामनमतेन स्वार्थे कण्ड्वादिभ्यः प्रत्ययः । चन्द्रादीनां मतेन करोत्यर्थे ॥ * ॥ आकृतिगणोऽयम् । तेन रैधवलप्रभृतयो द्रष्टव्याः[४] ॥ ४३८ ॥ इति कण्ड्वादिः ॥

भृशतृपच्चपलाण्डररेहतो[५]
हरितपण्डितकाण्डररेफतः ।
अभिमनःशुचिदुर्मनसोजसः
सुमनसोन्मनसोत्सुकवेहतौ ॥ ४४० ॥

कर्तुर्भृशादेर्हलुक् चाच्वेरित्यनेन भृशादेरच्व्यन्ताद् अभूततद्भावविषयात्[६] कर्तृभूतात् क्यङ् भवति । तत्संनियोगेन हलो लुक् ॥ * ॥ अभृशो भृशो भवति । भृशायते ॥ * ॥ तृपत् । चन्द्रः समुद्रस्य । तृपायते[७] ॥ * ॥ चपलायते ॥ * ॥ आण्डरो मूर्खो मुष्करो वा । आण्डरा-

---

१ ? घ्यप्सेतिगित्य° A.; व्यसिगित्य° F.; व्याप्सगित्यनेन च° C. K.—? च्व्य° cf. P. vii. 4, 25; 26.

२ See Mahâbh. on P. iii. 1, 27.

३ Śiśup. I, 48.

४ रैधवलप्रत्ययो° A.—? रैयति P. vi. i. 79 scholl.; धवल्य धवलित; neither word is given by the other works.

५ भृशतृपंच° B. K.; भृशभृपच° C.; भृशनृपौ च° F.

६ Thus A.; अभूतात् भूतविषयात् B. C. F. K.

७ तृपचंद्रः or नृपचंद्रः °नृपायते B. C. F. K.; चंद्रसमु° A.—तृपत् Bö., Hem., K. V. *a.*; नृषत् K. V. ed., *β.*; om. Yajñ.

यते ॥ अण्डर इत्यन्ये[1] ॥ * ॥ रेहत् । नैर्घृण्यधर्मवृत्तिर्भिचाभिलाषधर्मवृत्तिर्वा[2] । रहसि वर्तत इत्यन्ये । रेहायते ॥ * ॥ हरितायते ॥ * ॥ पण्डितायते ॥ * ॥ कण्डरायते[3] ॥ * ॥ रेफत्[4] । सदोष इत्यर्थः । रेफायते ॥ * ॥ अभिमनायते ॥ * ॥ शुचीयते ॥ * ॥ दुर्मनायते ॥ * ॥ ओजःशब्दस्तद्वति वर्तते । ओजायते ॥ * ॥ सुमनायते ॥ * ॥ उन्मनायते ॥ * ॥ उत्सुकायते ॥ * ॥ वेहत् । गर्भघातिनी[5] । वेहायते ॥ * ॥ सुमनसोन्मनसेति तृतीयान्ते पदे ॥ ४४० ॥

शीघ्रं फेनो नीलमन्दौ च वर्चः
संश्वन्मद्रौ भद्रयुक्तौ भृशादौ[6] ।

शीघ्रायते ॥ * ॥ फेनायते ॥ * ॥ नीलायते ॥ * ॥

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि[7] ॥

वर्चायते[8] ॥ * ॥ संश्वायते[9] । सातत्येन भवति ॥ शश्वदिति शाकटायनः ॥ * ॥ मद्रायते[10] ॥ * ॥ भद्रायते ॥

ननु उदमनायतेत्यादयः[11] प्रयोगाः कथं सिध्यन्ति । सप्रादीना-

---

१ अंडरायते । अंडर० A.; आंड इत्यन्ये B.; वा । आडंरा इत्यन्ये C.; वा । आंडरा [इति आंड suppl.] इत्यन्ये K.—अण्डर Bö., Yajñ., Hem.; अधर K. V. ed. [अंडरायते । अंडरो मुष्कः Yajñ.].

२ ०भिचोभिलाष० A.; ०भिचाभिषधर्मवृत्तिर्वा B. C., orig. K.—रेहशब्दो नैर्घृण्यवृत्तिर्भिचाभिषधर्मवृत्तिर्वा । रहसि वर्तत इत्यन्ये Yajñ.

३ कंडिरायते B.; om. F.—कंडर Hem.; om. by the others.

४ Thus also Hem.; रोहत् Bö., Yajñ., *v.l.* K. V. ed.; रोहिस् *a. β.*

५ Om. A.

६ सश्वन्० A.; शंश्वन्० B. C. K.; शश्वन्० F.; सश्वन्मंद्रौ E.

७ Raghuv. 4, 49.

८ Om. A. B. C. K.

९ अन्नं राश्वायते A.; शंश्वायते B. K.; शश्वायते C.; शश्वायते F.—शश्वत् Yajñ.; शंश्वत् Hem.; संश्वत् and शश्वत् Bö.; om. Kâṣ. V.

१० मंद्रायते A. F.—मद्र Bö., Yajñ., Hem.; Triloch. on Kât. iii. 2, 8; Kâṣ. V. ed.; मंद्र *a. β.*

११ उन्मनायते इ० B. C. K.

मेषां[1] पाठात्। नैवम्। संग्रामयतेः सप्रादेः स्वादिषु पाठात्[2]। अन्येभ्योऽपि निरुपसर्गेभ्य एव क्यङादिविधिः[3]। तेन। उदपुच्छयत समभाण्डयतेत्यादयोऽपि सिद्धाः ॥ * ॥ इति भृशादिः[4] ॥

शब्दाटाट्याकखमेघाभ्रकोटाः[5]
पोटासोटाशुभ्रनीहारशीकाः[6] ॥ ४४१ ॥

शब्दादि करोति क्यङित्यनेन शब्दादेः करोतीत्यर्थे क्यङ् वा भवति ॥ * ॥ शब्दं करोति। शब्दायते ॥ शब्दयति[7] शाब्दिक इत्यपि ॥ * ॥ अटाट्यायते ॥ * ॥ कखं पापम्। कखायते[8] ॥ * ॥ मेघायते तपात्यये वायुः ॥ * ॥ अभ्रायते ॥ * ॥ कुट कौटिल्ये। कोटयतीति कोटा स्त्री। कोटायते ॥ * ॥ पोटा स्त्री। पोटायते ॥ * ॥ सोटायते[9] ॥ * ॥ शुभ्रायते शशी ॥ * ॥ नीहारायते हिमर्तुः ॥ * ॥ शीकायते। शीत्कारं करोतीत्यर्थः ॥ ४४१ ॥

सुदिनं दुर्दिनं युद्धं वैराटाटाट्टशीकराः।
मुष्वा वेगौघकण्डाटा समश्च कलहो मतः[10] ॥ ४४२ ॥

सुदिनायते शरत् ॥ * ॥ दुर्दिनायते प्रावृट् ॥ * ॥ युद्धायते सुभटः ॥ * ॥

---

१ प्रसादीना° A. C.

२ संग्रामायते। प्रसादेः स्वादिपाठात्। A.

३ एवं ङ्यखादिविधिः B. C. K.

४ Vardh.'s (and Hem.'s) भृशादि also includes the *gaṇa* लोहितादि to Pâṇ. iii. 1, 13, exc. लोहित itself, for which see ṣl. 443 [and चरित & दास which are also omitted by Kâṣ. V.].

५ कंठ for कख A. B. C. E. K.

६ शोटा for सोटा B. F. K.; शुत्र C.; °सीकाः E.; °शुंका° A

७ शब्दायति A. C.

८ काण्ठं° काण्ठायते A. B. K.; कटं° कंडायते° C.

९ शोटायते A. B. C. F. K.—The other works read सोटा.

१० मुष्टा वेगोद्य °समाश्च° A.; B. C. E. F. K. om. this ṣloka (F. leaving blank space for it); D. om. text and comment.

वैरायितारस्तरलाः स्वयं मत्सरिणः परे[१] ॥ * ॥

अटाटायते ॥ * ॥ अट्टायते[२] ॥ * ॥ शीकरायते ॥ * ॥ ब्रुष दाहे वन्प्रत्यये । ब्रुष्वा । ब्रुष्वायते[३] ॥ * ॥ वेगायते तुरगः ॥ * ॥ ओघायते[४] ॥ * ॥ कणेर्वंप्रत्यये डक्कागमः[५] । कण्डूञ् इत्यस्य वा वप्रत्यय[६] ऊकारलोपश्च । कण्ड्वा[७] कृपा । कण्ड्वायते ॥ * ॥ अटायते ॥ * ॥ ममेति षष्ठ्यन्तानुकरणम् । ममायते ॥ * ॥ कलहायते ॥ ४४२ ॥ इति शब्दादिः[८] ॥

लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।
मूर्छानिद्राकृपाधूमाः करुणा[९] जिह्मचर्मणी[१०] ॥ ४४३ ॥

डाल्लोहितादेस्तु क्यष् । इत्यनेन लोहितादेर्गणात् क्यष् भवति[११] ॥ * ॥ अलोहितो लोहितो भवति । लोहितायते । लोहितायति । यथा । लोहितायति सहस्रमरीचौ[१२] ॥ * ॥

श्यामायति । श्यामायते । यथा । श्यामायमानानि वनानि पश्यन्[१३] ॥ * ॥ दुःखायति । दुःखायते ॥ * ॥ हर्षायति । हर्षायते ॥ * ॥ गर्वायति । गर्वायते ॥ * ॥ सुखायति । सुखायते ॥ * ॥ मूर्छायति । मूर्छायते ॥ * ॥

---

१ Şişup. 2, 115.

२ अटायते A.—The other works read अट्टा for अट्ट.

३ मुष दाहे° A.; °पुष्वा ब्रुष्वायते C.; ब्रुष्वा ब्रुष्वायते F.; ब्रुष° मुष्वा मुष्वायते K.—मुष्टा and ब्रुष्टा eds. Pâṇ.; मुष्वा Hem.; मुष्टा । ब्रुष्टा v. ll. Kâṣ. V. ed.; ब्रुष्टा α.; ब्रुष्टा β.

४ उद्यायते A. B. C. K.—ओघ Hem.; om. by others.

५ कर्णेर्वं° B. C.; कणिवाप्रत्ययो ड° A.; डक्कागमः(?) B.; डकागमः C.

६ वाप्रत्यये° A.

७ कंडूं A.—Not given by others.

८ Hem. has the same *gaṇa*; cf. Pâṇ. iii. 1, 17 and vârtts.

९ कारणा° E.; कारणा D.

१० जिह्मकर्मणी A. D.; जिह्मावर्मणी C.—Yajñ., page 45, quotes this sloka °करुणा नित्यचर्मणी.

११ क्यप्° क्यप् B. C. K.; काभ्भवति A.; cf. Pâṇ. iii. 1, 13.

१२ Kirât. 9, 4.

१३ Raghuv. 2, 17.

निद्रायति। निद्रायते ॥ * ॥ कृपायति। कृपायते ॥ * ॥ धूमायति। धूमायते ॥ * ॥ करुणा दया। करुणायति। करुणायते[१] ॥ * ॥ जिह्मायति। जिह्मायते ॥ * ॥ चर्मायति। चर्मायते[२] ॥ * ॥

लोहितश्यामवर्जमन्येषां तद्वति प्रत्ययः। तेनादुःखवान् दुःखवान् भवतीत्यादि वाक्यम् ॥ तुग्रहणं क्यषोऽवधारणार्थम्। लोहितादेरेव क्यष् नान्येभ्यः[३] ॥ आकृतिगणोऽयम्। तेन। अमृतं यस्य विषायति[४]। इत्यादयः सिद्धाः ॥ ४४३ ॥ इति लोहितादिः[५] ॥

सुखदुःखास्रकृच्छ्राणि[६] प्रतीपः करुणस्तथा।
कृपा चालीकतृप्रास्रकृपणाः[७] सोढसंयुताः ॥ ४४४ ॥

सुखादिर्भुङ्क्त इत्यनेन[८] सुखादेर्गणाद् भुङ्क्ते वेदयतेऽनुभवतीत्यर्थे क्यङ् भवति ॥ * ॥ सुखं वेदयते। सुखायते ॥ * ॥ दुःखायते ॥ * ॥ अस्यतेऽनेन। अस्रम् अश्रु[९] रुधिरं वा। अस्रायते ॥ * ॥ कृच्छ्रायते ॥ * ॥ प्रतीपं प्रतिकूलम्। प्रतीपायते ॥ * ॥ करुणं शोचनम्। करुणायते ॥ * ॥ कृपायते ॥ * ॥ अलीकम् अनृतम्। अलीकायते ॥ * ॥ तृप्रं[१०]

---

१ [करणायति। करणायते D.]

२ वर्मायति C. (P. i. 1, 15 scholl.); [कर्मायति। कर्मायते D.]; चर्मन् Hem.

३ क्यषन् नान्येभ्यः A.

४ Böhtl., Ind. Spr., 2 ed., 2454.

५ Hem. has the same *gaṇa*. The लोहितादि to Pâṇ. iii. 1, 13 is entirely different from it, except the word लोहित, cf. page 468, note 4. — Yajñ. remarks: यत्तु गणरत्नमहोदधौ लोहितश्यामदुःखानि° इति पठित्वा श्यामादिभ्योऽपि क्यषि पद्यद्वयमुदाहृतं तत्तूक्तभाष्यवार्त्तिकविरुद्धम्। तस्मात्तेभ्यो क्यङेवेति ध्येयम् ॥

६ °दुःखाश्र° A. B. C. K.; दुःखासु° D. E.

७ °तृप्राश्र° A. B. C. K.; तृप्रा [स्र om. E.] कृपाणाः D. E.

८ सुखादि भुंक्ते° A.; om. B. C. K.

९ असु A. B. C. K.—अस्यतेऽसु अस्रं च। अस्रुते आकंठ अश्रु वाष्पो नानार्थे। Kshem. on A. K. ii. 6, 2, 44.

१० Thus Hem., Yajñ., Kâṣ. V. $\alpha$. $\beta$.; तृप्त Bö., Kâṣ. V. ed. (*v. l.* तीव्र).—तृप्रं दुःखं चंद्रं समुद्रं वा तृप्रायते Yajñ.

दुःखम् । दुःखायते ॥ * ॥ अस्रमेवास्रम् । आस्रायते ॥ * ॥ कृपणं दैन्यम् । कृपणायते ॥ * ॥ सोढं सहनम् अभिभवो वा । सोढायते ॥ * ॥

सुखादीन्येके लोहितादिष्विच्छन्ति । तेषां मते । असुखः सुखो भवति । सुखायति । सुखायते ॥ ४४४ ॥ इति सुखादिः ॥

यहस्निहौ वदं दीधीभणौ रणपठौ कुचम् ।
लिखं च कम्पमन्दोलिमुम्भिं लोचं मथिं[१] विदुः ॥ ४४५ ॥

क्तेरग्रहादेरित्यनेन ग्रहादिवर्जितात्परस्य क्तेरिड् न भवति ॥ * ॥ निगृहीतिः[२] ॥ * ॥ अपस्निहितिः ॥ * ॥ उदितिः ॥ * ॥ दीधितिः ॥ * ॥ भणितिः ॥ * ॥ रणितिः ॥ * ॥ निपठितिः[३] ॥ * ॥ निकुचितिः ॥ * ॥ लिखितिः ॥ * ॥ विकम्पितिः ॥ * ॥ अन्दोलितिः ॥ * ॥ उम्भितिः ॥ * ॥ आलोचितिः ॥ * ॥ मथितिः ॥ ४४५ ॥ इति ग्रहादिः[४] ॥

वारतर्परगराः शरभेरे[५]
कन्दरः करभमण्डरकाराः ।
रघुरंकपरिकाङ्कुरिरेखा
रोमकर्मपुरुषासुररिक्षाः ॥ ४४६ ॥

वारादेर्वेत्यनेन रश्रुतेर्लश्रुतिर्वा भवति ॥ * ॥ वारः क्रियाभ्यावृत्तिः[६] । वालः केशः ॥ * ॥ तर्परः पशूनां कण्ठघण्टा[७] । तल्पलो

---

१ °मंदोलितुंभिलोरमथिं E.; °मंदौ लसुंभितुंम्फिमथिं D.

२ The compiler of the comm. in D. mistook the application of this *gaṇa*, and forms ऋणग्राही । पुत्रस्नेही etc. (cf. ṣl. 457).

३ Thus also Hem.; पठितिः B.C.K.

४ Hem. has the same *gaṇa*, but gives only the nouns. He omits, however, the words उम्भितिः, दीधितिः and लोचितिः.

५ °शारभेराः B.; सरभेराः A.; सभभेराः E.

६ क्रियाव्यावृत्तिः A.; F. adds संघातो वा.

७ कंठघंटः A. B. F.; Hem.

गजपृष्ठैकदेशः[१] ॥ * ॥ गरो विषम् । गलः प्राण्यङ्गम् ॥ * ॥ शरभो ऽष्टापदः । शलभः[२] पतङ्गः ॥ * ॥ दूरा ऽन्तम् । दूला भूमिः ॥ * ॥ कन्दरो गिरिगुहा । कन्दलः कन्दविशेषः ॥ * ॥ करभ उष्ट्रः । कलभो बालहस्ती ॥ * ॥ मण्डरो जीवविशेषः । मण्डलं बिम्बं संघातो वा ॥ * ॥ कारो रक्षानिर्वेशः । कालो वर्णः ॥ * ॥ रघुः । राजा । लघुः । अपचितपरिमाणः ॥ * ॥ अरम् अत्यर्थम् । अलं पर्याप्तम् ॥ * ॥ एतेषामर्थभेदे लत्वं रूढिवशात् । भोजस्तु सामान्येनाह ॥ * ॥ कपरिका । कपलिका[३] ॥ * ॥ अङ्गुरिः । अङ्गुलिः ॥ * ॥ रेखा । लेखा ॥ * ॥ रोम । लोम ॥ * ॥ कर्म । कल्म ॥ * ॥ पुरुषः । पुलुषः ॥ * ॥ असुरः । असुलः ॥ * ॥ रिचा । लिचा ॥ ४४६ ॥

पांसुरकरीरमूर[४] तिर्पिरिकातरुणशुक्रपर्यङ्काः ।
परियोगमुकुरसरिरं रोहितपरिघौ सरोहिण्यौ[५] ॥ ४४७ ॥

पांसुरः । पासुलः[६] ॥ * ॥ करीरः । कलीलः ॥ * ॥ मूरम् । मूलम् ॥ * ॥ तिर्पिरिका । तिल्पिलिका ॥ तिर्पिरीकमिति[७] वामनः ॥ * ॥ तरुणः । तलुनः ॥ * ॥ शुक्रः । शुक्लः ॥ * ॥ पर्यङ्कः । पल्यङ्कः[८] ॥ * ॥ परियोगः । पलियोगः ॥ * ॥ मुकुरम् । मुकुलम् ॥ * ॥ सरिरम् । सलिलम् ॥ * ॥ रोहितम् । लोहितम् ॥ * ॥ परिघः । पलिघः ॥ * ॥

---

१ Thus also Hem.

२ सरभो॰ सलभः A.

३ कपरिका and कपिरकं Hem.; कपिरक and कपिरिका Bö.; कपिरक Kâṣ. V.

४ पांसुर॰ B. C. E. K.; करीरसूरं D. E.

५ ॰सारोहिण्यौ B.; सरोहिणी D.E.

६ पांसुरः पांसुलः B. C. K.; Bö., Kâṣ. V. ed.

७ तिर्पिरिका and निर्विरीक Bö.; तिर्पिरीकं Kâṣ. V., Hem.

८ For the words पर्यङ्क, परियोग, and परिघ Hem. has a special rule परेर्घाङ्कयोगे । (cf. Pâṇ. viii. 2, 22 with vârtt. 1).

रोहिणी। लोहिनी[१] ॥ * ॥ आकृतिगणोऽयम्। तेनान्येषामपि लत्वं भवति ॥ ४४७ ॥ इति वारादिः[२] ॥

**समादितः पदिं सदिं विदिं नहिं वृषिं मुषिं[३]।**
**इणं वृतिं यतिं श्रुवं सुवं[४] भरिं विदेन्धिना[५] ॥ ४४८ ॥**

संपदादेः क्विप् क्तिरित्यनेन संपदादेः स्त्रियां भावेऽकर्तरि च कारके क्विप्क्तिप्रत्ययौ भवतः॥ संपत्तिः। संपत्॥ विपत्तिः। विपत्॥ व्यापत्तिः। व्यापत्॥ प्रतिपत्तिः। प्रतिपत्॥ संसत्। परिषत्। उपसत्। उपनिषत्॥ संवित्। निर्वित्॥ उपानत्॥ प्रावृट्॥ विप्रुट्॥ समित्॥ नीवृत्। उपावृत्॥ संयत्॥ प्रतिश्रुत्॥ उपस्नुत्[६]॥ उपभृत्॥ विदेति जानात्यर्थैत्यन्यः[७]॥ समिध्यतेऽनया। समित्॥ वामनमते क्तिप्रत्ययो द्रष्टव्यः[८]॥ ४४८ ॥

**क्रुधिं युधिं क्षुधिं तृषिं त्विषिं रुषिं रुजं शुचम्।**
**ऋचिं[९] मुदिं मृदिं गिरिं ह्रियं भियं लुवं भुवम्[१०] ॥ ४४९ ॥**

क्रुत्॥ युत्॥ क्षुत्॥ तृट्॥ त्विट्॥ रुट्॥ रुक्॥ शुक्॥

---

१ [रोहिणः। लोहिणः D.]—Om. by the other works.

२ कपिलकादि to Pâṇ. viii. 2, 18 vârtt.; ऋफिडादि Hem. ii. 3 (last rule but one ऋफिडादीनां डस्य लः)। ऋफिडः। लृफिडः। लृतकः। ऋतकः। कपरिका। कपलिका। etc. interchange of र and ल; then that of ड and ल: ऋफिलः। ऋफिडः। बलभी। वडभी। चूला°। इला°। व्यालः°। पुरोलाशः°। षोलशः। वलिशं°। पुलिनं°। पोला°॥

३ B. C. K. om. मुषिं; पृषिं D. E.

४ शुवं सुवं (or स्नुवं) D. E.

५ विर्दिंधिना B. F. K.; वर्दिंधनाः C.; दिदेन्धिनौ D.

६ परिश्रुत्। उपश्रुत्। परिश्रुत्। F.; प्रतिश्रुत्। उपश्रुत् परिश्रुत् K.; [संस्नुत्। स्नुतिः D.]—Hem. has only श्रु प्रतिश्रुत्। उपश्रुत्। परिश्रुत्.—? [उपस्नुत्].

७ जानीते इत्यर्थत्यन्यः F.; (? जानीतेत्य° "know ye").

८ क्तिप्रत्ययोपि द्रष्टव्यः A.

९ क्रुषिं B. C. F. K.; ऋचि E.

१० सुवं A. B. C. D.; broken away in K.

च्छक्[1] ॥ मुत् ॥ म्रत् ॥ गीः ॥ अत्रापि क्तिप्रत्ययो[2] वामनमतेन । भोजस्तु क्तिप्रत्ययं[3] न ददर्श ॥ ह्रीतिः । ह्रीः ॥ भीतिः । भीः ॥ लूनिः[4] । लूः ॥ भूतिः । भूः[5] ॥ ४४६ ॥

कृजं भिदिं छिदिं नुदिं[6] दृशिं नशिं युजिं ज्वरम् ।
अवं त्वरं स्रिवं[7] मवं शकिं[8] नुवं विदुर्बुधाः ॥ ४५० ॥

कृतिः । कृत् ॥ भित्तिः । भित् ॥ छित्तिः । छित् ॥ नुत्तिः । नुत्[9] ॥ दृष्टिः । दृक् ॥ नष्टिः । नक् ॥ युक्तिः । युक् ॥ जूर्तिः । जूः ॥ ऊतिः । ऊः ॥ तूर्तिः । तूः ॥ स्रूतिः । स्रूः[10] ॥ मूतिः । मूः[11] ॥ शक्तिः । शक् ॥ नुतिः । नुत्[12] ॥ भोजोऽपि क्तिक्किपौ[13] ददर्श ॥ * ॥ आकृतिगणोऽयम् । तेन शासिचैकण्डूयप्रभृतयो[14] द्रष्टव्याः ॥ ४५० ॥ इति संपदादिः[15] ॥

भिदिं छिदिं विदिं दयिं रुजिं[16] मृजिं प्रछिं चुरिम्[17] ।
अनामनि क्षिपिं तथा गुहिं तुलिं वसिं वपिम् ॥ ४५१ ॥

---

१ ? क्रुक् B. C. F. K.—Hem. has nothing like this except सृजि (स्रक्).

२ क्तितिचप्र॰ B. C. K.; क्तितिच्प्रत्ययः । F.; क्तिप्र॰ A. [क्तिच्प्र॰?].

३ क्तिप्रत्ययं A.

४ ? लूतिः A. B. K.; om. C.—MS. Hem. also has लूतिः.

५ Thus MSS.

६ तुदिं E.; नुद् Hem.

७ श्रियं D. E.; सृतं B. K.; अवं F.; सृते C.

८ मुचिं A.; भुवं B. C. D.

९ ? तुत्तिः । तुत् A.

१० Thus Hem.; Kâç. V. vi. 4, 20; स्रिवि eds. Pâṇ.

११ मूर्तिः मूः B. C. F. K.

१२ मुतिः । मुक् A.—Hem. has नौतिः । नुत् । नुतिः ।.

१३ क्तिक्यपौ A.

१४ MSS. differ more or less; Hem. has all three.

१५ Hem. makes three gaṇas of this in the sûtras क्रुत्संपदादिभ्यः क्विप् ॥ भ्यादिभ्यो वा ॥; the क्रुधादि being the simple, and the संपदादि the compound verbs, which necessarily take क्विप्; while the भ्यादि take optionally क्विप् or क्ति; see Index. Cf. also Pâṇ. iii. 2, 61; 178.

१६ भजिं D. E.; रुजं F.

१७ तुरिं A.; रुरिं E.; रुजिं D.

षिद्भिदादिभ्योऽङ् इत्यनेन षितो भिदादेश्च स्त्रियां भावेऽकर्तरि च कारकेऽङ् भवति ॥ * ॥ भिदा । विदारणम् ॥ * ॥ छिदा । द्वैधीकरणम् ॥ * ॥ विदा । लाभो ज्ञानं वा[1] ॥ * ॥ दया । करुणा[2] ॥ * ॥ रुजा [रोगः] ॥ * ॥ मृजा[3] [शरीरसंस्कारः] ॥ * ॥ पृच्छा [प्रश्नः] । अत्र च्छन्दोभङ्गभयाद् द्विर्न कृतः ॥ * ॥ चुरा । चौर्यम् ॥ * ॥ चिपा [प्रेरणम्] ॥ * ॥ अनाम्नीति किम् । भित्तिः । विच्छित्तिः । विचिप्तिरित्यन्तः ॥ अत ऊर्ध्वं नामनि ॥ * ॥ गुहा । पर्वतकुहरम् ओषधिविशेषश्च ॥ * ॥ तुला । उन्मानम् ॥ * ॥ वसा[4] । स्नेहः ॥ * ॥ वपा । मेदोविशेषः ॥ ४५१ ॥

क्षपिं क्षियं रिखिं लिखिं शुभिं सिधिं मिधिं गुधिम् ।
आरिं गदिं धृजं तारिं कारिं हारिं खिदिं[5] विदुः ॥ ४५२ ॥

क्षपा । रात्रिः[6] ॥ * ॥ क्षिया । आचारभेदः ॥ * ॥ रेखा । राजिः ॥ लेखा । सैव ॥ रिखिर्लिखेः समानार्थः सौत्रधातुः ॥ * ॥ शोभा । कान्तिः ॥ * ॥ सेधा । सत्त्वम् ॥ * ॥ मेधा । बुद्धिः ॥ * ॥ गोधा । प्राणिविशेषः ॥ * ॥ एतेषामरेङ् च ॥ * * ॥ आरा । शस्त्री ॥ * ॥ गदा[7] । प्रहरणम् ॥ * ॥ धारा । प्रपातः ॥ * ॥ तारा । ज्योतिः ॥ * ॥ कारा ।

---

१ विदा विचारणा Hem.; om. Bö.; Kâś. V.

२ दया अनुकम्पा Hem.—Bö., Kâś. V. om. दया, पृच्छा, चुरा, तुला, रुजा, शोभा, सेधा.

३ K. V. ed. सृजा; *α. β.*, Hem., Bö. मृजा.—The equivalents in brackets have been added from Hem.

४ वशा A.—वसा Bö., K. V.; वशा स्नेहनद्रव्यं धातुविशेषश्च । उष्टिरन्या ॥ Hem.

५ ? खिदिं A. B. C. F. K.; ष्विदिं E.; श्विदिं D.

६ Thus also Hem.; क्षपेः संप्रसारणं च । क्षपा । Kâś. V., Bö.

७ This is not given by the other works, and seems to be out of place here.

गुप्तिः ॥ * ॥ हारा । मुक्ताफलमाला । मानमिति भोजः[१] ॥ * ॥ एतेषां वृद्धिश्च ॥ ** ॥ खेदा[२] । दैन्यम् । निपातनादरेङ् ॥ * ॥ आकृतिगणश्चायम् । तेन चूडापीडाकहाप्रभृतयो[३] द्रष्टव्याः ॥ ४५२ ॥ इति भिदादिः ॥

नन्दिर्वासिर्वर्धिनर्दी च रोचिर्
दूषिर्भीषिर्भूषिशोभी मदिश्च ।
साधिर्ण्यन्ताः सर्व एते च नाम्नि
क्रन्दिः कर्षिः स्यात्समो हर्षियुक्तः ॥ ४५३ ॥

नन्दिपचिग्रहादिभ्योऽनाज्णिन इत्यनेन नन्द्यादिभ्यः पचादिभ्यो ग्रहादिभ्यश्चाऽन अच् णिन् इत्येते क्रमेण कर्तरि प्रत्यया भवन्ति ॥ * ॥ नन्दयतीति नन्दनः ॥ * ॥ वासृ णासृ शब्दे[४] । वासयतीति वासनः ॥ * ॥ वर्धनः ॥ * ॥ नर्दनः । अयं भोजमतेन ॥ * ॥ रोचनः ॥ * ॥ दूषणः ॥ * ॥ विभीषणः ॥ * ॥ भूषणः ॥ * ॥ शोभनः ॥ * ॥ मदनः ॥ * ॥ साधनः ॥ * ॥ संक्रन्दनः ॥ * ॥ संकर्षणः ॥ * ॥ संहर्षणः ॥ ४५३ ॥

रमिरुचिकृतितपितृदिपूदहिसहियुक्ता[५] जुजल्पिदमयः स्युः
संज्ञायां लवणोऽथो आद्याद्दम्यर्दिनाशिसूदि मतम् ॥ ४५४ ॥

रमयतीति रमणः ॥ * ॥ रोचत इति रोचनः । विरोचनः ॥ * ॥ विकर्तनः[६] ॥ * ॥ तपनः ॥ * ॥ तर्दनः[७] ॥ * ॥ पवनः ॥ * ॥ दहनः ॥ * ॥

---

१ हारा मानं । हृतिरन्या Hem.

२ ? खवादा A.; श्वेदा B. K.; श्वदा C.; स्विदा F.; (स्विदा D., but wrong throughout). The other works have neither स्वेदा nor खेदा.

३ Hem. has चूडा & पीडा.

४ ? Perhaps a mistake for णासृ रासृ शब्दे Dhâtup. 16, 24. 25: cf. वाशृ (वासृ) शब्दे Dhâtup. 26, 54.— वाशि (वाशनः) Bö., Yajñ., Hem.; वासि Kâś. V. ed., *a*.

५ चिदि for तृदि B. C. K.; तृत A.; om. F.

६ कर्त्तनः A.

७ Om. B. C. F. K.—तृदि । प्रतर्दनः Hem.: om. by the others.

सहनः ॥ * ॥ जवनः[1] ॥ * ॥ जल्पनः ॥ * ॥ दमनः[2] ॥ * ॥ लुनातीति लवणः[3] । निपातनाण्त्वम् ॥ * ॥ सर्वदमनः ॥ * ॥ जनार्दनः ॥ * ॥ वित्तविनाशनः ॥ * ॥ मधुसूदनः ॥ * ॥ असंज्ञायामपि । रिपुदमनः । पुरार्दनः[4] । रोगनाशनः । अरिसूदनः ॥ ४५४ ॥ इति नन्द्यादिः ॥

पचं पतं वदं वशं व्रणं रणं क्षमं[5] भृजम् ।
वृजं गुपिं सृपिं नृतिं दृशिं मिषिं मिधिं विदुः ॥ ४५५ ॥

पचः । श्वपच इत्यपि ॥ * ॥ पततीति पतः । पारापत इत्यपि । णस्तु ज्वलादिपाठात्पक्षे भवत्येव निपातः ॥ * ॥ वदतीति वदः । कद्वदो यद्वद इत्यपि ॥ * ॥ वष्टीति वशः ॥ * ॥ व्रणयतीति व्रणः ॥ अरिव्रणा शक्तिरित्यण्[6] न भवति ॥ * ॥ रणयतीति रणः ॥ * ॥ क्षमः[7] ॥ * ॥ भरः । जारभरः ॥ * ॥ वृणोतीति वरः । कन्यावर इत्यपि ॥ * ॥ गोपः ॥ * ॥ सर्पः ॥ * ॥ नर्तः ॥ * ॥ दर्शः ॥ * ॥ मेषः । अनिमिष इति बहुलाधिकारात् कोऽपि भवति ॥ * ॥ मेधः ॥ * ॥ लगौ प्रमाणनन्तरम् ॥ ४५५ ॥

मिहिदिहिरुहयो नदभषदिवयः[8] सिचिचोरिगाहिगृचिलयः[9] ।
तृदृचरयः[10] सूदिस्कन्दी[11] शिषिहभिवहमुदंशाः स्युः ॥ ४५६ ॥

---

१ The other works have यु (यौति मिश्रभावं प्राप्नोतीति यवनः Yajñ.).

२ दवनः A.; om. B. C. F. K.

३ लवणो राक्षसविशेषः । क्षारविशेषं लवणम् । Yajñ.

४ पवार्दनः B.; पचार्दनः K.; सव--नः C.

५ क्रमं B. F. K.; क्षमं C.

६ अरिव्रणश॰ A.; परिव्रणसक्ति॰ B. C. K.; परिव्रणसाक्ति॰ F.—अरीन् व्रणयतीति । अरिव्रणा शक्तिः Hem.; व्रणयति शब्दं कारयतीति व्रणः Yajñ.

७ क्रमः B. C. K.—क्षम Kâs. V.; *v.l.* Bö.; क्षप Bö., Yajñ.; om. Hem.

८ भय for भष D. E.; भव A. B. C. K.

९ शिविचोरु॰ A.; शिव॰ चलयः D. E.; ॰गृविलयः B. F.; गृवलयः K.; सिचिचोरिगोहि---लयः C.

१० नृदृ॰ C.; तृदृ॰ E.; हृदचरयाः D.; तृदृवसयः F.

११ सूदिवदं D. E.

मेघः ॥ * ॥ देहः ॥ * ॥ प्ररोहः ॥ * ॥ नदः ॥ * ॥ भषः[१] ॥ * ॥ देवः ॥ * ॥ सेवः ॥ * ॥ चोरः ॥ * ॥ गाहः ॥ * ॥ गरः ॥ * ॥ ब्राह्मणचेलः[२] ॥ * ॥ तरः ॥ * ॥ दरः ॥ * ॥ चरः ॥ * ॥ सूदः ॥ * ॥ स्कन्दः ॥ * ॥ ग्रेषः ॥ * ॥ दर्भः ॥ * ॥ वहः । रघूद्वहः । रसावहः ॥ * ॥ स्रवः ॥ * ॥ दंशः ॥ * ॥ आकृतिगणोऽयम् । तेनान्येऽपि द्रष्टव्याः ॥ ४५६ ॥ इति पचादिः ॥

**ग्रहिसंमर्दी[३] मन्त्रिः स्याद् अपराधिरवरुध्युपरुधिस्थाः[४] ।**
**ह्रस्वो वा भ्वः परिवेरुत्पूर्वा भासिदसिसहयः ॥ ४५७ ॥**

गृह्णातीति ग्राही ॥ * ॥ संमर्दी ॥ * ॥ मन्त्री ॥ * ॥ अपराध्यति । अपराधी ॥ अवरोधी ॥ उपरोधीति भोजः[५] ॥ * ॥ स्थायी[६] ॥ * ॥ परिभावी । परिभवी ॥ विभावी । विभवी[७] । इयं भोजमतेन ॥ * ॥ उद्भासी ॥ * ॥ उद्दासी ॥ * ॥ उत्साही ॥ ४५७ ॥

**अभिशो वपिरक्षी शावसिशीङश्च[८] नेः पराः ।**
**याचिसंव्यवहृव्याहृव्रजा वदवसौ नञः ॥ ४५८ ॥**

निश्रावी ॥ निवेशी ॥ निवापी ॥ निरक्षी ॥ निश्यति । निशायी ॥ निवासी ॥ निशायी ॥ * ॥ न याचते । अयाची ॥ * ॥ असंव्यवहारी ।

---

१ भवः B. C. F. K.—भषी Hem.; भषट् (भषी) Bö., Kâs. V.

२ ब्राह्मणवेलः B. F.; ब्राह्मणावलः C. K.; ब्राह्मणावलः A.—Not given by the others.

३ ग्राहि° E.; ग्राहिमर्दि D.

४ अपरावरिथरुध्यपरिधिस्थाः A.; °रुध्यपरुधिस्थाः B.C.K.; अपराध्यवराध्यरुधीस्थाः D. E.

५ अवरोधीति भोजः । उपरोधी । F.; उपराध्नोतीत्युपराधी । एवमपराधी । Yajñ.; Hem. has all three; the others om. अवरोधिन्.

६ Hem. gives उपस्थायी besides.

७ Thus also Hem.; the others have only विभावी भूते, see next śloka.

८ अभिसी° सावसि° D. E.; सावसि A. B.

असंव्याहारीति[1] शकटाङ्गजवामनौ ॥ अव्याहारी ॥ * ॥ अभाजी ॥ अवादी ॥ अवासी ॥ ४५८ ॥

**नञ्पूर्वादेव स्यादचश्च धातोरचित्तकर्तृकतः ।**
**अभिवेर्भुवस्तु भूते[2] विशयी विषयी च देशे स्यात्[3] ॥ ४५९ ॥**

अकारी परशुः ॥ अहारी गन्धः ॥ अचित्तकर्तृकादिति किम् । अकर्ता । अहर्ता ॥ केचिन्नञ्पूर्वादि न[4] मन्यन्ते । तन्मते कारी हारीति स्यात् ॥ * ॥ अभिभूतवान् । अभिभावी ॥ विभूतवान् । विभावी ॥ * ॥ गुणैश्चित्ते विशेते[5] विशिनोति वा । विशयी विषयी वा देशः । निपातनात्षत्वम् ॥ ४५९ ॥ इति ग्रहादिः ॥

**मूलविभुजो महीध्रः पृथ्व्यादिभ्यो रुहश्च विज्ञेयः ।**
**स्त्याख्योषर्बुधनखमुचकुमुदं दायादकाकगुहौ ॥ ४६० ॥**

मूलविभुजादेरित्यनेन मूलविभुज इत्यादयः कप्रत्ययान्ता निपात्यन्ते ॥ * ॥ मूलानि विभुजति वक्रीकरोति । मूलविभुजो रथः ॥ * ॥ महीं धारयतीति महीध्रः[6] ॥ * ॥ पृथ्व्यां[7] रोहति । पृथ्वीरुहः । तरुरित्यादयः ॥ * ॥ स्त्रियमाचष्टे । स्त्याख्यः ॥ * ॥ उषसि बुध्यते । उषर्बुधो

---

१ असंव्यवहीरी । असंव्यावहारी F.; twice असंव्यवहारी A.; ॥ असंव्यावहारी B. C. K. (B. C. apparently copied from K., where असं end of p. and then संव्यावहारी, with सं crossed out).—Hem. makes अव्याहारी, असंव्याहारी and असंव्यवहारी; the others अव्याहारी (om. Yajñ.), and असंव्याहारी.

२ अभिवेभुवश्च भूते A.; अभिवेश्च वस्तु भूते B. C. F. K.; अभिभूते E.; अभिभावी भूते D.

३ देशे च विज्ञेयः D. E.

४ °नञ्पूर्वादिं न B. K.; °पूर्वादिनं न F.; °पूर्वादिमं C.—Hem. also remarks: केचिदनञ्पूर्वादिच्छन्ति । कारी । हारी ।

५ गुणैस्तैस्तैर्विशेते F.; विशेषेण शेते शिनोतीति वा° Yajñ.

६ धरतीति° F.; महीधरः A.

७ पृथ्वीं A. B. C. K.; Hem. gives उर्वीरुहो वृक्षः and सरसिरुहं पद्मम् instead.

ऽग्निः[१] ॥ * ॥ नखान्मोचयन्ति । नखमुचानि धनूंषि ॥ * ॥ कौ पृथिव्यां मोदते । कुमुदम् ॥ * ॥ दायमादत्ते । दायादः ॥ * ॥ काकेभ्यो गूहितव्याः । काकगुहास्तिलाः ॥ * ॥ आकृतिगणोऽयम्[२] ॥ ४६० ॥ इति मूलविभुजादिः ॥

इति

श्रीगोविन्दसूरिशिष्यपण्डितश्रीवर्धमानविरचितायां स्वीयगणरत्नमहोदधिवृत्तावाख्यातकृदाश्रितप्रत्ययगणनिर्णयो नामाष्टमोऽध्यायः समाप्तः ॥

किंचित्क्वचित्कथंचिद्रचितं पद्यानुसारतो[३]ऽस्माभिः ।
सुन्दरमसुन्दरं वा तत्क्षन्त्व्यं सहृदयैरेव[४] ॥ १ ॥
सप्तनवत्यधिकेष्वेकादशसु शतेष्वतीतेषु ।
वर्षाणां विक्रमतो गणरत्नमहोदधिर्विहितः[५] ॥ २ ॥

इति

श्रीवर्धमानविरचितः स्वीयवृत्तिसहितो गणरत्नमहोदधिः समाप्तः ॥

---

१ A. B. C. K. om. अग्निः.

२ Hem. includes also अपो बिभर्ति अब्भ्रं मेघः । धर्माय प्रददाति धर्मप्रदः । एवं कामप्रदः । स्वर्गप्रदः ॥ शास्त्रेण प्रजानाति शास्त्रप्रज्ञः । एवमागमप्रज्ञः (cf. Pâṇ. iii. 2, 6); Pâṇ. ed. Calc. has कुघ्र and गिघ्र (neither of which i given by the Kâṣ. V.).

३ पाद्यानुसारतो F.

४ From न्त्व्यं स to सप्तनव broken away in A.

५ वर्षेषु च विक्रमतो° F.—B. C. D. E. K. omit these two couplets.